आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४२




पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।

( तत्र षष्ठसप्तमाष्टकद्वयरूपोऽष्टमो भागः ( ८ ) )

एतत्पुस्तकं

वे० शा० रा० रा० "काशीनाथ शास्त्री आगाशे"

इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे



इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२७

खिस्ताब्दाः १९०५

(कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठोऽष्टकः।)

(तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः ।)

हरिः ॐ ।

*प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत्प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते परि श्रयत्यन्तर्हितो हि देवलोको मनुष्यलोकान्नास्माल्लोकात्स्वेतव्यमिवेत्याहुः को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान्करोति (१) उभयोर्लोकयोरभिजित्यै केशश्मश्रु वपते नखानि नि कृन्तते मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैत्यङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अव रुन्धे तीर्थे स्नाति तीर्थे हि ते तां प्रावेशयन्तीर्थे स्नाति (२) तीर्थमेव समानानां भवत्यपोऽश्नात्यन्तरत एव मेध्यो भवति वाससा दीक्षयति

*एतत्काण्डव्याख्यानं भाष्यकृता प्रथमकाण्डव्याख्यानेन सहैव कृतमिति तत्रैव द्रष्टव्यम्। अतोऽस्मादनुवाकस्य भाष्यम् २२१ पृष्ठे द्रष्टव्यम् ।

सौम्यं वै क्षौमं देवतया सोममेष देवतामुपैति यो दीक्षते सोमस्य तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैतामा शास्तेऽग्नेस्तूषाधानं वायोर्वातपानं पितृणां नीविरोषधीनां प्रघातः ( ३ ) आदित्यानां प्राचीनतानो विश्वेषां देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत्सर्वदेवत्यं यद्वासो यद्वाससा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति बहिःप्राणो वै मनुष्यस्तस्याशनं प्राणोऽश्नाति सप्राण एव दीक्षत आशितो भवति यावानेवास्य प्राणस्तेन सह मेधमुपैति घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणां तद्वै ( ४ ) एतत्सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकं यो दीक्षितोऽन्तरेव नवनीतं तस्मान्नवनीतेनाभ्यङ्क्तेऽनुलोमं यजुषा व्यावृत्त्या इन्द्रो वृत्रमहन्तस्य कनीनिका पराऽपतत्तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते दक्षिणं पूर्वमाऽङ्क्ते ( ५ ) सव्यꣳ हि पूर्वं मनुष्या आञ्जते न नि धावते नीव हि मनुष्या धावन्ते पञ्च कृत्व आऽङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे परिमितमाऽङ्क्ते परिमितꣳ हि

मनुष्या आञ्जते सतूलयाऽऽङ्क्तेऽपतूलया हि मनुष्या आञ्जते व्यावृत्त्यै यदपतुलयाऽऽञ्जीत वज्र इव स्यात्सतूलयाऽऽङ्क्ते मित्रत्वाय (६) इन्द्रो वृत्रमहन्त्सोऽऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत्तदपोदक्रामत्ते दर्भा अभवन्यद्दर्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः सदेवा आपस्ताभिरेवैनं पवयति द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति पञ्चभिः (७) पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणाः सप्राणमेवैनं पवयत्येकविꣳशत्या पवयति दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गम् (८) पवयति चित्पतिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति तस्य ते

पवित्रपते पवित्रेण यस्मै कं पुने तच्छंकेयमित्याहाऽऽशिषमेवैतामा शास्ते (९)॥

( अतीकाशान्करोत्यवेशयन्तीर्थे स्नाति प्रघातो मनुष्याणां तद्वा आऽङ्क्ते मित्रत्वाय पञ्चभिरपरिवर्गमष्टाचत्वारिंशच्च ॥ १ ॥ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठोऽष्टकः )

---

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

प्राचीनवंशमिति प्राचीन—वंशम् । करोति । देवमनुष्या इति देव—मनुष्याः । दिशः । वीति । अभजन्त । प्राचीम् । देवाः । दक्षिणा । पितरः । प्रतीचीम् । मनुष्याः । उदीचीम् । रुद्राः । यत् । प्राचीनवंशमिति प्राचीन—वंशम् । करोति । देवलोकमिति देव—लोकम् । एव । तत् । यजमानः । उपावर्तत इत्युप—आवर्तते । परीति । श्रयति । अन्तर्हित इत्यन्तः—हितः । हि । देवलोक इति देव—लोकः । मनुष्यलोकादिति मनुष्य—लोकात् । न । अस्मात् । लोकात् । स्वेतव्यमिति सु—एतव्यम् । इव । इति । आहुः । कः । हि । तत् । वेद । यदि । अमुष्मिन् । लोके । अस्ति । वा । न । वा । इति । दिक्षु । अतीकाशान् । करोति (१)।

उभयोः । लोकयोः । अभिजित्या इत्यभि–जित्यै । केश-श्मश्र्विति केश–श्मश्रु । वपते । नखानि । नीति । कृन्तते । मृता । वै । एषा । त्वक् । अमेध्या । यत् । केशश्मश्र्विति केश–श्मश्रु । मृताम् । एव । त्वचम् । अमेध्याम् । अपहत्येत्यप–हत्य । यज्ञियः । भूत्वा । मेधम् । उपेति । एति । अङ्गिरसः । सुवर्गमिति सुवः–गम् । लोकम् । यन्तः । अप्स्वित्यप्–सु । दीक्षातपसी इति दीक्षा–तपसी । प्रेति । अवेशयन् । अप्स्वित्यप्–सु । स्नाति । साक्षादिति स–अक्षात् । एव । दीक्षातपसी इति दीक्षा–तपसी । अवेति । रुन्धे । तीर्थे । स्नाति । तीर्थे । हि । ते । ताम् । प्रेति । अवेशयन् । तीर्थे । स्नाति ( २ ) । तीर्थम् । एव । समानानाम् । भवति । अपः । अश्नाति । अन्तरतः । एव । मेध्यः । भवति । वाससा । दीक्षयति । सौम्यम् । वै । क्षौमम् । देवतया । सोमम् । एषः । देवताम् । उपेति । एति । यः । दीक्षते । सोमस्य । तनूः । असि । तनुवम् । मे । पाहि । इति । आह । स्वाम् । एव । देवताम् । उपेति । एति । अथो इति । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । अग्नेः । तूषाधानमिति तूष–आधानम् । वायोः । वातपानमिति वात–पानम् । पितृणाम् । नीविः । ओषधीनाम् । प्रघात इति प्र–घातः ( ३ ) ।

आदित्यानाम् । प्राचीनतान इति प्राचीन—तानः । विश्वेषाम् । देवानाम् । ओतुः । नक्षत्राणाम् । अतीकाशाः । तत् । वै । एतत् । सर्वदेवत्यमिति सर्व—देवत्यम् । यत् । वासः । यत् । वाससा । दीक्षयति । सर्वाभिः । एव । एनम् । देवताभिः । दीक्षयति । बहिःप्राण इति बहिः—प्राणः । वै । मनुष्यः । तस्य । अशनम् । प्राण इति प्र—अनः । अश्नाति । सप्राण इति स—प्राणः । एव । दीक्षते । आशितः । भवति । यावान् । एव । अस्य । प्राण इति प्र—अनः । तेन । सह । मेधम् । उपेति । एति । घृतम् । देवानाम् । मस्तु । पितृणाम् । निष्पक्वमिति निः—पक्वम् । मनुष्याणाम् । तत् । वै ( ४ ) । एतत् । सर्वदेवत्यमिति सर्व—देवत्यम् । यत् । नवनीतमिति नव—नीतम् । यत् । नवनीतेनेति नव—नीतेन । अभ्यङ्क्त इत्यभि—अङ्क्ते । सर्वाः । एव । देवताः । प्रीणाति ।। प्रच्युत इति प्र—च्युतः । वै । एषः । अस्मात् । लोकात् । अगतः । देवलोकमिति देव—लोकम् । यः । दीक्षितः । अन्तरा । इव । नवनीतमिति नव—नीतम् । तस्मात् । नवनीतेनेति नव—नीतेन । अभीति । अङ्क्ते । अनुलोममित्यनु—लोमम् । यजुषा । व्यावृत्त्या इति वि—आवृत्त्यै । इन्द्रः । वृत्रम् । अहन् । तस्य । कनीनिका । परेति ।

अपतत्। तत्। आञ्जनमित्या॑–अञ्जनम्। अभवत्। यत्। आङ्क्त इत्या॑–अङ्क्ते। चक्षुः। एव। भ्रातृ॑व्यस्य। वृङ्क्ते। दक्षिणम्। पूर्वम्। एति। अङ्क्ते (५)। सव्यम्। हि। पूर्वम्। मनुष्याः। आञ्जत इत्या॑–अञ्जते। न। नीति। धावते। नीति। इव। हि। मनुष्याः। धावन्ते। पञ्च। कृत्वः। एति। अङ्क्ते। पञ्चाक्षरेति पञ्च–अक्षरा। पङ्क्तिः। पाङ्क्तः। यज्ञः। यज्ञम्। एव। अवेति। रुन्धे। परिमितमिति परि–मितम्। एति। अङ्क्ते। अपरिमितमित्यपरि–मितम्। हि। मनुष्याः। आञ्जत इत्या॑–अञ्जते। सतूलयेति स–तूलया। एति। अङ्क्ते। अपतूलयेत्यप–तूलया। हि। मनुष्याः। आञ्जत इत्या॑–अञ्जते। व्यावृत्त्या इति वि–आवृत्त्यै। यत्। अपतूलये-त्यप–तूलया। आञ्जीतेत्या॑–अञ्जीत। वज्रः। इव। स्यात्। सतूलयेति स–तूलया। एति। अङ्क्ते। मित्रत्वायेति मित्र–त्वाय (६)। इन्द्रः। वृत्रम्। अहन्। सः। अपः। अभीति। अम्रियत। तासाम्। यत्। मेध्यम्। यज्ञियम्। सदेवमिति स–देवम्। आसीत्। तत्। अप। उदिति। अक्रामत्। ते। दर्भाः। अभवन्। यत्। दर्भपुञ्जीलैरिति दर्भ–पुञ्जीलैः। पवयति। याः। एव। मेध्याः। यज्ञियाः। सदेवा इति स–देवाः। आपः। ताभिः। एव। एनम्। पव-

यति । द्वाभ्याम् । पवयति । अहोरात्राभ्यामित्यहः—रात्राभ्याम् । एव । एनम् । पवयति । त्रिभिरिति त्रि—भिः । पवयति । त्रयः । इमे । लोकाः । एभिः । एव । एनम् । लोकैः । पवयति । पञ्चभिरिति पञ्च—भिः ( ७ ) । पवयति । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञाय । एव । एनम् । पवयति । षड्भिरिति षट्—भिः । पवयति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु—भिः । एव । एनम् । पवयति । सप्तभिरिति सप्त—भिः । पवयति । सप्त । छन्दांसि । छन्दोभिरिति छन्दः—भिः । एव । एनम् । पवयति । नवभिरिति नव—भिः । पवयति । नव । वै । पुरुषे । प्राणा इति प्र—अनाः । सप्राणमिति स—प्राणम् । एव । एनम् । पवयति । एकविंशत्येत्येक—विंशत्या । पवयति । दश । हस्त्याः । अङ्गुलयः । दश । पद्याः । आत्मा । एकविंश इत्येक—विंशः । यावान् । एव । पुरुषः । तम् । अपरिवर्गमित्यपरि—वर्गम् ( ८ ) । पवयति । चित्पतिरिति चित्—पतिः । त्वा । पुनातु । इति । आह । मनः । वै । चित्पतिरिति चित्—पतिः । मनसा । एव । एनम् । पवयति । वाक्पतिरिति वाक्—पतिः । त्वा । पुनातु । इति । आह । वाचा । एव । एनम् । पवयति । देवः । त्वा । सविता । पुनातु । इति । आह । सवितृप्रसूत इति सवितृ—प्रसूतः ।

(दीक्षाहुत्यभिधानम्)

एव। एनम्। पवयति।तस्यं। ते। पवित्रपत इतिं पवित्र-पते। पवित्रेण। यस्मैं। कम्। पुने। तत्। शकेयम्। इतिं। आह। आशिषमित्या-शिषम्। एव। एताम्। एतिं। शास्ते (९)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

(अथ षष्ठाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः।)

---

यावन्तो वै देवा यज्ञायापुनत त एवाभवन्य एवं विद्वान्यज्ञाय पुनीते भवत्येव बहिः पवयित्वाऽन्तः प्र पादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्र णयत्यदीक्षित एकयाऽऽहुत्येत्याहुः स्रुवेण चतस्रो जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्ध आकूत्यै प्रयुजेऽग्नये (१) स्वाहेत्याहाऽऽकूत्या हि पुरुषो यज्ञमभि प्रयुङ्क्ते यजेयेतिं मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्र युङ्क्त आपो देवीर्बृहतीर्विश्वशंभुव

इत्याह या वै वर्ष्यास्ताः ( २ ) आपो देवीर्बृहती-
र्विश्वशंभुवो यदेतद्यजुर्न ब्रूयाद्दिव्या आपोऽशान्ता
इमं लोकमा गच्छेयुरापो देवीर्बृहतीर्विश्वशंभुव इत्या-
हास्मा एवैना लोकाय शमयति तस्माच्छान्ता इमं
लोकमा गच्छन्ति द्यावापृथिवी इत्याह द्यावापृथि-
व्योर्हि यज्ञ उर्वन्तरिक्षमित्याहान्तरिक्षे हि यज्ञो
बृहस्पतिर्नो हविषा वृधातु ( ३ ) इत्याह ब्रह्म वै
देवानां बृहस्पतिर्ब्रह्मणैवास्मै यज्ञमव रुन्धे यद्ब्रूया-
द्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव
परि वृणक्ति प्रजापतिर्यज्ञमसृजत सोऽस्मात्सृष्टः परा-
ङैत्स प्र यजुरव्लीनात्प्र साम तमृगुदयच्छद्यदृगुदय-
च्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वमृचा (४) जुहोति यज्ञ-
स्योद्यत्या अनुष्टुप्छन्दसामुदयच्छदित्याहुस्तस्मादनु-
ष्टुभा जुहोति यज्ञस्योद्यत्यै द्वादश वात्सबन्धान्युद-
यच्छन्नित्याहुस्तस्माद्द्वादशभिर्वात्सबन्धविदो दीक्ष-
यन्ति सा वा एषर्गनुष्टुग्वागनुष्टुग्यदेतयर्चा दीक्षयति
वाचैवैनꣳ सर्वया दीक्षयति विश्वे देवस्य नेतुरित्याह
सावित्र्येतेन मर्तो वृणीत सख्यम् ( ५ ) इत्याह
पितृदेवत्यैतेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्येतेन
द्युम्नं वृणीत पुष्यस इत्याह पौष्ण्येतेन सा वा एष-

( दीक्षाहुत्यभिधानम् )

र्क्सर्वदेवत्या यदेतयर्चा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति सप्ताक्षरं प्रथमं पदमष्टाक्षराणि त्रीणि यानि त्रीणि तान्यष्टावुपयन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्षरा तेन ( ६ ) गायत्री यदेकादशाक्षरा तेन त्रिष्टुग्यद्द्वादशाक्षरा तेन जगती सा वा एषर्क्सर्वाणि छन्दाꣳसि यदेतयर्चा दीक्षयति सर्वैभिरेवैनं छन्दोभिर्दीक्षयति सप्ताक्षरं प्रथमं पदꣳ सप्तपदा शक्वरी पशवः शक्वरी पशूनेवावं रुन्ध एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै ( ७ ) ॥

( अग्नये ता वृधात्वृचा सख्यं तेन जुहोति पञ्चदश च ॥ २ ॥ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

यावन्तः । वै । देवाः । यज्ञाय । अपुनत । ते । एव । अभवन् । यः । एवम् । विद्वान् । यज्ञाय । पुनीते । भवति । एव ।

बहिः । पवयित्वा । अन्तः । प्रेति । पादयति । मनुष्य-
लोक इति मनुष्य—लोके । एव । एनम् । पवयित्वा । पूतम् ।
देवलोकमिति देव—लोकम् । प्रेति । नयति । अदीक्षितः ।
एकया । आहुत्येत्या—हुत्या । इति । आहुः । स्रुवेण ।
चतस्रः । जुहोति । दीक्षितत्वायेति दीक्षित—त्वाय ।
स्रुचा । पञ्चमीम् । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः ।
पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे ।
आकूत्या इत्या—कूत्यै । प्रयुज इति प्र—युजे । अग्नये
( १ ) । स्वाहा । इति । आह । आकूत्येत्या—कूत्या ।
हि । पुरुषः । यज्ञम् । अभीति । प्रयुङ्क्त इति प्र—
युङ्क्ते । यजेय । इति । मेधायै । मनसे । अग्नये ।
स्वाहा । इति । आह । मेधया । हि । मनसा ।
पुरुषः । यज्ञम् । अभिगच्छतीत्यभि—गच्छति । सर-
स्वत्यै । पूष्णे । अग्नये । स्वाहा । इति । आह । वाक् ।
वै । सरस्वती । पृथिवी । पूषा । वाचा । एव । पृथिव्या ।
यज्ञम् । प्रेति । युङ्क्ते । आपः । देवीः । बृहतीः । विश्वशंभुव
इति विश्व—शंभुवः । इति । आह । याः । वै । वर्ष्याः । ताः
(२) । आपः । देवीः । बृहतीः । विश्वशंभुव इति विश्व—
शंभुवः । यत् । एतत् । यजुः । न । ब्रूयात् । दिव्याः । आपः ।
अशान्ताः । इमम् । लोकम् । एति । गच्छेयुः । आपः ।

(दीक्षाहुत्यभिधानम्)

देवीः। बृहतीः। विश्वशंभुव इति विश्व–शंभुवः। इति।
आह। अस्मै। एव। एनाः। लोकाय। शमयति।
तस्मात्। शान्ताः। इमम्। लोकम्। एति। गच्छन्ति।
द्यावापृथिवी इति द्यावा–पृथिवी। इति। आह। द्यावा-
पृथिव्योरिति द्यावा–पृथिव्योः। हि। यज्ञः। उरु।
अन्तरिक्षम्। इति। आह। अन्तरिक्षे। हि। यज्ञः।
बृहस्पतिः। नः। हविषा। वृधातु (३)। इति। आह।
ब्रह्म। वै। देवानाम्। बृहस्पतिः। ब्रह्मणा। एव। अस्मै।
यज्ञम्। अवेति। रुन्धे। यत्। ब्रूयात्। विधेः। इति।
यज्ञस्थाणुमिति यज्ञ–स्थाणुम्। ऋच्छेत्। वृधातु। इति।
आह। यज्ञस्थाणुमिति यज्ञ–स्थाणुम्। एव। परीति।
वृणक्ति। प्रजापतिरिति प्रजा–पतिः। यज्ञम्। असृजत।
सः। अस्मात्। सृष्टः। पराङ्। ऐत्। सः। प्रेति।
यजुः। अव्लीनात्। प्रेति। साम। तम्। ऋक्। उदिति।
अयच्छत्। यत्। ऋक्। उदयच्छदित्युत्–अयच्छत्।
तत्। औद्ग्रहणस्येत्यौत्–ग्रहणस्य। औद्ग्रहणत्वमित्यौद्ग्र-
हण–त्वम्। ऋचा (४)। जुहोति। यज्ञस्य। उद्यत्या
इत्युत्–यत्यै। अनुष्टुबित्यनु–स्तुप्। छन्दसाम्। उदिति।
अयच्छत्। इति। आहुः। तस्मात्। अनुष्टुभेत्यनु–स्तुभा।
जुहोति। यज्ञस्य। उद्यत्या इत्युत्–यत्यै। द्वादश। वात्स-

बन्धानीति वात्स—बन्धानि । उदिति । अयच्छन् । इति ।
आहुः । तस्मात् । द्वादशभिरिति द्वादश—भिः । वात्सबन्ध-
विद इति वात्सबन्ध—विदः । दीक्षयन्ति । सा । वै । एषा ।
ऋक् । अनुष्टुगित्यनु—स्तुक् । वाक् । अनुष्टुगित्यनु—स्तुक् ।
यत् । एतया । ऋचा । दीक्षयति । वाचा । एव । एनम् ।
सर्वया । दीक्षयति । विश्वे । देवस्य । नेतुः । इति । आह ।
सावित्री । एतेन । मर्तः । वृणीत । सख्यम् (५) । इति ।
आह । पितृदेवत्येति पितृ—देवत्या । एतेन । विश्वे । रायः ।
इषुध्यसि । इति । आह । वैश्वदेवीति वैश्व—देवी । एतेन ।
द्युम्नम् । वृणीत । पुष्यसे । इति । आह । पौष्णी । एतेन । सा ।
वै । एषा । ऋक् । सर्वदेवत्येति सर्व—देवत्या । यत् ।
एतया । ऋचा । दीक्षयति । सर्वाभिः । एव । एनम् ।
देवताभिः । दीक्षयति । सप्ताक्षरमिति सप्त—अक्षरम् । प्रथ-
मम् । पदम् । अष्टाक्षराणीत्यष्टा—अक्षराणि । त्रीणि । यानि ।
त्रीणि । तानि । अष्टौ । उपेति । यन्ति । यानि । चत्वारि ।
तानि । अष्टौ । यत् । अष्टाक्षरेत्यष्टा—अक्षरा । तेन (६) ।
गायत्री । यत् । एकादशाक्षरेत्येकादश—अक्षरा । तेन ।
त्रिष्टुक् । यत् । द्वादशाक्षरेति द्वादश—अक्षरा । तेन ।
जगती । सा । वै । एषा । ऋक् । सर्वाणि । छन्दांसि ।
यत् । एतया । ऋचा । दीक्षयति । सर्वेभिः । एव । एनम् ।

( कृष्णाजिनादिभिर्दीक्षाकरणाभिधानम् । )

छन्दोभिरिति छन्दः—भिः । दीक्षयति । सप्ताक्षरमिति सप्त—अक्षरम् । प्रथमम् । पदम् । सप्तपदेति सप्त—पदा । शक्वरी । पशवः । शक्वरी । पशून् । एव । अवेति । रुन्धे । एकस्मात् । अक्षरात् । अनाप्तम् । प्रथमम् । पदम् । तस्मात् । यत् । वाचः । अनाप्तम् । तत् । मनुष्याः । उपेति । जीवन्ति । पूर्णया । जुहोति । पूर्णः । इव । हि । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । न्यूनयेति नि—ऊनया । जुहोति । न्यूनादिति नि—ऊनात् । हि । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । प्रजानामिति प्र—जानाम् । सृष्ट्यै (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

ऋक्सामे वै देवेभ्यो यज्ञायाऽतिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठतां तेऽमन्यन्त यं वा इमे उपावर्त्स्यतः स इदं भविष्यतीति ते उपामन्त्रयन्त ते अहोरात्रयोर्महिमानमपनिधाय देवानुपावर्तेतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत्कृष्णमृक्सामयोः शिल्पे स्थ इत्याहर्क्सामे एवाव रुन्ध

एषः ( १ )वा अह्नो वर्णो यच्छुक्लं कृष्णाजिनस्यैष रात्रियै यत्कृष्णं यदेवैनयोस्तत्र न्यक्तं तदेवाव रुन्धे कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनं ब्रह्मणैवैनं दीक्षयतीमां धियꣳ शिक्ष-माणस्य देवेत्याह यथायजुरेवैतद्गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्मात् ( २ ) गर्भाः प्रावृता जायन्ते न पुरा सोमस्य क्रयादपोर्णुवीत यत्पुरा सोमस्य क्रयादपोर्णुवीत गर्भाः प्रजानां परापातुकाः स्युः क्रीते सोमेऽपोर्णुते जायत एव तदथो यथा वसीयाꣳसं प्रत्यपोर्णुते तादृगेव तदङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा अभवन्नूर्ग्वै शरा यच्छरमयी ( ३ ) मेखला भवत्यूर्जमेवाव रुन्धे मध्यतः सं नह्यति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जत ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्म-ध्यतः संनह्यति मेध्यं चैवास्यामेध्यं च व्यावर्तय-तीन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृ-तीयꣳ रथस्तृतीयं यूपस्तृतीयम् ( ४ ) येऽन्तःशरा अशीर्यन्त ते शरा अभवन्तच्छराणाꣳ शरत्वं वज्रो वै शराः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी

मेखला भवति वज्रेणैव साक्षात्क्षुधं भ्रातृव्यं मध्य-
तोऽपं हते त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं
मध्यतो यजमाने दधाति पृथ्वी भवति रज्जूनां
व्यावृत्त्यै मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं
मिथुनत्वाय (५) यज्ञो दक्षिणामभ्यध्यायत्ताꣳ
समभवत्तदिन्द्रोऽचायत्सोऽमन्यत यो वा इतो जनि-
ष्यते स इदं भविष्यतीति तां प्राविशत्तस्या इन्द्र
एवाजायत सोऽमन्यत यो वै मदितोऽपरो जनिष्यते
स इदं भविष्यतीति तस्यां अनुमृश्य योनिमाऽच्छि-
नत्सा सूतवशाऽभवत्तत्सूतवशायै जन्म (६) ताꣳ
हस्ते न्यवेष्टयत तां मृगेषु न्यदधात्सा कृष्णविषा-
णाऽभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्ण-
विषाणां प्र यच्छति सयोनिमेव यज्ञं करोति सयोनिं
दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय कृष्यै त्वा
सुसस्याया इत्याह तस्मादकृष्टपच्या ओषधयः
पच्यन्ते सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह तस्मादो-
षधयः फलं गृह्णन्ति यद्धस्तेन (७) कण्डूयेत पाम-
नंभावुकाः प्रजाः स्युर्यत्स्मयेत नग्नंभावुकाः कृष्ण-
विषाणया कण्डूयतेऽपिगृह्य स्मयते प्रजानां गोपी-
थाय न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवं

चृतेयत्पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृते-
योनिः प्रजानां परापातुका स्यान्नीतासु दक्षिणासु
चात्वाले कृष्णविषाणां प्रास्यति योनिर्वै यज्ञस्य
चात्वालं योनिः कृष्णविषाणा योनावेव योनिं
दधाति यज्ञस्य सयोनित्वाय ( ८ ) ॥

( रुन्ध एष तस्माच्छरमयी यूपस्तृतीयं मिथुनत्वाय
जन्म हस्तेनाष्टाचत्वारिंशश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथम-
प्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

ऋक्सामे इत्यृक्—सामे । वै । देवेभ्यः । यज्ञाय । अतिष्ठ-
माने इति । कृष्णः । रूपम् । कृत्वा । अपक्रम्येत्यप—
क्रम्य । अतिष्ठताम् । ते । अमन्यन्त । यम् । वै । इमे—
इति । उपावत्स्यत इत्युप—आवत्स्यतः । सः । इदम् ।
भविष्यति । इति । ते इति । उपेति । अमन्त्रयन्त ।
ते इति । अहोरात्रयोरित्यहः—रात्रयोः । महिमानम् ।
अपनिधायेत्यप—निधाय । देवान् । उपावर्तेतामित्युप—
आवर्तेताम् । एषः । वै । ऋचः । वर्णः । यत् । शुक्लम् ।
कृष्णाजिनस्येति कृष्ण—अजिनस्य । एषः । साम्नः । यत् ।
कृष्णम् । ऋक्सामयोरित्यृक्—सामयोः । शिल्पे इति ।

( कृष्णाजिनादिभिर्दीक्षाकरणाभिधानम् )

स्थः । इति । आह । ऋक्सामे इत्यृक्-सामे । एव ।
अवेति । रुन्धे । एषः ( १ ) । वै । अह्नः । वर्णः ।
यत् । शुक्लम् । कृष्णाजिनस्येति कृष्ण-अजिनस्य । एषः ।
रात्रियाः । यत् । कृष्णम् । यत् । एव । एनयोः ।
तत्र । न्यक्कमिति नि-अक्कम् । तत् । एव । अवेति । रुन्धे ।
कृष्णाजिनेनेति कृष्ण-अजिनेन । दीक्षयति । ब्रह्मणः । वै ।
एतत् । रूपम् । यत् । कृष्णाजिनमिति कृष्ण-अजिनम् ।
ब्रह्मणा । एव । एनम् । दीक्षयति । इमाम् । धियम् । शिक्ष-
माणस्य । देव । इति । आह । यथायजुरिति यथा-यजुः ।
एव । एतत् । गर्भः । वै । एषः । यत् । दीक्षितः । उल्बम् ।
वासः । प्रेति । ऊर्णुते । तस्मात् ( २ ) । गर्भाः । प्रावृताः ।
जायन्ते । न । पुरा । सोमस्य । क्रयात् । अपेति । ऊर्ण्वीत ।
यत् । पुरा । सोमस्य । क्रयात् । अपोर्ण्वीतेत्यप-ऊ-
र्ण्वीत । गर्भाः । प्रजानामिति प्र-जानाम् । परापातुका
इति परा-पातुकाः । स्युः । क्रीते । सोमे । अपेति । ऊर्णुते ।
जायते । एव । तत् । अथो इति । यथा । वसीयाꣳसम् ।
प्रत्यपोर्णुत इति प्रति-अपोर्णुते । तादृक् । एव । तत् ।
अङ्गिरसः । सुवर्गमिति सुवः-गम् । लोकम् । यन्तः ।
ऊर्जम् । वीति । अभजन्त । ततः । यत् । अत्यशिष्यतेत्य-
ति-अशिष्यत । ते । शराः । अभवन् । ऊर्क् । वै । शराः ।



यत् । शरमयीति शर–मयी ( ३ ) । मेखला । भवति । ऊर्जम् । एव । अवेति । रुन्धे । मध्यतः । समिति । नह्यति । मध्यतः । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । मध्यतः । ऊर्जा । भुञ्जते । ऊर्ध्वम् । वै । पुरुषस्य । नाभ्यै । मेध्यम् । अवाचीनम् । अमेध्यम् । यत् । मध्यतः । संनह्यतीति सं–नह्यति । मेध्यम् । च । एव । अस्य । अमेध्यम् । च । व्यावर्तयतीति वि–आवर्तयति । इन्द्रः । वृत्राय । वज्रम् । प्रेति । अहरत् । सः । त्रेधा । वीति । अभवत् । स्फ्यः । तृतीयम् । रथः । तृतीयम् । यूपः । तृतीयम् ( ४ ) । ये । अन्तःशरा इत्यन्तः–शराः । अशीर्यन्त । ते । शराः । अभवन् । तत् । शराणाम् । शरत्वमिति शर–त्वम् । वज्रः । वै । शराः । क्षुत् । खलु । वै । मनुष्यस्य । भ्रातृव्यः । यत् । शरमयीति शर–मयी । मेखला । भवति । वज्रेण । एव । साक्षादिति स–अक्षात् । क्षुधम् । भ्रातृव्यम् । मध्यतः । अपेति । हते । त्रिवृदिति त्रि–वृत् । भवति । त्रिवृदिति त्रि–वृत् । वै । प्राण इति प्र–अनः । त्रिवृतमिति त्रि–वृतम् । एव । प्राणमिति प्र–अनम् । मध्यतः । यजमाने । दधाति । पृथ्वी । भवति । रज्जूनाम् । व्यावृत्त्या इति वि–आवृत्त्यै । मेखलया । यजमानम् । दीक्षयति । योक्त्रेण । पत्नीम् । मिथुनत्वायेति मिथुन–त्वाय ( ५ ) । यज्ञः । दक्षिणाम् ।



( कृष्णाजिनादिभिर्दीक्षाकरणाभिधानम् )

अभीति । अध्यायत् । ताम् । समिति । अभवत् । तत् । इन्द्रः । अचायत् । सः । अमन्यत । यः । वै । इतः । जनिष्यते । सः । इदम् । भविष्यति । इति । ताम् । प्रेति । अविशत् । तस्याः । इन्द्रः । एव । अजायत । सः । अमन्यत । यः । वै । मत् । इतः । अपरः । जनिष्यते । सः । इदम् । भविष्यति । इति । तस्याः । अनुमृश्येत्यनु-मृश्य । योनिम् । एति । अच्छिनत् । सा । सूतवशेति सूत-वशा । अभवत् । तत् । सूतवशाया इति सूत-वशायै । जन्म (६) ताम् । हस्ते । नीति । अवेष्टयत । ताम् । मृगेषु । नीति । अदधात् । सा । कृष्णविषाणेति कृष्ण-विषाणा । अभवत् । इन्द्रस्य । योनिः । असि । मा । मा । हिꣳसीः । इति । कृष्णविषाणामिति कृष्ण-विषाणाम् । प्रेति । यच्छति । सयोनिमिति स-योनिम् । एव । यज्ञम् । करोति । सयोनिमिति स-योनिम् । दक्षिणाम् । सयोनिमिति स-योनिम् । इन्द्रम् । सयोनित्वायेति सयोनि-त्वाय । कृष्यै । त्वा । सुसस्याया इति सु-सस्यायै । इति । आह । तस्मात् । अकृष्टपच्या इत्यकृष्ट-पच्याः । ओषधयः । पच्यन्ते । सुपिप्पलाभ्य इति सु-पिप्पलाभ्यः । त्वा । ओषधीभ्य इत्योषधि-भ्यः । इति । आह । तस्मात् । ओषधयः । फलम् । गृह्णन्ति । यत् ।

हस्तेन (७) । कण्डूयेत । पामनंभावुका इति पामनं-भावुकाः । प्रजा इति प्र-जाः । स्युः । यत् । स्मयेत । नग्नंभावुका इति नग्नं-भावुकाः । कृष्णविषाणयेति कृष्ण-विषाणया । कण्डूयते । अपिगृह्येत्यपि-गृह्य । स्मयते । प्रजानामिति प्र-जानाम् । गोपीथाय । न । पुरा । दक्षिणाभ्यः । नेतोः । कृष्णविषाणामिति कृष्ण-विषाणाम् । अवेति । चृतेत् । यत् । पुरा । दक्षिणाभ्यः । नेतोः । कृष्णविषाणामिति कृष्ण-विषाणाम् । अवचृतेदित्यव-चृतेत् । योनिः । प्रजानामिति प्र-जानाम् । परापातुकेति परा-पातुका । स्यात् । नीतासु । दक्षिणासु । चात्वाले । कृष्णविषाणामिति कृष्ण-विषाणाम् । प्रेति । अस्यति । योनिः । वै । यज्ञस्य । चात्वालम् । योनिः । कृष्णविषाणेति कृष्ण-विषाणा । योनौ । एव । योनिम् । दधाति । यज्ञस्य । सयोनित्वायेति सयोनि-त्वाय (८) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना सा वनस्पतीन्प्राविशत्सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ

या तूर्णवे या वीणायां यद्दीक्षितदण्डं प्रयच्छति वाचमेवाव रुन्ध औदुम्बरो भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे मुखेन संमितो भवति मुखत एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुञ्जते ( १ ) क्रीते सोमे मैत्रावरुणाय दण्डं प्र यच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रति ष्ठापयन्ति स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहो-रोरन्तरिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वातादा रभ इत्याहायम् ( २ ) वाव यः पवते स यज्ञस्तमेव साक्षादा रभते मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्या अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राऽऽह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राऽऽह न पुरा नक्षत्रेभ्यो वाचं वि सृजेयत्पुरा नक्षत्रेभ्यो वाचं विसृजेयज्ञं विच्छि-न्द्यात् ( ३ )उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं वि सृजति यज्ञव्रतो वै दीक्षितो यज्ञमेवाभि वाचं वि सृजति यदि विसृजेद्वैष्णवीमृचमनु ब्रूयाद्यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोति दैवीं धियं मनामहे

इत्याह यज्ञमेव तन्म्रदयति सुपारा नो असद्वश इत्याह व्युष्टिमेवाव रुन्धे ( ४ ) ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३इ न होतव्या३मिति हविर्वै दीक्षितो यज्जुहुयाद्यजमानस्यावदाय जुहुया-द्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये देवा मनोजाता मनो-युज इत्याह प्राणा वै देवा मनोजाता मनोयुजस्ते-ष्वेव परोक्षं जुहोति तन्नेव हुतं नेवाहुतꣳ स्वपन्तं वै दीक्षितꣳ रक्षाꣳसि जिघाꣳसन्त्यग्निः ( ५ ) खलु वै रक्षोहाऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीत्या-हाग्निमेवाधिपां कृत्वा स्वपिति रक्षसामपहत्या अव्र-त्यमिव वा एष करोति यो दीक्षितः स्वपिति त्वमग्ने व्रतपा असीत्याहाग्निर्वै देवानां व्रतपतिः स एवैनं व्रतमा लम्भयति देव आ मर्त्येष्वेत्याह देवः ( ६ ) ह्येष सन्मर्त्येषु त्वं यज्ञेष्वीड्य इत्याहैतꣳ हि यज्ञे-ष्वीडतेऽप वै दीक्षितात्सुषुपुष इन्द्रियं देवताः क्रामन्ति विश्वे देवा अभि मामाऽववृत्रन्नित्याहेन्द्रियेणैवैनं देवताभिः सं नयति यदेतद्यजुर्न ब्रूयाद्यावत एव पशूनभि दीक्षेत तावन्तोऽस्य पशवः स्यू रास्वेयत् ( ७ ) सोमाऽऽ भूयो भरेत्याहापरिमितानेव पशू-नव रुन्धे चन्द्रमसि मम भोगाय भवेत्याह यथादे-

वतमेवैनाः प्रति गृह्णाति वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेदयथादेवतं दक्षिणा गमयेदा देवताभ्यो वृश्च्येत यदेवमेता अनुदिशति यथादेवत-मेव दक्षिणा गमयति न देवताभ्य आ (८) वृश्च्यते देवीरापो अपां नपादित्याह यद्वो मेध्यं यज्ञियꣳ सदेवं तद्वो माऽवं क्रमिषमिति वावैतदाहाच्छिन्नं तन्तुं पृथिव्या अनु गेषमित्याह सेतुमेव कृत्वाऽत्येति ( ९ )॥

( भुङ्क्तेऽयं छिन्द्याद्रुन्धेऽग्निराह देव इयंदेवताभ्य आ त्रयस्त्रिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ।)

---

.. वाक् । वै । देवेभ्यः । अपेति । अक्रामत् । यज्ञाय । अतिष्ठमाना । सा । वनस्पतीन् । प्रेति । अविशत् । सा । एषा । वाक् । वनस्पतिषु । वदति । या । दुन्दुभौ । या । तूणवे । या । वीणायाम् । यत् । दीक्षितदण्डमिति दीक्षित—दण्डम् । प्रयच्छतीति प्र—यच्छति । वाचम् । एव । अवेति । रुन्धे । औदुम्बरः । भवति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अवेति । रुन्धे । मुखेन ।

संमित इति सं-मितः । भवति । मुखतः । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । मुखतः । ऊर्जा । भुञ्जते ( १ ) । क्रीते । सोमे । मैत्रावरुणायेति मैत्रा-वरुणाय । दण्डम् । प्रेति । यच्छति । मैत्रावरुण इति मैत्रा-वरुणः । हि । पुरस्तात् । ऋत्विग्भ्य इत्यृत्विक्-भ्यः । वाचम् । विभजतीति वि-भजति । ताम् । ऋत्विजः । यजमाने । प्रतीति । स्थापयन्ति । स्वाहा । यज्ञम् । मनसा । इति । आह । मनसा । हि । पुरुषः । यज्ञम् । अभिगच्छतीत्यभि-गच्छति । स्वाहा । द्यावापृथिवीभ्यामिति द्यावा-पृथिवी-भ्याम् । इति । आह । द्यावापृथिव्योरिति द्यावा-पृथिव्योः । हि । यज्ञः । स्वाहा । उरोः । अन्तरिक्षात् । इति । आह । अन्तरिक्षे । हि । यज्ञः । स्वाहा । यज्ञम् । वातात् । एति । रभे । इति । आह । अयम् ( २ ) । वाव । यः । पवते । सः । यज्ञः । तम् । एव । साक्षादिति स-अक्षात् । एति । रभते । मुष्टी इति । करोति । वाचम् । यच्छति । यज्ञस्य । धृत्यै । अदीक्षिष्ट । अयम् । ब्राह्मणः । इति । त्रिः । उपांश्वित्युप-अंशु । आह । देवेभ्यः । एव । एनम् । प्रेति । आह । त्रिः । उच्चैः । उभयेभ्यः । एव । एनम् । देवमनुष्येभ्य इति देव-मनुष्येभ्यः । प्रेति । आह । न । पुरा । नक्ष-

त्रेभ्यः । वाचम् । वीति । सृजेत् । यत् । पुरा । नक्षत्रेभ्यः । वाचम् । विसृजेदिति वि-सृजेत् । यज्ञम् । वीति । छिन्द्यात् ( ३ ) । उदितेष्वित्युत्-इतेषु । नक्षत्रेषु । व्रतम् । कृणुत । इति । वाचम् । वीति । सृजति । यज्ञव्रत इति यज्ञ-व्रतः । वै । दीक्षितः । यज्ञम् । एव । अभीति । वाचम् । वीति । सृजति । यदि । विसृजेदिति वि-सृजेत् । वैष्णवीम् । ऋचम् । अन्विति । ब्रूयात् । यज्ञः । वै । विष्णुः । यज्ञेन । एव । यज्ञम् । समिति । तनोति । दैवीम् । धियम् । मनामहे । इति । आह । यज्ञम् । एव । तत् । प्रदयति । सुपारेति सु-पारा । नः । असत् । वशे । इति । आह । व्युष्टिमिति वि-उष्टिम् । एव । अवेति । रुन्धे ( ४ ) । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । होतव्यम् । दीक्षितस्य । गृहा३इ । न । होतव्या३म् । इति । हविः । वै । दीक्षितः । यत् । जुहुयात् । यजमानस्य । अवदायेत्यव-दाय । जुहुयात् । यत् । न । जुहुयात् । यज्ञपरुरिति यज्ञ-परुः । अन्तः । इयात् । ये । देवाः । मनोजाता इति मनः-जाताः । मनोयुज इति मनः-युजः । इति । आह । प्राणा इति प्र-अनाः । वै । देवाः । मनोजाता इति मनः-जाताः । मनोयुज इति मनः-युजः । तेषु । एव । परोक्षमिति परः-अक्षम् । जुहोति । तत् । न । इव । हुतम् ।

न । इव । अहुतम् । स्वपन्तम् । वै । दीक्षितम् । रक्षांश्सि । जिघाश्सन्ति । अग्निः (५) । खलु । वै । रक्षोहेति रक्षः—हा । अग्ने । त्वम् । स्विति । जागृहि । वयम् । स्विति । मन्दिषीमहि । इति । आह । अग्निम् । एव । अधिपामित्य-धि—पाम् । कृत्वा । स्वपिति । रक्षसाम् । अपहत्या इत्यप—हत्यै । अव्रत्यम् । इव । वै । एषः । करोति । यः । दीक्षितः । स्वपिति । त्वम् । अग्ने । व्रतपा इति व्रत—पाः । असि । इति । आह । अग्निः । वै । देवानाम् । व्रतपतिरिति व्रत—पतिः । सः । एव । एनम् । व्रतम् । एति । लम्भयति । देवः । एति । मर्त्येषु । एति । इति । आह । देवः (६) । हि । एषः । सन् । मर्त्येषु । त्वम् । यज्ञेषु । ईड्यः । इति । आह । एतम् । हि । यज्ञेषु । ईडते । अपेति । वै । दीक्षितात् । सुषुपुषः । इन्द्रियम् । देवताः । क्रामन्ति । विश्वे । देवाः । अभीति । माम् । एति । अववृत्रन् । इति । आह । इन्द्रियेण । एव । एनम् । देवताभिः । समिति । नयति । यत् । एतत् । यजुः । न । ब्रूयात् । यावतः । एव । पशून् । अभीति । दीक्षेत । तावन्तः । अस्य । पशवः । स्युः । रास्व । इयत् (७) । सोम । एति । भूयः । भर । इति । आह । अपरिमितानित्यपरि—मितान् । एव ।

पशून् । अवेति । रुन्धे । चन्द्रम् । असि । मम । भोगाय । भव । इति । आह । यथादेवतमिति यथा-देवतम् । एव । एनाः । प्रतीति । गृह्णाति । वायवे । त्वा । वरुणाय । त्वा । इति । यत् । एवम् । एताः । न । अनुदिशेदित्यनु-दिशेत् । अयथादेवतमित्ययथा-देवतम् । दक्षिणाः । गमयेत् । एति । देवताभ्यः । वृश्च्येत । यत् । एवम् । एताः । अनुदिशतीत्यनु-दिशति । यथादेवतमिति यथा-देवतम् । एव । दक्षिणाः । गमयति । न । देवताभ्यः । एति ( ८ ) । वृश्च्यते । देवीः । आपः । अपाम् । नपात् । इति । आह । यत् । वः । मेध्यम् । यज्ञियम् । सदेवमिति स-देवम् । तत् । वः । मा । अवेति । क्रमिषम् । इति । वाव । एतत् । आह । अच्छिन्नम् । तन्तुम् । पृथिव्याः । अन्विति । गेषम् । इति । आह । सेतुम् । एव । कृत्वा । अतीति । एति ( ९ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥



---

( अथ षष्ठाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

देवा वै देवयजनमध्यवसाय दिशो न प्राजान-न्ते१ऽन्योन्यमुपाधावन्त्वया प्र जानाम त्वयेति तेऽ-

दित्याꣳ समध्रियन्त त्वया प्र जानामेति साऽब्रवी-
द्वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना अस-
न्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य
उदयनीयः पञ्च देवता यजति पञ्च दिशो दिशां
प्रज्ञात्यै ( १ ) अथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो
यज्ञो यज्ञमेवाव रुन्धे पथ्याꣳ स्वस्तिमयजन्प्राचीमेव
तया दिशं प्राजानन्नग्निना दक्षिणा सोमेन प्रती-
चीꣳ सवित्रोदीचीमदित्योर्ध्वां पथ्याꣳ स्वस्ति यज-
ति प्राचीमेव तया दिशं प्रजानाति पथ्याꣳ स्वस्ति-
मिष्ट्वाऽग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यद-
ग्नीषोमौ ताभ्यामेवानु पश्यति ( २ ) अग्नीषोमा-
विष्ट्वा सवितारं यजति सवितृप्रसूत एवानु पश्यति
सवितारमिष्ट्वाऽदितिं यजतीयं वा अदितिरस्यामेव
प्रतिष्ठायानु पश्यत्यदितिमिष्ट्वा मारुतीमृचमन्वाह
मरुतो वै देवानां विशो देवविशं खलु वै कल्पमानं
मनुष्यविशमनु कल्पते यन्मारुतीमृचमन्वाह विशां
कॢप्त्यै ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं
कार्यमनूयाजवत् ( ३ ) अप्रयाजमुदयनीयमितीमे
वै प्रयाजा अमी अनूयाजाः सैव सा यज्ञस्य
संततिस्तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजाऽनू-

याजा यत्प्रयाजानन्तरियादात्मानमन्तरियाद्यदनू-
याजानन्तरियात्प्रजामन्तरियाद्यतः खलु वै यज्ञस्य
विततस्य न क्रियते तदनु यज्ञः परा भवति यज्ञं
पराभवन्तं यजमानोऽनु ( ४ ) परा भवति
प्रयाजवदेवाननूयाजवत्प्रायणीयं कार्यं प्रयाजवदनूया-
जवदुदयनीयं नाऽऽत्मानमन्तरेति न प्रजां न यज्ञः
पराभवति न यजमानः प्रायणीयस्य निष्कास
उदयनीयमभि निर्वपति सैव सा यज्ञस्य संततिर्याः
प्रायणीयस्य याज्या यत्ता उदयनीयस्य याज्याः
कुर्यात्पराङमुं लोकमा रोहेत्प्रमायुकः स्याद्याः
प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः
करोत्यस्मिन्नेव लोके प्रति तिष्ठति ( ५ )॥

( प्रज्ञातै पश्यत्यनूयाजवद्यजमानोऽनु पुरोनुवाक्यास्ता अष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथम-
प्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

देवाः । वै । देवयजनमिति देव—यजनम् । अध्यवसाये-
त्यधि—अवसाय । दिशः । न । प्रेति । अजानन् । ते ।
अन्यः । अन्यम् । उपेति । अधावन् । त्वया । प्रेति ।

जानाम । त्वया । इति । ते । अदित्याम् । समिति ।
अध्रियन्त । त्वया । प्रेति । जानाम । इति । सा ।
अब्रवीत् । वरम् । वृणै । मत्प्रायणा इति मत्-
प्रायणाः । एव । वः । यज्ञाः । मदुदयना इति मत्-
उदयनाः । असन् । इति । तस्मात् । आदित्यः ।
प्रायणीय इति प्र-अयनीयः । यज्ञानाम् । आदित्यः ।
उदयनीय इत्युत्-अयनीयः । पञ्च । देवताः । यजति ।
पञ्च । दिशः । दिशाम् । प्रज्ञात्या इति प्र-ज्ञात्यै ( १ ) ।
अथो इति । पञ्चाक्षरेति पञ्च-अक्षरा । पङ्क्तिः ।
पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे ।
पथ्याम् । स्वस्तिम् । अयजन् । प्राचीम् । एव । तया ।
दिशम् । प्रेति । अजानन् । अग्निना । दक्षिणा ।
सोमेन । प्रतीचीम् । सवित्रा । उदीचीम् । अदित्या ।
ऊर्ध्वाम् । पथ्याम् । स्वस्तिम् । यजति । प्राचीम् ।
एव । तया । दिशम् । प्रेति । जानाति । पथ्याम् ।
स्वस्तिम् । इष्ट्वा । अग्नीषोमावित्यग्नी-सोमौ । यजति ।
चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । अग्नीषोमावि-
त्यग्नी-सोमौ । ताभ्याम् । एव । अन्विति । पश्यति (२ ) ।
अग्नीषोमावित्यग्नी-सोमौ । इष्ट्वा । सवितारम् । यजति ।
सवितृप्रसूत इति सवितृ-प्रसूतः । एव । अन्विति । पश्यति ।

( प्रायणीयाविधानम् )

सवितारम् । इष्ट्वा । अदितिम् । यजति । इयम् । वै । अदितिः । अस्याम् । एव । प्रतिष्ठायेति प्रति-स्थाय । अन्विति । पश्यति । अदितिम् । इष्ट्वा । मारुतीम् । ऋचम् । अन्विति । आह । मरुतः । वै । देवानाम् । विशः । देवविशमिति देव-विशम् । खलु । वै । कल्पमानम् । मनुष्यविशमिति मनुष्य-विशम् । अन्विति । कल्पते । यत् । मारुतीम् । ऋचम् । अन्वाहेत्यनु-आह । विशाम् । क्लृप्त्यै । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । प्रयाजवदिति प्रयाज-वत् । अननूयाजमित्यननु-याजम् । प्रायणीयमिति प्र-अयनीयम् । कार्यम् । अनूयाजवदित्यनूयाज-वत् ( ३ ) । अप्रयाजमित्यप्र-याजम् । उदयनीयमित्युत्-अयनीयम् । इति । इमे । वै । प्रयाजा इति प्र-याजाः । अमी इति । अनूयाजा इत्यनु-याजाः । सा । एव । सा । यज्ञस्य । संततिरिति सं-ततिः । तत् । तथा । न । कार्यम् । आत्मा । वै । प्रयाजा इति प्र-याजाः । प्रजेति प्र-जा । अनूयाजा इत्यनु-याजाः । यत् । प्रयाजानिति प्र-याजान् । अन्तरियादित्यन्तः-इयात् । आत्मानम् । अन्तः । इयात् । यत् । अनूयाजानित्यनु-याजान् । अन्तरियादित्यन्तः-इयात् । प्रजामिति प्र-जाम् । अन्तः । इयात् । यतः । खलु । वै । यज्ञस्य । विततस्येति वि-ततस्य । न । क्रियते । तत् ।

अन्विति । यज्ञः । परेति । भवति । यज्ञम् । पराभवन्तमिति परा—भवन्तम् । यजमानः । अनु ( ४ ) । परेति । भवति । प्रयाजवदिति प्रयाज—वत् । एव । अनूयाजवदित्यनूयाज—वत् । प्रायणीयमिति प्र—अयनीयम् । कार्यम् । प्रयाजवदिति प्रयाज—वत् । अनूयाजवदित्यनुयाज—वत् । उदयनीयमित्युत्—अयनीयम् । न । आत्मानम् । अन्तरेतीत्यन्तः—एति । न । प्रजामिति प्र—जाम् । न । यज्ञः । पराभवतीति परा—भवति । न । यजमानः । प्रायणीयस्येति प्र—अयनीयस्य । निष्कासे । उदयनीयमित्युत्—अयनीयम् । अभि । निरिति । वपति । सा । एव । सा । यज्ञस्य । संततिरिति सं—ततिः । याः । प्रायणीयस्येति प्र—अयनीयस्य । याज्याः । यत् । ताः । उदयनीयस्येत्युत्—अयनीयस्य । याज्याः । कुर्यात् । पराङ् । अमुम् । लोकम् । एति । रोहेत् । प्रमायुक इति प्र—मायुकः । स्यात् । याः । प्रायणीयस्येति प्र—अयनीयस्य । पुरोनुवाक्या इति पुरः—अनुवाक्याः । ताः । उदयनीयस्येत्युत्—अयनीयस्य । याज्याः । करोति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयोरस्पर्धेता॒ᳲ सा कद्रूः सुपर्णीमजयत्साऽब्रवीत्तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानं निष्क्रीणीष्वेतीयं वै कद्रूरसौ सुपर्णी छन्दाᳲसि सौपर्णेयाः साऽब्रवीदस्मै वै पितरौ पुत्रान्बिभृतस्तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानं निष्क्रीणीष्व ( १ ) इति मा कद्रूरवोचदिति जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेता॒ᳲ सा पशुभिश्च दीक्षया चाऽगच्छत्तस्माज्जगती छन्दसां पशव्यतमा तस्मात्पशुमन्तं दीक्षोप नमति त्रिष्टुगुदपतत्त्रयोदशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेता॒ᳲ सा दक्षिणाभिश्च ( २ ) तपसा चाऽगच्छत्तस्मात्त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्त एतत्खलु वाव तप इत्याहुर्यः स्वं ददातीति गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा तमस्या अजाऽभ्यरुन्ध तदजाया अजत्व॒ᳲ सा सोमं चाऽहरच्चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत ब्रह्मवादिनो वदन्ति ( ३ ) कस्मात्सत्याद्गा-

यत्री कनिष्ठा छन्दसा सती यज्ञमुखं परीयायेति
यदेवादः सोममाऽहरत्तस्माद्यज्ञमुखं पर्यैत्तस्मात्तेजस्वि-
नीतमा पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन
समगृह्णात्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातःसवनं
च माध्यंदिनं च तस्मात्तृतीयसवन ऋजीषमभि
षुण्वन्ति धीतमिव हि मन्यन्ते ( ४ ) आशिरमव
नयति सशुक्रत्वायाथो सं भरत्येवैनत्त सोममाह्रि-
यमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्स तिस्रो
रात्रीः परिमुषितोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतः
सोमो वसति ते देवा अब्रुवन्स्त्रीकामा वै गन्धर्वाः
स्त्रिया निष्क्रीणामेति ते वाच स्त्रियमेकहायनीं
कृत्वा तया निरक्रीणन्त्सा रोहिद्रूपं कृत्वा गन्धर्वेभ्यः
( ५ ) अपक्रम्यातिष्ठत्तद्रोहितो जन्म ते देवा
अब्रुवन्नप युष्मदक्रमीन्नास्मानुपावर्तते वि ह्वयामहा
इति ब्रह्म गन्धर्वा अवदन्नगायन्देवाः सा देवान्गायत
उपावर्तत तस्माद्गायन्त स्त्रियः कामयन्ते कामुका
एन स्त्रियो भवन्ति य एवं वेदाथो य एवं विद्वा-
नपि जन्येषु भवति तेभ्य एव ददत्युत यद्बहुतयाः
( ६ ) भवन्त्येकहायन्या क्रीणाति वाचैवैन सर्वया
क्रीणाति तस्मादेकहायना मनुष्या वाचं वदन्त्यकू-

टयाऽकर्णयाऽकाणयाऽश्लोणयाऽसंप्तशफया क्रीणाति सर्वयैवैनं क्रीणाति यच्छ्वेतयां क्रीणीयाद्दुश्चर्मा यजमानः स्याद्यत्कृष्णयाऽनुस्तरंणी स्यात्प्रमायुको यजमानः स्याद्यद्द्विरूपया वार्त्रघ्नी स्यात्स वाऽन्यं जिनीयात्तं वाऽन्यो जिनीयादरुणया पिङ्गाक्ष्या क्रीणात्येतद्वै सोमस्य रूपꣳ स्वयैवैनं देवतया क्रीणाति ( ७ ) ॥

( निष्क्रीणीष्व दक्षिणामिश्र वदन्ति मन्यन्ते गन्धर्वेभ्यो बहुतया: पिङ्गाक्ष्या दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

कद्रूः । च । वै । सुपर्णीति सु–पर्णी । च । आत्मरूपयोरित्यात्म–रूपयोः । अस्पर्धेताम् । सा । कद्रूः । सुपर्णीमिति सु–पर्णीम् । अजयत् । सा । अब्रवीत् । तृतीयस्याम् । इतः । दिवि । सोमः । तम् । एति । हर । तेन । आत्मानम् । निरिति । क्रीणीष्व । इति । इयम् । वै । कद्रूः । असौ । सुपर्णीति सु–पर्णी । छन्दाꣳसि । सौपर्णेयाः । सा । अब्रवीत् । अस्मै । वै । पितरौ । पुत्रान् । बिभृतः । तृतीयस्याम् । इतः । दिवि ।

सोमः । तम् । एति । हर । तेन । आत्मानम् । निरिति ।
क्रीणीष्व (१) । इति । मा । कद्रूः । अवोचत् ।
इति । जगती । उदिति । अपतत् । चतुर्दशाक्षरेति
चतुर्दश—अक्षरा । सती । सा । अप्राप्येत्यप्र—आप्य ।
नीति । अवर्तत । तस्यै । द्वे इति । अक्षरे इति ।
अमीयेताम् । सा । पशुभिरिति पशु—भिः । च ।
दीक्षया । च । एति । अगच्छत् । तस्मात् । जगती ।
छन्दसाम् । पशव्यतमेति पशव्य—तमा । तस्मात् ।
पशुमन्तमिति पशु—मन्तम् । दीक्षा । उपेति । नमति ।
त्रिष्टुक् । उदिति । अपतत् । त्रयोदशाक्षरेति त्रयोदश—
अक्षरा । सती । सा । अप्राप्येत्यप्र—आप्य । नीति ।
अवर्तत । तस्यै । द्वे इति । अक्षरे इति । अमीयेताम् ।
सा । दक्षिणाभिः । च (२) । तपसा । च । एति ।
अगच्छत् । तस्मात् । त्रिष्टुभः । लोके । माध्यंदिने ।
सवने । दक्षिणाः । नीयन्ते । एतत् । खलु । वाव । तपः ।
इति । आहुः । यः । स्वम् । ददाति । इति । गायत्री ।
उदिति । अपतत् । चतुरक्षरेति चतुः—अक्षरा । सती ।
अजया । ज्योतिषा । तम् । अस्यै । अजा । अभीति ।
अरुन्ध । तत् । अजायाः । अजत्वमित्यज—त्वम् । सा ।
सोमम् । च । एति । अहरत् । चत्वारि । च ।

अक्षराणि । सा । अष्टाक्षरेत्यष्टा—अक्षरा । समिति ।
अपद्यत । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति (३)।
कस्मात् । सत्यात् । गायत्री । कनिष्ठा । छन्दसाम् ।
सती । यज्ञमुखमिति यज्ञ—मुखम् । परीति । इयाय । इति ।
यत् । एव । अदः । सोमम् । एति । अहरत् । तस्मात् ।
यज्ञमुखमिति यज्ञ—मुखम् । परीति । ऐत् । तस्मात् । तेज-
स्विनीतमेति तेजस्विनी—तमा । पद्भ्यामिति पत्—
भ्याम् । द्वे इति । सवने इति । समगृह्णादिति सम्—अगृं-
ह्णात् । मुखेन । एकम् । यत् । मुखेन । समगृह्णादिति
सम्—अगृह्णात् । तत् । अधयत् । तस्मात् । द्वे इति ।
सवने इति । शुक्रवती इति शुक्र—वती । प्रातःसवनमिति
प्रातः—सवनम् । च । माध्यंदिनम् । च । तस्मात् । तृती-
यसवन इति तृतीय—सवने । ऋजीषम् । अभीति ।
सुन्वन्ति । धीतम् । इव । हि । मन्यन्ते (४)। आशि-
रम् । अवेति । नयति । सशुक्रत्वायेति सशुक्र—त्वाय ।
अथो इति । समिति । भरति । एव । एनत् ।
तम् । सोमम् । आह्रियमाणमित्या—ह्रियमाणम् ।
गन्धर्वः । विश्वावसुरिति विश्व—वसुः । परीति ।
अमुष्णात् । सः । तिस्रः । रात्रीः । परिमुषित इति परि—
मुषितः । अवसत् । तस्मात् । तिस्रः । रात्रीः । क्रीतः ।

सोमः । वसति । ते । देवाः । अब्रुवन् । स्त्रीकामा इति स्त्री—कामाः । वै । गन्धर्वाः । स्त्रिया । निरिति । क्रीणाम । इति । ते । वाचम् । स्त्रियम् । एकहायनीमित्येक—हायनीम् । कृत्वा । तया । निरिति । अक्रीणन् । सा । रोहित् । रूपम् । कृत्वा । गन्धर्वेभ्यः ( ५ ) । अपक्रम्येत्यप—क्रम्य । अतिष्ठत् । तत् । रोहितः । जन्म । ते । देवाः । अब्रुवन् । अपेति । युष्मत् । अक्रमीत् । न । अस्मान् । उपावर्तत इत्युप—आवर्तते । वीति । ह्वयामहै । इति । ब्रह्म । गन्धर्वाः । अवदन् । अगायन् । देवाः । सा । देवान् । गायतः । उपावर्ततेत्युप—आवर्तत । तस्मात् । गायन्तम् । स्त्रियः । कामयन्ते । कामुकाः । एनम् । स्त्रियः । भवन्ति । यः । एवम् । वेद । अथो इति । यः । एवम् । विद्वान् । अपीति । जन्येषु । भवति । तेभ्यः । एव । ददाति । उत । यत् । बहुतया इति बहु—तयाः ( ६ ) । भवन्ति । एकहायन्येत्येक—हायन्या । क्रीणाति । वाचा । एव । एनम् । सर्वया । क्रीणाति । तस्मात् । एकहायना इत्येक—हायनाः । मनुष्याः । वाचम् । वदन्ति । अकूटया । अकर्णया । अकाणया । अश्लोणया । असंप्तशफयेत्यसंप्त—शफया । क्रीणाति । सर्वया । एव । एनम् । क्रीणाति । यत् । श्वेतया । क्रीणीयात् । दुश्चर्मेति दुः—चर्मा । यजमानः । स्यात् । यत् । कृष्णया ।

अनुस्तरणीत्यनु–स्तरणी । स्यात् । प्रमायुक इति प्र–मायुकः । यजमानः । स्यात् । यत् । द्विरूपयेति द्वि–रूपया । वार्त्रघ्नीति वार्त्र–घ्नी । स्यात् । सः । वा । अन्यम् । जिनीयात् । तम् । वा । अन्यः । जिनीयात् । अरुणया । पिङ्गाक्ष्येति पिङ्ग–अक्ष्या । क्रीणाति । एतत् । वै । सोमस्य । रूपम् । स्वया । एव । एनम् । देवतया । क्रीणाति (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

तद्धिरण्यमभवत्तस्मादद्भ्यो हिरण्यं पुनन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्यादनस्थिकेन प्रजाः प्रवीयन्तेऽस्थन्वतीर्जायन्त इति यद्धिरण्यं घृतेऽवधाय जुहोति तस्मादनस्थिकेन प्रजाः प्र वीयन्तेऽस्थन्वतीर्जायन्त एतद्वा अग्नेः प्रियं धाम यद्घृतं तेजो हिरण्यमियं ते शुक्र तनूरिदं वर्च इत्याह सतेजसमेवैनꣳ सतनुं ( १ ) करोत्यथो सं भरत्येवैनं यदबद्धमवदध्याद्गर्भाः प्रजानां परापातुकाः स्युर्बद्धमव दधाति गर्भाणां धृत्यै निष्टर्क्यं बध्नाति प्रजानां प्रजननाय वाग्वा एषा यत्सोमक्रयणी जूरसीत्याह यद्धि मनसा

जवते तद्वाचा वदति धृता मनसेत्याह मनसा हि वाग्धृता जुष्टा विष्णव इत्याह ( २ ) यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवसः प्रसव इत्याह सवितृप्रसूतामेव वाचमव रुन्धे काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येष खलु वा अरक्षोहतः पन्था योऽग्नेश्च सूर्यस्य च सूर्यस्य चक्षुराऽरुहमग्नेरक्ष्णः कनीनिकामित्याह य एवारक्षोहतः पन्थास्तꣳ समारोहति ( ३ ) वाग्वा एषा यत्सोमक्रयणी चिदसि मनाऽसीत्याह शास्त्येवैनामेतत्तस्माच्छिष्टाः प्रजा जायन्ते चिदसीत्याह यद्धि मनसा चेतयते तद्वाचा वदति मनाऽसीत्याह यद्धि मनसाऽभिगच्छति तत्करोति धीरसीत्याह यद्धि मनसा ध्यायति तद्वाचा ( ४ ) वदति दक्षिणाऽसीत्याह दक्षिणा ह्येषा यज्ञियाऽसीत्याह यज्ञियामेवैनां करोति क्षत्रियाऽसीत्याह क्षत्रिया ह्येषाऽदितिरस्युभयतःशीर्ष्णीत्याह यदेवाऽऽदित्यः प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेवमाह यदबद्धा स्यादयता स्याद्यत्पदिबद्धाऽनुस्तरणी स्यात्प्रमायुको यजमानः स्यात् ( ५ ) यत्कर्णगृहीता वार्त्रघ्नी स्यात्स वाऽन्यं

( अरुणया सोमक्रयप्रकाराभिधानम् )

जिनीयात्तं वाऽन्यो जिनीयान्मित्रस्त्वा पदि बध्नात्वित्याह मित्रो वै शिवो देवानां तेनैवैनां पदि बध्नाति पूषाऽध्वनः पात्वित्याहेयं वै पूषेमामेवास्या अधिपामकः समष्ट्या इन्द्रायाध्यक्षायेत्याहेन्द्रमेवास्या अध्यक्षं करोति (६) अनु त्वा माता मन्यतामनु पितेत्याहानुमतयैवैनया क्रीणाति सा देवि देवमच्छेहीत्याह देवी ह्येषा देवः सोम इन्द्राय सोममित्याहेन्द्राय हि सोम आह्रियते यदेतद्यजुर्न ब्रूयात्पराच्येव सोमक्रयणीयाद्रुद्रस्त्वाऽऽ वर्तयत्वित्याह रुद्रो वै क्रूरः ( ७ ) देवानां तमेवास्यै परस्ताद्दधात्यावृत्त्यै क्रूरमिव वा एतत्करोति यद्रुद्रस्य कीर्तयति मित्रस्य पथेत्याह शान्त्यै वाचा वा एष वि क्रीणीते यः सोमक्रयण्या स्वस्ति सोमसखा पुनरेहि सह रय्येत्याह वाचैव विक्रीय पुनरात्मन्वाचं धत्तेऽनुपदासुकाऽस्य वाग्भवति य एवं वेद ( ८ )

( सतनु विष्णव इत्याह समारोहति ध्यायति तद्वाचा

यजमानः स्यात्करोति क्रूरो वेद । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके

प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ षष्ठाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

तत् । हिरण्यम् । अभवत् । तस्मात् । अद्भ्य इत्यत्—भ्यः । हिरण्यम् । पुनन्ति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । कस्मात् । सत्यात् । अनस्थिकेन । प्रजा इति प्र—जाः । प्रवीयन्त इति प्र—वीयन्ते । अस्थन्वतीरित्य-स्थन्—वतीः । जायन्ते । इति । यत् । हिरण्यम् । घृते । अवधायेत्यव—धार्य । जुहोति । तस्मात् । अनस्थिकेन । प्रजा इति प्र—जाः । प्रेति । वीयन्ते । अस्थन्वती-रित्यस्थन्—वतीः । जायन्ते । एतत् । वै । अग्नेः । प्रियम् । धाम । यत् । घृतम् । तेजः । हिरण्यम् । इयम् । ते । शुक्र । तनूः । इदम् । वर्चः । इति । आह । सतेजसमिति स—तेजसम् । एव । एनम् । सतनुमिति स—तनुम् (१) । करोति । अथो इति । समिति । भरति । एव । एनम् । यत् । अवबद्धम् । अवदध्यादित्यव—दध्यात् । गर्भाः । प्रजानामिति प्र—जानाम् । परापातुका इति परा-पातुकाः । स्युः । बद्धम् । अवेति । दधाति । गर्भाणाम् । धृत्यै । निष्टर्क्यम् । बध्नाति । प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जननाय । वाक् । वै । एषा । यत् । सोमक्रयणीति सोम—क्रयणी । जूः । असि । इति । आह । यत् । हि । मनसा । जवते । तत् । वाचा । वदति । धृता ।

( अरुणया सोमक्रयप्रकाराभिधानम् )

मनसा । इति । आह । मनसा । हि । वाक् । धृता । जुष्टा । विष्णवे । इति । आह (२) । यज्ञः । वै । विष्णुः । यज्ञाय । एव । एनाम् । जुष्टाम् । करोति । तस्याः । ते । सत्यसवस इति सत्य—सवसः । प्रसव इति प्र—सवे । इति । आह । सवितृप्रसूतामिति सवितृ—प्रसूताम् । एव । वाचम् । अवेति । रुन्धे । काण्डेकाण्ड इति काण्डे—काण्डे । वै । क्रियमाणे । यज्ञम् । रक्षांसि । जिघांसन्ति । एषः । खलु । वै । अरक्षोहत इत्यरक्षः—हतः । पन्थाः । यः । अग्नेः । च । सूर्यस्य । च । सूर्यस्य । चक्षुः । एति । अरुहम् । अग्नेः । अक्ष्णः । कनीनिकाम् । इति । आह । यः । एव । अरक्षोहत इत्यरक्षः—हतः । पन्थाः । तम् । समारोहतीति सम्—आरोहति (३) । वाक् । वै । एषा । यत् । सोमक्रयणीति सोम—क्रयणी । चित् । असि । मना । असि । इति । आह । शास्ति । एव । एनाम् । एतत् । तस्मात् । शिष्टाः । प्रजा इति प्र—जाः । जायन्ते । चित् । असि । इति । आह । यत् । हि । मनसा । चेतयते । तत् । वाचा । वदति । मना । असि । इति । आह । यत् । हि । मनसा । अभिगच्छतीत्यभि—गच्छति । तत् । करोति । धीः । असि । इति । आह । यत् । हि । मनसा । ध्यायति । तत् । वाचा (४) । वदति । दक्षिणा । असि । इति । आह । दक्षिणा ।

हि । एषा । यज्ञियां । असि । इति । आह । यज्ञियाम् ।
एव । एनाम् । करोति । क्षत्रियां । असि । इति । आह ।
क्षत्रियां । हि । एषा । अदितिः । असि । उभयतःशीर्ष्णी-
त्युभयतः—शीर्ष्णी । इति । आह । यत् । एव । आदित्यः ।
प्रायणीय इति प्र—अयनीयः । यज्ञानाम् । आदित्यः ।
उदयनीय इत्युत्—अयनीयः । तस्मात् । एवम् । आह ।
यत् । अबद्धा । स्यात् । अयता । स्यात् । यत् । पदिब-
द्धेति पदि—बद्धा । अनुस्तरणीत्यनु—स्तरणी । स्यात् ।
प्रमायुक इति प्र—मायुकः । यजमानः । स्यात् (५) । यत् ।
कर्णगृहीतेति कर्ण—गृहीता । वार्त्रघ्नीति वार्त्र—घ्नी । स्यात् ।
सः । वा । अन्यम् । जिनीयात् । तम् । वा । अन्यः ।
जिनीयात् । मित्रः । त्वा । पदि । बध्नातु । इति । आह ।
मित्रः । वै । शिवः । देवानाम् । तेन । एव । एनाम् । पदि ।
बध्नाति । पूषा । अध्वनः । पातु । इति । आह । इयम् ।
वै । पूषा । इमाम् । एव । अस्याः । अधिपामित्यधि—पाम् ।
अकः । समष्ट्या इति सम्—अष्ट्यै । इन्द्राय । अध्यक्षाये-
त्यधि—अक्षाय । इति । आह । इन्द्रम् । एव । अस्याः ।
अध्यक्षमित्यधि—अक्षम् । करोति ( ६ ) । अन्विति ।
त्वा । माता । मन्यताम् । अन्विति । पिता । इति ।
आह । अनुमतयेत्यनु—मतया । एव । एनया । क्रीणाति । सा ।

(पदसंग्रहणाभिधानम्)

देवि। देवम्। अच्छ। इहि। इति। आह। देवी। हि।
एषा। देवः। सोमः। इन्द्राय। सोमम्। इति। आह।
इन्द्राय। हि। सोमः। आह्रियत इत्या-ह्रियते।
यत्। एतत्। यजुः। न। ब्रूयात्। पराची। एव। सोम-
क्रयणीति सोम-क्रयणी। इयात्। रुद्रः। त्वा। एति।
वर्तयतु। इति। आह। रुद्रः। वै। क्रूरः (७)।
देवानाम्। तम्। एव। अस्यै। परस्तात्। दधाति।
आवृत्त्या इत्या-वृत्त्यै। क्रूरम्। इव। वै। एतत्। करोति।
यत्।। रुद्रस्य। कीर्तयति। मित्रस्य। पथा। इति।
आह। शान्त्यै। वाचा। वै। एषः। वीति। क्रीणीते।
यः। सोमक्रयण्येति सोम-क्रयण्या। स्वस्ति। सोमसखेति
सोम-सखा। पुनः। एति। इहि। सह। रय्या। इति।
आह। वाचा। एव। विक्रीयेति वि-क्रीय। पुनः।
आत्मन्। वाचम्। धत्ते। अनुपदासुकेत्यनुप-दासुका।
अस्य। वाक्। भवति। यः। एवम्। वेद (८)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ षष्ठाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः।)

---

षट्पदान्यनुनिष्क्रामति षडहं वाङ्नाति

वदत्युत संवत्सरस्यायने यावत्येव वाक्तामव रुन्धे
सप्तमे पदे जुहोति सप्तपदा शक्वरी पशवः शक्वरी
पशूनेवाव रुन्धे सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः
सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै वस्व्यसि रुद्राऽसी-
त्याह रूपमेवास्या एतन्महिमानम् ( १ ) व्याचष्टे
बृहस्पतिस्त्वा सुम्ने रण्वत्वित्याह ब्रह्म वै देवानां
बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे रुद्रो वसुभिरा
चिकेत्वित्याहाऽऽवृत्त्यै पृथिव्यास्त्वा मूर्धन्नाजिघर्मि
देवयजन इत्याह पृथिव्या ह्येष मूर्धा यद्देवयजनमि-
डायाः पद इत्याहेडायै ह्येतत्पदं यत्सोमक्रयण्यै घृतवति
स्वाहा ( २ ) इत्याह यदेवास्यै पदाद्घृतमपीड्यत
तस्मादेवमाह यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः
स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्नि-
वत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि
घ्नन्ति काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि
जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरा-
तय इत्याह रक्षसामपहत्यै ( ३ ) इदमहꣳ रक्षसो
ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म
इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि
तयोरेवानन्तरायं ग्रीवाः कृन्तति पशवो वै सोम-

( पदसंग्रहणाभिधानम् )

क्रय॑ण्यै प॒दं याव॑त्त्मूत॒ꣳ सं व॑पति प॒शूने॒वाव॑ रुन्धे॒ऽस्मे राय॒ इति॒ सं व॑पत्या॒त्मान॑मे॒वाध्व॒र्युः ( ४ ) प॒शुभ्यो॒ नान्तरे॑ति॒ त्वे राय॒ इति॒ यज॑मानाय॒ प्र य॑च्छति॒ यज॑मान ए॒व र॒यिं द॑धाति॒ तोते॒ राय॒ इति॒ पत्नि॑या अ॒र्धो वा ए॒ष आ॒त्मनो॒ यत्पत्नी॒ यथा॑ गृ॒हेषु॑ नि॒धत्ते॑ ता॒दृगे॒व तत्त्वष्टी॑मती ते सपे॒येत्या॑ह॒ त्वष्टा॒ वै प॑शू॒नां मि॑थु॒नाना॒ꣳ रूप॒कृद्रू॒पमे॒व प॒शुषु॑ दधात्य॒स्मै वै लो॒काय॒ गार्ह॑पत्य॒ आ धी॑यते॒ऽमुष्मा॑ आहव॒नीयो॒ यद्गार्ह॑पत्य उप॒वपे॑द॒स्मिँल्लो॒के प॑शु॒मा-न्त्स्या॒द्यदा॑हव॒नीये॑ऽमु॒ष्मिँल्लो॒के प॑शु॒मान्त्स्या॑दु॒भयो॒रुप॑ वपत्यु॒भयो॑रे॒वैनं॑ लो॒कयोः॑ पशु॒मन्तं॑ करोति ( ५ )॥

( म॒हि॒मान॒ꣳ स्वाहा॒ऽप॑हत्या अध्व॒र्युर्धी॑यते॒ चतु॑र्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

षट् । प॒दानि॑ । अनु॑ । नीति॑ । क्रा॒म॒ति॒ । ष॒ड॒ह॒मिति॑ षट्-अ॒ह॒म् । वाक् । न । अ॒तीति॑ । व॒द॒ति॒ । उ॒त । सं॒व॒त्स॒रस्येति॑ सं-व॒त्स॒रस्य॑ । अय॑ने । याव॑ती । ए॒व ।

वाक् । ताम् । अवेति । रुन्धे । सप्तमे । पदे । जुहोति । सप्तपदेति सप्त—पदा । शक्वरी । पशवः । शक्वरी । पशून् । एव । अवेति । रुन्धे । सप्त । ग्राम्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दाँसि । उभयस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । वस्वी । असि । रुद्रा । असि । इति । आह । रूपम् । एव । अस्याः । एतत् । महिमानम् ( १ )। व्याचष्ट इति वि—आचष्टे । बृहस्पतिः । त्वा । सुम्ने । रण्वतु । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । पशून् । अवेति । रुन्धे । रुद्रः । वसुभिरिति वसु—भिः । एति । चिकेतु । इति । आह । आवृत्त्या इत्या—वृत्त्यै । पृथिव्याः । त्वा । मूर्धन् । एति । जिघर्मि । देवयजन इति देव—यजने । इति । आह । पृथिव्याः । हि । एषः । मूर्धा । यत् । देवयजनमिति देव—यजनम् । इडायाः । पदे । इति । आह । इडायै । हि । एतत् । पदम् । यत् । सोमक्रयण्या इति सोम—क्रयण्यै । घृतवतीति घृत—वति । स्वाहा ( २ )। इति आह । यत् । एव । अस्यै । पदात् । घृतम् । अपीड्यत । तस्मात् । एवम् । आह । यत् । अध्वर्युः । अनग्नौ । आहुतिमित्या—हुतिम् । जुहुयात् । अन्धः । अध्वर्युः । स्यात् । रक्षाँसि । यज्ञम् । हन्युः । हिरण्यम् । उपास्ये-

त्युप—अस्य । जुहोति । अग्निवतीत्यग्नि—वति । एव ।
जुहोति । न । अन्धः । अध्वर्युः । भवति । न । यज्ञम् ।
रक्षांꣳसि । घ्नन्ति । काण्डे काण्ड इति काण्डे—काण्डे ।
वै । क्रियमाणे । यज्ञम् । रक्षांꣳसि । जिघांꣳसन्ति ।
परिलिखितमिति परि—लिखितम् । रक्षः । परिलिखिता
इति परि—लिखिताः । अरातयः । इति । आह ।
रक्षसाम् । अपहत्या इत्यप—हत्यै ( ३ ) । इदम् । अहम् ।
रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् ।
द्वेष्टि । यम् । च । वयम् । द्विष्मः । इति । आह । द्वौ ।
वाव । पुरुषौ । यम् । च । एव । द्वेष्टि । यः । च । एनम् ।
द्वेष्टि । तयोः । एव । अनन्तरायमित्यनन्तः—आयम् ।
ग्रीवाः । कृन्तति । पशवः । वै । सोमक्रयण्या इति
सोम—क्रयण्यै । पदम् । यावत्त्मूतमिति यावत्—त्मूतम् ।
समिति । वपति । पशून् । एव । अवेति । रुन्धे । अस्मे
इति । रायः । इति । समिति । वपति । आत्मानम् । एव ।
अध्वर्युः ( ४ ) । पशुभ्य इति पशु—भ्यः । न । अन्तः ।
एति । त्वे इति । रायः । इति । यजमानाय । प्रेति ।
यच्छति । यजमाने । एव । रयिम् । दधाति । तोते ।
रायः । इति । पत्निये । अर्धः । वै । एषः । आत्मनः ।
यत् । पत्नी । यथा । गृहेषु । निधत्त इति नि—धत्ते ।

तादृक् । एव । तत् । त्वष्टीमती । ते । सपेय । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप—कृत् । रूपम् । एव । पशुषु । दधाति । अस्मै । वै । लोकाय । गार्हपत्य इति गार्ह—पत्यः । एति । धीयते । अमुष्मै । आहवनीय इत्या—हवनीयः । यत् । गार्हपत्य इति गार्ह—पत्ये । उपवपेदित्युप—वपेत् । अस्मिन् । लोके । पशुमानिति पशु—मान् । स्यात् । यत् । आहवनीय इत्या-हवनीये । अमुष्मिन् । लोके । पशुमानिति पशु—मान् । स्यात् । उभयोः । उपेति । वपति । उभयोः । एव । एनम् । लोकयोः । पशुमन्तमिति पशु—मन्तम् । करोति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

ब्रह्मवादिनो वदन्ति विचित्यः सोमा३ न विचित्या३ इति सोमो वा ओषधीनाꣳ राजा तस्मिन्यदापन्नं ग्रसितमेवास्य तद्यद्विचिनुयाद्यथाऽऽ-स्याद्ग्रसितं निष्खिदति तादृगेव तद्यन्न विचिनुयाद्य-थाऽक्षन्नापन्नं विधावति तादृगेव तत्क्षोधुकोऽध्वर्युः स्यात्क्षोधुको यजमानः सोमविक्रयिन्त्सोमꣳ शोधये-

त्येव ब्रूयाद्यदीतंरम् ( १ ) यदीतंरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात्सोमविक्रयी क्षोधुकोऽरुणो ह स्माऽऽहौपवेशिः सोमक्रयण एवाहं तृतीयसवनमव रुन्ध इति पशूनां चर्मन्मिमीते पशूनेवाव रुन्धे पशवो हि तृतीयँ सवनं यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीतर्क्षं वा अपशव्यमपशुरेव भवति यं कामयेत पशुमान्त्स्यात् ( २ ) इति लोमतस्तस्य मिमीतैतद्वै पशूनाँ रूपँ रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवत्यपामन्ते क्रीणाति सरसमेवैनं क्रीणात्यमात्योऽसीत्याहामैवैनं कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहो न साऽच्छं याति महिमानमेवास्याच्छं यात्यनसा ( ३ ) अच्छं याति तस्मादनोवाह्यँ समे जीवनं यत्र खलु वा एतँ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवनमभि त्यं देवँ सवितारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि छन्दाँसि सर्वेभिरेवैनं छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनँ समानानां करोत्येकयैकयोत्सर्गम् ( ४ ) मिमीतेऽयातयाम्निया यातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गु-

लयः सर्वास्वङ्गुष्ठमुप नि गृह्णाति तस्मात्समावद्वी-
र्योऽन्याभिरङ्गुलिभिस्तस्मात्सर्वा अनु सं चरति
यत्सह सर्वाभिर्मिमीत सꣳश्लिष्टा अङ्गुलयो जायेरन्ने-
कयैकयोत्सर्गं मिमीते तस्माद्विभक्ता जायन्ते पञ्च
कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो
यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीम् ( ५ )
दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवा-
न्नाद्यमव रुन्धे यद्यजुषा मिमीते भूतमेवाव रुन्धे
यत्तूष्णीं भविष्यद्यद्वै तावानेव सोमः स्याद्यावन्तं
मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्य-
स्त्वेत्युप समूहति सदस्यानेवान्वाभजति वाससोप
नह्यति सर्वदेवत्यं वै ( ६ ) वासः सर्वाभिरेवैनं
देवताभिः समर्धयति पशवो वै सोमः प्राणाय
त्वेत्युप नह्यति प्राणमेव पशुषु दधाति व्यानाय
त्वेत्यनु शृन्थति व्यानमेव पशुषु दधाति तस्मात्स्वपन्तं
प्राणा न जहति ( ७ )॥

( इतरं पशुमान्तस्याद्यात्यनंसोत्सर्गं तूष्णीꣳ
सर्वदेवत्यं वै त्रयस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( सोमोन्मानाभिधानम् )

( अथ षष्ठाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । विचित्य इति वि—चित्यः । सोमा३ः । न । विचित्या३ इति वि—चित्या३ः । इति । सोमः । वै । ओषधीनाम् । राजा । तस्मिन् । यत् । आपन्नमित्या—पन्नम् । ग्रसितम् । एव । अस्य । तत् । यत् । विचिनुयादिति वि—चिनुयात् । यथा । आस्यात् । ग्रसितम् । निष्खिदतीति निः—खिदति । तादृक् । एव । तत् । यत् । न । विचिनुयादिति वि—चिनुयात् । यथा । अक्षन् । आपन्नमित्या—पन्नम् । विधावतीति वि—धावति । तादृक् । एव । तत् । क्षोधुकः । अध्वर्युः । स्यात् । क्षोधुकः । यजमानः । सोमविक्रयिन्निति सोम—विक्रयिन् । सोमम् । शोधय । इति । एव । ब्रूयात् । यदि । इतरम् । ( १ ) । यदि । इतरम् । उभयेन । एव । सोमविक्रयिणमिति सोम—विक्रयिणम् । अर्पयाति । तस्मात् । सोमविक्रयीति सोम—विक्रयी । क्षोधुकः । अरुणः । ह । स्म । आह । औपवेशिरित्यौप—वेशिः । सोमक्रयण इति सोम—क्रयणे । एव । अहम् । तृतीयसवनमिति तृतीय—सवनम् । अवेति । रुन्धे । इति । पशूनाम् । चर्मन् ।

मिमीते । पशून् । एव । अवेति । रुन्धे । पशवः । हि । तृतीयम् । सवनम् । यम् । कामयेत । अपशुः । स्यात् । इति । ऋक्षतः । तस्य । मिमीत । ऋक्षम् । वै । अपशव्यम् । अपशुः । एव । भवति । यम् । कामयेत । पशुमानिति पशु—मान् । स्यात् ( २ ) । इति । लोमतः । तस्य । मिमीत । एतत् । वै । पशूनाम् । रूपम् । रूपेण । एव । अस्मै । पशून् । अवेति । रुन्धे । पशुमानिति पशु—मान् । एव । भवति । अपाम् । अन्ते । क्रीणाति । सरसमिति स—रसम् । एव । एनम् । क्रीणाति । अमात्यः । असि । इति । आह । अमा । एव । एनम् । कुरुते । शुक्रः । ते । ग्रहः । इति । आह । शुक्रः । हि । अस्य । ग्रहः । अनसा । अच्छ । याति । महिमानम् । एव । अस्य । अच्छ । याति । अनसा ( ३ ) । अच्छ । याति । तस्मात् । अनोवाह्यमित्यनः—वाह्यम् । समे । जीवनम् । यत्र । खलु । वै । एतम् । शीर्ष्णा । हरन्ति । तस्मात् । शीर्षहार्यमिति शीर्ष—हार्यम् । गिरौ । जीवनम् । अभीति । त्यम् । देवम् । सवितारम् । इति । अतिच्छन्दसेत्यति—छन्दसा । ऋचा । मिमीते । अतिच्छन्दा इत्यति—छन्दाः । वै । सर्वाणि । छन्दांसि । सर्वेभिः । एव । एनम् । छन्दोभिरिति छन्दः—भिः । मिमीते । वर्ष्म । वै । एषा । छन्दसाम् । यत् ।

अतिच्छन्दा इत्यति—छन्दाः । यत् । अतिच्छन्दसेत्यति—छन्दसा । ऋचा । मिमीते । वर्ष्म । एव । एनम् । समानानाम् । करोति । एकयैकयेत्येकया—एकया । उत्सर्गमित्युत्—सर्गम् ( ४ ) । मिमीते । अयातयाम्नियायातयाम्नियेत्ययातयाम्निया—अयातयाम्निया । एव । एनम् । मिमीते । तस्मात् । नानावीर्या इति नाना—वीर्याः । अङ्गुलयः । सर्वासु । अङ्गुष्ठम् । उप । नीति । गृह्णाति । तस्मात् । समावद्वीर्य इति समावत्—वीर्यः । अन्याभिः । अङ्गुलिभिरित्यङ्गुलि—भिः । तस्मात् । सर्वाः । अनु । समिति । चरति । यत् । सह । सर्वाभिः । मिमीत । सꣳश्लिष्टा इति सं—श्लिष्टाः । अङ्गुलयः । जायेरन् । एकयैकयेत्येकया—एकया । उत्सर्गमित्युत्—सर्गम् । मिमीते । तस्मात् । विभक्ता इति वि—भक्ताः । जायन्ते । पञ्च । कृत्वः । यजुषा । मिमीते । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । पञ्च । कृत्वः । तूष्णीम् ( ५ ) । दश । समिति । पद्यन्ते । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् । विराडिति वि—राट् । विराजेति वि—राजा । एव । अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धे । यत् । यजुषा । मिमीते । भूतम् । एव । अवेति । रुन्धे । यत् । तूष्णीम् । भविष्यत् ।

यत् । वै । तावान् । एव । सोमः । स्यात् । यावन्तम् । मिमीते । यजमानस्य । एव । स्यात् । न । अपीति । सदस्यानाम् । प्रजाभ्य इति प्र—जाभ्यः । त्वा । इति । उप । समिति । ऊहति । सदस्यान् । एव । अन्वाभजतीत्यनु—आभजति । वाससा । उपेति । नह्यति । सर्वदेवत्यमिति सर्व—देवत्यम् वै । ( ६ ) । वासः । सर्वाभिः । एव । एनम् । देवताभिः । समिति । अर्धयति । पशवः । वै । सोमः । प्राणायेति प्र—अनाय । त्वा । इति । उपेति । नह्यति । प्राणमिति प्र—अनम् । एव । पशुषु । दधाति । व्यानायेति वि—अनाय । त्वा । इति । अन्विति । शृन्थति । व्यानमिति वि—अनम् । एव । पशुषु । दधाति । तस्मात् । स्वपन्तम् । प्राणा इति प्र—अनाः । न । जहति । ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ षष्ठाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ।)

---

यत्कलया ते शफेन ते क्रीणानीति पणेतागोअर्घꣳ सोमं कुर्यादगोअर्घं यजमानमगोअर्घमध्वर्युं गोस्तु महिमानं नाव तिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गोअर्घमेव सोमं करोति गोअर्घं यजमानं

गोअर्घमध्वर्युं न गोर्महिमानमवं तिरत्यजया क्रीणाति सतपसमेवैनं क्रीणाति हिरण्येन क्रीणाति सशुक्रमेव ( १ ) एनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यृषभेणं क्रीणाति सेन्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वा-न्वह्निनैव वह्निं यज्ञस्यं क्रीणाति मिथुनाभ्यां क्रीणाति मिथुनस्यावरुद्ध्यै वाससा क्रीणाति सर्वदेवत्यं वै वासः सर्वाभ्य एवैनं देवताभ्यः क्रीणाति दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे ( २ ) तपसस्तनूरसि प्रजापतेर्वर्ण इत्याह पशुभ्य एव तदध्वर्युर्नि ह्नुत आत्मनोऽनाव्रस्काय गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद शुक्रं ते शुक्रेण क्रीणामीत्याह यथायजुरेवैतद्देवा वै येन हिरण्येन सोममक्रीणन्तदभीषहा पुनराऽददत को हि तेजसा विक्रेष्यत इति येन हिरण्येन ( ३ ) सोमं क्रीणीयात्तदभीषहा पुनरा ददीत तेज एवाऽऽत्मन्धत्तेऽस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति यदनुपग्रथ्य हन्याद्दन्दशूका-स्ताꣳ समाꣳ सर्पाः स्युरिदमहꣳ सर्पाणां दन्दशूकानां

ग्रीवा उप ग्रथ्नामीत्याहादन्दशूकास्ताश् समाश् सर्पा भवन्ति तमसा सोमविक्रयिणं विध्यति स्वान (४) भ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधि सोममाऽहरन्यदेतेभ्यः सोमक्रयणान्नानुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिँल्लोके सोमश् रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेऽस्यामुष्मिँल्लोके सोमश् रक्षन्ति (५) ॥

( सशुक्रमेव रुन्ध इति येन हिरण्येन स्वान चतुश्चत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

यत् । कलया । ते । शफेन । ते । क्रीणानि । इति । पणेत । अगोअर्घमित्यगो—अर्घम् । सोमम् । कुर्यात् । अगोअर्घमित्यगो—अर्घम् । यजमानम् । अगोअर्घमित्यगो—अर्घम् । अध्वर्युम् । गोः । तु । महिमानम् । न । अवेति । तिरेत् । गवा । ते । क्रीणानि । इति । एव । ब्रूयात् । गोअर्घमिति गो—अर्घम् । एव । सोमम् ।

( अन्यैः सोमक्रयाभिधानम् )

करोति । गोअर्घमिति गो—अर्घम् । यजमानम् ।
गोअर्घमिति गो—अर्घम् । अध्वर्युम् । न । गोः ।
महिमानम् । अवेति । तिरति । अजया । क्रीणाति ।
सतपसमिति स—तपसम् । एव । एनम् । क्रीणाति ।
हिरण्येन । क्रीणाति । सशुक्रमिति स—शुक्रम् । एव
( १ ) । एनम् । क्रीणाति । धेन्वा । क्रीणाति ।
साशिरमिति स—आशिरम् । एव । एनम् । क्रीणाति ।
ऋषभेण । क्रीणाति । सेन्द्रमिति स—इन्द्रम् । एव ।
एनम् । क्रीणाति । अनडुहा । क्रीणाति । वह्निः । वै ।
अनड्वान् । वह्निना । एव । वह्नि । यज्ञस्य । क्रीणाति ।
मिथुनाभ्याम् । क्रीणाति । मिथुनस्य । अवरुद्ध्या
इत्यव—रुद्ध्यै । वाससा । क्रीणाति । सर्वदेवत्यमिति
सर्व—देवत्यम् । वै । वासः । सर्वाभ्यः । एव । एनम् ।
देवताभ्यः । क्रीणाति । दश । समिति । पद्यन्ते ।
दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् ।
विराडिति वि—राट् । विराजेति वि—राजा । एव ।
अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धे ( २ ) ।
तपसः । तनूः । असि । प्रजापतेरिति प्रजा—पतेः । वर्णः ।
इति । आह । पशुभ्य इति पशु—भ्यः । एव । तत् ।
अध्वर्युः । नीति । ह्नुते । आत्मनः । अनाव्रस्काये-

त्यना—वस्काय । गच्छंति । श्रियंम् । प्रेति । पशून् । आप्नोति । यः । एवम् । वेदं । शुक्रम् । ते । शुक्रेण । क्रीणामि । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । देवाः । वै । येन । हिरण्येन । सोमम् । अक्रीणन् । तत् । अभीषहेत्यभि—सहा । पुनः । एति । अददत । कः । हि । तेजसा । विक्रेष्यत इति वि—क्रेष्यते । इति । येन । हिरण्येन ( ३ ) । सोमम् । क्रीणीयात् । तत् । अभीषहेत्यभि—सहा । पुनः । एति । ददीत । तेजः । एव । आत्मन् । धत्ते । अस्मे इति । ज्योतिः । सोमविक्रयिणीति सोम—विक्रयिणि । तमः । इति । आह । ज्योतिः । एव । यजमाने । दधाति । तमसा । सोमविक्रयिणमिति सोम—विक्रयिणम् । अर्पयति । यत् । अनुपग्रथ्येत्यनुप—ग्रथ्य । हन्यात् । दन्दशूकाः । ताम् । समाम् । सर्पाः । स्युः । इदम् । अहम् । सर्पाणाम् । दन्दशूकानाम् । ग्रीवाः । उपेति । ग्रथ्नामि । इति । आह । अदन्दशूकाः । ताम् । समाम् । सर्पाः । भवन्ति । तमसा । सोमविक्रयिणमिति सोम—विक्रयिणम् । विध्यति । स्वान ( ४ ) । भ्राज । इति । आह । एते । वै । अमुष्मिन् । लोके । सोमम् । अरक्षन् । तेभ्यः । अधीति । सोमम् । एति ।

(क्रीतसोमस्य शकटेन नयनाभिधानम् )

अहरन् । यत् । एतेभ्यः । सोमक्रयणानिति सोम-क्रयणान् । न । अनुदिशेदित्यनु-दिशेत् । अक्रीतः । अस्य । सोमः । स्यात् । न । अस्य । एते । अमुष्मिन् । लोके । सोमम् । रक्षेयुः । यत् । एतेभ्यः । सोमक्रयणानिति सोम-क्रयणान् । अनुदिशतीत्यनु-दिशति । क्रीतः । अस्य । सोमः । भवति । एते । अस्य । अमुष्मिन् । लोके । सोमम् । रक्षन्ति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्या इन्द्रस्योरुमा विश दक्षिणमित्याह देवा वै यꣳ सोममक्रीणन्तमिन्द्रस्योरौ दक्षिण आऽसादयन्नेष खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाहोदायुषा स्वायुषेत्याह देवता एवान्वारभ्योत् ( १ ) तिष्ठत्युर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो ह्येतर्हि सोमोऽदित्याः सदोऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैतद्वि वा एनमेतदर्धयति

यद्वा॑रुण॒ꣳ सन्तं॑ मै॒त्रं क॒रोति॑ वारु॒ण्यर्चाऽऽ सा॑दयति॒ स्वयै॒वैनं॑ दे॒वत॑या॒ सम॑र्धयति॒ वास॑सा पर्या॒नह्य॑ति॒ सर्व॑दे॒वत्यं॒ वै वासः॒ सर्वा॑भिरे॒व ( २ ) ए॒नं॒ दे॒वता॑भि॒ः सम॑र्धयत्य॒थो रक्ष॑सा॒मप॑हत्यै॒ वने॑षु॒ व्य॑न्तरि॑क्षं ततान॒ इत्या॑ह॒ वने॑षु॒ हि व्य॑न्तरि॑क्षं त॒तान॒ वाज॒मर्व॑त्स्वि॒त्या॑ह॒ वाज॒ꣳ ह्यर्व॑त्सु॒ पयो॑ अघ्नि॒यास्वि॒त्या॑ह॒ पयो॒ ह्य॑घ्नि॒यासु॑ हृ॒त्सु क्रतु॑मि॒त्या॑ह हृ॒त्सु हि क्रतुं॒ वरु॑णो॒ वि॒क्ष्व॑ग्निमि॒त्या॑ह॒ वरु॑णो॒ हि वि॒क्ष्व॑ग्निं॒ दि॒वि सूर्य॑म् ( ३ ) इत्या॑ह दि॒वि हि सूर्य॒ꣳ सोम॒मद्रा॑वि॒त्या॑ह॒ ग्रावा॑णो॒ वा अद्र॑य॒स्तेषु॒ वा ए॒ष सोमं॑ दधाति॒ यो यज॑ते॒ तस्मा॑दे॒वमा॑होदु॒ त्यं जा॒तवे॑दसमिति॒ सौ॒र्यर्चा कृ॒ष्णा॒जिनं॑ प्र॒त्यान॑ह्यति॒ रक्ष॑सा॒मप॑हत्या उ॒स्रावेतं॑ धूर्षाहा॒वित्या॑ह यथाय॒जुरे॒वैतत्प्र च्य॑वस्व भुवस्पत॒ इत्या॑ह भू॒ताना॒ꣳ हि ( ४ ) ए॒ष पति॒र्विश्वा॑न्य॒भि धामा॒नीत्या॑ह॒ विश्वा॑नि॒ ह्ये॑षो॑ऽभि धामा॑नि प्र॒च्यव॑ते॒ मा त्वा॑ परि॒परी॑ विद॒दित्या॑ह॒ यदे॒वाद॒ः सोम॑माह्रि॒यमा॑णं गन्ध॒र्वो वि॒श्वाव॑सुः पर्य॒मुष्णा॒त्तस्मा॑दे॒वमा॑हाप॒रिमो॑षाय॒ यज॑मानस्य स्वस्त्य॒यन्य॑सी॒त्या॑ह॒ यज॑मानस्यै॒वैष॒ य॒ज्ञस्या॑न्वार॒म्भोऽन॑वच्छित्त्यै॒ वरु॑णो॒ वा ए॒ष यज॑मानम॒भ्यै॑ति॒ यत् ( ५ ) क्री॒तः सोम॒ उप॑-

( क्रीतसोमस्य शकटेन नयनाभिधानम् )

नद्धो नमो मित्रस्य वरुणस्य चक्षस इत्याह शान्त्या आ सोमं वहन्त्यग्निना प्रति तिष्ठते तौ संभवन्तौ यजमानमभि संभवतः पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षितो यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य स तस्मात्तस्य नाऽऽश्यं पुरुषनिष्क्रयण इव ह्यथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाश्यं वारुण्यर्चा परि चरति स्वयैवैनं देवतया परि चरति ( ६ ) ॥

( अन्वारभ्योत्सर्वाभिरेव सूर्यं भूतानाꣳ

ह्येति यदाहुः सप्तविꣳशतिश्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

प्राचीनवꣳशं यावन्त ऋक्सामे वै वाग्वै देवेभ्यो देवा वै देवयजनं इश्च तद्धिरण्यꣳ षट्पदानि ब्रह्मवादिनो विचित्यो यत्कलया ते वारुणो क्रीतः सोम एकादश ॥ ११ ॥

प्राचीनवꣳशꣳ स्वाहेत्याह येऽन्तःशरा ह्येष संतपसा च यत्कर्णगृहीतेति लोमतो वारुणः षट्संप्रतिः ॥ ७६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ षष्ठाष्टके प्रथमप्रपाठके एकादशोऽनुवाकः । )

---

वारुणः । वै । क्रीतः । सोमः । उपनद्ध इत्युप—नद्धः । मित्रः । नः । एति । इहि । सुमित्रधा इति सुमित्र—धाः । इति । आह । शान्त्यै । इन्द्रस्य । ऊरुम् । एति । विश । दक्षिणम् । इति । आह । देवाः । वै । यम् । सोमम् । अक्रीणन् । तम् । इन्द्रस्य । ऊरौ । दक्षिणे । एति । असादयन् । एषः । खलु । वै । एतर्हि । इन्द्रः । यः । यजते । तस्मात् । एवम् । आह । उदिति । आयुषा । स्वायुषेति सु—आयुषा । इति । आह । देवताः । एव । अन्वारभ्येत्यनु—आरभ्य । उदिति । ( १ ) । तिष्ठति । उरु । अन्तरिक्षम् । अन्विति । इहि । इति । आह । अन्तरिक्षदेवत्य इत्यन्तरिक्ष—देवत्यः । हि । एतर्हि । सोमः । अदित्याः । सदः । असि । अदित्याः । सदः । एति । सीद । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । वीति । वै । एनम् । एतत् । अर्धयति । यत् । वारुणम् । सन्तम् । मैत्रम् । करोति । वारुण्या । ऋचा । एति । सादयति । स्वया । एव । एनम् ।

देवतया । समिति । अर्धयति । वाससा । पर्यानह्यतीति परि—आनह्यति । सर्वदेवत्यमिति सर्व—देवत्यम्। वै । वासः । सर्वाभिः । एव (२) । एनम् । देवताभिः । समिति । अर्धयति । अथो इति । रक्षसाम् । अपहत्या इत्यप—हत्यै । वनेषु । वीति । अन्तरिक्षम् । ततान । इति । आह । वनेषु । हि । वीति । अन्तरिक्षम् । ततान। वाजम्। अर्वत्स्वित्यर्वत्—सु । इति । आह । वाजम् । हि । अर्वत्स्वित्यर्वत्—सु । पयः । अघ्नियासु । इति । आह । पयः । हि । अघ्नियासु । हृत्स्विति हृत्—सु । क्रतुम् । इति । आह । हृत्स्विति हृत्—सु । हि । क्रतुम् । वरुणः । विक्षु । अग्निम् । इति । आह । वरुणः । हि । विक्षु । अग्निम् । दिवि । सूर्यम् (३)। इति । आह । दिवि । हि । सूर्यम् । सोमम् । अद्रौ । इति । आह । ग्रावाणः । वै । अद्रयः । तेषु । वै । एषः । सोमम् । दधाति । यः । यजते । तस्मात् । एवम् । आह । उदिति । उ । त्यम् । जातवेदसमिति जात—वेदसम् । इति । सौर्या । कृष्णा । कृष्णाजिनमिति कृष्ण—अजिनम् । प्रत्यानह्यतीति प्रति—आनह्यति । रक्षसाम् । अपहत्या इत्यप—हत्यै । उस्रौ । एति । इतम् । धूर्षाहाविति धूः—साहौ । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् ।

प्रेति । च्यवस्व । भुवः । पते । इति । आह । भूतानाम् । हि ( ४ ) । एषः । पतिः । विश्वानि । अभीति । धामानि । इति । आह । विश्वानि । हि । एषः । अभीति । धामानि । प्रच्यवत इति प्र—च्यवते । मा । त्वा । परिपरीति परि—परि । विदत् । इति । आह । यत् । एव । अदः । सोमम् । आह्रियमाणमित्या—ह्रियमाणम् । गन्धर्वः । विश्वावसुरिति विश्व—वसुः । पर्यमुष्णादिति परि—अमुष्णात् । तस्मात् । एवम् । आह । अपरिमोषायेत्यपरि—मोषाय । यजमानस्य । स्वस्त्ययनीति स्वस्ति—अयनी । असि । इति । आह । यजमानस्य । एव । एषः । यज्ञस्य । अन्वारम्भ इत्यनु—आरम्भः । अनवच्छित्त्या इत्यनव—छित्त्यै । वरुणः । वै । एषः । यजमानम् । अभि । एति । एति । यत् ( ५ ) । क्रीतः । सोमः । उपनद्ध इत्युप—नद्धः । नमः । मित्रस्य । वरुणस्य । चक्षसे । इति । आह । शान्त्यै । एति । सोमम् । वहन्ति । अग्निना । प्रतीति । तिष्ठते । तौ । संभवन्ताविति सं—भवन्तौ । यजमानम् । अभि । समिति । भवतः । पुरा । खलु । वाव । एषः । मेधाय । आत्मानम् । आरभ्येत्या—रभ्य । चरति । यः । दीक्षितः । यत् । अग्नीषोमीयमित्यग्नी—सोमीयम् ।

पशुम् । आलभंत इत्यां-लभंते । आत्मनिष्क्रयंण इत्यात्म-निष्क्रयंणः । एव । अस्य । सः । तस्मात् । तस्यं । न । आश्यंम् । पुरुषनिष्क्रयंण इति पुरुष-निष्क्रयंणः । इव । हि । अथो इति । खलु । आहुः । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । वै । इन्द्रः । वृत्रम् । अहन् । इति । यत् । अग्नीषोमीयमित्यग्नी-सोमीयम् । पशुम् । आलभंत इत्यां-लभंते । वार्त्रघ्न इति वार्त्र-घ्नः । एव । अस्य । सः । तस्मात् । उ । आश्यंम् । वारुण्या । ऋचा । परीति । चरति । स्वयां । एव । एनम् । देवतया । परीति । चरति (६) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमः प्रपाठकः ॥ १ ॥

( अथ षष्ठाष्टके द्वितीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

यदुभौ विमुच्याऽऽतिथ्यं गृह्णीयाद्यज्ञं वि च्छिं-न्द्याद्यदुभावविमुच्य यथाऽऽनागतायाऽऽतिथ्यं क्रियते

तादृगेव तद्विमुक्तोऽन्योऽनड्वान्भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे पत्नियैवानुमतं निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एव ( १ ) एष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्याऽऽतिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्यै ( २ ) एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति पञ्च कृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्गायत्रिया उभयत आतिथ्यस्य क्रियत इति यदेवादः सोममा ( ३ ) अहरत्तस्माद्गायत्रिया उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरो-

डाशो भवति तस्मान्नवधा शिरो विष्यूतं नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता स्तोमेन संमितास्तेजस्त्रिवृत्तेज एव यज्ञस्य शीर्षन्दधाति नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता प्राणेन संमितास्त्रिवृद्वै ( ४ ) प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञस्य शीर्षन्दधाति प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुः संभरति देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन्ते देवाः कार्ष्मर्यमपश्यन्कर्मण्यो वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान्परिधीन् ( ५ ) अकुर्वत तैर्वै ते रक्षाꣳस्यपाघ्नत यत्कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै सꣳ स्पर्शयति रक्षसामनन्ववचाराय न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्त्यूर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मवादिनो वदन्ति ( ६ ) अग्निश्च वा एतौ सोमश्च कथा सोमायाऽऽतिथ्यं क्रियते नाग्नय इति यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं

क्रियतेऽथो स्वल्वाहुरग्निः सर्वा देवता इति यद्धविरा-
साद्याग्निं मन्थति हव्यायैवाऽऽसंन्नाय सर्वा देवता
जनयति ( ७ ) ॥

( पत्निया एव जगत्या आ त्रिवृद्वै परिधीन्वदन्त्येय-
कचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

यत् । उभौ । विमुच्येति वि—मुच्य । आतिथ्यम् । गृह्णीयात् । यज्ञम् । वीति । छिन्द्यात् । यत् । उभौ । अविमुच्येत्यवि—मुच्य । यथा । अनागतायेत्यना—गताय । आतिथ्यम् । क्रियते । तादृक् । एव । तत् । विमुक्त इति वि—मुक्तः । अन्यः । अनड्वान् । भवति । अविमुक्त इत्यवि—मुक्तः । अन्यः । अथ । आतिथ्यम् । गृह्णाति । यज्ञस्य । संतत्या इति सं—तत्यै । पत्नी । अन्वारभत इत्यनु—आरभते । पत्नी । हि । पारिणह्यस्येति पारि—नह्यस्य । ईशे । पत्निया । एव । अनुमतामित्यनु—मतम् । निरिति । वपति । यत् । वै । पत्नी । यज्ञस्य । करोति ।

मिथुनम् । तत् । अथो इति । पत्नियाः । एव ( १ ) ।
एषः । यज्ञस्य । अन्वारम्भ इत्यनु-आरम्भः ।
अनवच्छित्त्या इत्यनव-छित्त्यै । यावद्भिरिति यावत्-भिः ।
वै । राजा । अनुचरैरित्यनु-चरैः । आगच्छतीत्या-गच्छति ।
सर्वेभ्यः । वै । तेभ्यः । आतिथ्यम् । क्रियते । छन्दांसि ।
खलु । वै । सोमस्य । राज्ञः । अनुचराणीत्यनु-चराणि ।
अग्नेः । आतिथ्यम् । असि । विष्णवे । त्वा । इति ।
आह । गायत्रियै । एव । एतेन । करोति । सोमस्य ।
आतिथ्यम् । असि । विष्णवे । त्वा । इति । आह ।
त्रिष्टुभे । एव । एतेन । करोति । अतिथेः । आतिथ्यम् ।
असि । विष्णवे । त्वा । इति । आह । जगत्यै ( २ ) । एव ।
एतेन । करोति । अग्नये । त्वा । रायस्पोषदाव्न इति
रायस्पोष-दाव्ने । विष्णवे । त्वा । इति । आह ।
अनुष्टुभ इत्यनु-स्तुभे । एव । एतेन । करोति ।
श्येनाय । त्वा । सोमभृत इति सोम-भृते । विष्णवे । त्वा ।
इति । आह । गायत्रियै । एव । एतेन । करोति । पञ्च ।
छन्दांसि । गृह्णाति । पञ्चाक्षरेति पञ्च-अक्षरा । पङ्क्तिः ।
पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे ।
ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । कस्मात् ।
सत्यात् । गायत्रियै । उभयतः । आतिथ्यस्य । क्रियते ।

इति । यत् । एव । अदः । सोमम् । एति ( ३ ) । अहरत् । तस्मात् । गायत्रियै । उभयतः । आतिथ्यस्य । क्रियते । पुरस्तात् । च । उपरिष्टात् । च । शिरः । वै । एतत् । यज्ञस्य । यत् । आतिथ्यम् । नवकपाल इति नव—कपालः । पुरोडाशः । भवति । तस्मात् । नवधेति नव—धा । शिरः । विष्यूतमिति वि—स्यूतम् । नवकपाल इति नव—कपालः । पुरोडाशः । भवति । ते । त्रयः । त्रिकपाला इति त्रि—कपालाः । त्रिवृतेति त्रि—वृता । स्तोमेन । संमिता इति सं—मिताः । तेजः । त्रिवृदिति त्रि—वृत् । तेजः । एव । यज्ञस्य । शीर्षन् । दधाति । नवकपाल इति नव—कपालः । पुरोडाशः । भवति । ते । त्रयः । त्रिकपाला इति त्रि—कपालाः । त्रिवृतेति त्रि—वृता । प्राणेनेति प्र—अनेन । संमिता इति सं—मिताः । त्रिवृदिति त्रि—वृत् । वै ( ४ ) । प्राण इति प्र—अनः । त्रिवृतमिति त्रि—वृतम् । एव । प्राणमिति प्र—अनम् । अभिपूर्वमित्यभि—पूर्वम् । यज्ञस्य । शीर्षन् । दधाति । प्रजापतेरिति प्रजा—पतेः । वै । एतानि । पक्ष्माणि । यत् । अश्ववाला इत्यश्व—वालाः । ऐक्षवी इति । तिरश्ची इति । यत् । आश्ववाल इत्याश्व—वालः । प्रस्तर इति प्र—स्तरः । भवति । ऐक्षवी इति । तिरश्ची इति । प्रजापतेरिति प्रजा—पतेः । एव ।

तत् । चक्षुः । समिति । भरति । देवाः । वै । याः ।
आहुतीरित्या—हुतीः । अजुहवुः । ताः । असुराः । निष्का-
वम् । आदन् । ते । देवाः । कार्ष्मर्यम् । अपश्यन् ।
कर्मण्यः । वै । कर्म । एनेन । कुर्वीत । इति । ते । कार्ष्म-
र्यमयानिति कार्ष्मर्य—मयान् । परिधीनिति परि—धीन् (५) ।
अकुर्वत । तैः । वै । ते । रक्षाᳺसि । अपेति । अघ्नत ।
यत् । कार्ष्मर्यमया इति कार्ष्मर्य—मयाः । परिधय इति
परि—धयः । भवन्ति । रक्षसाम् । अपहत्या इत्यप—हत्यै ।
समिति । स्पर्शयति । रक्षसाम् । अनन्ववचारायेत्यननु—अव-
चाराय । न । पुरस्तात् । परीति । दधाति । आदित्यः । हि ।
एव । उद्यन्नित्युत्—यन् । पुरस्तात् । रक्षाᳺसि । अपहन्ती-
त्यप—हन्ति । ऊर्ध्वे इति । समिधाविति सम्—इधौ । एति ।
दधाति । उपरिष्टात् । एव । रक्षाᳺसि । अपेति । हन्ति ।
यजुषा । अन्याम् । तूष्णीम् । अन्याम् । मिथुनत्वायेति
मिथुन—त्वाय । द्वे इति । एति । दधाति । द्विपादिति द्वि—
पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । ब्रह्म-
वादिन इति ब्रह्म—वादिनः । वदन्ति (६) । अग्निः । च ।
वै । एतौ । सोमः । च । कथा । सोमाय । आतिथ्यम् ।
क्रियते । न । अग्नये । इति । यत् । अग्नौ । अग्निम् ।
मथित्वा । प्रहरतीति प्र—हरति । तेन । एव । अग्नये ।

आतिथ्यम् । क्रियते । अथो इति । खलु । आहुः । अग्निः । सर्वाः । देवताः । इति । यत् । हविः । आसाद्येत्या—साद्य । अग्निम् । मन्थति । हव्याय । एव । आसन्नायेत्या—सन्नाय । सर्वाः । देवताः । जनयति ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

देवासुराः संयत्ता आसन्ते देवा मिथो विप्रिया आसन्ते॒ऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यः ( १ ) नः प्रथमो॒ऽन्योन्यस्मै द्रुह्यादिति तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति यत्तानूनप्त्रꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति पञ्च कृत्वोऽव द्यति पञ्चधा हि ते तत्समवाद्यन्ताथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो

यज्ञो यज्ञमेवाव रुन्ध आपतये त्वा गृह्णामीत्याह प्राणो वै ( २ ) आपतिः प्राणमेव प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते ताः समवायन्त शाक्वरायेत्याह शक्त्यै हि ते ताः समवायन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठꣳ हि ते तदात्मनः समवायन्तानाधृष्टमस्यनाधृष्यमित्याहानाधृष्टꣳ ह्येतदनाधृष्यं देवानामोजः ( ३ ) इत्याह देवानाꣳ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेन्यमित्याहाभिशस्तिपा ह्येतदनभिशस्तेन्यमनु मे दीक्षां दीक्षापतिर्मन्यतामित्याह यथायजुरेवैतद्घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचरन्त्यꣳशुरꣳशुस्ते देव सोमाऽऽप्यायतामित्याह यत् ( ४ ) एवास्यापुवायते यन्मीयते तदेवास्यैतेनाऽऽप्याययत्या तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेत्याहोभावेवेन्द्रं च सोमं चाऽऽप्याययत्या प्यायय सखीन्त्सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवाऽऽप्याययति स्वस्ति ते देव सोम सुत्यामशीय ( ५ ) इत्याहाऽऽशिषमेवैतामा शास्ते प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये

सोममाप्याययन्त्यन्तरिक्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रतितिष्ठन्ति देवासुराः संयत्ता आसन्ते देवा बिभ्यतोऽग्निं प्राविशन्तस्मादाहुरग्निः सर्वा देवता इति ते ( ३ ) अग्निमेव वरूथं कृत्वाऽसुरानभ्यभवन्नग्निमिव खलु वा एष प्र विशति योऽवान्तरदीक्षामुपैति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यात्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया संतरां मेखलाᳪ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्निः शीतेन वायति समिध्यै या ते अग्ने रुद्रिया तनूरित्याह स्वयैवैनं देवतया व्रतयति सयोनित्वाय शान्त्यै ( ७ ) ॥

( यो वा ओजं आह यदशीयेति तेऽग्न एकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन् । ते । देवाः । मिथः । विप्रिया इति वि—प्रियाः ।

आसन्। ते। अन्यः। अन्यस्मै। ज्यैष्ठ्याय। अति-ष्ठमानाः। पञ्चधेति पञ्च-धा। वीति। अकामन्। अग्निः। वसुभिरिति वसु-भिः। सोमः। रुद्रैः। इन्द्रः। मरुद्भिरिति मरुत्-भिः। वरुणः। आदित्यैः। बृहस्पतिः। विश्वैः। देवैः। ते। अमन्यन्त। असुरेभ्यः। वै। इदम्। भ्रातृव्येभ्यः। रध्यामः। यत्। मिथः। विप्रिया इति वि-प्रियाः। स्मः। याः। नः। इमाः। प्रियाः। तनुवः। ताः। समवद्यामहा इति सम्-अवद्यामहै। ताभ्यः। सः। निरिति। ऋच्छात्। यः (१)। नः। प्रथमः। अन्यः। अन्यस्मै। द्रुह्यात्। इति। तस्मात्। यः। सतानूनप्त्रिणामिति स-तानूनप्त्रिणाम्। प्रथमः। द्रुह्यति। सः। आर्तिम्। एति। ऋच्छति। यत्। तानूनप्त्रमिति तानू-नप्त्रम्। समवद्यतीति सम्-अवद्यति। भ्रातृव्याभिभूत्या इति भ्रातृव्य-अभिभूत्यै। भवति। आत्मना। परेति। अस्य। भ्रातृव्यः। भवति। पञ्च। कृत्वः। अवेति। द्यति। पञ्चधेति पञ्च-धा। हि। ते। तत्। समवाद्यन्तेति सम्-अवाद्यन्त। अथो इति। पञ्चाक्षरेति पञ्च-अक्षरा। पङ्क्तिः। पाङ्क्तः। यज्ञः। यज्ञम्। एव। अवेति। रुन्धे। आपतय इत्या-पतये। त्वा। गृह्णामि। इति। आह। प्राण इति प्र-

अनः । वै ( २ ) । आर्पतिरित्या—पतिः । प्राणमिति प्र—अनम् । एव । प्रीणाति । परिपतय इति परि—पतये । इति । आह । मनः । वै । परिपतिरिति परि—पतिः । मनः । एव । प्रीणाति । तनूनप्त्र इति तनू—नप्त्रे । इति । आह । तनुवः । हि । ते । ताः । समवायन्तेति सम्—अवायन्त । शाक्वराय । इति । आह । शक्त्यै । हि । ते । ताः । समवायन्तेति सम्—अवायन्त । शक्मन् । ओजिष्ठाय । इति । आह । ओजिष्ठम् । हि । ते । तत् । आत्मनः । समवायन्तेति सम्—अवायन्त । अनाधृष्टमित्यना—धृष्टम् । असि । अनाधृष्यमित्यना—धृष्यम् । इति । आह । अनाधृष्टमित्यना—धृष्टम् । हि । एतत् । अनाधृष्यमित्यना—धृष्यम् । देवानाम् । ओजः ( ३ ) । इति । आह । देवानाम् । हि । एतत् । ओजः । अभिशस्तिपा इत्यभिशस्ति—पाः । अनभिशस्तेन्यमित्यनभि—शस्तेन्यम् । इति । आह । अभिशस्तिपा इत्यभिशस्ति—पाः । हि । एतत् । अनभिशस्तेन्यमित्यनभि—शस्तेन्यम् । अन्विति । मे । दीक्षाम् । दीक्षापतिरिति दीक्षा—पतिः । मन्यताम् । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । घृतम् । वै । देवाः । वज्रम् । कृत्वा । सोमम् । अघ्नन् । अन्तिकम् ।

इव । खलु । वै । अस्य । एतत् । चरन्ति । यत् । तानूनप्त्रेणेति तानू–नप्त्रेण । प्रचरन्तीति प्र–चरन्ति । अश्शुरश्शुरित्यश्शुः–अश्शुः । ते । देव । सोम । एति । प्यायताम् । इति । आह । यत् (४) । एव । अस्य । अपुवायते । यत् । मीयते । तत् । एव । अस्य । एतेन । एति । प्याययति । एति । तुभ्यम् । इन्द्रः । प्यायताम् । एति । त्वम् । इन्द्राय । प्यायस्व । इति । आह । उभौ । एव । इन्द्रम् । च । सोमम् । च । एति । प्याययति । एति । प्यायय । सखीन् । सन्या । मेधया । इति । आह । ऋत्विजः । वै । अस्य । सखायः । तान् । एव । एति । प्याययति । स्वस्ति । ते । देव । सोम । सुत्याम् । अशीय (५) । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । प्रेति । वै । एते । अस्मात् । लोकात् । च्यवन्ते । ये । सोमम् । आप्याययन्तीत्या–प्याययन्ति । अन्तरिक्षदेवत्य इत्यन्तरिक्ष–देवत्यः । हि । सोमः । आप्यायित इत्या–प्यायितः । एष्टः । रायः । प्रेति । इषे । भगाय । इति । आह । द्यावापृथिवीभ्यामिति द्यावा–पृथिवीभ्याम् । एव । नमस्कृत्येति नमः–कृत्य । अस्मिन् । लोके । प्रतीति । तिष्ठन्ति । देवासुरा इति देव–असुराः ।

संयत्ता इति सं-यत्ताः । आसन् । ते । देवाः । बिभ्यतः । अग्निम् । प्रेति । अविशन् । तस्मात् । आहुः । अग्निः । सर्वाः । देवताः । इति । ते ( ६ ) । अग्निम् । एव । वरूथम् । कृत्वा । असुरान् । अभीति । अभवन् । अग्निम् । इव । खलु । वै । एषः । प्रेति । विशति । यः । अवान्तरदीक्षामित्यवान्तर-दीक्षाम् । उपैतीत्युप-एति । भ्रातृव्याभिभूत्या इति भ्रातृव्य-अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । आत्मानम् । एव । दीक्षया । पाति । प्रजामिति प्र-जाम् । अवान्तरदीक्षयेत्यवान्तर-दीक्षया । संतरामिति सं-तराम् । मेखलाम् । समायच्छत इति सम्-आयच्छते । प्रजेति प्र-जा । हि । आत्मनः । अन्तरतरेत्यन्तर-तरा । तप्तव्रत इति तप्त-व्रतः । भवति । मदन्तीभिः । मार्जयते । निरिति । हि । अग्निः । शीतेन । वायति । समिद्ध्या इति सम्-इद्ध्यै । या । ते । अग्ने । रुद्रिया । तनूः । इति । आह । स्वया । एव । एनत् । देवतया । व्रतयति । सयोनित्वायेति सयोनि-त्वाय । शान्त्यै ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ षष्ठाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन्ता उपसदैवाजिगीषन्तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषुꣳ समस्कुर्वताग्निमनीकꣳ सोमꣳ शल्यं विष्णुं तेजनं तेऽब्रुवन्क इमामसिष्यतीति (१) रुद्र इत्यब्रुवन्रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ रुद्रोऽवासृजत्स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान्प्राणुदत यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयात् (२) अन्यन्मुखं कुर्यात्स्रुवेणाऽऽघारमा घारयति यज्ञस्य प्रज्ञात्यै पराङतिक्रम्य जुहोति परांच एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान्प्र णुदते पुनरत्याक्रम्योपसदं जुहोति प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्याञ्जित्वा भ्रातृव्यलोकमभ्यारोहति देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान्प्राणुदन्त याः सायꣳ रात्रियै ताभिर्यत्सायंप्रातरुपसदः (३) उपसद्यन्तेऽहोरात्राभ्यामेव

तद्यजमानो भ्रातृव्यान्प्र णुदते याः प्रातर्याज्याः स्युस्ताः सायं पुरोनुवाक्याः कुर्यादयातयामत्वाय तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान्प्रीणाति षट्सं पद्यन्ते षड्वा ऋतव ऋतूनेव प्रीणाति द्वादशाहीने सोम उपैति द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणाति चतुर्विंशतिः सम् (४) पद्यन्ते चतुर्विंशतिरर्धमासा अर्धमासानेव प्रीणात्याराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन्मे लोकेऽर्धुकꣳ स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्राऽवान्तरदीक्षाऽस्मिन्नेवास्मै लोकेऽर्धुकं भवति परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेऽर्धुकꣳ स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्नेवास्मै लोकेऽर्धुकं भवति (५) ॥

(असिष्यतीति जुहुयात्सायंप्रातरुपसदश्चतुर्विꣳशतिः सं चतुरोऽग्रे षोडश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

———

( अथ षष्ठाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

तेषाम् । असुराणाम् । तिस्रः । पुरः । आसन् । अयस्मयी । अवमा । अथ । रजता । अथ । हरिणी । ताः । देवाः । जेतुम् । न । अशक्नुवन् । ताः । उपसदेत्युप-सदा । एव । अजिगीषन् । तस्मात् । आहुः । यः । च । एवम् । वेद । यः । च । न । उपसदेत्युप-सदा । वै । महापुरमिति महा-पुरम् । जयन्ति । इति । ते । इषुम् । समिति । अकुर्वत । अग्निम् । अनीकम् । सोमम् । शल्यम् । विष्णुम् । तेजनम् । ते । अब्रुवन् । कः । इमाम् । असिष्यति । इति ( १ ) । रुद्रः । इति । अब्रुवन् । रुद्रः । वै । क्रूरः । सः । अस्यतु । इति । सः । अब्रवीत् । वरम् । वृणै । अहम् । एव । पशूनाम् । अधिपतिरित्यधि-पतिः । असानि । इति । तस्मात् । रुद्रः । पशूनाम् । अधिपतिरित्यधि-पतिः । ताम् । रुद्रः । अवेति । असृजत् । सः । तिस्रः । पुरः । भित्त्वा । एभ्यः । लोकेभ्यः । असुरान् । प्रेति । अनुदत । यत् । उपसद इत्युप-सदः । उपसद्यन्त इत्युप-सद्यन्ते । भ्रातृव्यपराणुत्त्या इति भ्रातृव्य-पराणुत्त्यै । न । अन्याम् । आहुतिमित्या-हुतिम् । पुरस्तात् । जुहुयात् । यत् ।

अन्याम् । आहुतिमित्या—हुतिम् । पुरस्तात् । जुहुयात् ( २ ) । अन्यत् । मुखम् । कुर्यात् । स्रुवेण । आघारमित्या—घारम् । एति । धारयति । यज्ञस्य । प्रज्ञात्या इति प्र—ज्ञात्यै । पराङ् । अतिक्रम्येत्यति—क्रम्य । जुहोति । पराचः । एव । एभ्यः । लोकेभ्यः । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । पुनः । अत्याक्रम्येत्यति—आक्रम्य । उपसदमित्युप—सदम् । जुहोति । प्रणुद्येति प्र—नुद्य । एव । एभ्यः । लोकेभ्यः । भ्रातृव्यान् । जित्वा । भ्रातृव्यलोकमिति भ्रातृव्य—लोकम् । अभ्यारोहतीत्यभि—आरोहति । देवाः । वै । याः । प्रातः । उपसद इत्युप—सदः । उपासीदन्नित्युप—असीदन् । अह्नः । ताभिः । असुरान् । प्रेति । अनुदन्त । याः । सायम् । रात्रियै । ताभिः । यत् । सायंप्रातरिति सायं—प्रातः । उपसद इत्युप—सदः ( ३ ) । उपसद्यन्त इत्युप—सद्यन्ते । अहोरात्राभ्यामित्यहः—रात्राभ्याम् । एव । तत् । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । याः । प्रातः । याज्याः । स्युः । ताः । सायम् । पुरोनुवाक्या इति पुरः—अनुवाक्याः । कुर्यात् । अयातयामत्वायेत्ययातयाम—त्वाय । तिस्रः । उपसद इत्युप—सदः । उपेति । एति । त्रयः । इमे । लोकाः । इमान् । एव । लोकान् ।

प्रीणाति । षट् । समिति । पद्यन्ते । षट् । वै । ऋतवः ।
ऋतून् । एव । प्रीणाति । द्वादश । अहीने । सोमे । उपेति ।
एति । द्वादश । मासाः । संवत्सर इति सं–वत्सरः ।
संवत्सरमिति सं–वत्सरम् । एव । प्रीणाति । चतुर्विꣳ-
शतिरिति चतुः–विꣳशतिः । समिति ( ४ ) ।
पद्यन्ते । चतुर्विꣳशतिरिति चतुः–विꣳशतिः । अर्धमासा
इत्यर्ध–मासाः । अर्धमासानित्यर्ध–मासान् । एव ।
प्रीणाति । आराग्रामित्यारा–अग्राम् । अवान्तरदी-
क्षामित्यवान्तर–दीक्षाम् । उपेति । इयात् । यः ।
कामयेत । अस्मिन् । मे । लोके । अर्धुकम् । स्यात् ।
इति । एकम् । अग्रे । अथ । द्वौ । अथ । त्रीन् ।
अथ । चतुरः । एषा । वै । आराग्रेत्यारा–अग्रा ।
अवान्तरदीक्षेत्यवान्तर–दीक्षा । अस्मिन् । एव । अस्मै ।
लोके । अर्धुकम् । भवति । परोवरीयसीमिति परः–
वरीयसीम् । अवान्तरदीक्षामित्यवान्तर–दीक्षाम् ।
उपेति । इयात् । यः । कामयेत । अमुष्मिन् । मे ।
लोके । अर्धुकम् । स्यात् । इति । चतुरः । अग्रे ।
अथ । त्रीन् । अथ । द्वौ । अथ । एकम् । एषा ।
वै । परोवरीयसीति परः–वरीयसी । अवान्तरदीक्षेत्यं-

वान्तर–दीक्षा । अमुष्मिन् । एव । अस्मै । लोके ।
अर्धुकम् । भवति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

सुवर्गं वा एते लोकं यन्ति य उपसद उपयन्ति तेषां य उन्नयते हीयत एव स नोदनेषीति सून्नीयमिव यो वै स्वार्थेतां यताꣳ श्रान्तो हीयत उत स निष्ट्याय सह वसति तस्मात्सकृदुन्नीय नापरमुन्नयेत दध्नोन्नयेतैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे ( १ ) यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत्तं देवा हस्तान्त्सꣳरभ्यैच्छन्तमिन्द्र उपर्युपर्यत्यक्रामत्सोऽब्रवीत्को माऽयमुपर्युपर्यत्यक्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्तेति सोऽब्रवीद्दुर्गे वै हन्ताऽवोचथा वराहोऽयं वाममोषः ( २ ) सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्त्सोऽब्रवीद्दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति

तमेभ्यो यज्ञ एव यज्ञमाऽहरद्यत्तद्वित्तं वेद्यमसुराणाम-विन्दन्त तदेकं वेद्यै वेदित्वमसुराणाम् ( ३ ) वा इयमग्र आसीद्यावदासीनः परापश्यति तावद्देवानां ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदियꣳ सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रः सलावृकी रूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत्तदिमामविन्दन्त यदिमामवि-न्दन्त तद्वेद्यै वेदित्वम् ( ४ ) सा वा इयꣳ सर्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते त्रिꣳश-त्पदानि पश्चात्तिरश्ची भवति षट्त्रिꣳशत्प्राची चतु-र्विꣳशतिः पुरस्तात्तिरश्ची दशदश सं पद्यन्ते दशा-क्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्ध उद्धन्ति यदेवास्या अमेध्यं तदप हन्त्युद्धन्ति तस्मा-दोषधयः परा भवन्ति बर्हिः स्तृणाति तस्मादोष-धयः पुनरा भवन्त्युत्तरं बर्हिष उत्तरबर्हिः स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवायजमा-नादुत्तरं करोति तस्माद्यजमानोऽयजमानादु-त्तरः ( ५ ) ॥

( रुन्धे वाममोषो वेदित्वमसुराणां वेदित्वं भवन्ति पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ षष्ठाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

सुवर्गमिति सुवः—गम् । वै । एते । लोकम् । यन्ति । ये । उपसद इत्युप—सदः । उपयन्तीत्युप—यन्ति । तेषाम् । यः । उन्नयत इत्युत्—नयते । हीयते । एव । सः । न । उदिति । अनेषि । इति । सून्नीयमिति सु—उन्नीयम् । इव । यः । वै । स्वार्थेतामिति स्वार्थ—इताम् । यताम् । श्रान्तः । हीयते । उत । सः । निष्टचार्य । सह । वसति । तस्मात् । सकृत् । उन्नीयेत्युत्—नीय । न । अपरम् । उदिति । नयेत । दध्ना । उदिति । नयेत । एतत् । वै । पशूनाम् । रूपम् । रूपेण । एव । पशून् । अवेति । रुन्धे ( १ ) । यज्ञः । देवेभ्यः । निलायत । विष्णुः । रूपम् । कृत्वा । सः । पृथिवीम् । प्रेति । अविशत् । तम् । देवाः । हस्तान् । संरभ्येति सं—रभ्य । ऐच्छन् । तम् । इन्द्रः । उपर्युपरीत्युपरि—उपरि । अतीति । अक्रामत् । सः । अब्रवीत् । कः । मा । अयम् । उपर्युपरीत्युपरि—उपरि । अतीति । अक्रमीत् । इति । अहम् । दुर्ग इति दुः—गे । हन्ता । इति । अथ । कः । त्वम् । इति । अहम् । दुर्गादिति दुः—गात् । आहर्तेत्या—हर्ता । इति । सः । अब्रवीत् । दुर्ग इति

दुः—गे। वै। हन्ता। अवोचथाः। वराहः। अयम्। वाममोष इति वाम—मोषः (२)। सप्तानाम्। गिरीणाम्। परस्तात्। वित्तम्। वेद्यम्। असुराणाम्। बिभर्ति। तम्। जहि। यदि। दुर्ग इति दुः—गे। हन्ता। असि। इति। सः। दर्भपुञ्जीलमिति दर्भ—पुञ्जीलम्। उद्वृह्येत्युत्—वृह्य। सप्त। गिरीन्। भित्त्वा। तम्। अहन्। सः। अब्रवीत्। दुर्गादिति दुः—गात्। वै। आहर्तेत्या—हर्ता। अवोचथाः। एतम्। एति। हर। इति। तम्। एभ्यः। यज्ञः। एव। यज्ञम्। एति। अहरत्। यत्। तत्। वित्तम्। वेद्यम्। असुराणाम्। अविन्दन्त। तत्। एकम्। वेद्यै। वेदित्वमिति वेदि—त्वम्। असुराणाम् (३)। वै। इयम्। अग्रे। आसीत्। यावत्। आसीनः। परापश्यतीति परा—पश्यति। तावत्। देवानाम्। ते। देवाः। अब्रुवन्। अस्तु। एव। नः। अस्याम्। अपीति। इति। कियत्। वः। दास्यामः। इति। यावत्। इयम्। सलावृकी। त्रिः। परिक्रामतीति परि—क्रामति। तावत्। नः। दत्त। इति। सः। इन्द्रः। सलावृकी। रूपम्। कृत्वा। इमाम्। त्रिः। सर्वतः। परीति! अक्रामत्। तत्। इमाम्। अविन्दन्त। यत्। इमाम्। अविन्दन्त।

तत् । वेद्यै । वेदित्वमिति वेदि–त्वम् (४) । सा । वै । इयम् । सर्वा । एव । वेदिः । इयति । शक्ष्यामि । इति । तु । वै । अवमायेत्यव–माय । यजन्ते । त्रि॰शत् । पदानि । पश्चात् । तिरश्ची । भवति । षट्त्रि॰शदिति षट्–त्रि॰शत् । प्राची । चतुर्वि॰शतिरिति चतुः–वि॰शतिः । पुरस्तात् । तिरश्ची । दशदशेति दश–दश । सम्मिति । पयन्ते । दशाक्षरेति दश–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजेति वि–राजा । एव । अन्नाद्यमित्यन्न–अद्यम् । अवेति । रुन्धे । उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । उदिति । हन्ति । तस्मात् । ओषधयः । परेति । भवन्ति । बर्हिः । स्तृणाति । तस्मात् । ओषधयः । पुनः । एति । भवन्ति । उत्तरमित्युत्–तरम् । बर्हिषः । उत्तरबर्हिरित्युत्तर–बर्हिः । स्तृणाति । प्रजा इति प्र–जाः । वै । बर्हिः । यजमानः । उत्तरबर्हिरित्युत्तर–बर्हिः । यजमानम् । एव । अयजमानात् । उत्तरमित्युत्–तरम् । करोति । तस्मात् । यजमानः । अयजमानात् । उत्तर इत्युत्–तरः (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ षष्ठाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

यद्वा अनीशानो भारमादत्ते वि वै स लिशते यद्द्वादश साह्नस्योपसदः स्युस्तिस्रोऽहीनस्य यज्ञस्य विलोम क्रियेत तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वायाथो सलोम क्रियते वत्सस्यैकः स्तनो भागी हि सोऽथैकꣳ स्तनं व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै ( १ ) क्षुरपवि नाम व्रतं येन प्र जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणानथो कनीयसैव भूय उपैति चतुरोऽग्रे स्तनान्व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनं नाम व्रतं तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभिर्यवागू राजन्यस्य व्रतं क्रूरेव वै यवागूः क्रूर इव ( २ ) राजन्यो वज्रस्य रूपꣳ समृद्ध्या आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं पुष्ट्यै पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयस्तेजसैव तेजः पय आत्मन्धत्तेऽथो पयसा वै गर्भा वर्धन्ते गर्भ इव खलु वा एष यद्दीक्षितो यदस्य पयो व्रतं भवत्यात्मानमेव तद्वर्धयति त्रिव्रतो वै मनुरासीद्द्विव्रता असुरा एकव्रताः ( ३ ) देवाः प्रातर्मध्यंदिने सायं तन्मनोर्व-

तमासीत्पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायं चासुराणां निर्मध्यं क्षुधो रूपं ततस्ते पराऽभवन्मध्यंदिने मध्यरात्रे देवानां ततस्तेऽभवन्त्सुवर्गं लोकमायन्यदस्य मध्यंदिने मध्यरात्रे व्रतं भवति मध्यतो वा अन्नेन भुञ्जते मध्यत एव तदूर्जं धत्ते भ्रातृव्याभिभूत्यै भवत्यात्मना ( ४ ) पराऽस्य भ्रातृव्यो भवति गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात्प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तन्न प्रवस्तव्यमात्मनो गोपीथायैष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेत्स एनमीश्वरोऽनूत्थाय हन्तोर्न प्रवस्तव्यमात्मनो गुप्त्यै दक्षिणतः शय एतद्वै यजमानस्याऽऽयतनꣳ स्व एवाऽऽयतने शयेऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये ( ५ ) ॥

( एतद्वै क्रूर इवैकंव्रता आत्मना यजमानस्य त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

———

( अथ षष्ठाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

यत् । वै । अनीशानः । भारम् । आदत्त इत्या—दत्ते । वीति । वै । सः । लिशते । यत् । द्वादश । साह्नस्येति स—अह्नस्य । उपसद इत्युप—सदः । स्युः । तिस्रः । अहीनस्य । यज्ञस्य । विलोमेति वि—लोम । क्रियेत । तिस्रः । एव । साह्नस्येति स—अह्नस्य । उपसद इत्युप—सदः । द्वादश । अहीनस्य । यज्ञस्य । सवीर्यत्वायेति सवीर्य—त्वाय । अथो इति । सलोमेति स—लोम । क्रियते । वत्सस्य । एकः । स्तनः । भागी । हि । सः । अथ । एकम् । स्तनम् । व्रतम् । उपेति । एति । अथ । द्वौ । अथ । त्रीन् । अथ । चतुरः । एतत् । वै ( १ ) । क्षुरपवीति क्षुर—पवि । नाम । व्रतम् । येन । प्रेति । जातान् । भ्रातृव्यान् । नुदते । प्रतीति । जनिष्यमाणान् । अथो इति । कनीयसा । एव । भूयः । उपेति । एति । चतुरः । अग्रे । स्तनान् । व्रतम् । उपेति । एति । अथ । त्रीन् । अथ । द्वौ । अथ । एकम् । एतत् । वै । सुजघनमिति सु—जघनम् । नाम । व्रतम् । तपस्यम् । सुवर्ग्यमिति सुवः—ग्यम् । अथो इति । प्रेति । एव । जायते । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । यवागूः ।

राजन्यस्य । व्रतम् । क्रूरा । इव । वै । यवागूः । क्रूरः । इव ( २ ) । राजन्यः । वज्रस्य । रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै । आमिक्षा । वैश्यस्य । पाकयज्ञस्येति पाक—यज्ञस्य । रूपम् । पुष्ट्यै । पयः । ब्राह्मणस्य । तेजः । वै । ब्राह्मणः । तेजः । पयः । तेजसा । एव । तेजः । पयः । आत्मन् । धत्ते । अथो इति । पयसा । वै । गर्भाः । वर्धन्ते । गर्भः । इव । खलु । वै । एषः । यत् । दीक्षितः । यत् । अस्य । पयः । व्रतम् । भवति । आत्मानम् । एव । तत् । वर्धयति । त्रिव्रत इति त्रि—व्रतः । वै । मनुः । आसीत् । द्विव्रता इति द्वि—व्रताः । असुराः । एकव्रता इत्येक—व्रताः ( ३ ) । देवाः । प्रातः । मध्यंदिने । सायम् । तत् । मनोः । व्रतम् । आसीत् । पाकयज्ञस्येति पाक—यज्ञस्य । रूपम् । पुष्ट्यै । प्रातः । च । सायम् । च । असुराणाम् । निर्मध्यमिति निः—मध्यम् । क्षुधः । रूपम् । ततः । ते । परेति । अभवन् । मध्यंदिने । मध्यरात्र इति मध्य—रात्रे । देवानाम् । ततः । ते । अभवन् । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । यत् । अस्य । मध्यंदिने । मध्यरात्र इति मध्य—रात्रे । व्रतम् । भवति । मध्यतः । वै । अन्नेन । भुञ्जते । मध्यतः । एव । तत् । ऊर्जम् । धत्ते ।

भ्रातृव्याभिभूत्या इति भ्रातृव्य-अभिभूत्यै । भवति । आत्मना ( ४ ) । परेति । अस्य । भ्रातृव्यः । भवति । गर्भः । वै । एषः । यत् । दीक्षितः । योनिः । दीक्षितविमितमिति दीक्षित-विमितम् । यत् । दीक्षितः । दीक्षितविमितादिति दीक्षित-विमितात् । प्रवसेदिति प्र-वसेत् । यथा । योनेः । गर्भः । स्कन्दति । तादृक् । एव । तत् । न । प्रवस्तव्यमिति प्र-वस्तव्यम् । आत्मनः । गोपीथाय । एषः । वै । व्याघ्रः । कुलगोप इति कुल-गोपः । यत् । अग्निः । तस्मात् । यत् । दीक्षितः । प्रवसेदिति प्र-वसेत् । सः । एनम् । ईश्वरः । अनूत्थायेत्यनु-उत्थाय । हन्तोः । न । प्रवस्तव्यमिति प्र-वस्तव्यम् । आत्मनः । गुप्त्यै । दक्षिणतः । शये । एतत् । वै । यजमानस्य । आयतनमित्या-यतनम् । स्वे । एव । आयतन इत्या-यतने । शये । अग्निम् । अभ्यावृत्येत्यभि-आवृत्य । शये । देवताः । एव । यज्ञम् । अभ्यावृत्येत्यभि-आवृत्य । शये ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

पुरोहविषि देवयजने याजयेद्यं कामयेतो-पैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जयेदित्येतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्न-ग्निमप आदित्यमभि विपश्यत्युपैनमुत्तरो यज्ञो नमत्यभि सुवर्गं लोकं जयत्याप्ते देवयजने याजयेद्भ्रातृव्यवन्तं पन्थां वाऽधिस्पर्शयेत्कर्तं वा यावन्नानसे यातवे ( १ ) न रथायैतद्वा आप्तं देवयजनमाप्नोत्येव भ्रातृव्यं नैनं भ्रातृव्य आप्नोत्येकोन्नते देवयजने याजयेत्पशुकाममेकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृजन्तान्तरा सदोहविर्धाने उन्नतꣳ स्यादेतद्वा एकोन्नतं देवयजनं पशुमानेव भवति त्र्युन्नते देवयजने याजयेत्सुवर्गकामं त्र्युन्नताद्वै देवयजनादङ्गिरसः सुवर्गं लोकमायन्नन्तराऽऽहवनीयं च हविर्धानं च ( २ ) उन्नतꣳ स्यादन्तरा हविर्धानं च सदश्चान्तरा सदश्च गार्हपत्यं चैतद्वै त्र्युन्नतं देवयजनꣳ सुवर्गमेव लोकमेति प्रतिष्ठिते देवयजने याजयेत्प्रतिष्ठाकाममेतद्वै प्रतिष्ठितं देवयजनं यत्सर्वतः समं प्रत्येव तिष्ठति यत्रान्याअन्या

ओषधयो व्यतिषक्ताः स्युस्तद्याजयेत्पशुकाममेतद्वै पशूना॑ रूप॑ रूपेणैवास्मै पशून् ( ३ ) अव रुन्धे पशुमानेव भवति निर्ऋतिगृहीते देवयजने याजयेयं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमित्येतद्वै निर्ऋतिगृहीतं देवयजनं यत्सदृश्यै सत्या ऋक्षं निर्ऋत्यैवास्य यज्ञं ग्राहयति व्यावृत्ते देवयजने याजयेद्व्यावृत्कामं यं पात्रे वा तल्पे वा मीमा॑सेरन्प्राचीनमाहवनीयात्प्रवण॑ स्यात्प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनं वि पाप्मना भ्रातृव्येणाऽऽ वर्तते नेनं पात्रे न तल्पे मीमा॑सन्ते कार्ये देवयजने याजयेद्भूतिकामं कार्यो वै पुरुषो भवत्येव ( ४ ) ॥

( यातवै हविर्धाने च पशून्पाप्मनाऽष्टादश च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

पुरोहविषीति पुरः—हविषि। देवयजन इति देव—यजने। याजयेत्। यम्। कामयेत। उपेति। एनम्। उत्तर इत्युत्—तरः। यज्ञः। नमेत्। अभीति। सुवर्गमिति सुवः—

गम् । लोकम् । जयेत् । इति । एतत् । वै । पुरोहविरिति
पुरः—हविः । देवयजनमिति देव—यजनम् । यस्य । होता
प्रातरनुवाकमिति प्रातः—अनुवाकम् । अनुब्रुवन्नित्यनु—ब्रुव
अग्निम् । अपः । आदित्यम् । अभीति । विपश्यतीति
वि—पश्यति । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः
नमति । अभीति । सुवर्गमिति सुवः—गम् । लोकम्
जयति । आप्ते । देवयजन इति देव—यजने । याजयेत्
भ्रातृव्यवन्तमिति भ्रातृव्य—वन्तम् । पन्थाम् । वा
अधिस्पर्शयेदित्यधि—स्पर्शयेत् । कर्तम् । वा । यावत्
न । अनसे । यातवै ( १ ) । न । रथाय । एतत् । वै
आप्तम् । देवयजनमिति देव—यजनम् । आप्नोति । एव
भ्रातृव्यम् । न । एनम् । भ्रातृव्यः । आप्नोति । एकोन्न
इत्येक—उन्नते । देवयजन इति देवयजने । याजयेत्
पशुकाममिति पशु—कामम् । एकोन्नतादित्येक—उन्न
तात् । वै । देवयजनादिति देव—यजनात् । अङ्गिरसः
पशून् । असृजन्त । अन्तरा । सदोहविर्धाने इति सदः
हविर्धाने । उन्नतमित्युत्—नतम् । स्यात् । एतत् । वै
एकोन्नतमित्येक—उन्नतम् । देवयजनमिति देव—यजनम्
पशुमानिति पशु—मान् । एव । भवति । त्र्युन्नत इति त्रि
उन्नते । देवयजन इति देव-यजने । याजयेत् । सुवर्गका

ममिति सुवर्ग—कामम्। त्र्युन्नतादिति त्रि—उन्नतात्। वै।
देवयजनादिति देव—यजनात्। अङ्गिरसः। सुवर्गमिति
सुवः—गम्। लोकम्। आयन्। अन्तरा।
आहवनीयमित्या—हवनीयम्। च। हविर्धानमिति हविः—
धानम्। च (२)। उन्नतमित्युत्—नतम्। स्यात्।
अन्तरा। हविर्धानमिति हविः—धानम्। च। सदः। च।
अन्तरा। सदः। च। गार्हपत्यमिति गार्ह—पत्यम्। च।
एतत्। वै। त्र्युन्नतमिति त्रि—उन्नतम्। देवयजन-
मिति देव—यजनम्। सुवर्गमिति सुवः—गम्। एव।
लोकम्। एति। प्रतिष्ठित इति प्रति—स्थिते। देवयजन
इति देव—यजने। याजयेत्। प्रतिष्ठाकाममिति प्रतिष्ठा—
कामम्। एतत्। वै। प्रतिष्ठितमिति प्रति—स्थितम्।
देवयजनमिति देव—यजनम्। यत्। सर्वतः। समम्।
प्रतीति। एव। तिष्ठति। यत्र। अन्याअन्या इत्यन्याः—
अन्याः। ओषधयः। व्यतिषक्ता इति वि—अतिषक्ताः।
स्युः। तत्। याजयेत्। पशुकाममिति पशु—कामम्।
एतत्। वै। पशूनाम्। रूपम्। रूपेण। एव। अस्मै।
पशून् (३) अवेति। रुन्धे। पशुमानिति पशु—मान्।
एव। भवति। निर्ऋतिगृहीत इति निर्ऋति—गृहीते। देव-
यजन इति देव—यजने। याजयेत्। यम्। कामयेत।

निर्ऋत्येति निः—ऋत्या । अस्य । यज्ञम् । ग्राहयेयम् । इति । एतत् । वै । निर्ऋतिगृहीतमिति निर्ऋति—गृहीतम् । देवयजनमिति देव—यजनम् । यत् । सदृशै । सत्याः । ऋक्षम् । निर्ऋत्येति निः—ऋत्या । एव । अस्य । यज्ञम् । ग्राहयति । व्यावृत्त इति वि—आवृत्ते । देवयजन इति देव—यजने । याजयेत् । व्यावृत्कामिति व्यावृत्—कामम् । यम् । पात्रे । वा । तल्पे । वा । मीमांसेरन् । प्राचीनम् । आहवनीयादित्या—हवनीयात् । प्रवणमिति प्र—वनम् । स्यात् । प्रतीचीनम् । गार्हपत्यादिति गार्ह—पत्यात् । एतत् । वै । व्यावृत्तमिति वि—आवृत्तम् । देवयजनमिति देव—यजनम् । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तते । न । एनम् । पात्रे । न । तल्पे । मीमांसन्ते । कार्यः । देवयजन इति देव—यजने । याजयेत् । भूतिकाममिति भूति—कामम् । कार्यः । वै । पुरुषः । भवति । एव ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

तेभ्य उत्तरवेदिः सि ही रूपं कृत्वोभयानन्त-

(उत्तरवेदिनिरूपणम्)

राऽपक्रम्यातिष्ठत्ते देवा अमन्यन्त यतरान्वा इयमु-
पावर्त्स्यति त इदं भविष्यन्तीति तामुपामन्त्रयन्त
साऽब्रवीद्वरं वृणै सर्वान्मया कामान्व्यश्नवथ
पूर्वां तु माऽग्नेराहुतिरश्नवता इति तस्मादुत्तरवे-
दिं पूर्वामग्नेर्व्याघारयन्ति वारेवृत ह्यस्यै शम्यया
परि मिमीते (१) मात्रैवास्यै साऽथो युक्तेनैव
युक्तमव रुन्धे वित्तायनी मेऽसीत्याह वित्ता ह्येनानाव-
त्तिक्तायनी मेऽसीत्याह तिक्तान्ह्येनानावदवतान्मा
नाथितमित्याह नाथितान्ह्येनानावदवतान्मा व्यथि-
तमित्याह व्यथितान्ह्येनानावद्विदेरग्निर्नभो नाम
(२) अग्ने अङ्गिर इति त्रिर्हरति य एवैषु लोके-
ष्वग्नयस्तानेवाव रुन्धे तूष्णीं चतुर्थं हरत्यनि-
रुक्तमेवाव रुन्धे सिंहीरसि महिषीरसीत्याह
सिंही ह्येषा रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठ—
दुरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमा-
नमेव प्रजया पशुभिः प्रथयति ध्रुवा
(३) असीति सं हन्ति धृत्यै देवेभ्यः शुन्धस्व
देवेभ्यः शुम्भस्वेत्यव चोक्षति प्र च किरति शुद्ध्या
इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्याह दिग्भ्य
एवैनां प्रोक्षति देवाश्चेदुत्तरवेदिरुपावर्वतीहैव वि

जेयामहा इत्यसुरा वज्रमुद्यत्य देवानभ्यायन्त तानि-न्द्रघोषो वसुभिः पुरस्तादप ( ४ ) अनुदत मनो-जवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चाद्विश्वक-र्माऽऽदित्यैरुत्तरतो यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान्प्र णुदत इन्द्रो यतीन्त्सा-लावृकेभ्यः प्रायच्छत्तान्दक्षिणत उत्तरवेद्या आद-न्यत्प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेद्यदेव तत्र क्रूरं तत्तेन शमयति यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति ( ५ ) ॥

( मिमीते नाम ध्रुवाऽप शुचा त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

तेभ्यः । उत्तरवेदिरित्युत्तर–वेदिः । सिꣳही । रूपम् । कृत्वा । उभयान् । अन्तरा । अपक्रम्येत्यप–क्रम्य । अतिष्ठत् । ते । देवाः । अमन्यन्त । यतरान् । वै । इयम् । उपावर्त्स्यतीत्युप–आवर्त्स्यति । ते । इदम् । भविष्यन्ति । इति । ताम् । उप इति । अमन्त्रयन्त । सा । अब्रवीत् ।

( उत्तरवेदिनिरूपणम् )

वरम् । वृणै । सर्वान् । मया । कामान् । वीति । अश्वथ । पूर्वाम् । तु । मा । अग्नेः । आहुतिरित्या–हुतिः । अश्नवतै । इति । तस्मात् । उत्तरवेदिमित्युत्तर–वेदिम् । पूर्वाम् । अग्नेः । व्याघारयन्तीति वि–आघारयन्ति । वारेवृतमिति वारे–वृतम् । हि । अस्यै । शम्यया । परीति । मिमीते ( १ ) । मात्रा । एव । अस्यै । सा । अथो इति । युक्तेन । एव । युक्तम् । अवेति । रुन्धे । वित्तायनीति वित्त–अयनी । मे । असि । इति । आह । वित्ता । हि । एनान् । आवत् । तिक्तायनीति तिक्त–अयनी । मे । असि । इति । आह । तिक्तान् । हि । एनान् । आवत् । अवतात् । मा । नाथितम् । इति । आह । नाथितान् । हि । एनान् । आवत् । अवतात् । मा । व्यथितम् । इति । आह । व्यथितान् । हि । एनान् । आवत् । विदेः । अग्निः । नभः । नाम ( २ ) । अग्ने । अङ्गिरः । इति । त्रिः । हरति । ये । एव । एषु । लोकेषु । अग्नयः । तान् । एव । अवेति । रुन्धे । तूष्णीम् । चतुर्थम् । हरति । अनिरुक्तमित्यनिः–उक्तम् । एव । अवेति । रुन्धे । सिꣳहीः । असि । महिषीः । असि । इति । आह । सिꣳहीः । हि । एषा । रूपम् । कृत्वा । उभयान् । अन्तरा । अपक्रम्येत्यप–क्रम्य । अतिष्ठत् । उरु । प्रथस्व । उरु । ते । यज्ञपतिरिति यज्ञ–पतिः ।

प्रथताम् । इति । आह । यजमानम् । एव । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । प्रथयति । ध्रुवा । ( ३ ) । असि । इति । समिति । हन्ति । धृत्यै । देवेभ्यः । शुन्धस्व । देवेभ्यः । शुम्भस्व । इति । अवेति । च । उक्षति । प्रेति । च । किरति । शुध्यै । इन्द्रघोष इतीन्द्र—घोषः । त्वा । वसुभिरिति वसु—भिः । पुरस्तात् । पातु । इति । आह । दिग्भ्य इति दिक्—भ्यः । एव । एनाम् । प्रेति । उक्षति । देवान् । च । इत् । उत्तरवेदिरित्युत्तर—वेदिः । उपावर्वर्तीत्युप—आववर्ति । इह । एव । वीति । जयामहै । इति । असुराः । वज्रम् । उद्यत्येत्युत्—यत्य । देवान् । अभीति । आयन्त । तान् । इन्द्रघोष इतीन्द्र—घोषः । वसुभिरिति वसु—भिः । पुरस्तात् । अपेति । ( ४ ) अनुदत । मनोजवा इति मनः—जवाः । पितृभिरिति पितृ—भिः । दक्षिणतः । प्रचेता इति प्र—चेताः । रुद्रैः । पश्चात् । विश्वकर्मेति विश्व—कर्मा । आदित्यैः । उत्तरत इत्युत्—तरतः । यत् । एवम् । उत्तरवेदिमित्युत्तर—वेदिम् । प्रोक्षतीति प्र—उक्षति । दिग्भ्य इति दिक्—भ्यः । एव । तत् । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । इन्द्रः । यतीन् । सालावृकेभ्यः । प्रेति । अयच्छत् । तान् । दक्षिणतः । उत्तरवेद्या इत्युत्तर—वेद्याः ।

( व्याघारणविधिः )

आदन् । यत् । प्रोक्षणीनामिति प्र—उक्षणीनाम् । उच्छिष्येतेत्युत्—शिष्येत । तत् । दक्षिणतः । उत्तरवेद्या इत्युत्तर—वेद्यै । नीति । नयेत् । यत् । एव । तत्र । क्रूरम् । तत् । तेन । शमयति । यम् । द्विष्यात् । तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

सोत्तरवेदिरब्रवीत्सर्वान्मया कामान्व्यश्नवथेति ते देवा अकामयन्तासुरान्भ्रातृव्यानभि भवेमेति तेऽजुहवुः सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान्भ्रातृव्यानभ्यभवन्तेऽसुरान्भ्रातृव्यानभिभूयाकामयन्त प्रजां विन्देमहीति तेऽजुहवुः सिꣳहीरसि सुप्रजावनिः स्वाहेति ते प्रजामविन्दन्त ते प्रजां वित्त्वा ( १ ) अकामयन्त पशून्विन्देमहीति तेऽजुहवुः सिꣳहीरसि रायस्पोषवनिः स्वाहेति ते पशूनविन्दन्त ते पशून्वित्त्वाऽकामयन्त प्रतिष्ठां विन्देमहीति तेऽजुहवुः सिꣳहीरस्यादित्यवनिः स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमां प्रतिष्ठां

वित्त्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवुः सिꣳहीरस्या वह देवान्देवयते ( २ ) यजमानाय स्वाहेति ते देवता आशिष उपाऽऽयन्पञ्च कृत्वो व्याघारयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धेऽक्ष्णया व्याघारयति तस्मा-दक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणाति पौतुद्रवान्परिधी-न्परि दधात्येषाम् ( ३ ) लोकानां विधृत्या अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत स यां वन-स्पतिष्ववसत्तां पूतुद्रौ यामोषधीषु ताꣳ सुगन्धि-तेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे तं देवताः प्रैषमैच्छन्तमन्वविन्दन्तमब्रुवन् ( ४ ) उप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृही-तस्याहुतस्य बहिःपरिधि स्कन्दात्तन्मे भ्रातॄणां भागधे-यमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्क-न्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति सोऽम-न्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि

शातया इति स यानि (५) अस्थान्यशातयत तत्पूतुद्रुव-
भवयन्माऽस्समुपमृतं तद्गुल्गुलु यदेतान्त्संभारान्त्सं
भरत्यग्निमेव तत्सं भरत्यग्नेः पुरीषमसीत्याहाग्नेर्ह्येत-
त्पुरीषं यत्संभारा अथो खल्वाहुरेते वावैनं ते भ्रातरः
परि शेरे यत्पौतुद्रवाः परिधय इति ( ६ ) ॥

( विदत्वा देवयत एषामनुवन्त्यानि
चतुश्चत्वारिंशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः। )

---

सा। उत्तरवेदिरित्युत्तर–वेदिः। अब्रवीत्। सर्वान्।
मया। कामान्। वि। इति। अश्नवथ। इति। ते। देवाः।
अकामयन्त। असुरान्। भ्रातृव्यान्। अभि। इति। भवेम।
इति। ते। अजुहवुः। सिंही। असि। सपत्नसाहीति
सपत्न–साही। स्वाहा। इति। ते। असुरान्।
भ्रातृव्यान्। अभि। इति। अभवन्। ते। असुरान्।
भ्रातृव्यान्। अभिभूयेत्यभि–भूय। अकामयन्त।
प्रजामिति प्र–जाम्। विन्देमहि। इति। ते। अजुहवुः।
सिंही। असि। सुप्रजावनिरिति सुप्रजा–वनिः।

स्वाहा । इति । ते । प्रजामिति प्र—जाम् । अविन्दन्त । ते । प्रजामिति प्र—जाम् । वित्त्वा ( १ ) । अकामयन्त । पशून् । विन्देमहि । इति । ते । अजुहवुः । सिꣳही: । असि । रायस्पोषवनिरिति रायस्पोष—वनिः । स्वाहा । इति । ते । पशून् । अविन्दन्त । ते । पशून् । वित्त्वा । अकामयन्त । प्रतिष्ठामिति प्रति—स्थाम् । विन्देमहि । इति । ते । अजुहवुः । सिꣳही: । असि । आदित्यवनिरित्यादित्य—वनिः । स्वाहा । इति । ते । इमाम् । प्रतिष्ठामिति प्रति—स्थाम् । अविन्दन्त । ते । इमाम् । प्रतिष्ठामिति प्रति—स्थाम् । वित्त्वा । अकामयन्त । देवताः । आशिष इत्या—शिषः । उपेति । इयाम । इति । ते । अजुहवुः । सिꣳही: । असि । एति । वह । देवान् । देवयत इति देव—यते ( २ ) यजमानाय । स्वाहा । इति । ते । देवताः । आशिष इत्या—शिषः । उपेति । आयन् । पञ्च । कृत्वः । व्याघारयतीति वि—आघारयति । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । अक्ष्णया । व्याघारयतीति वि—आघारयति । तस्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति । हरन्ति । प्रतिष्ठित्या इति प्रति—स्थित्यै । भूतेभ्यः । त्वा । इति । स्रुचम् । उदिति । गृह्णाति । ये । एव ।

देवाः । भूताः । तेषाम् । तत् । भागधेयमिति भाग-धेयम् । तान् । एव । तेन । प्रीणाति । पैतुद्रवान् । परिधीनिति परि-धीन् । परीति । दधाति । एषाम् ( ३ ) । लोकानाम् । विधृत्या इति वि-धृत्यै । अग्नेः । त्रयः । ज्यायांसः । भ्रातरः । आसन् । ते । देवेभ्यः । हव्यम् । वहन्तः । प्रेति । अमीयन्त । सः । अग्निः । अबिभेत् । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निलायत । सः । याम् । वनस्पतिषु । अवसत् । ताम् । पूतुद्रौ । याम् । ओषधीषु । ताम् । सुगन्धितेजन इति सुगन्धि-तेजने । याम् । पशुषु । ताम् । पेत्वस्य । अन्तरा । शृङ्गे इति । तम् । देवताः । प्रैषमिति प्र-एषम् । ऐच्छन् । तम् । अन्विति । अविन्दन् । तम् । अब्रुवन् ( ४ ) । उपेति । नः । एति । वर्तस्व । हव्यम् । नः । वह । इति । सः । अब्रवीत् । वरम् । वृणे । यत् । एव । गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः-परिधि । स्कन्दात् । तत् । मे । भ्रातृणाम् । भागधेयमिति भाग-धेयम् । असत् । इति । तस्मात् । यत् । गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः-परिधि । स्कन्दति । तेषाम् । तत् । भागधेयमिति भाग-धेयम् । तान् । एव । तेन । प्रीणाति ।

सः । अमन्यत । अस्थन्वन्त इत्यस्थन्—वन्तः । मे । पूर्वे । भ्रातरः । प्रेति । अमेषत । अस्थानि । शातयै । इति । सः । यानि ( ५ ) । अस्थानि । अशातयत । तत् । पूतुद्रु । अभवत् । यत् । मांसम् । उपमृतमित्युप—मृतम् । तत् । गुल्गुलु । यत् । एतान् । संभारानिति सं—भारान् । संभरतीति सं—भरति । अग्निम् । एव । तत् । समिति । भरति । अग्नेः । पुरीषम् । असि । इति । आह । अग्नेः । हि । एतत् । पुरीषम् । यत् । संभारा इति सं—भाराः । अथो इति । खलु । आहुः । एते । वाव । एनम् । ते । भ्रातरः । परीति । शेरे । यत् । पौतुद्रवाः । परिधय इति परि—धयः । इति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

बद्धमव स्यति वरुणपाशादेवैनं मुञ्चति प्र णेनेक्ति मेध्य एवैनं करोति सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयति सवितृप्रसूत एवैने प्र वर्तयति वरुणो वा एष दुर्वागुभयतो बद्धो यदक्षः स यदु-त्सर्जेद्यजमानस्य गृहानभ्युत्सर्जेत्सुवाग्देव दुर्याꣳ आ

वदेत्याह गृहा वै दुर्याः शान्त्यै पत्नी ( १ )
उपानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै
पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया
एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै वर्त्मना वा
अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति वैष्णवी-
भ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव
रक्षाꣳस्यप हन्ति यदध्वर्युरनग्नावाहुतिं जुहुयाद-
न्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युः ( २ )
हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽ-
ध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति प्राची
प्रेतमध्वरं कल्पयन्ती इत्याह सुवर्गमेवैनं लोकं ग-
मयत्यत्र रमेथां वर्ष्मन्पृथिव्या इत्याह वर्ष्म
ह्येतत्पृथिव्या यद्देवयजनꣳ शिरो वा एतद्यज्ञस्य
यद्धविर्धानं दिवो वा विष्णवुत वा पृथिव्याः
( ३ ) इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य
मेथीं नि हन्ति शीर्षत एव यज्ञस्य यजमान
आशिषोऽव रुन्धे दण्डो वा औपरस्तृतीयस्य
हविर्धानस्य वषट्कारेणाक्षमच्छिनद्यत्तृतीयं छदिर्ह-
विर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्याव-
रुध्यै शिरो वा एतद्यज्ञस्य यद्धविर्धानं विष्णो

रराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतं विष्णोः स्यूरसि विष्णोर्ध्रुवमसी- त्याह वैष्णव॰ हि देवतया हविर्धानं यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्र॰स्रयेदमेहेनाध्वर्युः प्र मीयेत तस्मात्स विस्रस्यः ( ४ )॥

( पत्नी हन्यवा पृथिव्या विष्यतं विष्णोः षड्विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

बद्धम् । अवेति । स्यति । वरुणपाशादिति वरुण—पाशात् । एव । एने इति । मुञ्चति । प्रेति । नेनेक्ति । मेध्ये इति । एव । एने इति । करोति । सावित्रिया । ऋचा । हुत्वा । हविर्धाने इति हविः—धाने । प्रेति । वर्तयति । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । एने इति । प्रेति । वर्तयति । वरुणः । वै । एषः । दुर्वागिति दुः—वाक् । उभयतः । बद्धः । यत् । अक्षः । सः । यत् । उत्सर्जेदिति उत्—सर्जेत् । यजमानस्य । गृहान् । अभ्युत्सर्जेदित्यभि—उत्सर्जेत् । सुवागिति सु—वाक् । देव । दुर्यान् । एति ।

( व्याघारणविधिः )

वद । इति । आह । गृहाः । वै । दुर्याः । शान्त्यै । पत्नी (१) । उपेति । अनक्ति । पत्नी । हि । सर्वस्य । मित्रम् । मित्रत्वायेति मित्र–त्वाय । यत् । वै । पत्नी । यज्ञस्य । करोति । मिथुनम् । तत् । अथो इति । पत्नियाः । एव । एषः । यज्ञस्य । अन्वारम्भ इत्यनु–आरम्भः । अनवच्छित्त्या इत्यनव–छित्त्यै । वर्त्मना । वै । अन्वित्येत्यनु–इत्य । यज्ञम् । रक्षांसि । जिघांसन्ति । वैष्णवीभ्याम् । ऋग्भ्यामित्यृक्–भ्याम् । वर्त्मनोः । जुहोति । यज्ञः । वै । विष्णुः । यज्ञात् । एव । रक्षांसि । अपेति । हन्ति । यत् । अध्वर्युः । अनग्नौ । आहुतिमित्या–हुतिम् । जुहुयात् । अन्धः । अध्वर्युः । स्यात् । रक्षांसि । यज्ञम् । हन्युः (२) । हिरण्यम् । उपास्येत्युप–अस्य । जुहोति । अग्निवतीत्यग्नि–वति । एव । जुहोति । न । अन्धः । अध्वर्युः । भवति । न । यज्ञम् । रक्षांसि । घ्नन्ति । प्राची इति । प्रेति । इतम् । अध्वरम् । कल्पयन्ती इति । इति । आह । सुवर्गमिति सुवः–गम् । एव । एने इति । लोकम् । गमयति । अत्र । रमेथाम् । वर्ष्मन् । पृथिव्याः । इति । आह । वर्ष्म । हि । एतत् । पृथिव्याः । यत् । देवयजनमिति देव–यजनम् । शिरः । वै । एतत् । यज्ञस्य । यत् । हविर्धानमिति हविः–धानम् । दिवः । वा । विष्णो । उत ।

वा । पृथिव्याः ( ३ ) । इति । आशीर्पदयेत्याशीः—पदया । ऋचा । दक्षिणस्य । हविर्धानस्येति हविः—धानस्य । मेथीम् । नीति । हन्ति । शीर्षतः । एव । यज्ञस्य । यजमानः । आशिष इत्या—शिषः । अवेति । रुन्धे । दण्डः । वै । औपरः । तृतीयस्य । हविर्धानस्येति हविः—धानस्य । वषट्कारेणेति वषट्—कारेण । अक्षम् । अच्छिनत् । यत् । तृतीयम् । छदिः । हविर्धानयोरिति हविः—धानयोः । उदाह्रियत इत्युत्—आह्रियते । तृतीयस्य । हविर्धानस्येति हविः—धानस्य । अवरुध्या इत्यव—रुद्ध्यै । शिरः । वै । एतत् । यज्ञस्य । यत् । हविर्धानमिति हविः—धानम् । विष्णोः । रराटम् । असि । विष्णोः । पृष्ठम् । असि । इति । आह । तस्मात् । एतावद्धेस्येतावत्—धा । शिरः । विष्यूतमिति वि—स्यूतम् । विष्णोः । स्यूः । असि । विष्णोः । ध्रुवम् । असि । इति । आह । वैष्णवम् । हि । देवतया । हविर्धानमिति हविः—धानम् । यम् । प्रथमम् । ग्रन्थिम् । ग्रथ्नीयात् । यत् । तम् । न । विस्रꣳसयेदिति वि—स्रꣳसयेत् । अमेहेन । अध्वर्युः । प्रेति । मीयेत । तस्मात् । सः । विस्रस्य इति वि—स्रस्यः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

———

( अथ षष्ठाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिर-सीत्याह शान्त्यै काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्यै ( १ ) इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः प्रोक्षति परस्तादर्वाचीं प्रोक्षति तस्मात् ( २ ) परस्तादर्वाचीं मनुष्या ऊर्जमुप जीवन्ति क्रूर-मिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यव ऊर्गुदुम्बर ऊर्जैवोर्जꣳ समर्धयति यजमानेन संमितौदुम्बरी भवति यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं

दधाति पितृणाꣳ सदनमसी ते बर्हिरव स्तृणाति पितृदेवत्यम् ( ३ ) ह्येतयन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्या निखाता स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनां मिनोत्यथो स्वारुहमेवैनां करोत्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैव ( ४ ) एनां मिनोति ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतद्घृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यां जुहोति द्यावापृथिवी एव रसेनानक्त्यान्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसाऽनक्त्यैन्द्रमसीति छदिरधि नि दधात्यैन्द्रꣳ हि देवतया सदो विश्वजनस्य छायेत्याह विश्वजनस्य ह्येषा छाया यत्सदो नवछदि ( ५ ) तेजस्कामस्य मिनुयात्त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशछदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशछदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशछदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशति-

उदि प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्या उदरं वै सद ऊर्गुदुम्बरो मध्यत औदुम्बरीं मिनोति मध्यत एव प्रजानामूर्जं दधाति तस्मात्(६) मध्यत ऊर्जा भुञ्जते यजमानलोके वै दक्षिणानि छदीꣳषि भ्रातृव्यलोक उत्तराणि दक्षिणान्युत्तराणि करोति यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरोऽन्तर्वर्तान्करोति व्यावृत्त्यै तस्मादरण्यं प्रजा उप जीवन्ति परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैतदिन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्याहैन्द्रꣳ हि देवतया सदो यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात्स विस्रस्यः (७) ॥

( अपहत्यै तस्मात्पितृदेवत्यं तेनैव नवच्छदि तस्मात्सदः पञ्चदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । इति । अभ्रिम् । आ । दत्ते । प्रसूत्या इति प्र-सूत्यै ।

अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । इति । आह । अश्विनौ । हि । देवानाम् । अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह । यत्यै । वज्रः । इव । वै । एषा । यत् । अभ्रिः । अभ्रिः । असि । नारिः । असि । इति । आह । शान्त्यै । काण्डेकाण्ड इति काण्डे—काण्डे । वै । क्रियमाणे । यज्ञम् । रक्षांश्सि । जिघांश्सन्ति । परिलिखितमिति परि—लिखितम् । रक्षः । परिलिखिता इति परि—लिखिताः । अरातयः । इति । आह । रक्षसाम् । अपहत्या इत्यप—हत्यै ( १ ) । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इति । आह । द्वौ । वाव । पुरुषौ । यम् । च । एव । द्वेष्टि । यः । च । एनम् । द्वेष्टि । तयोः । एव । अनन्तरायमित्यनन्तः—आयम् । ग्रीवाः । कृन्तति । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । प्रेति । उक्षति । परस्तात् । अर्वाचीम् । प्रेति । उक्षति । तस्मात् ( २ ) । परस्तात् । अर्वाचीम् । मनुष्याः । ऊर्जम् । उपेति । जीवन्ति । क्रूरम् । इव । वै । एतत् । करोति । यत् । खनति । अपः । अवेति । नयति । शान्त्यै । यवमतीरिति यव—मतीः । अवेति ।

नयति । ऊर्क् । वै । यवः । ऊर्क् । उदुम्बरः । ऊर्जा ।
एव । ऊर्जम् । समिति । अर्धयति । यजमानेन । संमितेति
सं–मिता । औदुम्बरी । भवति । यावान् । एव । यजमानः ।
तावतीम् । एव । अस्मिन् । ऊर्जम् । दधाति । पितृणाम् । सदनम् ।
असि । इति । बर्हिः । अवेति । स्तृणाति । पितृदेवत्य-
मिति पितृ–देवत्यम् ( ३ ) । हि । एतत् । यत् । निखा-
तमिति नि–खातम् । यत् । बर्हिः । अनवस्तीर्येत्यनव–
स्तीर्य । मिनुयात् । पितृदेवत्येति पितृ–देवत्या । निखाते-
ति नि–खाता । स्यात् । बर्हिः । अवस्तीर्येत्यव–स्तीर्य ।
मिनोति । अस्याम् । एव । एनाम् । मिनोति । अथो इति ।
स्वारुहमिति स्व–रुहम् । एव । एनाम् । करोति । उदिति ।
दिवम् । स्तभान । एति । अन्तरिक्षम् । पृण । इति ।
आह । एषाम् । लोकानाम् । विधृत्या इति वि–धृत्यै ।
द्युतानः । त्वा । मारुतः । मिनोतु । इति । आह ।
द्युतानः । ह । स्म । वै । मारुतः । देवानाम् । औदुम्ब-
रीम् । मिनोति । तेन । एव ( ४ ) । एनाम् । मिनोति ।
ब्रह्मवनिमिति ब्रह्म–वनिम् । त्वा । क्षत्रवनिमिति क्षत्र–
वनिम् । इति । आह । यथायजुरिति यथा–यजुः । एव ।
एतत् । घृतेन । द्यावापृथिवी इति द्यावा–पृथिवी । एति ।
पृणेथाम् । इति । औदुम्बर्याम् । जुहोति । द्यावापृथिवी

इति द्यावा—पृथिवी । एव । रसेन । अनक्ति । आन्तमित्या—अन्तम् । अन्ववस्रावयतीत्यनु—अवस्रावयति । आन्तमित्या—अन्तम् । एव । यजमानम् । तेजसा । अनक्ति । ऐन्द्रम् । असि । इति । छदिः । अधि । नीति । दधाति । ऐन्द्रम् । हि । देवतया । सदः । विश्वजनस्येति विश्व—जनस्य । छाया । इति । आह । विश्वजनस्येति विश्व—जनस्य । हि । एषा । छाया । यत् । सदः । नवछदीति नव—छदि ( ५ ) । तेजस्कामस्येति तेजः—कामस्य । मिनुयात् । त्रिवृतेति त्रि—वृता । स्तोमेन । संमितमिति सं—मितम् । तेजः । त्रिवृदिति त्रि—वृत् । तेजस्वी । एव । भवति । एकादशछदीत्येकादश—छदि । इन्द्रियकामस्येतीन्द्रिय—कामस्य । एकादशाक्षरेत्येकादश—अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुक् । इन्द्रियावी । एव । भवति । पञ्चदशछदीति पञ्चदश—छदि । भ्रातृव्यवत इति भ्रातृव्य—वतः । पञ्चदश इति पञ्च—दशः । वज्रः । भ्रातृव्याभिभूत्या इति भ्रातृव्य—अभिभूत्यै । सप्तदशछदीति सप्तदश—छदि । प्रजाकामस्येति प्रजा—कामस्य । सप्तदश इति सप्त—दशः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । एकविꣳशतिछदीत्येकविꣳशति—छदि । प्रतिष्ठाका-

(सदोभिधानम्)

मस्येति प्रतिष्ठा–कामस्य । एकविꣳश इत्येक–विꣳशः । स्तोमानाम् । प्रतिष्ठेति प्रति–स्था । प्रतिष्ठित्या इति प्रति–स्थित्यै । उदरम् । वै । सदः । ऊर्क् । उदुम्बरः । मध्यतः । औदुम्बरीम् । मिनोति । मध्यतः । एव । प्रजानामिति प्र–जानाम् । ऊर्जम् । दधाति । तस्मात् (६) । मध्यतः । ऊर्जा । भुञ्जते । यजमानलोक इति यजमान–लोके । वै । दक्षिणानि । छदीꣳषि । भ्रातृव्यलोक इति भ्रातृव्य–लोके । उत्तराणीत्युत्–तराणि । दक्षिणानि । उत्तराणीत्युत्–तराणि । करोति । यजमानम् । एव । अयजमानात् । उत्तरमित्युत्–तरम् । करोति । तस्मात् । यजमानः । अयजमानात् । उत्तर इत्युत्–तरः । अन्तर्वर्तानित्यन्तः–वर्तान् । करोति । व्यावृत्त्या इति वि–आवृत्त्यै । तस्मात् । अरण्यम् । प्रजा इति प्र–जाः । उपेति । जीवन्ति । परीति । त्वा । गिर्वणः । गिरः । इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । इन्द्रस्य । स्यूः । असि । इन्द्रस्य । ध्रुवम् । असि । इति । आह । ऐन्द्रम् । हि । देवतया । सदः । यम् । प्रथमम् । ग्रन्थिम् । ग्रथ्नीयात् । यत् । तम् । न । विस्रꣳसयेदिति वि–स्रꣳसयेत् । अमेहेन । अध्वर्युः । प्रेति । मीयेत ।

तस्मात् । सः । विस्रस्य इति वि—स्रस्यः ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन्प्राणा अधस्तात्खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणा रक्षोहणो वलगहनो वैष्णवान्खनामीत्याह वैष्णवा हि देवतयोपरवा असुरा वै निर्यन्तो देवानां प्राणेषु वलगान्न्यखनन्तान्बाहुमात्रेऽन्वविन्दन्तस्माद्बाहुमात्राः खायन्त इदमहं तं वलगमुद्वपामि ( १ ) यं नः समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति संतृणत्ति तस्मात्संतृण्णा अन्तरतः प्राणा न सं भिनत्ति तस्मादसंभिन्नाः प्राणा अपोऽव नयति तस्मादार्द्रा अन्तरतः प्राणा यवमतीरव नयति ( २ ) ऊर्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जं दधाति बर्हिरव स्तृणाति तस्माल्लोमशा अन्तरतः प्राणा आज्येन व्याघारयति तेजो वा आज्यं

( उपरवाभिधानम् )

प्राणा उपरवाः प्राणेष्वेव तेजो दधाति हनू वा एते यज्ञस्य यदधिषवणे न सं तृणत्त्यसंतृण्णे हि हनू अथो खलु दीर्घसोमे संतृद्ये धृत्यै शिरो वा एतद्यज्ञस्य यद्धविर्धानम् ( ३ ) प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरꣳ सदो यदा खलु वै जिह्वया दत्स्वधि खादत्यथ मुखं गच्छति यदा मुखं गच्छत्यथोदरं गच्छति तस्माद्धविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति यो वै विराजो यज्ञमुखे दोहं वेद दुह एवैनामियं वै विराट्तस्यै त्वक्चर्मोधोऽधिषवणे स्तना उपरवा ग्रावाणो वत्सा ऋत्विजो दुहन्ति सोमः पयो य एवं वेद दुह एवैनाम् ( ४ )॥

( वपामि यर्वमतीरवं नयति हविर्धानमेव त्रयोविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

यदुभौ देवासुरा मिथस्तेषाꣳ सुवर्गं यद्वा अनीशानः पुरोहविषि (?)भ्यं उत्तरवेदिः सोत्तरवेदिर्बद्धं देवस्याभ्रिꣳ शिरो वा एकादश ॥ ११ ॥

यदुभावित्याह देवानां यज्ञो देवेभ्यो न रथाय यजमानाय परस्तादर्वाची नवपञ्चाशत् ॥ ५९ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
द्वितीयः प्रपाठकः ॥ २ ॥

( अथ षष्ठाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

शिरः । वै । एतत् । यज्ञस्य । यत् । हविर्धानमिति हविः–धानम् । प्राणा इति प्र–अनाः । उपरवा इत्युप–रवाः । हविर्धान इति हविः–धाने । खायन्ते । तस्मात् । शीर्षन् । प्राणा इति प्र–अनाः । अधस्तात् । खायन्ते । तस्मात् । अधस्तात् । शीर्ष्णः । प्राणा इति प्र–अनाः । रक्षोहण इति रक्षः–हनः । वलगहन इति वलग–हनः । वैष्णवान् । खनामि । इति । आह । वैष्णवाः । हि । देवतया । उपरवा इत्युप–रवाः । असुराः । वै । निर्यन्त इति निः–यन्तः । देवानाम् । प्राणेष्विति प्र–अनेषु । वलगानिति वल–गान् । नीति । अखनन् । तान् । बाहुमात्र इति बाहु–मात्रे । अन्विति । अविन्दन् । तस्मात् । बाहुमात्रा इति बाहु–मात्राः । खायन्ते । इदम् । अहम् । तम् । वलगमिति वल–गम् । उदिति । वपामि ( १ ) । यम् । नः । समानः । यम् । असमानः । निचखानेति नि–चखान । इति । आह । द्वौ । वाव । पुरुषौ । यः । च ।

एव । समानः । यः । च । असमानः । यम् । एव । अस्मै । तौ । वलगमिति वल—गम् । निखनेत इति नि—खनेतः । तम् । एव । उदिति । वपति । समिति । तृणत्ति । तस्मात् । संतृण्णा इति सं—तृण्णाः । अन्तरतः । प्राणा इति प्र—अनाः । न । समिति । भिनत्ति । तस्मात् । असंभिन्ना इत्यसं—भिन्नाः । प्राणा इति प्र—अनाः । अपः । अवेति । नयति । तस्मात् । आर्द्राः । अन्तरतः । प्राणा इति प्र—अनाः । यवमतीरिति यव—मतीः । अवेति । नयति ( २ ) । ऊर्क् । वै । यवः । प्राणा इति प्र—अनाः । उपरवा इत्युप—रवाः । प्राणेष्विति प्र—अनेषु । एव । ऊर्जम् । दधाति । बर्हिः । अवेति । स्तृणाति । तस्मात् । लोमशाः । अन्तरतः । प्राणा इति प्र—अनाः । आज्येन । व्याघारयतीति वि—आघारयति । तेजः । वै । आज्यम् । प्राणा इति प्र—अनाः । उपरवा इत्युप—रवाः । प्राणेष्विति प्र—अनेषु । एव । तेजः । दधाति । हनू इति । वै । एते इति । यज्ञस्य । यत् । अधिषवणे इत्यधि—सवने । न । समिति । तृणत्ति । असंतृण्णे इत्यसं—तृण्णे । हि । हनू इति । अथो इति । खलु । दीर्घसोम इति दीर्घ—सोमे । संतृद्ये इति सं—तृद्ये । धृत्यै । शिरः । वै । एतत् । यज्ञस्य । यत् । हविर्धानमिति हविः—धानम् ( ३ ) । प्राणा इति

प्र-अनाः । उपरवा इत्युप-रवाः । हनू इति । अधिषवणे इत्यधि-सवने । जिह्वा । चर्म । ग्रावाणः । दन्ताः । मुखम् । आहवनीय इत्या-हवनीयः । नासिका । उत्तरवेदिरित्युत्तर-वेदिः । उदरम् । सदः । यदा । खलु । वै । जिह्वया । दत्स्विति दत्-सु । अधीति । खादति । अथ । मुखम् । गच्छति । यदा । मुखम् । गच्छति । अथ । उदरम् । गच्छति । तस्मात् । हविर्धान इति हविः-धाने । चर्मन् । अधीति । ग्रावभिरिति ग्राव-भिः । अभिषुत्येत्यभि-सुत्य । आहवनीय इत्या-हवनीये । हुत्वा । प्रत्यञ्चः । परेत्येति परा-इत्य । सदसि । भक्षयन्ति । यः । वै । विराज इति वि-राजः । यज्ञमुख इति यज्ञ-मुखे । दोहम् । वेद । दुहे । एव । एनाम् । इयम् । वै । विराडिति वि-राट् । तस्यै । त्वक् । चर्म । ऊधः । अधिषवणे इत्यधि-सवने । स्तनाः । उपरवा इत्युप-रवाः । ग्रावाणः । वत्साः । ऋत्विजः । दुहन्ति । सोमः । पयः । यः । एवम् । वेद । दुहे । एव । एनाम् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ षष्ठाष्टके तृतीयः प्रपाठकः । )

---

( तत्र, प्रथमोऽनुवाकः ।

---

हरिः ॐ ।

चात्वालाद्धिष्णियानुप वपति योनिर्वै यज्ञस्य चात्वालं यज्ञस्य सयोनित्वाय देवा वै यज्ञं पराऽजयन्त तमाग्नीध्रात्पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान्विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति बहिष्पवमाने स्तुते ( १ ) आहाग्नीदग्नीन्वि हर बर्हिः स्तृणाहि पुरोडाशाꣳ अलं कुर्विति यज्ञमेवापजित्य पुनस्तन्वाना यन्त्यङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयꣳ सशुक्रत्वायाथो सं भरत्येवैनद्धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधि सोममाऽहरन्तमन्ववायन्तं पर्यविशन्य एवं

वेदं विन्दते ( २ ) परिवेष्टारं ते सोमपीथेन व्यार्ध्यन्त ते देवेषु सोमपीथमैच्छन्त तान्देवा अब्रुवन्द्वेद्वे नामनी कुरुध्वमथ प्र वाऽऽप्स्यथ न वेत्यग्नयो वा अथ धिष्णियास्तस्माद्द्विनामा ब्राह्मणोऽर्धुकस्तेषां ये नेदिष्ठं पर्यविशन्ते सोमपीथं प्राऽऽप्नुवन्नाहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयस्तस्मात्तेषु जुह्वत्यतिहाय वषट्करोति वि हि ( ३ ) एते सोमपीथेनाऽऽर्ध्यन्त देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यङ्ङासीनो धिष्णियान्व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्रणुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीः ( ४ ) जायन्ते प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ्धिष्णियानतिसर्पेत्प्राणान्त्सं कर्षेत्प्रमायुकः स्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वः खलु वै नाभ्यै प्राणोऽवाङ्पानो यदध्वर्युः प्रत्यङ्होतारमतिसर्पेदपाने प्राणं दध्यात्प्रमायुकः स्यान्नाध्वर्युरुप गायेद्वाग्वीर्यो वा अध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे ( ५ ) वाचꣳ सं प्र यच्छे-

( धिष्णियाभिधानम् )

दुपदासुकाऽस्य वाक्स्याद्ब्रह्मवादिनो वदन्ति नासं-
स्थिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादथ कथा
दाक्षिणानि होतुमेति यामो हि स तेषां कस्मा
अह देवा यामं वाऽयामं वाऽनु ज्ञास्यन्तीत्युत्तरे-
णाऽऽग्नीध्रं परीत्य जुहोति दाक्षिणानि न प्राणान्त्सं
कर्षति न्यन्ये धिष्णिया उप्यन्ते नान्ये यान्निवपति
तेन तान्प्रीणाति यान्न निवपति यदनुदिशति
तेन तान् ( ६ ) ॥

( स्तुते विन्दते हि वीयन्ते प्रतीचीरुद्वात्र
उप्यन्ते चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके तृतीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

चात्वालात् । धिष्णियान् । उपेति । वपति । योनिः ।
वै । यज्ञस्य । चात्वालम् । यज्ञस्य । सयोनित्वायेति
सयोनि—त्वाय । देवाः । वै । यज्ञम् । परेति ।
अजयन्त । तम् । आग्नीध्रादित्याग्नि—इध्रात् । पुनः ।
अपेति । अजयन् । एतत् । वै । यज्ञस्य । अपराजित-

मित्यपरा—जितम् । यत् । आग्नीध्रमित्याग्नि—इध्रम् । यत् । आग्नीध्रादित्याग्नि—इध्रात् । धिष्णियात् । विहरतीति वि—हरति । यत् । एव । यज्ञस्य । अपराजितमित्यपरा—जितम् । ततः । एव । एनम् । पुनः । तनुते । पराजित्येति परा—जित्य । इव । खलु । वै । एते । यन्ति । ये । बहिष्पवमानमिति बहिः—पवमानम् । सर्पन्ति । बहिष्पवमान इति बहिः—पवमाने । स्तुते ( १ ) । आह । अग्नीदित्यग्नि—इत् । अग्नीन् । वीति । हर । बर्हिः । स्तृणाहि । पुरोडाशान् । अलम् । कुरु । इति । यज्ञम् । एव । अपजित्येत्यप—जित्य । पुनः । तन्वानाः । यन्ति । अङ्गारैः । द्वे इति । सवने इति । वीति । हरति । शलाकाभिः । तृतीयम् । सशुक्रत्वायेति सशुक्र—त्वाय । अथो इति । समिति । भरति । एव । एनत् । धिष्णियाः । वै । अमुष्मिन् । लोके । सोमम् । अरक्षन् । तेभ्यः । अधीति । सोमम् । एति । अहरन् । तम् । अन्ववायन्नित्यनु—अवायन् । तम् । परीति । अविशन् । यः । एवम् । वेद । विन्दते ( २ ) । परिवेष्टारमिति परि—वेष्टारम् । ते । सोमपीथेनेति सोम—पीथेन । वीति । आर्ध्यन्त । ते । देवेषु । सोमपीथमिति सोम—पीथम् । ऐच्छन्त ।

( धिष्णियाभिधानम् )

तान् । देवाः । अब्रुवन् । द्वेद्वे इति द्वे—द्वे । नामनी इति । कुरुध्वम् । अथ । प्रेति । वा । आप्स्यथ । न । वा । इति । अग्नयः । वै । अथ । धिष्णियाः । तस्मात् । द्विनामेति द्वि—नामा । ब्राह्मणः । अर्धुकः । तेषाम् । ये । नेदिष्ठम् । पर्यविशन्निति परि—अविशन् । ते । सोमपीथमिति सोम—पीथम् । प्रेति । आप्नुवन् । आहवनीय इत्या—हवनीयः । आग्नीध्रीय इत्याग्नि—इध्रीयः । होत्रीयः । मार्जालीयः । तस्मात् । तेषु । जुह्वति । अतिहायेत्यति—हाय । वषट् । करोति । वीति । हि ( ३ ) । एते । सोमपीथेनेति सोम—पीथेन । आर्ध्यन्त । देवाः । वै । याः । प्राचीः । आहुतीरित्या—हुतीः । अजुहवुः । ये । पुरस्तात् । असुराः । आसन् । तान् । ताभिः । प्रेति । अनुदन्त । याः । प्रतीचीः । ये । पश्चात् । असुराः । आसन् । तान् । ताभिः । अपेति । अनुदन्त । प्राचीः । अन्याः । आहुतय इत्या—हुतयः । हूयन्ते । प्रत्यङ् । आसीनः । धिष्णियान् । व्याघारयतीति वि—आघारयति । पश्चात् । च । एव । पुरस्तात् । च । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । तस्मात् । पराचीः । प्रजा इति प्र—जाः । प्रेति । वीयन्ते । प्रतीचीः ( ४ ) । जायन्ते । प्राणा इति प्र—अनाः । वै । एते । यत् । धिष्णियाः ।

यत् । अध्वर्युः । प्रत्यङ् । धिष्णियान् । अतिसर्पेदि-त्यति-सर्पेत् । प्राणानिति प्र-अनान् । समिति । कर्षेत् । प्रमायुक इति प्र-मायुकः । स्यात् । नाभिः । वै । एषा । यज्ञस्य । यत् । होता । ऊर्ध्वः । खलु । वै । नाभ्यै । प्राण इति प्र-अनः । अवाङ् । अपान इत्यप-अनः । यत् । अध्वर्युः । प्रत्यङ् । होतारम् । अतिसर्पेदित्यति-सर्पेत् । अपान इत्यप-अने । प्राणमिति प्र-अनम् । दध्यात् । प्रमायुक इति प्र-मायुकः । स्यात् । न । अध्वर्युः । उपेति । गायेत् । वाग्वीर्य इति वाक्-वीर्यः । वै । अध्वर्युः । यत् । अध्वर्युः । उपगायेदित्युप-गायेत् । उद्गात्र इत्युत्-गात्रे ( ५ ) । वाचम् । सम् । प्रेति । यच्छेत् । उप-दासुकेत्युप-दासुका । अस्य । वाक् । स्यात् । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । न । असंस्थित इत्यसं-स्थिते । सोमे । अध्वर्युः । प्रत्यङ् । सदः । अतीति । इयात् । अथ । कथा । दाक्षिणानि । होतुम् । एति । यामः । हि । सः । तेषाम् । कस्मै । अह । देवाः । यामम् । वा । अयामम् । वा । अन्विति । ज्ञास्यन्ति । इति । उत्तरेणेत्युत्-तरेण । आग्नीध्रमित्याग्नि-इध्रम् । परीत्येति परि-इत्य । जुहोति । दाक्षिणानि । न । प्राणा-निति प्र-अनान् । समिति । कर्षति । नीति । अन्ये ।

धिष्णियाः। उप्यन्ते। न। अन्ये। यान्। निवपतीति नि-वपति। तेन। तान्। प्रीणाति। यान्। न। निवपतीति नि-वपति। यत्। अनुदिशतीत्यनु-दिशति। तेन। तान् (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः॥ १॥

(अथ षष्ठाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः।)

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमत आहवनीये जुहोति सुवर्गमेवैनं लोकं गमयति देवान्वै सुवर्गं लोकं यतो रक्षाꣳस्यजिघाꣳसन्ते सोमेन राज्ञा रक्षाꣳस्यपहत्याप्नुमात्मानं कृत्वा सुवर्गं लोकमायन्रक्षसामनुपलाभायाऽऽत्तः सोमो भवत्यथ (१) वैसर्जनानि जुहोति रक्षसामपहत्यै त्वꣳ सोम तनूकृद्भ्य इत्याह तनूकृद्ध्येष द्वेषोभ्योऽन्यकृतेभ्य इत्याहान्यकृतानि हि रक्षाꣳस्युरु यन्ताऽसि वरूथमित्याहोरु णस्कृधीति वावैतदाह जुषाणो अप्तुराज्यस्य वेत्वित्याहाप्नुमेव यजमानं कृत्वा सुवर्गं लोकं

गमयति रक्षसामनुपलाभायाऽऽ सोमं ददते ( २ ) आ ग्राव्ण आ वायव्यान्या द्रोणकलशमुत्पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति यावदेवास्यास्ति तेन सह सुवर्गं लोकमेति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै ग्राव्णो वायव्यानि द्रोण-कलशमाग्नीध्र उप वासयति वि ह्येनं तैर्गृह्णते यत्स-होपवासयेदपुवायेत सौम्यर्चा प्र पादयति स्वया ( ३ ) एवैनं देवतया प्र पादयत्यदित्याः सदोऽस्य-दित्याः सद आ सीदेत्याह यथायजुरेवैतद्यजमानो वा एतस्य पुरा गोप्ता भवत्येष वो देव सवितः सोम इत्याह सवितृप्रसूत एवैनं देवताभ्यः सं प्र यच्छत्येतत्त्वꣳ सोम देवो देवानुपागा इत्याह देवो ह्येष सन् ( ४ ) देवानुपैतीदमहं मनुष्यो मनुष्या-नित्याह मनुष्यो १ ह्येष सन्मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यात्सह प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभिः सहेमं लोकमुपा-वर्तते नमो देवेभ्य इत्याह नमस्कारो हि देवानाꣳ स्वधा पितृभ्य इत्याह स्वधाकारो हि ( ५ ) पितृ-णामिदमहं निर्वरुणस्य पाशादित्याह वरुणपाशादेव निर्मुच्यतेऽग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः

को हि तद्वेद यद्वसीयान्त्स्वे वशे भूते पुनर्वा ददाति न वेति ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एवं विद्वान्ग्राव्ण आग्नीध्र उपवासयति नैनं मलिम्लुसेना विन्दाति (६) ॥

(अथं ददते स्वया सन्त्स्वंधाकारो हि विन्दाति ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ षष्ठाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ।)

---

सुवर्गायेति सुवः—गाय । वै । एतानि । लोकाय । हूयन्ते । यत् । वैसर्जनानि । द्वाभ्याम् । गार्हपत्य इति गार्ह—पत्ये । जुहोति । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । आग्नीध्र इत्याग्नि—इध्रे । जुहोति । अन्तरिक्षे । एव । एति । क्रमते । आहवनीय इत्या—हवनीये । जुहोति । सुवर्गमिति सुवः—गम् । एव । एनम् । लोकम् । गमयति । देवान् । वै । सुवर्गमिति सुवः—गम् । लोकम् । यतः । रक्षांसि । अजिघांसन् । ते । सोमेन । राज्ञा । रक्षांसि । अपहत्येत्यप—हत्य । अप्तुम् । आत्मानम् । कृत्वा । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । रक्षसाम् । अनुपलाभाये-

त्यनुप—लाभाय। आर्त्तः। सोमः। भवति। अथ (१)। वैसर्जनानि। जुहोति। रक्षसाम्। अपहत्या इत्यप—हत्यै। त्वम्। सोम। तनूकृद्भ्य इति तनूकृत्—भ्यः। इति। आह। तनूकृदिति तनू—कृत्। हि। एषः। द्वेषोभ्य इति द्वेषः—भ्यः। अन्यकृतेभ्य इत्यन्य—कृतेभ्यः। इति। आह। अन्यकृतानीत्यन्य—कृतानि। हि। रक्षांसि। उरु। यन्ता। असि। वरूथम्। इति। आह। उरु। नः। कृधि। इति। वाव। एतत्। आह। जुषाणः। अप्तुः। आज्यस्य। वेतु। इति। आह। अप्तुम्। एव। यजमानम्। कृत्वा। सुवर्गमिति सुवः—गम्। लोकम्। गमयति। रक्षसाम्। अनुपलाभायेत्यनुप—लाभाय। एति। सोमम्। ददते (२)। एति। ग्राव्णः। एति। वायव्यानि। इति। द्रोणकलशमिति द्रोण—कलशम्। उदिति। पत्नीम्। एति। नयन्ति। अन्विति। अनांसि। प्रेति। वर्तयन्ति। यावत्। एव। अस्य। अस्ति। तेन। सह। सुवर्गमिति सुवः—गम्। लोकम्। एति। नयवत्येति नय—वत्या। ऋचा। आग्नीध्र इत्याग्नि—इध्रे। जुहोति। सुवर्गस्येति सुवः—गस्य। लोकस्य। अभिनीत्या इत्यभि—नीत्यै। ग्राव्णः। वायव्यानि। द्रोणकलशमिति द्रोण—कलशम्। आग्नीध्र

( अग्नीषोमप्रणयनाभिधानम् )

इत्याग्नि–इध्रे । उपेति । वासयति । वीति । हि ।
एनम् । तैः । गृह्णते । यत् । सह । उपवासयेदित्युप–
वासयेत् । अपुवायेत । सौम्या । ऋचा । प्रेति ।
पादयति । स्वया ( ३ ) । एव । एनम् । देवतया ।
प्रेति । पादयति । अदित्याः । सदः । असि । अदित्याः ।
सदः । एति । सीद । इति । आह । यथायजुरिति यथा–
यजुः । एव । एतत् । यजमानः । वै । एतस्य । पुरा ।
गोप्ता । भवति । एषः । वः । देव । सवितः । सोमः ।
इति । आह । सवितृप्रसूत इति सवितृ–प्रसूतः । एव ।
एनम् । देवताभ्यः । सम् । प्रेति । यच्छति । एतत् ।
त्वम् । सोम । देवः । देवान् । उपेति । अगाः । इति । आह ।
देवः । हि । एषः । सन् ( ४ ) । देवान् । उपेतीत्युप–
एति । इदम् । अहम् । मनुष्यः । मनुष्यान् । इति ।
आह । मनुष्यः । हि । एषः । सन् । मनुष्यान् ।
उपेतीत्युप–एति । यत् । एतत् । यजुः । न । ब्रूयात् ।
अप्रजा इत्यप्र–जाः । अपशुः । यजमानः । स्यात् ।
सह । प्रजयेति प्र–जया । सह । रायः । पोषेण । इति ।
आह । प्रजयेति प्र–जया । एव । पशुभिरिति पशु–भिः ।
सह । इमम् । लोकम् । उपावर्तत इत्युप–आवर्तते ।
नमः । देवेभ्यः । इति । आह । नमस्कार इति नमः–

कारः । हि । देवानाम् । स्वधेति स्व—धा । पितृभ्य इति पितृ—भ्यः । इति । आह । स्वधाकार इति स्वधा—कारः । हि ( ५ ) । पितृणाम् । इदम् । अहम् । निरिति । वरुणस्य । पाशात् । इति । आह । वरुणपाशादिति वरुण—पाशात् । एव । निरिति । मुच्यते । अग्ने । व्रतपत इति व्रत—पते । आत्मनः । पूर्वा । तनूः । आदेयेत्या—देया । इति । आहुः । कः । हि । तत् । वेद । यत् । वसीयान् । स्वे । वशे । भूते । पुनः । वा । ददाति । न । वा । इति । ग्रावाणः । वै । सोमस्य । राज्ञः । मलिम्लुसेनेति मलिम्लु—सेना । यः । एवम् । विद्वान् । ग्राव्णः । आग्नीध्र इत्याग्नि—इध्रे । उपवासयतीत्युप—वासयति । न । एनम् । मलिम्लुसेनेति मलिम्लु—सेना । विन्दति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतयाऽच्छैत्यत्यन्यानगां नान्यानुपागामित्याहाति ह्यन्यानेति नान्यानुपै-

त्यर्वाक्त्वा परैरविदं परोऽवरैरित्याहार्वाग्घ्येनं परैर्विन्दति परोऽवरैस्तं त्वा जुषे ( १ ) वैष्णवं देवयज्याया इत्याह देवयज्यायै ह्येनं जुषते देवस्त्वा सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति यः प्रथमः शकलः परापतेत्तमप्या हरेत्सतेजसम् ( २ ) एवैनमा हरतीमे वै लोका यूपात्प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीरित्याहैभ्य एवैनं लोकेभ्यः शमयति वनस्पते शतवल्शो वि रोहेत्याव्रश्चने जुहोति तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति सहस्रवल्शा वि वयꣳ रुहेमेत्याहाऽऽशिषमेवैतामा शास्तेऽनक्षसङ्गम् ( ३ ) वृश्चेद्यदक्षसङ्गं वृश्चेदर्धइषं यजमानस्य प्रमायुकꣳ स्याद्यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोऽप्रतिष्ठित एव भवति यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै

बहुशाखं वृश्चेदेष वै ( ४ ) वनस्पतीनां पशव्यः पशुमानेव भवति प्रतिष्ठितं वृश्चेत्प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढः प्रत्येव तिष्ठति यः प्रत्यङ्ङुपनतस्तं वृश्चेत्स हि मेधमभ्युपनतः पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपनमुत्तरो यज्ञः ( ५ ) नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे नवारत्निं तेजस्कामस्य त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविंशत्यरत्निं प्रतिष्ठाकामस्यैकविंशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्या अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन संमितः ( ६ ) ॥

( जुषे सतेनसमनक्षसक्तं बहुशाखं वृश्चेदेष वै यज्ञ उपनमुत्तरो यज्ञ आप्त्या एकान्नविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ षष्ठाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

वैष्णव्या । ऋचा । हुत्वा । यूपम् । अच्छ । एति । वैष्णवः । वै । देवतया । यूपः । स्वया । एव । एनम् । देवतया । अच्छ । एति । अतीति । अन्यान् । अगाम् । न । अन्यान् । उपेति । अगाम् । इति । आह । अतीति । हि । अन्यान् । एति । न । अन्यान् । उपेतीत्युप-एति । अर्वाक् । त्वा । परैः । अविदम् । परः । अवरैः । इति । आह । अर्वाक् । हि । एनम् । परैः । विन्दति । परः । अवरैः । तम् । त्वा । जुषे ( १ ) । वैष्णवम् । देव-यज्याया इति देव-यज्यायै । इति । आह । देवयज्याया इति देव-यज्यायै । हि । एनम् । जुषते । देवः । त्वा । सविता । मध्वा । अनक्तु । इति । आह । तेजसा । एव । एनम् । अनक्ति । ओषधे । त्रायस्व । एनम् । स्वधित इति स्व-धिते । मा । एनम् । हिꣳसीः । इति । आह । वज्रः । वै । स्वधितिरिति स्व-धितिः । शान्त्यै । स्वधितेरिति स्व-धितेः । वृक्षस्य । बिभ्यतः । प्रथमेन । शकलेन । सह । तेजः । परेति । पतति । यः । प्रथमः ।

शकलः । परापतेदिति परा—पतेत् । तम् । अपि । एति । हरेत् । सतेजसमिति स—तेजसम् ( २ ) । एव । एनम् । एति । हरति । इमे । वै । लोकाः । यूपात् । प्रयत इति प्र—यतः । बिभ्यति । दिवम् । अग्रेण । मा । लेखीः । अन्तरिक्षम् । मध्येन । मा । हिꣳसीः । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । शमयति । वनस्पते । शतवल्श इति शत—वल्शः । वीति । रोह । इति । आव्रश्चन इत्या—व्रश्चने । जुहोति । तस्मात् । आव्रश्चनादित्या—व्रश्चनात् । वृक्षाणाम् । भूयाꣳसः । उदिति । तिष्ठन्ति । सहस्रवल्शा इति सहस्र—वल्शाः । वीति । वयम् । रुहेम । इति । आह । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । अनक्षसङ्गमित्यनक्ष—सङ्गम् ( ३ ) वृश्चेत् । यत् । अक्षसङ्गमित्यक्ष—सङ्गम् । वृश्चेत् । अधईषमित्यधः—ईषम् । यजमानस्य । प्रमायुकमिति प्र—मायुकम् । स्यात् । यम् । कामयेत । अप्रतिष्ठित इत्यप्रति—स्थितः । स्यात् । इति । आरोहमित्या—रोहम् । तस्मै । वृश्चेत् । एषः । वै । वनस्पतीनाम् । अप्रतिष्ठित इत्यप्रति—स्थितः । अप्रतिष्ठित इत्यप्रति—स्थितः । एव । भवति । यम् । कामयेत । अपशुः । स्यात् । इति । अपर्णम् । तस्मै । शुष्काग्रमिति शुष्क—अग्रम् । वृश्चेत् । एषः । वै ।

( यूपखण्डनाभिधानम् )

वनस्पतीनाम् । अपशव्यः । अपशुः । एव । भवति । यम् । कामयेत । पशुमानिति पशु—मान् । स्यात् । इति । बहु-पर्णमिति बहु—पर्णम् । तस्मै । बहुशाखमिति बहु—शाखम् । वृश्चेत् । एषः । वै ( ४ ) । वनस्पतीनाम् । पशव्यः । पशुमानिति पशु—मान् । एव । भवति । प्रतिष्ठितमिति प्रति—स्थितम् । वृश्चेत् । प्रतिष्ठाकामस्येति प्रतिष्ठा—कामस्य । एषः । वै । वनस्पतीनाम् । प्रतिष्ठित इति प्रति—स्थितः । यः । समे । भूम्यै । स्वात् । योनेः । रूढः । प्रतीति । एव । तिष्ठति । यः । प्रत्यङ् । उपनत इत्युप—नतः । तम् । वृश्चेत् । सः । हि । मेधम् । अभीति । उपनत इत्युप—नतः । पञ्चारत्निमिति पञ्च—अरत्निम् । तस्मै । वृश्चेत् । यम् । कामयेत । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः । नमेत् । इति । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः ( ५ ) । नमति । षडरत्निमिति षट्—अरत्निम् । प्रतिष्ठाकामस्येति प्रतिष्ठा—कामस्य । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठति । सप्तारत्निमिति सप्त—अरत्निम् । पशुकामस्येति पशु—कामस्य । सप्तपदेति सप्त—पदा । शक्वरी । पशवः । शक्वरी । पशून् । एव । अवेति । रुन्धे । नवा-रत्निमिति नव-अरत्निम् । तेजस्कामस्येति तेजः—कामस्य ।

त्रिवृतेति त्रि–वृता । स्तोमेन । संमितमिति सं–मितम् । तेजः । त्रिवृदिति त्रि–वृत् । तेजस्वी । एव । भवति । एकादशारत्निमित्येकादश–अरत्निम् । इन्द्रियकामस्येतीन्द्रिय–कामस्य । एकादशाक्षरेत्येकादश–अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुक् । इन्द्रियावी । एव । भवति । पञ्चदशारत्निमिति पञ्चदश–अरत्निम् । भ्रातृव्यवत इति भ्रातृव्य–वतः । पञ्चदश इति पञ्च–दशः । वज्रः । भ्रातृव्याभिभूत्या इति भ्रातृव्य–अभिभूत्यै । सप्तदशारत्निमिति सप्तदश–अरत्निम् । प्रजाकामस्येति प्रजा–कामस्य । सप्तदश इति सप्त–दशः । प्रजापतिरिति प्रजा–पतिः । प्रजापतेरिति प्रजा–पतेः । आप्त्यै । एकविंशत्यरत्निमित्येकविंशति–अरत्निम् । प्रतिष्ठाकामस्येति प्रतिष्ठा–कामस्य । एकविंश इत्येक–विंशः । स्तोमानाम् । प्रतिष्ठेति प्रति–स्था । प्रतिष्ठित्या इति प्रति–स्थित्यै । अष्टाश्रिरित्यष्टा–अश्रिः । भवति । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । तेजः । गायत्री । गायत्री । यज्ञमुखमिति यज्ञ–मुखम् । तेजसा । एव । गायत्रिया । यज्ञमुखेनेति यज्ञ–मुखेन । संमित इति सं–मितः ( ६ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

———

(यूपस्थापनाभिधानम्)

(अथ षष्ठाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ।)

---

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति पराञ्चं प्रोक्षति पराङिव हि सुवर्गो लोकः क्रूरमिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यवो यजमानेन यूपः संमितो यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति ( १ ) पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्याꣳ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्यो निखातः स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनं मिनोति यूपशकलमवास्यति सतेजसमेवैनं मिनोति देवस्त्वा सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्ति सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रति ( २ ) मुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्णन्त्यनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाऽश्रिः संमिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसाऽनक्ति सर्वतः परि मृशत्यपरिवर्गमेवास्मिन्तेजो दधात्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै

वैष्णव्यर्चा ( ३ ) कल्पयति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया कल्पयति द्वाभ्यां कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रि-माहवनीयादित्थं वेत्थं वाऽति नावयेत्तेजसैवैनं देवताभिरिन्द्रियेण व्यर्धयति यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्धयेयमिति ( ४ ) अग्निष्ठां तस्याश्रिमाहवनीयेन सं मिनुयात्तेजसैवैनं देवताभिरिन्द्रियेण समर्धयति ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत्परि व्ययत्यूर्ग्वै रशना यजमानेन यूपः संमितो यजमानमेवोर्जा समर्धयति नाभिदघ्ने परि व्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते यं कामयेतोर्जैनम् ( ५ ) व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वाऽवोहेदूर्जैवैनं व्यर्धयति यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्यूर्ध्वामुदूहे-द्वृष्टिमेवोद्यच्छति पितॄणां निखातं मनुष्याणामूर्ध्वं निखातादा रशनाया ओषधीना१ँ रशना विश्वे-षाम् ( ६ ) देवानामूर्ध्व१ँ रशनाया आ चषालादि-

( यूपस्थापनाभिधानम् )

न्द्रस्य चषालꣳ साध्यानामतिरिक्तꣳ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्वा एव देवताः प्रीणाति यज्ञेन वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायन्तमृषयो यूपेनैवानु प्राजानन्तद्यूपस्य यूपत्वम् ( ७ ) यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै पुरस्तान्मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायते प्रज्ञातꣳ हि तद्यदतिपन्न आहुरिदं कार्यमासीदिति साध्या वै देवा यज्ञमत्यमन्यन्त तान्यज्ञो नास्पृशत्तान्यद्यज्ञस्यातिरिक्तमासीत्तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यतिरिक्तमेतत् ( ८ ) यूपस्य यदूर्ध्वं चषालात्तेषां तद्भागधेयं तानेव तेन प्रीणाति देवा वै सꣳस्थिते सोमे प्र स्रुचोऽहरन्प्र यूपं तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरꣳ स्रुचां निष्क्रयणमपश्यन्त्स्वरुं यूपस्य सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति स्वरुमयज्ञवेशसाय ( ९ ) ॥

( दधाति प्रत्यृचा समर्धयेयमित्यूर्जं विश्वेषां यूपत्वमतिरिक्तमेतद्धि-चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

पृथिव्यै । त्वा । अन्तरिक्षाय । त्वा । दिवे । त्वा । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । प्रेति । उक्षति । पराञ्चम् । प्रेति । उक्षति । पराङ् । इव । हि । सुवर्ग इति सुवः—गः । लोकः । क्रूरम् । इव । वै । एतत् । करोति । यत् । खनति । अपः । अवेति । नयति । शान्त्यै । यवमतीरिति यव—मतीः । अवेति । नयति । ऊर्क् । वै । यवः । यजमानेन । यूपः । संमित इति सं—मितः । यावान् । एव । यजमानः । तावतीम् । एव । अस्मिन् । ऊर्जम् । दधाति ( १ )। पितॄणाम् । सदनम् । असि । इति । बर्हिः । अवेति । स्तृणाति । पितृदेवत्यमिति पितृ—देवत्यम् । हि । एतत । यत् । निखातमिति नि—खातम् । यत् । बर्हिः । अनवस्तीर्येत्यनव—स्तीर्य । मिनुयात् । पितृदेवत्य इति पितृ—देवत्यः । निखात इति नि—खातः । स्यात् । बर्हिः । अवस्तीर्येत्यव—स्तीर्य । मिनोति । अस्याम् । एव । एनम् । मिनोति । यूपशकलमिति यूप—शकलम् । अवेति । अस्यति। सतेजसमिति स—तेजसम् । एव । एनम् । मिनोति।

( यूपस्थापनाभिधानम् )

देवः । त्वा । सविता । मध्वा । अनक्तु । इति । आह । तेजसा । एव । एनम् । अनक्ति । सुपिप्पलाभ्य इति सु-पिप्पलाभ्यः । त्वा । ओषधीभ्य इत्योषधि-भ्यः । इति । चषालम् । प्रतीति ( २ ) । मुञ्चति । तस्मात् । शीर्षतः । ओषधयः । फलम् । गृह्णन्ति । अनक्ति । तेजः । वै । आज्यम् । यजमानेन । अग्निष्ठेत्यग्नि-स्था । अग्निः । संमितेति सं-मिता । यत् । अग्निष्ठामित्यग्नि-स्थाम् । अग्निम् । अनक्ति । यजमानम् । एव । तेजसा । अनक्ति । आन्तमित्या-अन्तम् । अनक्ति । आन्तमित्या-अन्तम् । एव । यजमानम् । तेजसा । अनक्ति । सर्वतः । परीति । मृशति । अपरिवर्गमित्यपरि-वर्गम् । एव । अस्मिन् । तेजः । दधाति । उदिति । दिवम् । स्तभान । एति । अन्तरिक्षम् । पृण । इति । आह । एषाम् । लोकानाम् । विधृत्या इति वि-धृत्यै । वैष्णव्या । ऋचा ( ३ ) । कल्पयति । वैष्णवः । वै । देवतया । यूपः । स्वया । एव । एनम् । देवतया । कल्पयति । द्वाभ्याम् । कल्पयति । द्विपादिति द्वि-पात् । यजमानः । प्रतिष्ठित्या इति प्रति-स्थित्यै । यम् । कामयेत । तेजसा । एनम् । देवताभिः । इन्द्रियेण । वीति । अर्धयेयम् । इति । अग्निष्ठामित्यग्नि-स्थाम् । तस्य । अग्निम् । आहवनीयादित्या-हवनीयात् ।

इत्थम् । वा । इत्थम् । वा । अतीति । नावयेत् । तेजसा । एव । एनम् । देवताभिः । इन्द्रियेण । वीति । अर्धयति । यम् । कामयेत । तेजसा । एनम् । देवताभिः । इन्द्रियेण । समिति । अर्धयेयम् । इति ( ४ ) । अग्निष्ठामित्यग्नि–स्थाम् । तस्य । अश्रिम् । आहवनीयेनेत्या–हवनीयेन । समिति । मिनुयात् । तेजसा । एव । एनम् । देवताभिः । इन्द्रियेण । समिति । अर्धयति । ब्रह्मवनिमिति ब्रह्म–वनिम् । त्वा । क्षत्रवनिमिति क्षत्र–वनिम् । इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । परीति । व्ययति । ऊर्क् । वै । रशना । यजमानेन । यूपः । संमित इति सं–मितः । यजमानम् । एव । ऊर्जा । समिति । अर्धयति । नाभिदघ्न इति नाभि–दघ्ने । परीति । व्ययति । नाभिदघ्न इति नाभि–दघ्ने । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । नाभिदघ्न इति नाभि–दघ्ने । ऊर्जा । भुञ्जते । यम् । कामयेत । ऊर्जा । एनम् ( ५ ) । वीति । अर्धयेयम् । इति । ऊर्ध्वाम् । वा । तस्य । अवाचीम् । वा । अवेति । ऊहेत् । ऊर्जा एव । एनम् । वीति । अर्धयति । यदि । कामयेत वर्षुकः । पर्जन्यः । स्यात् । इति । अवाचीम् । अवेति ऊहेत् । वृष्टिम् । एव । नीति । यच्छति । यदि । काम

( यूपखण्डनाभिधानम् )

येत । अवर्षुकः । स्यात् । इति । ऊर्ध्वाम् । उदिति । ऊहेत् । वृष्टिम् । एव । उदिति । यच्छति । पितृणाम् । निखातमिति नि—खातम् । मनुष्याणाम् । ऊर्ध्वम् । निखातादिति नि—खातात् । एति । रशनायाः । ओषधीनाम् । रशना । विश्वेषाम् ( ६ ) । देवानाम् । ऊर्ध्वम् । रशनायाः । एति । चषालात् । इन्द्रस्य । चषालम् । साध्यानाम् । अतिरिक्तमित्यति—रिक्तम् । सः । वै । एषः । सर्वदेवत्य इति सर्व—देवत्यः । यत् । यूपः । यत् । यूपम् । मिनोति । सर्वाः । एव । देवताः । प्रीणाति । यज्ञेन । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । ते । अमन्यन्त । मनुष्याः । नः । अन्वाभविष्यन्तीत्यनु—आभविष्यन्ति । इति । ते । यूपेन । योपयित्वा । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । तम् । ऋषयः । यूपेन । एव । अनु । प्रेति । अजानन् । तत् । यूपस्य । यूपत्वमिति यूप—त्वम् ( ७ ) । यत् । यूपम् । मिनोति । सुवर्गस्येति सुवः—गस्य । लोकस्य । प्रज्ञात्या इति प्र—ज्ञात्यै । पुरस्तात् । मिनोति । पुरस्तात् । हि । यज्ञस्य । प्रज्ञायत इति प्र—ज्ञायते । अप्रज्ञातमित्यप्र—ज्ञातम् । हि । तत् । यत् । अतिपन्न इत्यति—पन्ने । आहुः । इदम् । कार्यम् । आसीत् । इति । साध्याः । वै । देवाः । यज्ञम् । अतीति । अम-

न्यन्त । तान् । यज्ञः । न । अस्पृशत् । तान् । यत् । यज्ञस्य । अतिरिक्तमित्यति—रिक्तम् । आसीत् । तत् । अस्पृशत् । अतिरिक्तमित्यति—रिक्तम् । वै । एतत् । यज्ञस्य । यत् । अग्नौ । अग्निम् । मथित्वा । प्रहरतीति प्र—हरति । अतिरिक्तमित्यति—रिक्तम् । एतत् (८) । यूपस्य । यत् । ऊर्ध्वम् । चषालात् । तेषाम् । तत् । भागधेयमिति भाग—धेयम् । तान् । एव । तेन । प्रीणाति । देवाः । वै । सꣳस्थित इति सं—स्थिते । सोमे । प्रेति । स्रुचः । अहरन् । प्रेति । यूपम् । ते । अमन्यन्त । यज्ञवेशसमिति यज्ञ—वेशसम् । वै । इदम् । कुर्मः । इति । ते । प्रस्तरमिति प्र—स्तरम् । स्रुचाम् । निष्क्रयणमिति निः—क्रयणम् । अपश्यन् । स्वरुम् । यूपस्य । सꣳस्थित इति सं—स्थिते । सोमे । प्रेति । प्रस्तरमिति प्र—स्तरम् । हरति । जुहोति । स्वरुम् । अयज्ञवेशसायेत्ययज्ञ—वेशसाय (९) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपा के चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ।)

---

साध्या वै देवा अस्मिँल्लोक आसन्नान्यत्किंचन मिषत्तेऽग्निमेवाग्नये मेधायाऽलभन्त न ह्यन्यदालम्भ्य-

मविन्दन्ततो वा इमाः प्रजाः प्राजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय रुद्रो वा एष यदग्निर्यजमानः पशुर्यत्पशुमालभ्याग्निं मन्थे-द्रुद्राय यजमानम् ( १ ) अपि दध्यात्प्रमायुकः स्यादथो खल्वाहुरग्निः सर्वा देवता हविरेतद्यत्पशु-रिति यत्पशुमालभ्याग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयत्युपाकृत्यैव मन्थ्यस्तन्नेवाऽऽलब्धं नेवानालब्धमग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृष-णौ स्थ इत्याह वृषणौ ( २ ) ह्येतावुर्वश्यस्यायु-रसीत्याह मिथुनत्वाय घृतेनाक्ते वृषणं दधाथामि-त्याह वृषणꣳ ह्येते दधाते ये अग्निं गायत्रं छन्दोऽनु प्र जायस्वेत्याह छन्दोभिरेवैनं प्र जनयत्यग्नये मथ्यमानायानु ब्रूहीत्याह सावित्रीमृचमन्वाह सवि-तृप्रसूत एवैनं मन्थति जातायानु ब्रूहि ( ३ ) प्रह्रियमाणायानु ब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति गायत्रीः सर्वा अन्वाह गायत्रछन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्ध-यत्यग्निः पुरा भवत्यग्निं मथित्वा प्र हरति तौ संभवन्तौ यजमानमभि सं भवतो भवतं नः समनसावित्याह शान्त्यै प्रहृत्य जुहोति जातायै-

वास्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा ( ४ ) ॥

( यजमानमाह वृषणौ जातायानु ब्रूह्यष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

साध्याः । वै । देवाः । अस्मिन् । लोके । आसन् । न । अन्यत् । किम् । चन । मिषत् । ते । अग्निम् । एव । अग्नये । मेधाय । एति । अलभन्त । न । हि । अन्यत् । आलम्भ्यमित्या—लम्भ्यम् । अविन्दन् । ततः । वै । इमाः । प्रजा इति प्र—जाः । प्रेति । अजायन्त । यत् । अग्नौ । अग्निम् । मथित्वा । प्रहरतीति प्र—हरति । प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जननाय । रुद्रः । वै । एषः । यत् । अग्निः । यजमानः । पशुः । यत् । पशुम् । आलभ्येत्या—लभ्य । अग्निम् । मन्थेत् । रुद्राय । यजमानम् ( १ ) । अपीति । दध्यात् । प्रमायुक इति प्र—मायुकः । स्यात् । अथो इति । खलु । आहुः । अग्निः ।

(अग्निमन्थनाभिधानम्)

सर्वाः। देवताः। हविः। एतत्। यत्। पशुः। इति। यत्। पशुम्। आलभ्येत्या—लभ्य। अग्निम्। मन्थति। हव्याय। एव। आसन्नायेत्या—सन्नाय। सर्वाः। देवताः। जनयति। उपाकृत्येत्युप—आकृत्य। एव। मन्थ्यः। तत्। न। इव। आलब्धमित्या—लब्धम्। न। इव। अनालब्धमित्यना—लब्धम्। अग्नेः। जनित्रम्। असि। इति। आह। अग्नेः। हि। एतत्। जनित्रम्। वृषणौ। स्थः। इति। आह। वृषणौ (२)। हि। एतौ। उर्वशी। असि। आयुः। असि। इति। आह। मिथुनत्वायेति मिथुन—त्वाय। घृतेन। अक्ते इति। वृषणम्। दधाथाम्। इति। आह। वृषणम्। हि। एते इति। दधाते इति। ये इति। अग्निम्। गायत्रम्। छन्दः। अनु। प्रेति। जायस्व। इति। आह। छन्दोभिरिति छन्दः—भिः। एव। एनम्। प्रेति। जनयति। अग्नये। मथ्यमानाय। अन्विति। ब्रूहि। इति। आह। सावित्रीम्। ऋचम्। अन्विति। आह। सवितृप्रसूत इति सवितृ—प्रसूतः। एव। एनम्। मन्थति। जाताय। अन्विति। ब्रूहि (३)। प्रह्रियमाणायेति प्र—ह्रियमाणाय। अन्विति। ब्रूहि। इति। आह। काण्डेकाण्ड इति काण्डे—काण्डे। एव। एनम्। क्रियमाणे। समिति। अर्धयति। गायत्रीः। सर्वाः। अन्विति।

आह । गायत्रछन्दा इति गायत्र–छन्दाः । वै । अग्निः । स्वेन । एव । एनम् । छन्दसा । समिति । अर्धयति । अग्निः । पुरा । भवति । अग्निम् । मथित्वा । प्रेति । हरति । तौ । संभवन्ताविति सं–भवन्तौ । यजमानम् । अभि । समिति । भवतः । भवतम् । नः । समनसाविति स–मनसौ । इति । आह । शान्त्यै । प्रहृत्येति प्र–हृत्य । जुहोति । जाताय । एव । अस्मै । अन्नम् । अपीति । दधाति । आज्येन । जुहोति । एतत् । वै । अग्नेः । प्रियम् । धाम । यत् । आज्यम् । प्रियेण । एव । एनम् । धाम्ना । समिति । अर्धयति । अथो इति । तेजसा ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

इषे त्वेति बर्हिरा दत्त इच्छत इव ह्येष यो यजत उपवीरसीत्याहोप ह्येनानाकरोत्युपो देवान्दैवीर्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपयन्ति वह्नीरुशिज इत्याहर्त्विजो वै वह्नय उशिजस्तस्मादेवमाह बृहस्पते धारया वसूनीति ( १ ) आह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव-

रुन्धे हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान्देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवास्मै रमयति देवस्य त्वा सवितुः प्रसव इति ( २ ) रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्या ऋतस्य त्वा देवहविः पाशेनाऽऽरभ इत्याह सत्यं वा ऋतꣳ सत्येनैवैनमृतेनाऽऽरभतेऽक्ष्णया परि हरति वध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै धर्षा मानुषानिति नि युनक्ति धृत्या अद्भ्यः ( ३ ) त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति यत्पशुरपां पेरुरसीत्याहैष ह्यपां पाता यो मेधायाऽऽरभ्यते स्वात्तं चित्सदेवꣳ हव्यमापो देवीः स्वदतैन-मित्याह स्वदयत्येवैनमुपरिष्टात्प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्य-धस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति ( ४ ) ॥

( वसूनीति प्रसव इत्यद्भ्योऽन्तरत एवैनं दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

इषे । त्वा । इति । बर्हिः । एति । दत्ते । इच्छते । इव । हि । एषः । यः । यजते । उपवीरित्युप—वीः । असि । इति । आह । उपेति । हि । एनान् । आकरोतीत्या—करोति । उपो इति । देवान् । दैवीः । विशः । प्रेति । अगुः । इति । आह । दैवीः । हि । एताः । विशः । सतीः । देवान् । उपयन्तीत्युप—यन्ति । वह्नीः । उशिजः । इति । आह । ऋत्विजः । वै । वह्नयः । उशिजः । तस्मात् । एवम् । आह । बृहस्पते । धारय । वसूनि । इति ( १ )। आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । पशून् । अवेति । रुन्धे । हव्या । ते । स्वदन्ताम् । इति । आह । स्वदयति । एव । एनान् । देव । त्वष्टः । वसु । रण्व । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप—कृत् । रूपम् । एव । पशुषु । दधाति । रेवतीः । रमध्वम् । इति । आह । पशवः । वै । रेवतीः । पशून् । एव । अस्मै । रमयति । देवस्य । त्वा ।

सवितुः । प्रसव इति प्र-सवे । इति ( २ ) । रशनाम् ।
एति । दत्ते । प्रसूत्या इति प्र-सूत्यै । अश्विनोः । बाहु-
भ्यामिति बाहु-भ्याम् । इति । आह । अश्विनौ । हि ।
देवानाम् । अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् ।
इति । आह । यत्यै । ऋतस्य । त्वा । देवहविरिति देव-
हविः । पाशेन । एति । रभे । इति । आह । सत्यम् । वै ।
ऋतम् । सत्येन । एव । एनम् । ऋतेन । एति । रभते ।
अक्ष्णया । परीति । हरति । वध्यम् । हि । प्रत्यञ्चम् । प्रति-
मुञ्चन्तीति प्रति-मुञ्चन्ति । व्यावृत्त्या इति वि-आवृत्त्यै ।
धर्ष । मानुषान् । इति । नीति । युनक्ति । धृत्यै । अद्भ्य
इत्यत्-भ्यः ( ३ ) । त्वा । ओषधीभ्य इत्योषधि-भ्यः ।
प्रेति । उक्षामि । इति । आह । अद्भ्य इत्यत्-भ्यः । हि ।
एषः । ओषधीभ्य इत्योषधि-भ्यः । संभवतीति सं-भवति ।
यत् । पशुः । अपाम् । पेरुः । असि । इति । आह ।
एषः । हि । अपाम् । पाता । यः । मेधाय । आरभ्यत
इत्या-रभ्यते । स्वात्तम् । चित् । सदेवमिति स-देवम् ।
हव्यम् । आपः । देवीः । स्वदत । एनम् । इति । आह ।
स्वदयति । एव । एनम् । उपरिष्टात् । प्रेति । उक्षति ।
उपरिष्टात् । एव । एनम् । मेध्यम् । करोति । पाययति ।
अन्तरतः । एव । एनम् । मेध्यम् । करोति । अधरतात् ।

उपेति । उक्षति । सर्वतः । एव । एनम् । मेध्यम् । करोति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानु ब्रूहीत्याह भ्रातृव्याभिभूत्यै सप्तदश सामिधेनीरन्वाह सप्तदशः प्रजापतिः प्रजापतेराप्त्यै सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरं प्रजा अनु प्र जायन्ते प्रजानां प्रजननाय देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारम् ( १ ) आऽघारयत्ततो वै देवा यज्ञमन्वपश्यन्यत्तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्या असुरेषु वै यज्ञ आसीत्तं देवास्तूष्णीꣳ होमेनावृञ्जत यत्तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव तद्यज्ञं वृङ्क्ते परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्रिस्त्रिः सं मार्ष्टि त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै द्वादश सं पद्यन्ते द्वादश ( २ ) मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो

संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै शिरो वा एतद्यज्ञस्य यदाघारोऽग्निः सर्वा देवता यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्वा देवता अव रुन्धे शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य पशुꣳ समनक्त्यात्मन्नेव यज्ञस्य ( ३ ) शिरः प्रति दधाति सं ते प्राणो वायुना गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राणं जुहोति सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्याह यज्ञपतिमेवास्याऽऽशिषं गमयति विश्वरूपो वै त्वाष्ट्र उपरिष्टात्पशुमभ्यवमीत्तस्मादुपरिष्टात्पशोर्नाव यन्ति यदुपरिष्टात्पशुꣳ समनक्ति मेध्यमेव ( ४ ) एनं करोत्यृत्विजो वृणीते छन्दाꣳस्येव वृणीते सप्त वृणीते सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्या एकादश प्रयाजान्यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्र यजति वपामेकः परि शय आत्मैवाऽऽत्मानं परि शये वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्घृतेनाक्तौ

पशुं त्रायेथामित्याह वज्रेणैवैनं वशे कृत्वाऽऽ लभते ( ५ ) ॥

( आघारं पंचन्ते द्वादशाऽऽत्मन्नेव यज्ञस्य मेध्यमेव खलु वा अष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

अग्निना । वै । होत्रा । देवाः । असुरान् । अभीति । अभवन् । अग्नये । समिध्यमानायेति सम्—इध्यमानाय । अन्विति । ब्रूहि । इति । आह । भ्रातृव्याभिभूत्या इति भ्रातृव्य—अभिभूत्यै । सप्तदशेति सप्त—दश । सामिधेनीरिति साम्—इधेनीः । अन्विति । आह । सप्तदश इति सप्त—दशः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । सप्तदशेति सप्त—दश । अन्विति । आह । द्वादश । मासाः । पञ्च । ऋतवः । सः । संवत्सर इति सं—वत्सरः । संवत्सरमिति सं—वत्सरम् । प्रजा इति प्र—जाः । अनु । प्रेति । जायन्ते । प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जननाय । देवाः । वै । सामिधेनीरिति साम्—इधेनीः । अनूच्येत्यनु—उच्य । यज्ञम् । न । अन्विति । अपश्यन् ।

सः । प्रजापतिरिति प्रजा-पतिः । तूष्णीम् । आघारमित्या-घारम् ( १ ) । एति । अघारयत् । ततः । वै । देवाः । यज्ञम् । अन्विति । अपश्यन् । यत् । तूष्णीम् । आघारमित्या-घारम् । आघारयतीत्या-घारयति । यज्ञस्य । अनु-ख्यात्या इत्यनु-ख्यात्यै । असुरेषु । वै । यज्ञः । आसीत् । तम् । देवाः । तूष्णीꣳहोमेनेति तूष्णीं-होमेन । अवृञ्जत । यत् । तूष्णीम् । आघारमित्या-घारम् । आघारयतीत्या-घारयति । भ्रातृव्यस्य । एव । तत् । यज्ञम् । वृङ्क्ते । परिधीनिति परि-धीन् । समिति । मार्ष्टि । पुनाति । एव । एनान् । त्रिस्त्रिरिति त्रिः-त्रिः । समिति । मार्ष्टि । त्र्यावृदिति त्रि-आवृत् । हि । यज्ञः । अथो इति । रक्षसाम् । अपहत्या इत्यप-हत्यै । द्वादश । समिति । पद्यन्ते । द्वादश । ( २ ) । मासाः । संवत्सर इति सं-वत्सरः । संवत्सरमिति सं-वत्सरम् । एव । प्रीणाति । अथो इति । संवत्सरमिति सं-वत्सरम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सुवः-गस्य । लोकस्य । समष्ट्या इति सम्-अष्ट्यै । शिरः । वै । एतत् । यज्ञस्य । यत् । आघार इत्या-घारः । अग्निः । सर्वाः । देवताः । यत् । आघारमित्या-घारम् । आघारयतीत्या-घारयति । शीर्षतः । एव । यज्ञस्य । यजमानः । सर्वाः । देवताः । अवेति । रुन्धे । शिरः । वै । एतत् ।

यज्ञस्य । यत् । आघार इत्या—घारः । आत्मा । पशुः । आघारमित्या—घारम् । आघार्येत्या—घार्य । पशुम् । समिति । अनक्ति । आत्मन् । एव । यज्ञस्य ( ३ ) । शिरः । प्रतीति । दधाति । समिति । ते । प्राण इति प्र—अनः । वायुना । गच्छताम् । इति । आह । वायुदेवत्य इति वायु—देवत्यः । वै । प्राण इति प्र—अनः । वायौ । एव । अस्य । प्राणमिति प्र—अनम् । जुहोति । समिति । यजत्रैः । अङ्गानि । समिति । यज्ञपतिरिति यज्ञ—पतिः । आशिषेत्या—शिषा । इति । आह । यज्ञपतिमिति यज्ञ—पतिम् । एव । अस्य । आशिषमित्या—शिषम् । गमयति । विश्वरूप इति विश्व—रूपः । वै । त्वाष्ट्रः । उपरिष्टात् । पशुम् । अभीति । अवमीत् । तस्मात् । उपरिष्टात् । पशोः । न । अवेति । घ्नन्ति । यत् । उपरिष्टात् । पशुम् । समनक्तीति सम्—अनक्ति । मेध्यम् । एव ( ४ ) । एनम् । करोति । ऋत्विजः । वृणीते । छन्दांꣳसि । एव । वृणीत । सप्त । वृणीते । सप्त । ग्राम्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दांꣳसि । उभयस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । एकादश । प्रयाजानिति प्र—याजान् । यजति । दश । वै । पशोः । प्राणा इति प्र—अनाः । आत्मा । एकादशः ।

( पशुहिंसनाभिधानम् )

यावान् । एव । पशुः । तम् । प्रेति । यजति । वपाम् । एकः । परीति । शये । आत्मा । एव । आत्मानम् । परीति । शये । वज्रः । वै । स्वधितिरिति स्व—धितिः वज्रः । यूपशकल इति यूप—शकलः । घृतम् । खलु । वै । देवाः । वज्रम् । कृत्वा । सोमम् । अघ्नन् । घृतेन । अक्तौ । पशुम् । त्रायेथाम् । इति । आह । वज्रेण । एव । एनम् । वशे । कृत्वा । एति । लभते ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दाया-स्कन्नꣳ हि तयद्धुतस्य स्कन्दति त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३ इति मृत्यवे वा एष नीयते यत्पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यादथो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत् ( १ ) पशुरिति यन्नान्वार-भेत सुवर्गाल्लोकाद्यजमानो हीयेत वपाश्रपणीभ्याम्-

न्वारंभते तन्नेवान्वारब्धं नेवानन्वारब्धमुप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितः हि कर्म क्रियते रेवतीर्यज्ञपतिं प्रियधाऽऽ विशतेत्याह यथायजुरेवैत-दग्निना पुरस्तादेति रक्षसामपहत्यै पृथिव्याः संपृचः पाहीति बर्हिः (२) उपास्यत्यस्कन्दायास्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति पराङा वर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्पशुभ्य एव तन्नि ह्नुत आत्मनोऽनाव्रस्काय गच्छति श्रियं प्र पशूना-प्नोति य एवं वेद पश्चाल्लोका वा एषा प्राच्युदानी-यते यत्पत्नी नमस्त आतानेत्याहाऽऽदित्यस्य वै रश्मयः (३) आतानास्तेभ्य एव नमस्करोत्यनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाऽऽशिष-मेवैतामा शास्त आपो देवीः शुद्धायुव इत्याह यथाय-जुरेवैतत् (४) ॥

(लोकाय नीयते यद्बर्हि रश्मयः
सप्तत्रिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ षष्ठाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः। )

पर्यग्नीति परि-अग्नि। करोति। सर्वहुतमिति सर्व-हुतम्। एव। एनम्। करोति। अस्कन्दाय। अस्कन्नम्। हि। तत्। यत्। हुतस्य। स्कन्दति। त्रिः। पर्यग्नीति परि-अग्नि। करोति। त्र्यावृदिति त्रि-आवृत्। हि। यज्ञः। अथो इति। रक्षसाम्। अपहत्या इत्यप-हत्यै। ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। अन्वारभ्य इत्यनु-आरभ्यः। पशू३ः। न। अन्वारभ्या३ इत्यनु-आरभ्या३ः। इति। मृत्यवे। वै। एषः। नीयते। यत्। पशुः। तम्। यत्। अन्वारभेतेत्यनु-आरभेत। प्रमायुक इति प्र-मायुकः। यजमानः। स्यात्। अथो इति। खलु। आहुः। सुवर्गायेति सुवः-गाय। वै। एषः। लोकाय। नीयते। यत् (१)। पशुः। इति। यत्। न। अन्वारभेतेत्यनु-आरभेत। सुवर्गादिति सुवः-गात्। लोकात्। यजमानः। हीयेत। वपाश्रपणीभ्यामिति वपा-श्रपणीभ्याम्। अन्वारभत इत्यनु-आरभते। तत्। न। इव। अन्वारब्धमित्यनु-आरब्धम्। न। इव। अनन्वारब्धमित्यनन्-आरब्धम्। उप। प्रेति। इष्य। होतः। हव्या। देवेभ्यः। इति। आह। इषितम्।

हि । कर्म । क्रियते । रेवतीः । यज्ञपतिमिति यज्ञ—पतिम् । प्रियधेति प्रिय—धा । एति । विशत । इति । आह । यथा-यजुरिति यथा—यजुः । एव । एतत् । अग्निना । पुरस्तात् । एति । रक्षसाम् । अपहत्या इत्यप—हत्यै । पृथिव्याः । संपृच इति सं—पृचः । पाहि । इति । बर्हिः (२) । उपेति । अस्यति । अस्कन्दाय । अस्कन्नम् । हि । तत् । यत् । बर्हिषि । स्कन्दति । अथो इति । बर्हिषदमिति बर्हि-सदम् । एव । एनम् । करोति । पराङ् । एति । वर्तते । अध्वर्युः । पशोः । संज्ञप्यमानादिति सं—ज्ञप्यमानात् । पशुभ्य इति पशु—भ्यः । एव । तत् । नीति । ह्नुते । आत्मनः । अनाव्रस्कायेत्यना—व्रस्काय । गच्छति । श्रियम् । प्रेति । पशून् । आप्नोति । यः । एवम् । वेद । पश्चाल्लो-केति पश्चात्—लोका । वै । एषा । प्राची । उदानीयत इत्युत्—आनीयते । यत् । पत्नी । नमः । ते । आतानेत्या-तान । इति । आह । आदित्यस्य । वै । रश्मयः (३) । आताना इत्या—तानाः । तेभ्यः । एव । नमः । करोति । अनर्वा । प्रेति । इहि । इति । आह । भ्रातृव्यः । वै । अर्वा । भ्रातृव्यापनुत्त्या इति भ्रातृव्य—अपनुत्त्यै । घृतस्य । कुल्याम् । अन्विति । सह । प्रजयेति प्र—जया । सह । रायः । पोषेण । इति । आह । आशिषमित्या—शिषम् । एव ।

एताम् । एति । शास्ते । आपः । देवीः । शुद्धायुव इति शुद्ध—युवः । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

पशोर्वा आलब्धस्य प्राणाञ्छुग्गृच्छति वाक्त आ प्यायतां प्राणस्त आ प्यायतामित्याह प्राणेभ्य एवास्य शुचꣳ शमयति सा प्राणेभ्योऽधि पृथिवीꣳ शुक्प्र विशति शमहोभ्यामिति नि नयत्यहोरात्राभ्यामेव पृथिव्यै शुचꣳ शमयत्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः ( १ ) शान्त्यै पार्श्वत आ च्छ्यति मध्यतो हि मनुष्या आ च्छ्यन्ति तिरश्चीनमा च्छ्यत्यनूचीनꣳ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वाऽपास्यत्यस्नैव रक्षाꣳसि निरवदयत इदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव ( २ ) द्वेष्टि यश्चैनं द्वेष्टि तावुभावधमं तमो

नयतीषे त्वेति वपामुत्खिदतीच्छत इव ह्येष यो यजते यदुपतृन्याद्रुद्रोऽस्य पशून्घातुकः स्याद्यन्नोपतृन्यादयता स्यादन्ययोपतृणत्त्यन्यया न धृत्यै घृतेन द्यावापृथिवी प्रोर्णुवाथामित्याह द्यावापृथिवी एव रसेनानक्त्यच्छिन्नः ( ३ ) रायः सुवीर इत्याह यथायजुरेवैतत्क्रूरमिव वा एतत्करोति यद्वपामुत्खिदत्युर्वन्तरिक्षमन्विहीत्याह शान्त्यै प्र वा एषोऽस्माल्लोकाच्च्यवते यः पशुं मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभतेऽस्मिन्नेव लोके प्रति तिष्ठत्यग्निना पुरस्तादेति रक्षसामपहत्या अथो देवता एव हव्येन ( ४ ) अन्वेति नान्तममङ्गारमति हरेद्यदन्तममङ्गारमतिहरेद्देवता अति मन्येत वायो वीहि स्तोकानामित्याह तस्माद्विभक्ताः स्तोका अव पद्यन्तेऽग्रं वा एतत्पशूनां यद्वपाऽग्रमोषधीनां बर्हिरग्रेणैवाग्रꣳ समर्धयत्यथो ओषधीष्वेव पशून्प्रति ष्ठापयति स्वाहाकृतीभ्यः प्रेष्येत्याह ( ५ ) यज्ञस्य समिष्ट्यै प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभि घारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति स्वाहोर्ध्वनभसं मारुतं गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां

(वपाहोमाभिधानम्)

वपाश्रपणी प्र हरति तेनैवैने प्र हरति विषूची प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ (६)

(स्वधितिश्चैवाच्छिन्नो हव्येनेष्येत्याह षट्चत्वारिंशच्च)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ षष्ठाष्टके तृतीयप्रपाठके नवमोऽनुवाकः।)

---

पशोः। वै। आलब्धस्येत्या—लब्धस्य। प्राणानिति प्र—अनान्। शुक्। ऋच्छति। वाक्। ते। एति। प्याय-ताम्। प्राण इति प्र—अनः। ते। एति। प्यायताम्। इति। आह। प्राणेभ्य इति प्र—अनेभ्यः। एव। अस्य। शुचम्। शमयति। सा। प्राणेभ्य इति प्र—अनेभ्यः। अधीति। पृथिवीम्। शुक्। प्रेति। विशति। शम्। अहोभ्या-मित्यहः—भ्याम्। इति। नीति। नयति। अहोरात्राभ्या-मित्यहः—रात्राभ्याम्। एव। पृथिव्यै। शुचम्। शमयति। ओषधे। त्रायस्व। एनम्। स्वधित इति स्व—धिते। मा। एनम्। हिंसीः। इति। आह। वज्रः। वै। स्वधिति-रिति स्व—धितिः (१)। शान्त्यै। पार्श्वतः। एति। छ्यति। मध्यतः। हि। मनुष्याः। आच्छ्यन्तीत्या—छ्यन्ति। तिरश्चीनम्। एति। छ्यति। अनूचीनम्। हि।

मनुष्याः । आच्छ्यन्तीत्या—छ्यन्ति । व्यावृत्त्या इति वि-आवृत्त्यै । रक्षसाम् । भागः । असि । इति । स्थविमतः । बर्हिः । अक्त्वा । अपेति । अस्यति । अस्ना । एव । रक्षांसि । निरवदयत इति निः—अवदयते । इदम् । अहम् । रक्षः । अधमम् । तमः । नयामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इति । आह । द्वौ । वाव । पुरुषौ । यम् । च । एव ( २ ) । द्वेष्टि । यः । च । एनम् । द्वेष्टि । तौ । उभौ । अधमम् । तमः । नयति । इषे । त्वा । इति । वपाम् । उदिति । खिदति । इच्छते । इव । हि । एषः । यः । यजते । यत् । उपतृन्द्यादित्युप—तृन्द्यात् । रुद्रः । अस्य । पशून् । घातुकः । स्यात् । यत् । न । उपतृन्द्यादित्युप—तृन्द्यात् । अयता । स्यात् । अन्यया । उपतृणत्तीत्युप—तृणत्ति । अन्यया । न । धृत्यै । घृतेन । द्यावापृथिवी इति द्यावा—पृथिवी । प्रेति । ऊर्णुवाथाम् । इति । आह । द्यावापृथिवी इति द्यावा—पृथिवी । एव । रसेन । अनक्ति । अच्छिन्नः ( ३ ) । रायः । सुवीर इति सु—वीरः । इति । आह । यथायजुरिति यथा-यजुः । एव । एतत् । क्रूरम् । इव । वै । एतत् । करोति । यत् । वपाम् । उत्खिदतीत्युत्—खिदति । उरु । अन्तरिक्षम् । अन्विति । इहि । इति । आह । शान्त्यै । प्रेति ।

वै । एषः । अस्मात् । लोकात् । च्यवते । यः । पशुम् । मृत्यवे । नीयमानम् । अन्वारभत इत्यनु-आरभते । वपा-श्रपणी इति वपा-श्रपणी । पुनः । अन्वारभत इत्यनु-आरभते । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । अग्निना । पुरस्तात् । एति । रक्षसाम् । अपहत्या इत्यप-हत्यै । अथो इति । देवताः । एव । हव्येन ( ४ ) । अन्विति । एति । न । अन्तमम् । अङ्गारम् । अतीति । हरेत् । यत् । अन्तमम् । अङ्गारम् । अतिहरेदित्यति-हरेत् । देवताः । अतीति । मन्येत । वायो इति । वीति । इहि । स्तोकानाम् । इति । आह । तस्मात् । विभक्ता इति वि-भक्ताः । स्तोकाः । अवेति । पद्यन्ते । अग्रम् । वै । एतत् । पशूनाम् । यत् । वपा । अग्रम् । ओषधी-नाम् । बर्हिः । अग्रेण । एव । अग्रम् । समिति । अर्धयति । अथो इति । ओषधीषु । एव । पशून् । प्रतीति । स्थापयति । स्वाहाकृतीभ्य इति स्वाहाकृति-भ्यः । प्रेति । इष्य । इति । आह ( ५ ) । यज्ञस्य । समिष्ट्या इति सम्-इष्ट्यै । प्राणापानाविति प्राण-अपानौ । वै । एतौ । पशूनाम् । यत् । पृषदाज्यमिति पृषत्-आज्यम् । आत्मा । वपा । पृषदाज्यमिति पृषत्-आज्यम् । अभिघार्येत्यभि-घार्य । वपाम् । अभीति । घारयति । आत्मन् ।

एव । पशूनाम् । प्राणापानाविति प्राण—अपानौ । दधाति । स्वाहा । ऊर्ध्वनभसमित्यूर्ध्व—नभसम् । मारुतम् । गच्छतम् । इति । आह । ऊर्ध्वनभा इत्यूर्ध्व—नभाः । ह । स्म । वै । मारुतः । देवानाम् । वपाश्रपणी इति वपा—श्रपणी । प्रेति । हरति । तेन । एव । एने इति । प्रेति । हरति । विषूची इति । प्रेति । हरति । तस्मात् । विष्वञ्चौ । प्राणापानाविति प्राण—अपानौ ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमा लंभते वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्गै पुरोडाश ऊर्जमेव पशूनां मध्यतो दधात्यथो पशोरेव छिद्रमपि दधाति पृषदाज्यस्योपहत्य त्रिः पृच्छति शृत३ꣳहवी३ः शमितरिति त्रिषत्या हि देवा योऽशृतꣳ शृतमाह स एनसा प्राणापानौ वा एतौ पशूनाम् ( १ ) यत्पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माऽभि समेति यत्पृषदाज्येन हृदयमभिघारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति

( अवदानाभिधानम् )

पशुना वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति तस्य शिरश्छित्त्वा मेधं प्राक्षारयन्त्स प्रक्षोऽभवत्तत्प्रक्षस्य प्रक्षत्वं यत्प्लक्षशाखोत्तरबर्हिर्भवति समेधस्यैव ( २ ) पशोरव द्यति पशुं वै ह्रियमाणꣳ रक्षाꣳस्यनु सचन्तेऽन्तरा यूपं चाऽऽहवनीयं च हरति रक्षसामपहत्यै पशोर्वा आलब्धस्य मनोऽप क्रामति मनोतायै हविषोऽवदीयमानस्यानु ब्रूहीत्याह मन एवास्याव रुन्ध एकादशावदानान्यव द्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्याव ( ३ ) द्यति हृदयस्याग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधि निर्वदत्येतद्वै पशोर्यथापूर्वं यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति यथापूर्वमेवास्य पशोरवत्तं भवति मध्यतो गुदस्याव द्यति मध्यतो हि प्राण उत्तमस्याव द्यति ( ४ ) उत्तमो हि प्राणो यदीतरं यदीतरमुभयमेवाजामि जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते

तदवदानानामवदानत्वं देवासुराः संयत्ता आसन्ते देवा अग्निमब्रुवन्त्वया वीरेणासुरानभि भवामेति ( ५ ) सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्य ततो देवा अभवन्पराऽसुरा यत्त्र्यङ्गाणाꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यक्ष्णयाऽव द्यति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै ( ६ ) ॥

( एतौ पशुनाꣳ समेधस्यैव तस्यावोत्तमस्याव द्यतीति पञ्चचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

पशुम् । आलभ्येत्या—लभ्य । पुरोडाशम् । निरिति । वपति । समेधमिति स—मेधम् । एव । एनम् । एति । लभते । वपया । प्रचर्येति प्र—चर्य । पुरोडाशेन । प्रेति । चरति । ऊर्क् । वै । पुरोडाशः । ऊर्जम् । एव

पशूनाम् । मध्यतः । दधाति । अथो इति । पशोः ।
एव । छिद्रम् । अपीति । दधाति । पृषदाज्यस्येति
पृषत्–आज्यस्य । उपहत्येत्युप–हत्य । त्रिः । पृच्छति ।
शृतम् । हवी३ः । शमितः । इति । त्रिषत्या इति
त्रि–सत्याः । हि । देवाः । यः । अशृतम् । शृतम् ।
आह । सः । एनसा । प्राणापानाविति प्राण–अपानौ ।
वै । एतौ । पशूनाम् ( १ ) । यत् । पृषदाज्यमिति
पृषत्–आज्यम् । पशोः । खलु । वै । आलब्धस्येत्या–
लब्धस्य । हृदयम् । आत्मा । अभि । समिति । एति ।
यत् । पृषदाज्येनेति पृषत्–आज्येन । हृदयम् । अभिघा-
रयतीत्यभि–घारयति । आत्मन् । एव । पशूनाम् ।
प्राणापानाविति प्राण–अपानौ । दधाति । पशुना ।
वै । देवाः । सुवर्गमिति सुवः–गम् । लोकम् । आयन् ।
ते । अमन्यन्त । मनुष्याः । नः । अन्वाभविष्यन्ती-
त्यनु–आभविष्यन्ति । इति । तस्य । शिरः । छित्त्वा ।
मेधम् । प्रेति । अक्षारयन् । सः । प्रक्षः । अभवत् ।
तत् । प्रक्षस्य । प्रक्षत्वमिति प्रक्ष–त्वम् । यत् । प्लक्षशा-
खेति प्लक्ष–शाखा । उत्तरबर्हिरित्युत्तर–बर्हिः । भवति ।
समेधस्येति स–मेधस्य । एव ( २ ) । पशोः । अवेति ।
द्यति । पशुम् । वै । ह्रियमाणम् । रक्षांसि । अन्विति ।

सचन्ते । अन्तरा । यूपम् । च । आहवनीयमित्या-हवनीयम् । च । हरति । रक्षसाम् । अपहत्या इत्यप-हत्यै । पशोः । वै । आलब्धस्येत्या-लब्धस्य । मनः । अपेति । क्रामति । मनोतायै । हविषः । अवदीयमानस्येत्यव-दीयमानस्य । अन्विति । ब्रूहि । इति । आह । मनः । एव । अस्य । अवेति । रुन्धे । एकादश । अवदानानीत्यव-दानानि । अवेति । द्यति । दश । वै । पशोः । प्राणा इति प्र-अनाः । आत्मा । एकादशः । यावान् । एव । पशुः । तस्य । अवेति ( ३ ) । द्यति । हृदयस्य । अग्रे । अवेति । द्यति । अथ । जिह्वायाः । अथ । वक्षसः । यत् । वै । हृदयेन । अभिगच्छतीत्यभि-गच्छति । तत् । जिह्वया । वदति । यत् । जिह्वया । वदति । तत् । उरसः । अधि । निरिति । वदति । एतत् । वै । पशोः । यथापूर्वमिति यथा-पूर्वम् । यस्य । एवम् । अवदायेत्यव-दाय । यथाकाममिति यथा-कामम् । उत्तरेषामित्युत्-तरेषाम् । अवद्यतीत्यव-द्यति । यथापूर्वमिति यथा-पूर्वम् । एव । अस्य । पशोः । अवत्तम् । भवति । मध्यतः । गुदस्य । अवेति । द्यति । मध्यतः । हि । प्राण इति प्र-अनः । उत्तमस्येत्युत्-तमस्य । अवेति । द्यति ( ४ ) । उत्तम इत्युत्-तमः । हि । प्राण इति प्र-अनः । यदि । इतरम् ।

यदि । इतरम् । उभयम् । एव । अजामि । जायमानः । वै । ब्राह्मणः । त्रिभिरिति त्रि-भिः । ऋणवेत्यृण-वा । जायते । ब्रह्मचर्येणेति ब्रह्म-चर्येण । ऋषिभ्य इत्यृषि-भ्यः । यज्ञेन । देवेभ्यः । प्रजयेति प्र-जया । पितृभ्य इति पितृ-भ्यः । एषः । वै । अनृणः । यः । पुत्री । यज्वा । ब्रह्मचारिवासीति ब्रह्मचारि-वासी । तत् । अवदानैरित्यव-दानैः । एव । अवेति । दयते । तत् । अवदानानामित्यव-दानानाम् । अवदानत्वमित्यवदान-त्वम् । देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन् । ते । देवाः । अग्निम् । अब्रुवन् । त्वया । वीरेण । असुरान् । अभीति । भवाम । इति ( ५ ) । सः । अब्रवीत् । वरम् । वृणै । पशोः । उद्धारमित्युत्-हारम् । उदिति । हरै । इति । सः । एतम् । उद्धारमित्युत्-हारम् । उदिति । अहरत । दोः । पूर्वार्धस्येति पूर्व-अर्धस्य । गुदम् । मध्यतः । श्रोणिम् । जघनार्धस्येति जघन-अर्धस्य । ततः । देवाः । अभवन् । परेति । असुराः । यत् । त्र्यङ्गाणामिति त्रि-अङ्गानाम् । समवयतीति सम्-अवयति । भ्रातृव्याभिभूत्या इति भ्रातृव्य-अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । अक्ष्णया । अवेति ।

धाति । तस्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति ।
हरन्ति । प्रतिष्ठित्या इति प्रति-स्थित्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो
रूपमेव पशुषु दधाति यूषन्नवधाय प्रोर्णोति रसो
वा एष पशूनां यद्यू रसमेव पशुषु दधाति पार्श्वेन
वसाहोमं प्रयौति मध्यं वा एतत्पशूनां यत्पार्श्वꣳ
रस एष पशूनां यद्वसा यत्पार्श्वेन वसाहोमं प्रयौति
मध्यत एव पशूनाꣳ रसं दधाति घ्नन्ति ( १ ) वा
एतत्पशुं यत्संज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण
ऐन्द्रोऽपान ऐन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदि-
त्याह प्राणापानावेव पशुषु दधाति देव त्वष्टर्भूरि
ते सꣳ समेत्वित्याह त्वाष्ट्रा हि देवतया पशवो विषु-
रूपा यत्सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः
सलक्ष्माण एतर्हि भवन्ति देवत्रा यन्तम् ( २ )
अवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्याहा-

नुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयत्यर्धर्चे वसाहोमं जुहोत्यसौ वा अर्धर्च इयमर्धर्च इमे एव रसेनानक्ति दिशो जुहोति दिश एव रसेनान-क्त्यथो दिग्भ्य एवोर्ज॑ रसमव रुन्धे प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यं वानस्पत्याः खलु (३) वै देवतया पशवो यत्पृषदाज्यस्योपहत्याऽऽह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु दधात्यन्यस्यान्यस्य समवत्त॑ समवद्यति तस्मान्नानारूपाः पशवो यूष्णोप सिञ्चति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधातीडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते (४) चतुष्पादो हि पशवो यं कामयेतापशुः स्यादि-त्यमेदस्कं तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति यं काम-येत पशुमान्त्स्यादिति मेदस्वत्तस्मा आ दध्यान्मे-दोरूपा वै पशवो रूपेणैवास्मै पशूनव रुन्धे पशुमा-नेव भवति प्रजापतिर्यज्ञमसृजत स आज्यम् (५) पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं पश्चात्तस्मा-दाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्ये-नानूयाजास्तस्मादेतन्मिश्रमिव पश्चात्सृष्ट॑ ह्येकाद-

शानूयाजान्यजति दश वै पशोः प्राणा आत्मैका-
दशो यावानेव पशुस्तमनु यजति घ्नन्ति वा एतत्पशुं
यत्संज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां
यत्पृषदाज्यं यत्पृषदाज्येनानूयाजान्यजति प्राणा-
पानावेव पशुषु दधाति ( ६ ) ॥

( घ्नन्ति यन्तं खलु चतुरुपं ह्वयत आज्यं यत्पृ-
षदाज्येन षट्वं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

चात्वालात्सुवर्गाय वैसर्जनानि वैष्णव्यर्चा पृथिव्यै साध्या इषे त्वे
ग्निना पर्यग्नि पशोः पशुमालभ्य मेदसा स्रुचावेकादश ॥ ११ ॥

चात्वालाद्देवानुपैति मुञ्चति प्रह्रियमाणाय पर्यग्नि पशुमा-
लभ्य चतुष्पादो द्विपष्टिः ॥ ६२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
तृतीयः प्रपाठकः ॥ ३ ॥

( अथ षष्ठाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

मेदसा । स्रुचौ । प्रेति । उर्णोति । मेदोरूपा इति
मेदः—रूपाः । वै । पशवः । रूपम् । एव । पशुषु । दधाति ।
यूषन् । अवधायेत्यव—धाय । प्रेति । उर्णोति । रसः । वै ।
एषः । पशूनाम् । यत् । यूः । रसम् । एव । पशुषु ।

दधाति । पार्श्वेन । वसाहोममिति वसा-होमम् । प्रेति ।
यौति । मध्यम् । वै । एतत् । पशूनाम् । यत् । पार्श्वम् ।
रसः । एषः । पशूनाम् । यत् । वसा । यत् । पार्श्वेन ।
वसाहोममिति वसा-होमम् । प्रयौतीति प्र-यौति ।
मध्यतः । एव । पशूनाम् । रसम् । दधाति । घ्नन्ति ।
( १ ) । वै । एतत् । पशुम् । यत् । संज्ञपयन्तीति
सं-ज्ञपयन्ति । ऐन्द्रः । खलु । वै । देवतया । प्राण इति
प्र-अनः । ऐन्द्रः । अपान इत्यप-अनः । ऐन्द्रः । प्राण
इति प्र-अनः । अङ्गेअङ्ग इत्यङ्गे-अङ्गे । नीति ।
देध्यत । इति । आह । प्राणापानाविति प्राण-अपानौ ।
एव । पशुषु । दधाति । देव । त्वष्टः । भूरि । ते ।
सꣳसमिति सं-सम् । एतु । इति । आह । त्वाष्ट्राः । हि ।
देवतया । पशवः । विषुरूपा इति विषु-रूपाः । यत् ।
सलक्ष्माण इति स-लक्ष्माणः । भवथ । इति । आह ।
विषुरूपा इति विषु-रूपाः । हि । एते । सन्तः । सलक्ष्माण इति
स-लक्ष्माणः । एतर्हि । भवन्ति । देवत्रेति देव-त्रा । यन्तम् ।
( २ ) । अवसे । सखायः । अन्विति । त्वा । माता ।
पितरः । मदन्तु । इति । आह । अनुमतमित्यनु-मतम् ।
एव । एनम् । मात्रा । पित्रा । सुवर्गमिति सुवः-गम् ।
लोकम् । गमयति । अर्धर्च इत्यर्ध-ऋचे । वसाहोममिति

वसा—होमम् । जुहोति । असौ । वै । अर्धर्च इत्यर्ध—ऋचः । इयम् । अर्धर्च इत्यर्ध—ऋचः । इमे इति । एव । रसेन । अनक्ति । दिशः । जुहोति । दिशः । एव । रसेन । अनक्ति । अथो इति । दिग्भ्य इति दिक्—भ्यः । एव । ऊर्जम् । रसम् । अवेति । रुन्धे । प्राणापानाविति प्राण—अपानौ । वै । एतौ । पशूनाम् । यत् । पृषदाज्यमिति पृषत्—आज्यम् । वानस्पत्याः । खलु । ( ३ ) । वै । देवतया । पशवः । यत् । पृषदाज्यस्येति पृषत्—आज्यस्य । उपहत्येत्युप—हत्य । आह । वनस्पतये । अन्विति । ब्रूहि । वनस्पतये । प्रेति । इष्य । इति । प्राणापानाविति प्राण—अपानौ । एव । पशुषु । दधाति । अन्यस्यान्यस्येत्यन्यस्य—अन्यस्य । समवत्तमिति सम्—अवत्तम् । समवद्यतीति सम्—अवद्यति । तस्मात् । नाना-रूपा इति नाना—रूपाः । पशवः । यूष्णा । उपेति । सिञ्चति । रसः । वै । एषः । पशूनाम् । यत् । यूः । रसम् । एव । पशुषु । दधाति । इडाम् । उपेति । ह्वयते । पशवः । वै । इडा । पशून् । एव । उपेति । ह्वयते । चतुः । उपेति । ह्वयते ( ४ ) चतुष्पाद इति चतुः—पादः । हि । पशवः । यम् । कामयेत । अपशुः । स्यात् । इति । अमे-दस्कमित्यमेदः—कम् । तस्मै । एति । दध्यात् । मेदोरूपा

इति मेदः—रूपाः । वै । पशवः । रूपेण । एव । एनम् । पशुभ्य इति पशु—भ्यः । निरिति । भजति । अपशुः । एव । भवति । यम् । कामयेत । पशुमानिति पशु—मान् । स्यात् । इति । मेदस्वत् । तस्मै । एति । दध्यात् । मेदोरूपा इति मेदः—रूपाः । वै । पशवः । रूपेण । एव । अस्मै । पशून् । अवेति । रुन्धे । पशुमानिति । पशु—मान् । एव । भवति । प्रजापतिरिति प्रजा—पतिः । यज्ञम् । असृजत । सः । आज्यम् ( ५ ) । पुरस्तात् । असृजत । पशुम् । मध्यतः । पृषदाज्यमिति पृषत्—आज्यम् । पश्चात् । तस्मात् । आज्येन । प्रयाजा इति प्र—याजाः । इज्यन्ते । पशुना । मध्यतः । पृषदाज्येनेति पृषत्—आज्येन । अनूयाजा इत्यनु—याजाः । तस्मात् । एतत् । मिश्रम् । इव । पश्चात्सृष्टमिति पश्चात्—सृष्टम् । हि । एकादश । अनूयाजानित्यनु—याजान् । यजति । दश । वै । पशोः । प्राणा इति प्र—अनाः । आत्मा । एकादशः । यावान् । एव । पशुः । तम् । अन्विति । यजति । घ्नन्ति । वै । एतत् । पशुम् । यत् । संज्ञपयन्तीति सं—ज्ञपयन्ति । प्राणापानाविति प्राण—अपानौ । खलु । वै । एतौ । पशूनाम् । यत् । पृषदाज्यमिति पृषत्—आज्यम् । यत् । पृषदाज्येनेति पृषत्—आज्येन । अनूयाजानित्यनु—याजान् । यजति ।

प्राणापानाविति प्राण–अपानौ । एव । पशुषु ।
दधाति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ षष्ठाष्टके चतुर्थः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भि-
रेवासृजत यदुपयज उपयजति प्रजा एव तद्यजमानः
सृजते जघनार्धादव यति जघनार्धाद्धि प्रजाः
प्रजायन्ते स्थविमतोऽव यति स्थविमतो हि प्रजाः
प्रजायन्तेऽसंभिन्दन्नव यति प्राणानामसंभेदाय न
पर्यावर्तयति यत्पर्यावर्तयेदुदावर्तः प्रजा ग्राहुकः
स्यात्समुद्रं गच्छ स्वाहेत्याह रेतः ( १ ) एव
तद्दधात्यन्तरिक्षं गच्छ स्वाहेत्याहान्तरिक्षेणैवास्मै

प्रजाः प्र जनयत्यन्तरिक्षꣳ ह्यनु प्रजाः प्रजायन्ते देवꣳ सवितारं गच्छ स्वाहेत्याह सवितृप्रसूत एवास्मै प्रजाः प्र जनयत्यहोरात्रे गच्छ स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्रजाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते मित्रावरुणौ गच्छ स्वाहा (२) इत्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजा यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति छन्दाꣳसि गच्छ स्वाहेत्याह पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति नभः (३) दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि-यच्छत्यग्निं वैश्वानरं गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते पशोर्वा आलब्धस्य हृदयꣳ शुगृच्छति सा हृदयशूलम् (४) अभि समेति यत्पृथिव्याꣳ हृदयशूलमुद्वासयेत्पृथिवीꣳ शुचाऽर्पयेद्यदप्स्वपः शुचाऽर्पयेच्छु-

ष्कस्य चाऽऽर्द्रस्य च संधावुद्वासयत्युभयस्य शान्त्यै यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति ( ५ ) ॥

( रेतो मित्रावरुणो गच्छ स्वाहा नमो हृदयशूलं द्वात्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः । )

यज्ञेन । वै । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । ताः । उपयड्भिरित्युपयट्—भिः । एव । असृजत । यत् । उपयज इत्युप—यजः । उपयजतीत्युप—यजति । प्रजा इति प्र—जाः । एव । तत् । यजमानः । सृजते । जघनार्धादिति जघन—अर्धात् । अवेति । द्यति । जघनार्धादिति जघन—अर्धात् । हि । प्रजा इति प्र—जाः । प्रजायन्त इति प्र—जायन्ते । स्थविमतः । अवेति । द्यति । स्थविमतः । हि । प्रजा इति प्र—जाः । प्रजायन्त इति प्र—जायन्ते । असंभिन्दन्नित्यसं—भिन्दन् । अवेति । द्यति । प्राणानामिति प्र—अनानाम् । असंभेदायेत्यसं—भेदाय । न । पर्यावर्तयतीति परि—आवर्तयति । यत् । पर्यावर्तयेदिति परि—आवर्तयेत् । उदावर्तः । प्रजा इति प्र—जाः । ग्राहुकः । स्यात् । समुद्रम् । गच्छ ।

स्वाहा। इति। आह। रेतः। (१)। एव। तत्। दधाति। अन्तरिक्षम्। गच्छ। स्वाहा। इति। आह। अन्तरिक्षेण। एव। अस्मै। प्रजा इति प्र-जाः। प्रेति। जनयति। अन्तरिक्षम्। हि। अन्विति। प्रजा इति प्र-जाः। प्रजायन्त इति प्र-जायन्ते। देवम्। सवितारम्। गच्छ। स्वाहा। इति। आह। सवितृप्रसूत इति सवितृ-प्रसूतः। एव। अस्मै। प्रजा इति प्र-जाः। प्रेति। जनयति। अहोरात्रे इत्यहः-रात्रे। गच्छ। स्वाहा। इति। आह। अहोरात्राभ्यामित्यहः-रात्राभ्याम्। एव। अस्मै। प्रजा इति प्र-जाः। प्रेति। जनयति। अहोरात्रे इत्यहः-रात्रे। हि। अन्विति। प्रजा इति प्र-जाः। प्रजायन्त इति प्र-जायन्ते। मित्रावरुणाविति मित्रा-वरुणौ। गच्छ। स्वाहा (२)। इति। आह। प्रजास्विति प्र-जासु। एव। प्रजातास्विति प्र-जातासु। प्राणापानाविति प्राण-अपानौ। दधाति। सोमम्। गच्छ। स्वाहा। इति। आह। सौम्याः। हि। देवतया। प्रजा इति प्र-जाः। यज्ञम्। गच्छ। स्वाहा। इति। आह। प्रजा इति प्र-जाः। एव। यज्ञियाः। करोति। छन्दांसि। गच्छ। स्वाहा। इति। आह। पशवः। वै। छन्दांसि। पशून्। एव। अवेति। रुन्धे। द्यावापृथिवी इति द्यावा-पृथिवी।

गच्छ । स्वाहा । इति । आह । प्रजा इति प्र—जाः ।
एव । प्रजाता इति प्र—जाताः । द्यावापृथिवीभ्यामिति
द्यावा—पृथिवीभ्याम् । उभयतः । परीति । गृह्णाति ।
नभः ( ३ ) । दिव्यम् । गच्छ । स्वाहा । इति । आह ।
प्रजाभ्य इति प्र—जाभ्यः । एव । प्रजाताभ्य इति प्र—
जाताभ्यः । वृष्टिम् । नीति । यच्छति । अग्निम् । वैश्वा-
नरम् । गच्छ । स्वाहा । इति । आह । प्रजा इति प्र—जाः ।
एव । प्रजाता इति प्र—जाताः । अस्याम् । प्रतीति । स्थाप-
यति । प्राणानामिति प्र—अनानाम् । वै । एषः । अवेति ।
द्यति । यः । अवद्यतीत्यव—द्यति । गुदस्य । मनः । मे ।
हार्दि । यच्छ । इति । आह । प्राणानिति प्र—अनान् ।
एव । यथास्थानमिति यथा—स्थानम् । उपेति । ह्वयते ।
पशोः । वै । आलब्धस्येत्या—लब्धस्य । हृदयम् । शुक् ।
ऋच्छति । सा । हृदयशूलमिति हृदय—शूलम् । ( ४ ) ।
अभि । समिति । एति । यत् । पृथिव्याम् । हृदयशूल-
मिति हृदय—शूलम् । उद्वासयेदित्युत्—वासयेत् । पृथि-
वीम् । शुचा । अर्पयेत् । यत् । अप्स्वित्यप्—सु । अपः ।
शुचा । अर्पयेत् । शुष्कस्य । च । आर्द्रस्य । च । संधा-
विति सं—धौ । उदिति । वासयति । उभयस्य । शान्त्यै ।

यम्। द्विष्यात्। तम्। ध्यायेत्। शुचा। एव। एनम्। अर्पयति (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

(अथ षष्ठाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः)

---

देवा वै यज्ञमाग्नींध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन्वसंतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वं तस्मिन्प्रातर्न समंशक्नुवन्तदप्सु प्रावेशयन्ता वसतीवरीरभवन्वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवाऽऽरभ्य गृहीत्वोप वसति यस्यागृहीता अभि निम्रोचेदनारब्धोऽस्य यज्ञः स्यात् (१) यज्ञं वि च्छिन्द्याज्ज्योतिष्यां वा गृह्णीयाद्धिरण्यं वाऽवधाय सशुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्स हि गृहीतवसतीवरीको वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवाऽऽरभ्य गृहीत्वोप वसति यदन्वीपं तिष्ठन्गृह्णीयान्निर्मार्गुका अस्मात्पशवः स्युः प्रतीपं तिष्ठन्गृह्णाति प्रतिरुध्यैवास्मै पशून्गृह्णातीन्द्रः (२) वृत्रमहन्त्सो१ऽपो१ऽभ्यम्रियत तासां

यन्मेध्यं यज्ञिय॑ꣳ सदेवमासीत्तदत्यमुच्यत ता वहन्ती-
रभवन्वहन्तीनां गृह्णाति या एव मेध्या यज्ञियाः
सदेवा आपस्तासामेव गृह्णाति नान्तमा वहन्तीरती-
यायदन्तमा वहन्तीरतीयायज्ञमति मन्येत न
स्थावराणां गृह्णीयाद्वरुणगृहीता वै स्थावरा
यत्स्थावराणां गृह्णीयात् ( ३ ) वरुणेनास्य यज्ञं
ग्राहयेद्यद्वै दिवा भवत्यपो रात्रिः प्र विशति
तस्मात्ताम्रा आपो दिवा ददृश्रे यन्नक्तं भवत्यपोऽहः
प्र विशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे छायायै
चाऽऽतपतश्च संधौ गृह्णात्यहोरात्रयोरेवास्मै वर्णं
गृह्णाति हविष्मतीरिमा आप इत्याह हविष्कृतानामेव
गृह्णाति हविष्माꣳ अस्तु ( ४ ) सूर्य इत्याह
सशुक्राणामेव गृह्णात्यनुष्टुभा गृह्णाति वाग्वा
अनुष्टुग्वाचैवैनाः सर्वया गृह्णाति चतुष्पदयर्चा
गृह्णाति त्रिः सादयति सप्त सं पद्यन्ते सप्तपदा
शक्करी पशवः शक्करी पशूनेवाव रुन्धेऽस्मै वै
लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो
यद्गार्हपत्य उपसादयेदस्मिँल्लोके पशुमान्त्स्याद्यदा-
हवनीयेऽमुष्मिन् ( ५ ) लोके पशुमान्त्स्यादुभ-
योरुप सादयत्युभयोरेवैनं लोकयोः पशुमन्तं

(वसतीवर्यभिधानम्)

करोति सर्वतः परि हरति रक्षसामपहत्या इन्द्राग्नि-योर्भागधेयीः स्थेत्याह यथायजुरेवैतदाग्नीध्र उप वासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उप वासयति यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यद्वहन्तीनां गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय न ह्येता ईलयन्त्या तृतीयसवनात्परि शेरे यज्ञस्य संतत्यै ( ६ ) ॥

( स्यादिन्द्रो गृह्णीयादस्त्वमुष्मिन्क्रियते षड्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

देवाः । वै । यज्ञम् । आग्नीध्र इत्याग्नि—इध्रे । वीति । अभजन्त । ततः । यत् । अत्यशिष्यतेत्यति—अशिष्यत । तत् । अब्रुवन् । वसतु । नु । नः । इदम् । इति । तत् । वसतीवरीणाम् । वसतीवरित्वमिति वसतीवरि—त्वम् । तस्मिन् । प्रातः । न । समिति । अशक्नुवन् । तत् । अप्स्विऽ-

त्यप्–सु । प्रेति । अवेशयन् । ताः । वसतीवरीः । अभवन् । वसतीवरीः । गृह्णाति । यज्ञः । वै । वसतीवरीः । यज्ञम् । एव । आरभेत्या–रभ्य । गृहीत्वा । उपेति । वसति । यस्य । अगृहीताः । अभीति । निम्रोचेदिति नि–म्रोचेत् । अनारब्ध इत्यना–रब्धः । अस्य । यज्ञः । स्यात् ( १ ) । यज्ञम् । वीति । छिन्द्यात् । ज्योतिष्या । वा । गृह्णीयात् । हिरण्यम् । वा । अवधायेत्यव–धाय । सशुक्राणामिति स–शुक्राणाम् । एव । गृह्णाति । यः । वा । ब्राह्मणः । बहुयाजीति बहु–याजी । तस्य । कुम्भ्यानाम् । गृह्णीयात् । सः । हि । गृहीतवसतीवरीक इति गृहीत–वसतीवरीकः । वसतीवरीः । गृह्णाति । पशवः । वै । वसतीवरीः । पशून् । एव । आरभ्येत्या–रभ्य । गृहीत्वा । उपेति । वसति । यत् । अन्वीपम् । तिष्ठन् । गृह्णीयात् । निर्मार्गुका इति निः–मार्गुकाः । अस्मात् । पशवः । स्युः । प्रतीपम् । तिष्ठन् । गृह्णाति । प्रतिरुध्येति प्रति–रुध्य । एव । अस्मै । पशून् । गृह्णाति । इन्द्रः ( २ ) । वृत्रम् । अहन् । सः । अपः । अभीति । अम्रियत । तासाम् । यत् । मेध्यम् । यज्ञियम् । सदेवमिति स–देवम् । आसीत् । तत् । अतीति । अमुच्यत । ताः । वहन्तीः । अभवन् । वहन्तीनाम् । गृह्णाति । याः । एव । मेध्याः । यज्ञियाः ।

सदेवा इति स-देवाः । आपः । तासाम् । एव । गृह्णाति ।
न ।अन्तमाः ।वहन्तीः ।अतीति ।इयात् ।यत् ।अन्तमाः ।
वहन्तीः । अतीयादित्यति-इयात् । यज्ञम् । अतीति ।
मन्येत । न । स्थावराणाम् । गृह्णीयात् । वरुणगृहीता
इति वरुण-गृहीताः । वै । स्थावराः ।यत् । स्थावराणाम् ।
गृह्णीयात् ( ३ ) । वरुणेन । अस्य । यज्ञम् । ग्राहयेत् ।
यत् । वै । दिवा । भवति । अपः । रात्रिः । प्रेति ।विशति ।
तस्मात् । ताम्राः । आपः । दिवा । ददृश्रे । यत् ।
नक्तम् । भवति । अपः । अहः । प्रेति । विशति ।
तस्मात् । चन्द्राः । आपः । नक्तम् । ददृश्रे । छायायै ।
च । आतपत इत्या-तपतः । च । संधाविति सं-धौ ।
गृह्णाति । अहोरात्रयोरित्यहः-रात्रयोः । एव । अस्मै ।
वर्णम् । गृह्णाति । हविष्मतीः । इमाः । आपः । इति ।
आह । हविष्कृतानामिति हविः-कृतानाम् । एव ।
गृह्णाति । हविष्मान् । अस्तु ( ४ ) । सूर्यः । इति ।
आह । सशुक्राणामिति स-शुक्राणाम् । एव । गृह्णाति ।
अनुष्टुभेत्यनु-स्तुभा । गृह्णाति । वाक् । वै ।
अनुष्टुगित्यनु-स्तुक् । वाचा । एव । एनाः ।
सर्वया । गृह्णाति । चतुष्पदयेति चतुः-पदया । ऋचा ।
गृह्णाति । त्रिः । सादयाति । सप्त । समिति । पद्यन्ते ।

सप्तपदेति सप्त—पदा । शक्करी । पशवः । शक्करी । पशून् । एव । अवेति । रुन्धे । अस्मै । वै । लोकाय । गार्हपत्य इति गार्ह—पत्यः । एति । धीयते । अमुष्मै । आहवनीय इत्या—हवनीयः । यत् । गार्हपत्य इति गार्ह—पत्ये । उपसादयेदित्युप—सादयेत् । अस्मिन् । लोके । पशुमानिति पशु—मान् । स्यात् । यत् । आहवनीय इत्या—हवनीये । अमुष्मिन् ( ५ ) । लोके । पशुमानिति पशु—मान् । स्यात् । उभयोः । उपेति । सादयति । उभयोः । एव । एनम् । लोकयोः । पशुमन्तमिति पशु—मन्तम् । करोति । सर्वतः । परीति । हरति । रक्षसाम् । अपहत्या इत्यप—हत्यै । इन्द्राग्नियोरितीन्द्र—अग्नियोः । भागधेयीरिति भाग—धेयीः । स्थ । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । आग्नीध्र इत्याग्नि—इध्रे । उपेति । वासयति । एतत् । वै । यज्ञस्य । अपराजितमित्यपरा—जितम् । यत् । आग्नीध्रमित्याग्नि—इध्रम् । यत् । एव । यज्ञस्य । अपराजितमित्यपरा—जितम् । तत् । एव । एनाः । उपेति । वासयति । यतः । खलु । वै । यज्ञस्य । वितितस्येति वि—ततस्य । न । क्रियते । तत् । अन्विति । यज्ञम् । रक्षांसि । अवेति । चरन्ति । यत् । वहन्तीनाम् ।

गृह्णाति । क्रियमाणम् । एव । तत् । यज्ञस्य । शये । रक्षसाम् । अनन्ववचारायेत्यननु—अवचाराय । न । हि । एताः । ईलयन्ते । एति । तृतीयसवनादिति तृतीय—सवनात् । परीति । शेरे । यज्ञस्य । संतत्या इति सं—तत्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरति पुरा वाचः ( १ ) प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक्तामव रुन्धेऽपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभि वाचं वि सृजति सर्वाणि छन्दाꣳस्यन्वाह पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे गायत्रिया तेजस्कामस्य

परि दध्यात्त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्याऽनुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजाऽन्नकामस्य शृणोत्वग्निः समिधा हवम् ( २ ) म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छैत्यप इष्य होतरित्याहेषितꣳ हि कर्म क्रियते मैत्रावरुणस्य चमसाध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति देवीरापो अपां नपादित्याहाऽऽहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृतानां गृह्णाति ( ३ ) कार्षिरसीत्याह शमलमेवाऽऽसामप प्लावयति समुद्रस्य वोऽक्षित्या उन्नय इत्याह तस्माद्दयमानाः पीयमाना आपो न क्षीयन्ते योनिर्वै यज्ञस्य चात्वालं यज्ञो वसतीवरीर्होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादेवैना योनेः प्र जनयत्यध्वर्योऽवेरपा३ इत्याहोतेमनन्नमुरुतेमाः पश्येति वावैतदाह यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि यद्यतिरात्रो यजुर्वदन्प्र पद्यते यज्ञक्रतूनां व्यावृत्त्यै ( ४ ) ॥

( वाचो हवमभिघृतानां गृह्णात्युत पञ्चविꣳशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । सः । तु । वै । अध्वर्युः । स्यात् । यः । सोमम् । उपावहरन्नित्युप—अवहरन् । सर्वाभ्यः । देवताभ्यः । उपावहरेदित्युप—अवहरेत् । इति हृदे । त्वा । इति । आह । मनुष्येभ्यः । एव । एतेन । करोति । मनसे । त्वा । इति । आह । पितृभ्य इति पितृ—भ्यः । एव । एतेन । करोति । दिवे । त्वा । सूर्याय । त्वा । इति । आह । देवेभ्यः । एव । एतेन । करोति । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । उपावहरतीत्युप—अवहरति । पुरा । वाचः ( १ ) । प्रवदितोरिति प्र—वदितोः । प्रातरनुवाकमिति प्रातः—अनुवाकम् । उपाकरोतीत्युप—आकरोति । यावती । एव । वाक् । ताम् । अवेति । रुन्धे । अपः । अग्रे । अभिव्याहरतीत्यभि—व्याहरति । यज्ञः । वै । आपः । यज्ञम् । एव । अभीति । वाचम् । वीति । सृजति । सर्वाणि ।

छन्दा᳘ꣳसि । अन्विति । आह । पशवः । वै । छन्दा᳘ꣳसि । पशून् । एव । अवेति । रुन्धे । गायत्रिया । तेजस्कामस्येति तेजः—कामस्य । परीति । दध्यात् । त्रिष्टुभा । इन्द्रियकामस्येतीन्द्रिय—कामस्य । जगत्या । पशुकामस्येति पशु—कामस्य । अनुष्टुभेत्यनु—स्तुभा । प्रतिष्ठाकामस्येति प्रतिष्ठा—कामस्य । पङ्क्त्या । यज्ञकामस्येति यज्ञ—कामस्य । विराजेति वि—राजा । अन्नकामस्येत्यन्न—कामस्य । शृणोतु । अग्निः । समिधेति सम्—इधा । हवम् ( २ ) । मे । इति । आह । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । देवताभ्यः । निवेद्येति नि—वेद्य । अपः । अच्छ । एति । अपः । इष्य । होतः । इति । आह । इषितम् । हि । कर्म । क्रियते । मैत्रावरुणस्येति मैत्रा—वरुणस्य । चमसाध्वर्यविति चमस—अध्वर्यो । एति । द्रव । इति । आह । मित्रावरुणाविति मित्रा—वरुणौ । वै । अपाम् । नेतारौ । ताभ्याम् । एव । एनाः । अच्छ । एति । देवीः । आपः । अपाम् । नपात् । इति । आह । आहुत्येत्या—हुत्या । एव । एनाः । निष्क्रीयेति निः—क्रीय । गृह्णाति अथो इति । हविष्कृतानामिति हविः—कृतानाम् । एव । अभिघृतानामित्यभि—घृतानाम् । गृह्णाति ( ३ ) । कार्षिः । असि ।

इति । आह । शमलम् । एव । आसाम् । अपेति । प्लावयति । समुद्रस्य । वः । अक्षित्यै । उदिति । नये । इति । आह । तस्मात् । अयमानाः । पीयमानाः । आपः । न । क्षीयन्ते । योनिः । वै । यज्ञस्य । चात्वालम् । यज्ञः । वसतीवरीः । होतृचमसमिति होतृ-चमसम् । च । मैत्रावरुणचमसमिति मैत्रावरुण-चमसम् । च । सꣳस्पर्श्येति सं-स्पर्श्य । वसतीवरीः । व्यानयतीति वि-आनयति । यज्ञस्य । सयोनित्वायेति सयोनि-त्वाय । अथो इति । स्वात् । एव । एनाः । योनेः । प्रेति । जनयति । अध्वर्यो इति । अवेः । अपाः (३) । इति । आह । उत । ईम् । अनन्नमुः । उत । इमाः । पश्य । इति । वाव । एतत् । आह । यदि । अग्निष्टोम इत्यग्नि-स्तोमः । जुहोति । यदि । उक्थ्यः । परिधाविति परि-धौ । नीति । मार्ष्टि । यदि । अतिरात्र इत्यति-रात्रः । यजुः । वदन् । प्रेति । पद्यते । यज्ञक्रतूनामिति यज्ञ-क्रतूनाम् । व्यावृत्त्या इति वि-आवृत्त्यै । (४) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

———

( अथ षष्ठाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै पशवो वै सोमो व्यान उपाꣳशुसवनो यदुपाꣳशुसवनमाभि मिमीते व्यानमेव पशुषु दधातीन्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्राय हि सोम आह्रियते पञ्च कृत्वो यजुषा मिमीते ( १ ) पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे श्वात्राः स्थ वृत्रतुर इत्याहैष वा अपाꣳ सोमपीथो य एवं वेद नाप्स्वार्तिमार्च्छति यत्ते सोम दिवि ज्योतिरित्याहैभ्य एवैनम् ( २ ) लोकेभ्यः सं भरति सोमो वै राजा दिशोऽभ्यध्यायत्स दिशोऽनु प्राविशत्प्रागपागुदगधरागित्याह दिग्भ्य एवैनꣳ सं भरत्यथो दिश एवास्मा अव रुन्धेऽम्ब नि ष्वरेत्याह कामुका एनꣳ स्त्रियो भवन्ति य एवं वेद यत्ते सोमादाभ्यं नाम जागृवीति ( ३ ) आहैष वै सोमस्य सोमपीथो य एवं वेद न सौम्या-

( सोमोन्मानकथनम् )

मार्तिमार्च्छति घ्नन्ति वा एतत्सोमं यदभिषुण्वन्त्यꣳशूनप गृह्णाति त्रायत एवैनं प्राणा वा अꣳशवः पशवः सोमोऽꣳशून्पुनरपि सृजति प्राणानेव पशुषु दधाति द्वौद्वावपि सृजति तस्माद्द्वौद्वौ प्राणाः ( ४ )

( यजुषा मिमीत एनं जागृवीति चतुश्चत्वारिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

देवस्य । त्वा । सवितुः । प्रसव इति प्र–सवे । इति । ग्रावाणम् । एति । दत्ते । प्रसूत्या इति प्र–सूत्यै । अश्विनोः । बाहुभ्यामिति बाहु–भ्याम् । इति । आह । अश्विनौ । हि । देवानाम् । अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह । यत्यै । पशवः । वै । सोमः । व्यान इति वि–अनः । उपाꣳशुसवन इत्युपाꣳशु–सवनः । यत् । उपाꣳशुसवनमित्युपाꣳशु–सवनम् । अभीति । मिमीते । व्यानमिति वि–अनम् । एव । पशुषु । दधाति । इन्द्राय । त्वा । इन्द्राय । त्वा । इति । मिमीते । इन्द्राय । हि ।

सोमः । आह्रियत इत्या—ह्रियते । पञ्च । कृत्वः । यजुषा । मिमीते ( १ ) । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । पञ्च । कृत्वः । तूष्णीम् । दश । समिति । पयन्ते । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् । विराडिति वि—राट् । विराजेति वि—राजा । एव । अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धे । श्वात्राः । स्थ । वृत्रतुर इति वृत्र—तुरः । इति । आह । एषः । वै । अपाम् । सोमपीथ इति सोम—पीथः । यः । एवम् । वेद । न । अप्स्वित्यप्—सु । आर्तिम् । एति । ऋच्छति । यत् । ते । सोम । दिवि । ज्योतिः । इति । आह । एभ्यः । एव । एनम् ( २ ) । लोकेभ्यः । समिति । भरति । सोमः । वै । राजा । दिशः । अभीति । अध्यायत् । सः । दिशः । अनु । प्रेति । अविशत् । प्राक् । अपाक् । उदक् । अधराक् । इति । आह । दिग्भ्य इति दिक्—भ्यः । एव । एनम् । समिति । भरति । अथो इति । दिशः । एव । अस्मै । अवेति । रुन्धे । अम्ब । नीति । स्वर । इति । आह । कामुकाः । एनम् । स्त्रियः । भवन्ति । यः । एवम् । वेद । यत् । ते । सोम । अदाभ्यम् । नाम । जागृवि । इति । ( ३ ) । आह ।

एषः। वै। सोमस्य। सोमपीथ इति सोम-पीथः। यः। एवम्। वेद। न। सौम्याम्। आर्तिम्। एति। ऋच्छति। घ्नन्ति। वै। एतत्। सोमम्। यत्। अभिषुण्वन्तीत्यभि-सुन्वन्ति। अꣳशून्। अपीति। गृह्णाति। त्रायते। एव। एनम्। प्राणा इति प्र-अनाः। वै। अꣳशवः। पशवः। सोमः। अꣳशून्। पुनः। अपीति। सृजति। प्राणानिति प्र-अनान्। एव। पशुषु। दधाति। द्वौद्वाविति द्वौ-द्वौ। अपीति। सृजति। तस्मात्। द्वौद्वाविति द्वौ-द्वौ। प्राणा इति प्र-अनाः। (४)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ षष्ठाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः।)

---

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳश्वग्रा ग्रहा गृह्यन्ते प्राणमेवानु प्र यन्त्यरुणो ह स्माऽऽहौपवेशिः प्रातःसवन एवाहं यज्ञꣳ सꣳ स्थापयामि तेन ततः सꣳस्थितेन चरामीत्यष्टौ कृत्वोऽग्रेऽभि षुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाऽऽप्नोत्येकादश कृत्वो द्वितीयमेकादशाक्षरा

त्रिष्टुप्त्रैष्टुभं माध्यंदिनं ( १ ) सवनं माध्यंदिनमेव सवनं तेनाऽऽप्नोति द्वादश कृत्वस्तृतीयं द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोत्येताꣳह वाव स यज्ञस्य सꣳस्थितिमुवाचा-स्कन्दायास्कन्नꣳ हि तद्यद्यज्ञस्य सꣳस्थितस्य स्कन्दत्यथो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवं वेद तस्मादष्टावष्टौ ( २ ) कृत्वोऽभिषुत्यं ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते किंपवित्र उपाꣳशुरिति वाक्पवित्र इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचै-वैनं पवयति वृष्णो अꣳशुभ्यामित्याह वृष्णो ह्येतावꣳशू यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनं पवयति देवो देवानां पवित्रमसीत्याह देवो ह्येषः ( ३ ) सन्देवानां पवित्रं येषां भागोऽसि तेभ्यस्त्वेत्याह येषाꣳ ह्येष भागस्तेभ्य एनं गृह्णाति स्वांकृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह सर्वमेवास्मा इदꣳ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान्दधाति

मनस्त्वा (४) अष्ट्वित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभवः सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षं जुहोति देवेभ्यस्त्वा मरीचिपेभ्य इत्याहाऽऽदित्यस्य वै रश्मयो देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेनं प्रीणाति यदि कामयेत वर्षुकः पर्जन्यः (५) स्यादिति नीचा हस्तेन नि मृज्याद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि मृज्याद्वृष्टिमेवोद्यच्छति यद्यभिचरेदमुं जह्यथ त्वा होष्यामीति ब्रूयादाहुतिमेवैनं प्रेप्सन्हन्ति यदि दूरे स्यादा तमितोस्तिष्ठेत्प्राणमेवास्यानुगत्य हन्ति यद्यभिचरेदमुष्य (६) त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवास्य सादयति षड्भिरꣳशुभिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति त्रिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति ब्रह्मवादिनो वदन्ति कस्मात्सत्यात्त्रयः पशूनाꣳ हस्तादाना इति यत्त्रिरुपाꣳशुꣳ हस्तेन

विगृह्णाति तस्मात्त्रयः पशूनाꣳ हस्तादानाः पुरुषो हस्ती मर्कटः ( ७ ) ॥

( माध्यंदिनमष्टावष्टावेष मनस्त्वा पर्जन्योऽमुष्य पुरुषो द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

प्राण इति प्र—अनः । वै । एषः । यत् । उपाꣳशुरित्युप—अꣳशुः । यत् । उपाꣳश्वग्रा इत्युपाꣳशु—अग्राः । ग्रहाः । गृह्यन्ते । प्राणमिति प्र—अनम् । एव । अनु । प्रेति । यन्ति । अरुणः । ह । स्म । आह । औपवेशिरित्यौप—वेशिः । प्रातःसवन इति प्रातः—सवने । एव । अहम् । यज्ञम् । समिति । स्थापयामि । तेन । ततः । सꣳस्थितेनेति सं—स्थितेन । चरामि । इति । अष्टौ । कृत्वः । अग्रे । अभीति । सुनोति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्रम् । प्रातःसवनमिति प्रातः—सवनम् । प्रातःसवनमिति प्रातः—सवनम् । एव । तेन । आप्नोति । एकादश । कृत्वः । द्वितीयम् । एकादशाक्षरेत्येकादश—अक्षरा । त्रिष्टुप् । त्रैष्टुभम् । माध्यंदिनम् ( १ ) ।

सर्वनम् । माध्यंदिनम् । एव । सर्वनम् । तेन । आप्नोति ।
द्वादश । कृत्वः । तृतीयम् । द्वादशाक्षरेति द्वादश-
क्षरा । जगती । जागतम् । तृतीयसवनमिति तृतीय-सव-
नम् । तृतीयसवनमिति तृतीय-सवनम् । एव । तेन ।
आप्नोति । एताम् । ह । वाव । सः । यज्ञस्य । सꣳस्थि-
तिमिति सं-स्थितिम् । उवाच । अस्कन्दाय । अस्कन्नम् ।
हि । तत् । यत् । यज्ञस्य । सꣳस्थितस्येति सं-स्थितस्य ।
स्कन्दति । अथो इति । खलु । आहुः । गायत्री । वाव ।
प्रातःसवन इति प्रातः-सवने । न । अतिवाद इत्य-
ति-वादे । इति । अनतिवादुक इत्यनति-वादुकः ।
एनम् । भ्रातृव्यः । भवति । यः । एवम् । वेद । तस्मात् ।
अष्टावष्टावित्यष्टौ-अष्टौ ( २ ) । कृत्वः । अभिषुत्यमि-
त्यभि-सुत्यम् । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति ।
पवित्रवन्त इति पवित्र-वन्तः । अन्ये । ग्रहाः । गृह्यन्ते ।
किंपवित्र इति किं-पवित्रः । उपाꣳशुरित्युप-अꣳशुः ।
इति । वाक्पवित्र इति वाक्-पवित्रः । इति । ब्रूयात् ।
वाचः । पतये । पवस्व । वाजिन् । इति । आह ।
वाचा । एव । एनम् । पवयति । वृष्णः । अꣳशुभ्यामि-
त्यꣳशु-भ्याम् । इति । आह । वृष्णः । हि ।
एतौ । अꣳशू इति । यौ । सोमस्य । गभस्तिपूत

इति गर्भस्ति–पूतः । इति । आह । गर्भस्तिना । हि । एनम् । पवयति । देवः । देवानाम् । पवित्रम् । असि । इति । आह । देवः । हि । एषः । ( ३ ) । सन् । देवानाम् । पवित्रम् । येषाम् । भागः । असि । तेभ्यः । त्वा । इति । आह । येषाम् । हि । एषः । भागः । तेभ्यः । एनम् । गृह्णाति । स्वांकृतः । असि । इति । आह । प्राणमिति प्र–अनम् । एव । स्वम् । अकृत । मधुमतीरिति मधु–मतीः । नः । इषः । कृधि । इति । आह । सर्वम् । एव । अस्मै । इदम् । स्वदयति । विश्वेभ्यः । त्वा । इन्द्रियेभ्यः । दिव्येभ्यः । पार्थिवेभ्यः । इति । आह । उभयेषु । एव । देवमनुष्येष्विति देव–मनुष्येषु । प्राणानिति प्र–अनान् । दधाति । मनः । त्वा । ( ४ ) । अष्टु । इति । आह । मनः । एव । अश्नुते । उरु । अन्तरिक्षम् । अन्विति । इहि । इति । आह । अन्तरिक्षदेवत्य इत्यन्तरिक्ष–देवत्यः । हि । प्राण इति प्र–अनः । स्वाहा । त्वा । सुभव इति सु–भवः । सूर्याय । इति । आह । प्राणा इति प्र–अनाः । वै । स्वभवस इति स्व–भवसः । देवाः । तेषु । एव । परोक्षमिति परः–अक्षम् । जुहोति । देवेभ्यः । त्वा । मरीचिपेभ्य इति

मरीचि-पेभ्यः । इति । आह । आदित्यस्य । वै ।
रश्मयः । देवाः । मरीचिपा इति मरीचि-पाः । तेषाम् ।
तत् । भागधेयमिति भाग-धेयम् । तान् । एव । तेन ।
प्रीणाति । यदि । कामयेत । वर्षुकः । पर्जन्यः ।
( ५ ) । स्यात् । इति । नीचा । हस्तेन । नीति ।
मृज्यात् । वृष्टिम् । एव । नीति । यच्छति । यदि ।
कामयेत । अवर्षुकः । स्यात् । इति । उत्तानेनेत्युत्-
तानेन । नीति । मृज्यात् । वृष्टिम् । एव । उदिति ।
यच्छति । यदि । अभिचरेदित्यभि-चरेत् । अमुम् ।
जहि । अथ । त्वा । होष्यामि । इति । ब्रूयात् ।
आहुतिमित्या-हुतिम् । एव । एनम् । प्रेप्सन्निति प्र-
ईप्सन् । हन्ति । यदि । दूरे । स्यात् । एति । तमितोः ।
तिष्ठेत् । प्राणमिति प्र-अनम् । एव । अस्य ।
अनुगत्येत्यनु-गत्य । हन्ति । यदि । अभिचरेदित्यभि-
चरेत् । अमुष्य ( ६ ) । त्वा । प्राण इति प्र-अने ।
सादयामि । इति । सादयेत् । असन्नः । वै । प्राण इति
प्र-अनः । प्राणमिति प्र-अनम् । एव । अस्य ।
सादयति । षड्भिरिति षट्-भिः । अꣳशुभिरित्यꣳशु-भिः ।
पवयति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः । एव ।
एनम् । पवयति । त्रिः । पवयति । त्रयः । इमे । लोकाः ।

एभिः । एव । एनम् । लोकैः । पवयति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । कस्मात् । सत्यात् । त्रयः । पशूनाम् । हस्तादाना इति हस्त—आदानाः । इति । यत् । त्रिः । उपांशुमित्युप—अंशुम् । हस्तेन । विगृह्णातीति वि—गृह्णाति । तस्मात् । त्रयः । पशूनाम् । हस्तादाना इति हस्त—आदानाः । पुरुषः । हस्ती । मर्कटः ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपांशौ यज्ञं संस्थाप्यमपश्यन्तमुपांशौ समस्थापयन्तेऽसुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाधावन्तानिन्द्रोऽन्तर्यामेणान्तरधत्त तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्धत्तेऽन्तस्ते ( १ ) दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते ते देवा अमन्यन्तेन्द्रो

वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन्मघवन्ननु न आ भजेति सजोषा देवैरवरैः परैश्चेत्यब्रवीद्ये चैव देवाः परे ये चावरे तानुभयान् ( २ ) अन्वाभजत्सजोषा देवैरवरैः परैश्चेत्याह ये चैव देवाः परे ये चावरे तानुभयानन्वाभजत्यन्तर्यामे मघवन्मादयस्वेत्याह यज्ञादेव यजमानं नान्तरेत्युपयामगृहीतोऽसीत्याहापानस्य धृत्यै यदुभावपवित्रौ गृह्येयातां प्राणमपानोऽनु न्यृच्छेत्प्रमायुकः स्यात्पवित्रवानन्तर्यामो गृह्यते ( ३ ) प्राणापानयोर्विधृत्यै प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यं कामयेत प्रमायुकः स्यादित्यसꣳस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ विच्छिनत्ति ताजक्प्र मीयते यं कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ सं तनोति सर्वमायुरेति ( ४ ) ॥

( त उभयान्गृह्यते चतुश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ षष्ठाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । उपाꣳशाविर्त्युप-अꣳशौ । यज्ञम् । सꣳस्थाप्यमिति सं-स्थाप्यम् । अपश्यन् । तम् । उपाꣳशाविर्त्युप-अꣳशौ । समिति । अस्थापयन् । ते । असुराः । वज्रम् । उद्यत्येत्युत्-यत्य । देवान् । अभीति । आयन्त । ते । देवाः । बिभ्यतः । इन्द्रम् । उपेति । अधावन् । तान् । इन्द्रः । अन्तर्यामेणेत्यन्तः-यामेन । अन्तः । अधत्त । तत् । अन्तर्यामस्येत्यन्तः-यामस्य । अन्तर्यामत्वमित्यन्तर्याम-त्वम् । यत् । अन्तर्याम इत्यन्तः-यामः । गृह्यते । भ्रातृव्यान् । एव । तत् । यजमानः । अन्तः । धत्ते । अन्तः । ते ( १ ) । दधामि । द्यावापृथिवी इति द्यावा-पृथिवी । अन्तः । उरु । अन्तरिक्षम् । इति । आह । एभिः । एव । लोकैः । यजमानः । भ्रातृव्यान् । अन्तः । धत्ते । ते । देवाः । अमन्यन्त । इन्द्रः । वै । इदम् । अभूत् । यत् । वयम् । स्मः । इति । ते । अब्रुवन् । मघवन्निति मघ-वन् । अन्विति । नः । एति । भज । इति । सजोषा इति स-जोषाः । देवैः । अवरैः ।

परैः। च। इति। अब्रवीत्। ये। च। एव। देवाः। परे। ये। च। अवरे। तान्। उभयान् (२)। अन्वाभजविन्त्यनु—आभजत्। सजोषा इति स—जोषाः। देवैः। अवरैः। परैः। च। इति। आह। ये। च। एव। देवाः। परे। ये। च। अवरे। तान्। उभयान्। अन्वाभजतीत्यनु—आभजति। अन्तर्याम इत्यन्तः—यामे। मघवन्निति मघ—वन्। मादयस्व। इति। आह। यज्ञात्। एव। यजमानम्। न। अन्तः। एति। उपयामगृहीत इत्युपयाम—गृहीतः। असि। इति। आह। अपानस्येत्यप—अनस्य। धृत्यै। यत्। उभौ। अपवित्रौ। गृह्येयाताम्। प्राणमिति प्र—अनम्। अपान इत्यप—अनः। अनु। नीति। ऋच्छेत्। प्रमायुक इति प्र—मायुकः। स्यात्। पवित्रवानिति पवित्र—वान्। अन्तर्याम इत्यन्तः—यामः। गृह्यते। (३)। प्राणापानयोरिति प्राण—अपानयोः। विधृत्या इति वि—धृत्यै। प्राणापानाविति प्राण—अपानौ। वै। एतौ। यत्। उपांश्वन्तर्यामावित्युपांशु—अन्तर्यामौ। व्यान इति वि—अनः। उपांशुसवन इत्युपांशु—सवनः। यम्। कामयेत। प्रमायुक इति प्र—मायुकः। स्यात्। इति। असंस्पृष्टावित्यसं—स्पृष्टौ। तस्य। सादयेत्। व्यानेनेति

वि—अनेन । एव । अस्य । प्राणापानाविति प्राण—अपानौ । वीति । छिनत्ति । ताजक् । प्रेति । मीयते । यम् । कामयेत । सर्वम् । आयुः । इयात् । इति । सꣳस्पृष्टाविति सं—स्पृष्टौ । तस्य । सादयेत् । व्यानेनेति वि—अनेन । एव । अस्य । प्राणापानाविति प्राण—अपानौ । समिति । तनोति । सर्वम् । आयुः । एति । ( ४ ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्र यन्ति वायुं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते तमघ्नन्त्सोऽपूयत्तं देवा नोपाधृष्णुवन्ते वायुमब्रुवन्निमं नः स्वदय ( १ ) इति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते तमेभ्यो वायुरेवास्वदयत्तस्माद्यत्पूयति तत्प्रवाते वि षजन्ति

वायुर्हि तस्यं पवयिता स्वंदयिता तस्यं विग्रहंणं
नाविन्दन्त्साऽदितिरब्रवीद्वरं वृणा अथ मया वि
गृह्णीध्वं मद्देवत्या एव वः सोमाः (२) सन्ना अंस-
न्नित्युपयामगृहीतोऽसीत्याहादितिदेवत्यास्तेन यानि
हि दारुमयाणि पात्राण्यस्यैतानि योनेः संभू-
तानि यानि मृन्मयानि साक्षात्तान्यस्यै तस्मा-
देवमाह वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रु-
वन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं
चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः
सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मा-
दियं व्याकृता वागुंद्यते तस्मात्सकृदिन्द्राय मध्यतो
गृह्यते द्विर्वायवे द्वौ हि स वरावंवृणीत (३)।

(स्वदय सोमाः सहाष्टाविंशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ॥

---

(अथ षष्ठाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः।)

---

वाक्। वै। एषा। यत्। ऐन्द्रवायव इत्यैन्द्र-
वायवः। यत्। ऐन्द्रवायवाग्रा इत्यैन्द्रवायव-अग्राः।

ग्रहाः । गृह्यन्ते । वाचम् । एव । अनु । प्रेति ।
यन्ति । वायुम् । देवाः । अब्रुवन् । सोमम् । राजानम् ।
हनाम । इति । सः । अब्रवीत् । वरम् । वृणै । मदग्रा
इति मत्—अग्राः । एव । वः । ग्रहाः । गृह्यान्तै । इति ।
तस्मात् । ऐन्द्रवायवाग्रा इत्यैन्द्रवायव—अग्राः । ग्रहाः ।
गृह्यन्ते । तम् । अघ्नन् । सः । अपूयत् । तम् । देवाः ।
न । उपेति । अधृष्णुवन् । ते । वायुम् । अब्रुवन् ।
इमम् । नः । स्वदय ( १ ) । इति । सः । अब्रवीत् ।
वरम् । वृणै । मद्देवत्यानीति मत्—देवत्यानि । एव ।
वः । पात्राणि । उच्यान्तै । इति । तस्मात् । नानादेव-
त्यानीति नाना—देवत्यानि । सन्ति । वायव्यानि ।
उच्यन्ते । तम् । एभ्यः । वायुः । एव । अस्वदयत् ।
तस्मात् । यत् । पूयति । तत् । प्रवात इति प्र—वाते ।
वीति । सजन्ति । वायुः । हि । तस्य । पवयिता ।
स्वदयिता । तस्य । विग्रहणमिति वि—ग्रहणम् । न ।
अविन्दन् । सा । अदितिः । अब्रवीत् । वरम् । वृणै ।
अथ । मया । वीति । गृह्णीध्वम् । मद्देवत्या इति मत्—
देवत्याः । एव । वः । सोमाः ( २ ) । सन्नाः । असन् ।
इति । उपयामगृहीत इत्युपयाम—गृहीतः । असि ।
इति । आह । अदितिदेवत्या इत्यदिति—देवत्याः । तेन ।

यानि । हि । दारुमयाणीति दारु-मयानि । पात्राणि । अस्यै । तानि । योनेः । संभूतानीति सं-भूतानि । यानि । मृन्मयानीति मृत्-मयानि । साक्षादिति स-अक्षात् । तानि । अस्यै । तस्मात् । एवम् । आह । वाक् । वै । पराची । अव्याकृतेत्यवि-आकृता । अवदत् । ते । देवाः । इन्द्रम् । अब्रुवन् । इमाम् । नः । वाचम् । व्याकुर्विति वि-आकुरु । इति । सः । अब्रवीत् । वरम् । वृणै । मह्यम् । च । एव । एषः । वायवे । च । सह । गृह्यातै । इति । तस्मात् । ऐन्द्रवायव इत्यैन्द्र-वायवः । सह । गृह्यते । ताम् । इन्द्रः । मध्यतः । अवक्रम्येत्यव-क्रम्य । व्याकरोदिति वि-आकरोत् । तस्मात् । इयम् । व्याकृतेति वि-आकृता । वाक् । उद्यते । तस्मात् । सकृत् । इन्द्राय । मध्यतः । गृह्यते । द्विः । वायवे । द्वौ । हि । सः । वरौ । अवृणीत ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

मित्रं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीन्नाहꣳ सर्वस्य वा अहं मित्रमस्मीति तम॑-ब्रुवन् हनामैवेति सोऽब्रवीद्वरं वृणै पयसैव मे सोमꣳ

श्रीणन्निति तस्मान्मैत्रावरुणं पयसा श्रीणन्ति तस्मात्पशवोऽपाक्रामन्मित्रः सन्क्रूरमकरिति क्रूरमिव खलु वा एषः ( १ ) करोति यः सोमेन यजते तस्मात्पशवोऽप क्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्धयति पशुभिर्यजमानं पुरा खलु वावैवं मित्रोऽवेदप मत्क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत वरुणं देवा अब्रुवन्त्वयाऽꣳशभुवा सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मह्यं च ( २ ) एवैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रं न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो वि वासयतमिति तावब्रूतां वरं वृणावहा एक एवाऽऽवत्पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः पूर्वो मैत्रावरुणाद्गृह्यते प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै (३)॥

( एष चैन्द्रवायवो द्वाविꣳशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

———

( अथ षष्ठाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः। )

---

मित्रम्। देवाः। अब्रुवन्। सोमम्। राजानम्। हनाम।
इति। सः। अब्रवीत्। न। अहम्। सर्वस्य। वै। अहम्।
मित्रम्। अस्मि। इति। तम्। अब्रुवन्। हनाम। एव।
इति। सः। अब्रवीत्। वरम्। वृणै। पयसा। एव।
मे। सोमम्। श्रीणन्। इति। तस्मात्। मैत्रावरुणमिति
मैत्रा–वरुणम्। पयसा। श्रीणन्ति। तस्मात्। पशवः।
अपेति। अक्रामन्। मित्रः। सन्। क्रूरम्। अकः। इति।
क्रूरम्। इव। खलु। वै। एषः (१)। करोति। यः।
सोमेन। यजते। तस्मात्। पशवः। अपेति। क्रामन्ति।
यत्। मैत्रावरुणमिति मैत्रा–वरुणम्। पयसा। श्रीणाति।
पशुभिरिति पशु–भिः। एव। तत्। मित्रम्। समर्धय-
तीति सम्–अर्धयति। पशुभिरिति पशु–भिः। यजमानम्।
रा। खलु। वाव। एवम्। मित्रः। अवेत्। अपेति। मत्।
रम्। चक्रुषः। पशवः। क्रमिष्यन्ति। इति। तस्मात्।
म्। अवृणीत। वरुणम्। देवाः। अब्रुवन्। त्वया।
ऽशभुवेत्यंऽश–भुवा। सोमम्। राजानम्। हनाम।
। सः। अब्रवीत्। वरम्। वृणै। मह्यम्। च (२)।
। एषः। मित्राय। च। सह। गृह्यातै। इति। तस्मात्।

मैत्रावरुण इति मैत्रा-वरुणः । सह । गृह्यते । तस्मात् । राज्ञा । राजानम् । अश्वशभुवेत्यश्श-भुवा । घ्नन्ति । वैश्येन । वैश्यम् । शूद्रेण । शूद्रम् । न । वै । इदम् । दिवा । न । नक्तम् । आसीत् । अव्यावृत्तमित्यवि-आवृत्तम् । ते । देवाः । मित्रावरुणाविति मित्रा-वरुणौ । अब्रुवन् । इदम् । नः । वीति । वासयतम् । इति । तौ । अब्रूताम् । वरम् । वृणावहै । एकः । एव । आवत् । पूर्वः । ग्रहः । गृह्यातै । इति । तस्मात् । ऐन्द्रवायव इत्यैन्द्र-वायवः । पूर्वः । मैत्रावरुणादिति मैत्रा-वरुणात् । गृह्यते । प्राणापानाविति प्राण-अपानौ । हि । एतौ । यत् । उपाश्वन्तर्यामावित्युपाश्शु-अन्तर्यामौ । मित्रः । अहः । अजनयत् । वरुणः । रात्रिम् । ततः । वै । इदम् । वीति । औच्छत् । यत् । मैत्रावरुण इति मैत्रा-वरुणः । गृह्यते । व्युष्ट्या इति वि-उष्ट्यै ( ३ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः )

---

यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति

तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यता-
मिति ताभ्यामेतमाश्विनमगृह्णन्ततो वै तौ यज्ञस्य
शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै
तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ ( १ )
भिषजाविति तस्माद्ब्राह्मणेन भेषजं न कार्यमपूतो
ह्ये१षोऽमेध्यो यो भिषक्तौ बहिष्पवमानेन पवयित्वा
ताभ्यामेतमाश्विनमगृह्णन्तस्माद्बहिष्पवमाने स्तुत
आश्विनो गृह्यते तस्मादेवं विदुषा बहिष्पवमान
उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पव-
यते तयोस्त्रेधा भैषज्यं वि न्यदधुरग्नौ तृतीयमप्सु
तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्रम् ( २ ) उप-
निधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्या-
वदेव भेषजं तेन करोति समर्धुकमस्य कृतं भवति
ब्रह्मवादिनो वदन्ति कस्मात्सत्यादेकपात्रा द्विदेवत्या
गृह्यन्ते द्विपात्रा हूयन्त इति यदेकपात्रा गृह्यन्ते तस्मा-
देकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद्द्वौद्वौ
बहिष्टात्प्राणाः प्राणा वा एते यद्द्विदेवत्याः पशव
इडा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत ( ३ )
पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद्द्विदेवत्या-
न्भक्षयित्वेडामुप ह्वयते प्राणानेवाऽऽत्मन्धित्वा

पशूनुप ह्वयते वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात्पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात्पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात्सर्वतः श्रोत्रेण शृणोति प्राणा वा एते यद्द्विदेवत्याः (४) अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति वाच्येव वाचं दधात्या तृतीयसवनात्परि शेरे यज्ञस्य संतत्यै (५) ॥

(मनुष्यचरावुदपात्रमुपह्वयेत द्विदेवत्याः षट्चत्वारिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ षष्ठाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ।)

---

यज्ञस्य । शिरः । अच्छिद्यत । ते । देवाः । अश्विनौ । अब्रुवन् । भिषजौ । वै । स्थः । इदम् । यज्ञस्य । शिरः ।

प्रतीति । धत्तम् । इति । तौ । अब्रूताम् । वरम् ।
वृणावहै । ग्रहः । एव । नौ । अत्र । अपीति । गृह्यताम् ।
इति । ताभ्याम् । एतम् । आश्विनम् । अगृह्णन् । ततः ।
वै । तौ । यज्ञस्य । शिरः । प्रतीति । अधत्ताम् । यत् ।
आश्विनः । गृह्यते । यज्ञस्य । निष्कृत्या इति निः-
कृत्यै । तौ । देवाः । अब्रुवन् । अपूतौ । वै । इमौ ।
मनुष्यचराविति मनुष्य-चरौ ( १ ) । भिषजौ ।
इति । तस्मात् । ब्राह्मणेन । भेषजम् । न । कार्यम् ।
अपूतः । हि । एषः । अमेध्यः । यः । भिषक् । तौ ।
बहिष्पवमानेनेति बहिः-पवमानेन । पवयित्वा । ताभ्याम् ।
एतम् । आश्विनम् । अगृह्णन् । तस्मात् । बहिष्पवमान
इति बहिः-पवमाने । स्तुते । आश्विनः । गृह्यते ।
तस्मात् । एवम् । विदुषा । बहिष्पवमान इति बहिः-
पवमानः । उपसद्य इत्युप-सद्यः । पवित्रम् । वै ।
बहिष्पवमान इति बहिः-पवमानः । आत्मानम् । एव ।
पवयते । तयोः । त्रेधा । भैषज्यम् । वि । नीति । अदधुः ।
अग्नौ । तृतीयम् । अप्स्वित्यप्-सु । तृतीयम् ।
ब्राह्मणे । तृतीयम् । तस्मात् । उदपात्रमित्युद-पात्रम् ( २ ) ।
उपनिधायेत्युप-निधाय । ब्राह्मणम् । दक्षिणतः । निषा-
द्येति नि-साद्य । भेषजम् । कुर्यात् । यावत् । एव । भेष-

जम् । तेन॑ । क॒रोति । स॒म॒र्धु॑क॒मिति॑ सम्—अ॒र्धु॑कम् । अ॒स्य । कृ॒तम् । भ॒वति । ब्र॒ह्म॒वा॒दिन॒ इति॑ ब्र॒ह्म—वा॒दिनः॑ । व॒द॒न्ति । कस्मा॑त् । स॒त्यात् । एक॑पा॒त्रा इत्येक॑—पा॒त्राः । द्वि॒दे॒व॒त्या॑ इति॑ द्वि—दे॒व॒त्याः॑ । गृ॒ह्यन्ते॑ । द्वि॒पा॒त्रा इति॑ द्वि—पा॒त्राः॑ । हू॒यन्ते॑ । इति॑ । यत् । एक॑पा॒त्रा इत्येक॑—पा॒त्राः । गृ॒ह्यन्ते॑ । तस्मा॑त् । एकः॑ । अ॒न्त॒र॒तः । प्रा॒ण इति॑ प्र—अ॒नः । द्वि॒पा॒त्रा इति॑ द्वि—पा॒त्राः॑ । हू॒यन्ते॑ । तस्मा॑त् । द्वौद्वा॒विति॒ द्वौ—द्वौ । ब॒हि॒ष्टा॑त् । प्रा॒णा इति॑ प्र—अ॒नाः । प्रा॒णा इति॑ प्र—अ॒नाः । वै । ए॒ते । यत् । द्वि॒दे॒व॒त्या॑ इति॑ द्वि—दे॒व॒त्याः॑ । प॒शवः॑ । इडा॑ । यत् । इडा॑म् । पूर्वा॑म् । द्वि॒दे॒व॒त्ये॑भ्य॒ इति॑ द्वि—दे॒व॒त्ये॑भ्यः । उ॒प॒ह्व॒येते॒त्यु॑प—ह्वये॑त ( ३ ) । प॒शु॒भि॒रिति॑ प॒शु—भिः॑ । प्रा॒णानिति॑ प्र—अ॒नान् । अ॒न्तः । द॒धी॒त । प्र॒मा॒यु॑क॒ इति॑ प्र—मा॒यु॑कः । स्या॒त् । द्वि॒दे॒व॒त्या॑निति॑ द्वि—दे॒व॒त्या॑न् । भ॒क्ष॒यि॒त्वा । इडा॑म् । उपेति॑ । ह्व॒य॒ते । प्रा॒णानिति॑ प्र—अ॒नान् । ए॒व । आ॒त्मन् । धि॒त्वा । प॒शून् । उपेति॑ । ह्व॒य॒ते । वाक् । वै । ऐ॒न्द्र॒वा॒य॒व इत्यै॑न्द्र—वा॒य॒वः । चक्षुः॑ । मै॒त्रा॒व॒रु॒ण इति॑ मै॒त्रा—व॒रु॒णः । श्रोत्र॑म् । आ॒श्वि॒नः । पु॒रस्ता॑त् । ऐ॒न्द्र॒वा॒य॒वमित्यै॑न्द्र—वा॒य॒वम् । भ॒क्ष॒य॒ति । तस्मा॑त् । पु॒रस्ता॑त् । वा॒चा । व॒द॒ति । पु॒रस्ता॑त् । मै॒त्रा॒व॒रु॒णमिति॑ मै॒त्रा—व॒रु॒णम् ।

तस्मात् । पुरस्तात् । चक्षुषा । पश्यति । सर्वतः । परिहा-रमिति परि–हारम् । आश्विनम् । तस्मात् । सर्वतः । श्रोत्रेण । शृणोति । प्राणा इति प्र–अनाः । वै । एते । यत् । द्विदेवत्या इति द्वि–देवत्याः ( ४ ) । अरि-क्तानि । पात्राणि । सादयति । तस्मात् । अरिक्ताः । अन्तरतः । प्राणा इति प्र–अनाः । यतः । खलु । वै । यज्ञस्य । विततस्येति वि–ततस्य । न । क्रियते । तत् । अन्विति । यज्ञम् । रक्षांसि । अवेति । चरन्ति । यत् । अरिक्तानि । पात्राणि । सादयति । क्रियमाणम् । एव । तत् । यज्ञस्य । शये । रक्षसाम् । अनन्ववचारायेत्यनन्नु–अ-वचाराय । दक्षिणस्य । हविर्धानस्येति हविः–धानस्य । उत्तरस्यामित्युत्–तरस्याम् । वर्तन्याम् । सादयति । वाचि । एव । वाचम् । दधाति । एति । तृतीयसवनादिति तृतीय–सवनात् । परीति । शेरे । यज्ञस्य । संतत्या इति सं–तत्यै । ( ५ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसु-

राणां ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तोऽसुरास्तेऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना परा (१) अस्य भ्रातृव्यो भवति तौ देवा अपनुद्याऽऽत्मन इन्द्रायाजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि तेनैनौ सहाप नुदते स प्रथमः संकृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचरदसौ वा आदित्यः शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ निः (२) क्रामतस्तस्मात्प्राञ्चौ यन्तौ न पश्यन्ति प्रत्यञ्चावावृत्य जुहुतस्तस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वतः परि क्रामतो रक्षसामपहत्यै देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्र (३) अनुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ता-

भिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृ-व्यान्प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते शुक्रामन्थिनौ वा अनु प्रजाः प्र जायन्तेऽत्रीश्चाऽऽर्याश्च सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषा (४) सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीरा या अत्री-रेताः सुप्रजा या आर्या य एवं वेदात्र्यस्य प्रजा जायते नाऽऽर्या प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तद्वि-कङ्कतं प्राविशत्तद्विकङ्कते नारमत तद्यवं प्रावि-शत्तद्यवेऽरमत तद्यवस्य (५) यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षुः सं भरति ब्रह्मवादिनो वदन्ति कस्मात्सत्या-न्मन्थिपात्रꣳ सदो नाश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्छेत्तस्मान्ना-श्नुते (६)

(आत्मना परा निष्प्र शुक्रशोचिषा यवस्य सप्तत्रिꣳशच्च)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

बृहस्पतिः । देवानाम् । पुरोहित इति पुरः—हितः । आसीत् । शण्डामर्काविति शण्डा—मर्कौ । असुराणाम् । ब्रह्मण्वन्त इति ब्रह्मण्—वन्तः । देवाः । आसन् । ब्रह्मण्वन्त इति ब्रह्मण्—वन्तः । असुराः । ते । अन्यः । अन्यम् । न । अशक्नुवन् । अभिभवितुमित्यभि—भवितुम् । ते । देवाः । शण्डामर्काविति शण्डा—मर्कौ । उपेति । अमन्त्रयन्त । तौ । अब्रूताम् । वरम् । वृणावहै । ग्रहौ । एव । नौ । अत्र । अपीति । गृह्येताम् । इति । ताभ्याम् । एतौ । शुक्रामन्थिनाविति शुक्रा—मन्थिनौ । अगृह्णन् । ततः । देवाः । अभवन् । परेति । असुराः । यस्य । एवम् । विदुषः । शुक्रामन्थिनाविति शुक्रा—मन्थिनौ । गृह्येते इति । भवति । आत्मना । परेति ( १ ) । अस्य । भ्रातृव्यः । भवति । तौ । देवाः । अपनुद्येत्यप—नुद्य । आत्मने । इन्द्राय । अजुहवुः । अपनुत्तावित्यप—नुत्तौ । शण्डामर्काविति शण्डा—मर्कौ । सह । अमुना । इति । ब्रूयात् । यम् । द्विष्यात् । यम् । एव । द्वेष्टि । तेन । एनौ । सह । अपेति । नुदते । सः । प्रथमः । संकृतिरिति सं—कृतिः । विश्व-कर्मेति विश्व—कर्मा । इति । एव । एनौ । आत्मने ।

इन्द्राय । अजुहवुः । इन्द्रः । हि । एतानि ।
रूपाणि । करिक्रत् । अचरत् । असौ । वै । आदित्यः ।
शुक्रः । चन्द्रमाः । मन्थी । अपिगृह्येत्यपि—गृह्य । प्राञ्चौ ।
निरिति ( २ ) । कामतः । तस्मात् । प्राञ्चौ । यन्तौ ।
न । पश्यन्ति । प्रत्यञ्चौ । आवृत्येत्या—वृत्य । जुहुतः ।
तस्मात् । प्रत्यञ्चौ । यन्तौ । पश्यन्ति । चक्षुषी इति । वै ।
एते इति । यज्ञस्य । यत् । शुक्रामन्थिनाविति शुक्रा—
मन्थिनौ । नासिका । उत्तरवेदिरित्युत्तर—वेदिः । अभितः ।
परिक्रम्येति परि—क्रम्य । जुहुतः । तस्मात् । अभितः ।
नासिकाम् । चक्षुषी इति । तस्मात् । नासिकया । चक्षुषी
इति । विधृते इति वि—धृते । सर्वतः । परीति । क्रामतः ।
रक्षसाम् । अपहत्या इत्यप—हत्यै । देवाः । वै । याः ।
प्राचीः । आहुतीरित्या—हुतीः । अजुहवुः । ये । पुरस्तात् ।
असुराः । आसन् । तान् । ताभिः । प्रेति ( ३ ) । अनु-
दन्त । याः । प्रतीचीः । ये । पश्चात् । असुराः । आसन् ।
तान् । ताभिः । अपेति । अनुदन्त । प्राचीः । अन्याः ।
आहुतय इत्या—हुतयः । हूयन्ते । प्रत्यञ्चौ । शुक्रामन्थिना-
विति शुक्रा—मन्थिनौ । पश्चात् । च । एव । पुरस्तात् ।
च । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । तस्मात् ।
प्राचीः । प्रजा इति प्र—जाः । प्रेति । वीयन्ते । प्रतीचीः ।

जायन्ते । शुक्रामन्थिनाविति शुक्रा-मन्थिनौ । वै । अन्विति । प्रजा इति प्र-जाः । प्रेति । जायन्ते । अत्रीः । च । आर्याः । च । सुवीरा इति सु-वीराः । प्रजा इति प्र-जाः । प्रजनयन्निति प्र-जनयन् । परीति । इहि । शुक्रः । शुक्रशोचिषेति शुक्र-शोचिषा (४) । सुप्रजा इति सु-प्रजाः । प्रजा इति प्र-जाः । प्रजनयन्निति प्र-जनयन् । परीति । इहि । मन्थी । मन्थिशोचिषेति मन्थि-शोचिषा । इति । आह । एताः । वै । सुवीरा इति सु-वीराः । याः । अत्रीः । एताः । सुप्रजा इति सु-प्रजाः । याः । आर्याः । यः । एवम् । वेद । अत्री । अस्य । प्रजेति प्र-जा । जायते । न । आर्या । प्रजापतेरिति प्रजा-पतेः । अक्षि । अश्वयत् । तत् । परेति । अपतत् । तत् । विकङ्कतमिति वि-कङ्कतम् । प्रेति । अविशत् । तत् । विकङ्कत इति वि-कङ्कते । न । अरमत । तत् । यवम् । प्रेति । अविशत् । तत् । यवे । अरमत । तत् । यवस्य (५) । यवत्वमिति यव-त्वम् । यत् । वैकङ्कतम् । मन्थिपात्रमिति मन्थि-पात्रम् । भवति । सक्तुभिरिति सक्तु-भिः । श्रीणाति । प्रजापतेरिति प्रजा-पतेः । एव । तत् । चक्षुः । समिति । भरति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति ।

कस्मात् । सत्यात् । मन्थिपात्रमिति मन्थि–पात्रम् । सदः । न । अश्नुते । इति । आर्तपात्रमित्यार्त–पात्रम् । हि । इति । ब्रूयात् । यत् । अब्रवीत । अन्धः । अध्वर्युः । स्यात् । आर्तिम् । एति । ऋच्छेत् । तस्मात् । न । अश्नुते (६) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ षष्ठाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ।)

---

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान्ग्रहानपश्यन्तानगृह्णत ततो वै तेऽग्रं पर्यायन्यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानां पर्येति रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयाद्भ्रातृव्यस्यैव रुक्त्वाऽग्रꣳ समानानां पर्येति ये देवा दिव्येकादश स्थेत्याह (१) एतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत साऽमन्यत वागन्त-

यन्ति वै मेति साऽऽग्रयणं प्रत्याऽगच्छत्तदाग्रयण-
स्याऽऽग्रयणत्वम् ( २ ) तस्मादाग्रयणे वाग्वि
सृज्यते यत्तूष्णीं पूर्वे ग्रहा गृह्यन्ते यथा त्सारीयति
म आख इयंति नाप रात्स्यामीत्युपावसृजत्येवमेव
तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं
वि सृजते त्रिर्हिं करोत्युद्गातॄनेव तद्वृणीते प्रजापतिर्वा
एष यदाग्रयणो यदाग्रयणं गृहीत्वा हिं करोति प्रजाप-
तिरेव ( ३ ) तत्प्रजा अभि जिघ्रति तस्माद्वत्सं जातं
गौरभि जिघ्रत्यात्मा वा एष यज्ञस्य यदाग्रयणः
सवनेसवनेऽभि गृह्णात्यात्मन्नेव यज्ञꣳ सं तनोत्युपरि-
ष्टादा नयति रेत एव तद्दधात्यधस्तादुप गृह्णाति प्र
जनयत्येव तद्ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्गा-
यत्री कनिष्ठा छन्दसाꣳ सती सर्वाणि सवनानि
वहतीत्येष वै गायत्रियै वत्सो यदाग्रयणस्तमेव तद-
भिनिवर्तꣳ सर्वाणि सवनानि वहति तस्माद्वत्समपा-
कृतं गौरभि नि वर्तते ( ४ ) ॥

( आहाऽऽग्रयणत्वं प्रजापतिरेवेति विꣳशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

———

( आग्रयणग्रहकथनम् )

यज्ञेन ता उपयद्भिर्देवा वै यज्ञमाग्रीध्रे ब्रह्मवादिनः स त्वै देवस्य ग्रावाणं प्राणो वा उपांशुग्रा देवा वा उपांशौ वाग्वै मित्रं यज्ञस्य शिरो बृहस्पतिर्देवा वा आग्रयणाग्रानेकादश ॥ ११ ॥

यज्ञेन लोके पशुमान्त्स्यात्सवनं माध्यंदिनं वाग्वा अरिक्तानि तत्प्रजा एकपञ्चाशत् ॥ ५१ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ षष्ठाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । आग्रयणाग्रानित्याग्रयण–अग्रान् । ग्रहान् । अपश्यन् । तान् । अगृह्णत । ततः । वै । ते । अग्रम् । परीति । आयन् । यस्य । एवम् । विदुषः । आग्रयणाग्रा इत्याग्रयण–अग्राः । ग्रहाः । गृह्यन्ते । अग्रम् । एव । समानानाम् । परीति । एति । रुग्णवत्येति रुग्ण–वत्या । ऋचा । भ्रातृव्यवत इति भ्रातृव्य–वतः । गृह्णीयात् । भ्रातृव्यस्य । एव । रुक्त्वा । अग्रम् । समानानाम् । परीति । एति । ये । देवाः । दिवि । एकादश । स्थ । इति । आह ( १ ) । एतावतीः । वै । देवताः ।

ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णाति । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः । इति । आह । वैश्वदेव इति वैश्व–देवः । हि । एषः । देवतया । वाक् । वै । देवेभ्यः । अपेति । अक्रामत् । यज्ञाय । अतिष्ठमाना । ते । देवाः । वाचि । अपक्रान्तायामित्यप–क्रान्तायाम् । तूष्णीम् । ग्रहान् । अगृह्णत । सा । अमन्यत । वाक् । अन्तः । यन्ति । वै । मा । इति । सा । आग्रयणम् । प्रति । एति । अगच्छत् । तत् । आग्रयणस्य । आग्रयणत्वमित्याग्रयण–त्वम् (२)। तस्मात् । आग्रयणे । वाक् । वीति । सृज्यते । यत् । तूष्णीम् । पूर्वे । ग्रहाः । गृह्यन्ते । यथा । त्सारी । ईर्यति । मे । आखः । ईर्यति । न । अपेति । रात्स्यामि । इति । उपावसृजतीत्युप–अवसृजति । एवम् । एव । तत् । अध्वर्युः । आग्रयणम् । गृहीत्वा । यज्ञम् । आरभ्येत्या–रभ्य । वाचम् । वीति । सृजते । त्रिः । हिम् । करोति । उद्गातॄनित्युत्–गातॄन् । एव । तत् । वृणीते । प्रजापतिरिति प्रजा–पतिः । वै । एषः । यत् । आग्रयणः । यत् । आग्रयणम् । गृहीत्वा । हिंकरोतीति हिं–करोति । प्रजापतिरिति प्रजा–पतिः । एव (३)। तत् । प्रजा इति प्र–जाः । अभीति । जिघ्रति । तस्मात् ।

वत्सम् । जातम् । गौः । अभीति । जिघ्रति । आत्मा । वै । एषः । यज्ञस्य । यत् । आग्रयणः । सवनेसवन इति सवने-सवने । अभीति । गृह्णाति । आत्मन् । एव । यज्ञम् । समिति । तनोति । उपरिष्टात् । एति । नयति । रेतः । एव । तत् । दधाति । अधस्तात् । उपेति । गृह्णाति । प्रेति । जनयति । एव । तत् । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । कस्मात् । सत्यात् । गायत्री । कनिष्ठा । छन्दसाम् । सती । सर्वाणि । सवनानि । वहति । इति । एषः । वै । गायत्रियै । वत्सः । यत् । आग्रयणः । तम् । एव । तत् । अभिनिवर्तमित्यभि-निवर्तम् । सर्वाणि । सवनानि । वहति । तस्मात् । वत्सम् । अपाकृतमित्यप-आकृतम् । गौः । अभि । नीति । वर्तते (४) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ षष्ठाष्टके पञ्चमः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः ।

हरिः ॐ ।

इन्द्रो वृत्राय वज्रमुदयच्छत्स वृत्रो वज्रादुद्यता-
दबिभेत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि
वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यं प्रायच्छ-
त्तस्मै द्वितीयमुदयच्छत्सोऽब्रवीन्मा मे प्र हारस्ति वा
इदं मयि वीर्यं तत्ते प्र दास्यामीति ( १ ) तस्मा
उक्थ्यमेव प्रायच्छत्तस्मै तृतीयमुदयच्छत्तं विष्णुर-
न्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा
इदं मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्य-
मेव प्रायच्छत्तं निर्मायं भूतमहन्यज्ञो हि तस्य
मायाऽऽसीद्यदुक्थ्यो गृह्यत इन्द्रियमेव ( २ )
तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्त इन्द्राय त्वा
बृहद्वते वयस्वत इत्याहेन्द्राय हि स तं प्रायच्छत्तस्मै
त्वा विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति
तस्माद्विष्णुमन्वाभजति त्रिर्निर्गृह्णाति त्रिर्हि स तं
तस्मै प्रायच्छदेष ते योनिः पुनर्हविरसीत्याह पुनः-

पुनः ( ३ ) ह्यस्मान्निर्गृह्णाति चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यस्तस्मादुक्थ्यꣳ हुतꣳ सोमा अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकं यन्तं बहवोऽनु यन्ति तस्मादेको बहूनां भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्यन्तराऽऽहवनीयं च हविर्धानं च तिष्ठन्नव नयेत् ( ४ ) आत्मानमेव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनार्पयति यदि कामयेत सदस्यान्यज्ञयशसेनार्पयेयमिति सद आलभ्याव नयेत्सदस्यानेव यज्ञयशसेनार्पयति ( ५ ) ॥

इतीन्द्रियमेव पुनःपुनर्नयेत्त्रयस्त्रिꣳशच्च ]

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

इन्द्रः । वृत्राय । वज्रम् । उदिति । अयच्छत् । सः । वृत्रः । वज्रात् । उद्यतादित्युत्—यतात् ।

अबिभेत् । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तस्मै । उक्थ्यम् । प्रेति । अयच्छत् । तस्मै । द्वितीयम् । उदिति । अयच्छत् । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति (१)। तस्मै । उक्थ्यम् । एव । प्रेति । अयच्छत् । तस्मै । तृतीयम् । उदिति । अयच्छत् । तम् । विष्णुः । अन्विति । अतिष्ठत । जहि । इति । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तस्मै । उक्थ्यम् । एव । प्रेति । अयच्छत् । तम् । निर्मायमिति निः—मायम् । भूतम् । अहन् । यज्ञः । हि । तस्य । माया । आसीत् । यत् । उक्थ्यः । गृह्यते । इन्द्रियम् । एव । ( २ ) । तत् । वीर्यम् । यजमानः । भ्रातृव्यस्य । वृङ्क्ते । इन्द्राय । त्वा । बृहद्वत इति बृहत्—वते । वयस्वते । इति । आह । इन्द्राय । हि । सः । तम् । प्रेति । अयच्छत् । तस्मै । त्वा । विष्णवे । त्वा । इति । आह । यत् । एव । विष्णुः । अन्वतिष्ठतेत्यनु—अतिष्ठत । जहि । इति । तस्मात् । विष्णुम् । अन्वाभजतीत्यनु—आभजति । त्रिः । निरिति ।

(उक्थ्यग्रहकथनम्)

गृह्णाति। त्रिः। हि। सः। तम्। तस्मै। प्रेति। अय-
च्छत्। एषः। ते। योनिः। पुनर्हविरिति पुनः-हविः।
असि। इति। आह। पुनःपुनरिति पुनः-पुनः। (३)।
हि। अस्मात्। निर्गृह्णातीति निः-गृह्णाति। चक्षुः। वै।
एतत्। यज्ञस्य। यत्। उक्थ्यः। तस्मात्। उक्थ्यम्।
हुतम्। सोमाः। अन्वायन्तीत्यनु-आयन्ति। तस्मात्।
आत्मा। चक्षुः। अन्विति। एति। तस्मात्। एकम्।
यन्तम्। बहवः। अन्विति। यन्ति। तस्मात्। एकः।
बहूनाम्। भद्रः। भवति। तस्मात्। एकः। बह्वीः।
जायाः। विन्दते। यदि। कामयेत। अध्वर्युः। आत्मानम्।
यज्ञयशसेनेति यज्ञ-यशसेन। अर्पयेयम्। इति। अन्तरा।
आहवनीयमित्या-हवनीयम्। च। हविर्धानमिति हविः-
धानम्। च। तिष्ठन्। अवेति। नयेत् (४)। आत्मानम्।
एव। यज्ञयशसेनेति यज्ञ-यशसेन। अर्पयति। यदि।
कामयेत। यजमानम्। यज्ञयशसेनेति यज्ञ-यशसेन।
अर्पयेयम्। इति। अन्तरा। सदोहविर्धाने इति सदः-हवि-
र्धाने। तिष्ठन्। अवेति। नयेत्। यजमानम्। एव। यज्ञ-
यशसेनेति यज्ञ-यशसेन। अर्पयति। यदि। कामयेत।
सदस्यान्। यज्ञयशसेनेति यज्ञ-यशसेन। अर्पयेयम्।
इति। सदः। आलभ्येत्या-लभ्य। अवेति। नयेत्। सद-

स्यान् । एव । यज्ञयशसेनेति यज्ञ—यशसेन । अर्प-
यति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः )

---

आयुर्वा एतद्यज्ञस्य यद्ध्रुव उत्तमो ग्रहाणां गृह्यते
तस्मादायुः प्राणानामुत्तमं मूर्धानं दिवो अरतिं
पृथिव्या इत्याह मूर्धानमेवैनꣳ समानानां करोति
वैश्वानरमृताय जातमग्निमित्याह वैश्वानरꣳ हि देवत-
याऽऽयुरुभयतोवैश्वानरो गृह्यते तस्मादुभयतः प्राणा
अधस्ताच्चोपरिष्टाच्चार्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी
ध्रुवस्तस्मात् ( १ ) अर्ध्यवाङ्प्राणोऽन्येषां प्राणा-
नामुपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवस्तस्माद-
स्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति माꣳसेनान्या
असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन्तां देवा
ध्रुवेणादृꣳहन्तद्ध्रुवस्य ध्रुवत्वं यद्ध्रुव उत्तरतः साद्यते
धृत्या आयुर्वा एतद्यज्ञस्य यद्ध्रुव आत्मा होता यद्धो-
तृचमसे ध्रुवमवनयत्यात्मन्नेव यज्ञस्य ( २ ) आयु-

र्दधाति पुरस्तादुक्थस्यावनीय इत्याहुः पुरस्ताद्ध्या-
युंषो भुङ्क्ते मध्यतोऽवनीय इत्याहुर्मध्यमेन ह्यायुंषो
भुङ्क्त उत्तरार्धेऽवनीय इत्याहुरुत्तमेन ह्यायुंषो भुङ्क्ते
वैश्वदेव्यामृचि शस्यमानायामवं नयति वैश्वदेव्यो
वै प्रजाः प्रजास्वेवाऽऽयुर्दधाति ( ३ ) ॥

( अर्धी ध्रुवैस्तस्मादेव यज्ञस्यैकान्नचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

आयुः । वै । एतत् । यज्ञस्यं । यत् । ध्रुवः । उत्तम
इत्युत्-तमः । ग्रहाणाम् । गृह्यते । तस्मात् । आयुः ।
प्राणानामिति प्र-अनानाम् । उत्तममित्युत्-तमम् ।
मूर्धानम् । दिवः । अरतिम् । पृथिव्याः । इति । आह ।
मूर्धानम् । एव । एनम् । समानानाम् । करोति ।
वैश्वानरम् । ऋताय । जातम् । अग्निम् । इति । आह ।
वैश्वानरम् । हि । देवतया । आयुः । उभयतोवैश्वानर
इत्युभयतः-वैश्वानरः । गृह्यते । तस्मात् । उभयतः ।
प्राणा इति प्र-अनाः । अधस्तात् । च । उपरिष्टात् । च ।

अर्धिनः । अन्ये । ग्रहाः । गृह्यन्ते । अर्धी । ध्रुवः । तस्मात् (१) । अर्धी । अवाङ् । प्राण इति प्र-अनः । अन्येषाम् । प्राणानामिति प्र-अनानाम् । उपोप्त इत्युप-उप्ते । अन्ये । ग्रहाः । साद्यन्ते । अनुपोप्त इत्यनुप-उप्ते । ध्रुवः । तस्मात् । अस्थ्ना । अन्याः । प्रजा इति प्र-जाः । प्रतितिष्ठन्तीति प्रति-तिष्ठन्ति । माꣳसेन । अन्याः । असुराः । वै । उत्तरत इत्युत्-तरतः । पृथिवीम् । पर्याचिकीर्षन्निति परि-आचिकीर्षन् । ताम् । देवाः । ध्रुवेण । अदृꣳहन् । तत् । ध्रुवस्य । ध्रुवत्वमिति ध्रुव-त्वम् । यत् । ध्रुवः । उत्तरत इत्युत्-तरतः । साद्यते । धृत्यै । आयुः । वै । एतत् । यज्ञस्य । यत् । ध्रुवः । आत्मा । होता । यत् । होतृचमस इति होतृ-चमसे । ध्रुवम् । अवनयतीत्यव-नयति । आत्मन् । एव । यज्ञस्य (२) । आयुः । दधाति । पुरस्तात् । उक्थस्य । अवनीय इत्यव-नीयः । इति । आहुः । पुरस्तात् । हि । आयुषः । भुङ्क्ते । मध्यतः । अवनीय इत्यव-नीयः । इति । आहुः । मध्यमेन । हि । आयुषः । भुङ्क्ते । उत्तरार्ध इत्युत्तर-अर्धे । अवनीय इत्यव-नीयः । इति । आहुः । उत्तमेनेत्युत्-तमेन । हि । आयुषः । भुङ्क्ते । वैश्वदेव्यामिति वैश्व-देव्याम् । ऋचि । शस्यमानायाम् ।

अवेति । नयति । वैश्वदेव्य इति वैश्व–देव्यः । वै । प्रजा इति प्र–जाः । प्रजास्विति प्र–जासु । एव । आयुः । दधाति (३) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ षष्ठाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ।)

---

यज्ञेन वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते संवत्सरेण योप यित्वा सुवर्गं लोकमायन्तमृषय ऋतुग्रहैरेवानु प्राजानन्यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै द्वादश गृह्यन्ते द्वादश मासाः संवत्सरः संवत्सरस्य प्रज्ञात्यै सह प्रथमौ गृह्येते सहोत्तमौ तस्माद्द्वौद्वावृतू उभयतोमुखमृतुपात्रं भवति कः (१) हि तद्वेद यत ऋतूनां मुखमृतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभि- रिति चतुश्चतुष्पद एव पशून्प्रीणाति द्विः पुनर्ऋतु- नाऽऽह द्विपद एव प्रीणात्यृतुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुस्तस्माच्चतुष्पादः पशव ऋतूनुप

जीवन्ति द्विः (२) पुनर्ऋतुनाऽऽह तस्माद्विपादश्च-
तुष्पदः पशूनुप जीवन्त्यृतुना प्रेष्येति षट्कृत्व आह-
र्तुभिरिति चतुर्द्विः पुनर्ऋतुनाऽऽहाऽऽक्रमणमेव तत्सेतुं
यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै नान्योऽ-
न्यमनु प्रपद्येत यदन्योऽन्यमनुप्रपद्येतर्तुर्ऋतुमनु प्र
पद्येतर्तवो मोहुकाः स्युः (३) प्रसिद्धमेवाध्वर्यु-
र्दक्षिणेन प्र पद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण
तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेणो-
पयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्याहा-
स्ति त्रयोदशो मास इत्याहुस्तमेव तत्प्रीणाति (४)॥

( को जीवन्ति द्विः स्युश्चतुस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

यज्ञेन । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् ।
आयन् । ते । अमन्यन्त । मनुष्याः । नः । अन्वाभविष्य-
न्तीत्यनु—आभविष्यन्ति । इति । ते । संवत्सरेणेति सं—वत्स-
रेण । योपयित्वा । सुवर्गमिति सुवः—गम् । लोकम् ।
आयन् । तम् । ऋषयः । ऋतुग्रहैरित्यृतु—ग्रहैः । एव ।

( ऋतुग्रहकथनम् )

अनु । प्रेति । अजानन् । यत् । ऋतुग्रहा इत्यृतु-ग्रहाः । गृह्यन्ते । सुवर्गस्येति सुवः-गस्य । लोकस्य । प्रज्ञात्या इति प्र-ज्ञात्यै । द्वादश । गृह्यन्ते । द्वादश । मासाः । संवत्सर इति सं-वत्सरः । संवत्सरस्येति सं-वत्सरस्य । प्रज्ञात्या इति प्र-ज्ञात्यै । सह । प्रथमौ । गृह्येते इति । सह । उत्तमावित्युत्-तमौ । तस्मात् । द्वौद्वाविति द्वौ-द्वौ । ऋतू इति । उभयतोमुखमित्युभयतः-मुखम् । ऋतुपात्रमित्यृतु-पात्रम् । भवति । कः ( १ ) । हि । तत् । वेद । यतः । ऋतूनाम् । मुखम् । ऋतुना । प्रेति । इष्य । इति । षट् । ऋत्वः । आह । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । ऋतुभिरित्यृतु-भिः । इति । चतुः । चतुष्पद इति चतुः-पदः । एव । पशून् । प्रीणाति । द्विः । पुनः । ऋतुना । आह । द्विपद इति द्वि-पदः । एव । प्रीणाति । ऋतुना । प्रेति । इष्य । इति । षट् । ऋत्वः । आह । ऋतुभिरित्यृतु-भिः । इति । चतुः । तस्मात् । चतुष्पाद इति चतुः-पादः । पशवः । ऋतून् । उपेति । जीवन्ति । द्विः ( २ ) । पुनः । ऋतुना । आह । तस्मात् । द्विपाद इति द्वि-पादः । चतुष्पद इति चतु-पदः । पशून् । उपेति । जीवन्ति । ऋतुना । प्रेति । इष्य । इति । षट् । ऋत्वः । आह । ऋतुभिरित्यृतु-भिः । इति । चतुः । द्विः ।

पुनः । ऋतुना । आह । आक्रमणमित्या—क्रमणम् । एव । तत् । सेतुम् । यजमानः । कुरुते । सुवर्गस्येति सुवः—गस्य । लोकस्य । समष्ट्या इति सम्—अष्ट्यै । न । अन्यः । अन्यम् । अनु । प्रेति । पद्येत । यत् । अन्यः । अन्यम् । अनुप्रपद्येतेत्यनु—प्रपद्येत । ऋतुः । ऋतुम् । अनु । प्रेति । पद्येत । ऋतवः । मोहुकाः । स्युः ( ३ ) । प्रसिद्धमिति प्र—सिद्धम् । एव । अध्वर्युः । दक्षिणेन । प्रेति । पद्यते । प्रसिद्धमिति प्र—सिद्धम् । प्रतिप्रस्थातेति प्रति—प्रस्थाता । उत्तरेणेत्युत्—तरेण । तस्मात् । आदित्यः । षट् । मासः । दक्षिणेन । एति । षट् । उत्तरेणेत्युत्—तरेण । उपयामगृहीत इत्युपयाम—गृहीतः । असि । सꣳसर्प इति सं—सर्पः । असि । अꣳहस्पत्यायेत्यꣳहः—पत्याय । त्वा । इति । आह । अस्ति । त्रयोदश इति त्रयः—दशः । मासः । इति । आहुः । तम् । एव । तत् । प्रीणाति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा ज्योतिरिन्द्राग्नी यदैन्द्राग्नमृतुपात्रेण गृह्णाति

ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्या ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो गृह्यत ओज एवाव रुन्धे वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः ( १ ) सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति ( २ )॥

( तस्मादसावादित्यस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

सुवर्गायेति सुवः—गाय । वै । एते । लोकाय । गृह्यन्ते । यत् । ऋतुग्रहा इत्यृतु—ग्रहाः । ज्योतिः । इन्द्राग्नी इतीन्द्र—अग्नी । यत् । ऐन्द्राग्नमित्यैन्द्र—अग्नम् । ऋतुपात्रेणेत्यृतु—पात्रेण । गृह्णाति । ज्योतिः । एव । अस्मै । उपरिष्टात् । दधाति । सुवर्गस्येति सुवः—गस्य । लोकस्य ।

मभूयो वृत्रमवधीदिति तम्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ हत्वाऽन्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति यजमान एव तेजो दधाति ( ३ ) ॥

( प्रथमेनागृह्णीत देवतास्वष्टाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

इन्द्रः । मरुद्भिरिति मरुत्–भिः । सांविद्येनेति सां–विद्येन । माध्यंदिने । सवने । वृत्रम् । अहन् । यत् । माध्यंदिने । सवने । मरुत्वतीयाः । गृह्यन्ते । वार्त्रघ्ना इति वार्त्र–घ्नाः । एव । ते । यजमानस्य । गृह्यन्ते । तस्य । वृत्रम् । जघ्नुषः । ऋतवः । अमुह्यन् । सः । ऋतुपात्रेणेत्यृतु–पात्रेण । मरुत्वतीयान् । अगृह्णात् । ततः । वै । सः । ऋतून् । प्रेति । अजानात् । यत् । ऋतुपात्रेणेत्यृतु–पात्रेण । मरुत्वतीयाः । गृह्यन्ते । ऋतूनाम् । प्रज्ञात्या इति

प्र-ज्ञात्यै । वज्रम् । वै । एतम् । यजमानः । भ्रातृव्याय । प्रेति । हरति । यत् । मरुत्वतीयाः । उदिति । एव । प्रथमेन ( १ ) । यच्छाति । प्रेति । हरति । द्वितीयेन । स्तृणुते । तृतीयेन । आयुधम् । वै । एतत् । यजमानः । समिति । कुरुते । यत् । मरुत्वतीयाः । धनुः । एव । प्रथमः । ज्या । द्वितीयः । इषुः । तृतीयः । प्रतीति । एव । प्रथमेन । धत्ते । वीति । सृजति । द्वितीयेन । विध्यति । तृतीयेन । इन्द्रः । वृत्रम् । हत्वा । पराम् । परावतमिति परा-वतम् । अगच्छत् । अपेति । अराधम् । इति । मन्यमानः । सः । हरितः । अभवत् । सः । एतान् । मरुत्वतीयान् । आत्मस्परणानित्यात्म-स्परणान् । अपश्यत् । तान् । अगृह्णीत ( २ ) । प्राणमिति प्र-अनम् । एव । प्रथमेन । अस्पृणुत । अपानमित्यप-अनम् । द्वितीयेन । आत्मानम् । तृतीयेन । आत्मस्परणा इत्यात्म-स्परणाः । वै । एते । यजमानस्य । गृह्यन्ते । यत् । मरुत्वतीयाः । प्राणमिति प्र-अनम् । एव । प्रथमेन । स्पृणुते । अपानमित्यप-अनम् । द्वितीयेन । आत्मानम् । तृतीयेन । इन्द्रः । वृत्रम् । अहन् । तम् । देवाः । अब्रुवन् । महान् । वै । अयम् । अभूत् । यः । वृत्रम् । अवधीत् । इति । तत् । महेन्द्रस्येति महा-इन्द्रस्य । महेन्द्रत्वमिति

महेन्द्र—त्वम् । सः । एतम् । माहेन्द्रमिति माहा—इन्द्रम् । उद्धारमित्युत्—हारम् । उदिति । अहरत । वृत्रम् । हत्वा । अन्यासु । देवतासु । अधीति । यत् । माहेन्द्र इति माहा—इन्द्रः । गृह्यते । उद्धारमित्युत्—हारम् । एव । तम् । यजमानः । उदिति । हरते । अन्यासु । प्रजास्विति प्र—जासु । अधीति । शुक्रपात्रेणेति शुक्र—पात्रेण । गृह्णाति । यजमानदेवत्य इति यजमान—देवत्यः । वै । माहेन्द्र इति माहा—इन्द्रः । तेजः । शुक्रः । यत् । माहेन्द्रमिति माहा—इन्द्रम् । शुक्रपात्रेणेति शुक्र—पात्रेण । गृह्णाति । यजमाने । एव । तेजः । दधाति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददुस्तत्प्राश्नात्सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त सा द्वितीयमपचत्साऽमन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाꣳसो जनिष्यन्त इति साऽग्रे प्राश्नात्सा रेतोऽधत्त तस्यै व्यृद्धमाण्डमजायत साऽऽदित्येभ्य

एव (१) तृतीयमपचन्द्भोगाय म इदꣳ श्रान्तमस्त्विति तेऽब्रुवन्वरं वृणामहै योऽतो जायाता अस्माकꣳ स एकोऽसद्यो॑ऽस्य प्रजायामृध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्योऽजायत तस्य वा इयं प्रजा यन्मनुष्यास्तास्वेक एवर्धो यो यजते स देवानां भोगाय भवति देवा वै यज्ञात् (२) रुद्रमन्तरायन्त्स आदित्यानन्वाक्रमत ते द्विदेवत्यान्प्रापद्यन्त तान्न प्रति प्रायच्छन्तस्मादपि वध्यं प्रपन्नं न प्रति प्र यच्छन्ति तस्माद्द्विदेवत्येभ्य आदित्यो निर्गृह्यते यदुच्छेषणादजायन्त तस्मादुच्छेषणाद्गृह्यते तिसृभिर्ऋग्भिर्गृह्णाति माता पिता पुत्रस्तदेव तन्मिथुनमुल्बं गर्भो जरायु तदेव तत् (३) मिथुनं पशवो वा एते यदादित्य ऊर्ग्दधि दध्ना मध्यतः श्रीणात्यूर्जमेव पशूनां मध्यतो दधाति शृतातङ्क्येन मेध्यत्वाय तस्मादामा पक्वं दुहे पशवो वा एते यदादित्यः परिश्रित्य गृह्णाति प्रतिरुध्यैवास्मै पशून्गृह्णाति पशवो वा एते यदादित्य एष रुद्रो यदग्निः परिश्रित्य गृह्णाति रुद्रादेव पशूनन्तर्दधाति (४) एष वै विवस्वानादित्यो यदुपाꣳशुसवनः स एतमेव सोमपीथं

परि शय आ तृतीयसवनाद्विवस्व आदित्यैष ते सोमपीथ इत्याह विवस्वन्तमेवाऽऽदित्यꣳ सोमपीथेन समर्धयति या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयाद्वृष्टिमेवाव रुन्धे यदि ताजक्प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुको न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुरस्य प्रमायुकꣳ स्या-त्तस्मान्नान्वीक्ष्यः ( ५ ) ॥

( एव यज्ञाज्जरायु तदेव तद्वन्तर्दधाति न सप्तविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

अदितिः । पुत्रकामेति पुत्र–कामा । साध्येभ्यः । देवेभ्यः । ब्रह्मौदनमिति ब्रह्म--ओदनम् । अपचत् । तस्यै । उच्छेषणमित्युत्–शेषणम् । अददुः । तत् । प्रेति । आश्नात् । सा । रेतः । अधत्त । तस्यै । चत्वारः ।

आदित्याः । अजायन्त । सा । द्वितीयम् । अपचत् ।
सा । अमन्यत । उच्छेषणादित्युत्–शेषणात् । मे ।
इमे । अज्ञत । यत् । अग्रे । प्राशिष्यामीति प्र–
अशिष्यामि । इतः । मे । वसीयाꣳसः । जनिष्यन्ते ।
इति । सा । अग्रे । प्रेति । आश्नात् । सा । रेतः ।
अधत्त । तस्यै । व्यृद्धमिति वि–ऋद्धम् । आण्डम् ।
अजायत । सा । आदित्येभ्यः । एव (१) । तृतीयम् ।
अपचत् । भोगाय । मे । इदम् । श्रान्तम् । अस्तु । इति ।
ते । अब्रुवन् । वरम् । वृणामहै । यः । अतः । जायते ।
अस्माकम् । सः । एकः । असत् । यः । अस्य ।
प्रजायामिति प्र–जायाम् । ऋध्यते । अस्माकम् ।
भोगाय । भवात् । इति । ततः । विवस्वान् । आदित्यः ।
अजायत । तस्य । वै । इयम् । प्रजेति प्र–जा । यत् ।
मनुष्याः । तासु । एकः । एव । ऋद्धः । यः । यजते ।
सः । देवानाम् । भोगाय । भवति । देवाः । वै ।
यज्ञात् (२) । रुद्रम् । अन्तः । आयन् । सः ।
आदित्यान् । अन्वाक्रमतेत्यनु–आक्रमत । ते । द्विदेव-
त्यानिति द्वि–देवत्यान् । प्रेति । अपद्यन्त । तान् । न ।
प्रति । प्रेति । अयच्छन् । तस्मात् । अपीति । वध्यम् ।
प्रपन्नमिति प्र–पन्नम् । न । प्रति । प्रेति । यच्छन्ति ।

तस्मात् । द्विदेवत्येभ्य इति द्वि–देवत्येभ्यः । आदित्यः । निरिति । गृह्यते । यत् । उच्छेषणादित्युत्–शेषणात् । अजायन्त । तस्मात् । उच्छेषणादित्युत्–शेषणात् । गृह्यते । तिसृभिरिति तिसृ–भिः । ऋग्भिरित्यृक्–भिः । गृह्णाति । माता । पिता । पुत्रः । तत् । एव । तत् । मिथुनम् । उल्बम् । गर्भः । जरायु । तत् । एव । तत् (३) । मिथुनम् । पशवः । वै । एते । यत् । आदित्यः । ऊर्क् । दधि । दध्ना । मध्यतः । श्रीणाति । ऊर्जम् । एव । पशूनाम् । मध्यतः । दधाति । शृतातङ्क्येनेति शृत–आतङ्क्येन । मेध्यत्वायेति मेध्य–त्वाय । तस्मात् । आमा । पक्वम् । दुहे । पशवः । वै । एते । यत् । आदित्यः । परिश्रित्येति परि–श्रित्य । गृह्णाति । प्रतिरुध्येति प्रति–रुध्य । एव । अस्मै । पशून् । गृह्णाति । पशवः । वै । एते । यत् । आदित्यः । एषः । रुद्रः । यत् । अग्निः । परिश्रित्येति परि–श्रित्य । गृह्णाति । रुद्रात् । एव । पशून् । अन्तः । दधाति (४) । एषः । वै । विवस्वान् । आदित्यः । यत् । उपांशुसवन इत्युपांशु–सवनः । सः । एतम् । एव । सोमपीथमिति सोम–पीथम् । परीति । शये । एति । तृतीयसवनादिति तृतीय–सवनात् । विवस्वः । आदित्य । एषः । ते । सोम-

पीथ इति सोम–पीथः । इति । आह । विवस्वन्तम् । एव । आदित्यम् । सोमपीथेनेति सोम–पीथेन । समिति । अर्धयति । या । दिव्या । वृष्टिः । तया । त्वा । श्रीणामि । इति । वृष्टिकामस्येति वृष्टि–कामस्य । श्रीणीयात् । वृष्टिम् । एव । अवेति । रुन्धे । यदि । ताजक् । प्रस्कन्देदिति प्र–स्कन्देत् । वर्षुकः । पर्जन्यः । स्यात् । यदि । चिरम् । अवर्षुकः । न । सादयति । असंन्नात् । हि । प्रजा इति प्र–जाः । प्रजायन्त इति प्र–जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु–वषट्कुर्यात् । रुद्रम् । प्रजा इति प्र–जाः । अन्ववसृजेदित्यनु–अवसृजेत् । न । हुत्वा । अन्विति । ईक्षेत । यत् । अन्वीक्षेतेत्यनु–ईक्षेत । चक्षुः । अस्य । प्रमायुकमिति प्र–मायुकम् । स्यात् । तस्मात् । न । अन्वीक्ष्य इत्यनु–ईक्ष्यः (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(अथ षष्ठाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ।)

---

अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति प्रजापतिर्वा एष यदाग्रयणः प्रजानां प्रजननाय न

सादयत्यसंन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्क-
रोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेदेष वै गा-
यत्रो देवानां यत्संवितैष गायत्रियै लोके गृह्यते
यदाग्रयणो यदन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृ-
ह्णाति स्वादेवैनं योनेर्निर्गृह्णाति विश्वे ( १ ) देवा-
स्तृतीयꣳ सवनं नोदयच्छन्ते सवितारं प्रातःसवन-
भागꣳ सन्तं तृतीयसवनमभि पर्यणयन्ततो वै ते
तृतीयꣳ सवनमुदयच्छन्यत्तृतीयसवने सावित्रो
गृह्यते तृतीयस्य सवनस्योद्यत्यै सवितृपात्रेण वैश्वदेवं
कलशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः
सविता प्रसवानामीशे यत्सवितृपात्रेण वैश्वदेवं कल-
शाद्गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र ( २ )
जनयति सोमे सोममभि गृह्णाति रेत एव तद्दधाति
सुशर्मासि सुप्रतिष्ठान इत्याह सोमे हि सोममभि-
गृह्णाति प्रतिष्ठित्या एतस्मिन्वा अपि ग्रहे मनुष्ये-
भ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्मासि सुप्रति-
ष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह
देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन
करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णा-

(सावित्रवैश्वदेवग्रहकथनम्)

त्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः (३)॥

(विश्वे प्र पितृभ्यं एवैतेनं करोत्येकान्नविंशतिश्चं।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ षष्ठाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः।)

---

अन्तर्यामपात्रेणेत्यन्तर्याम–पात्रेणं। सावित्रम्। आग्रयणात्। गृह्णाति। प्रजापतिरिति प्रजा–पतिः। वै। एषः। यत्। आग्रयणः। प्रजानामिति प्र–जानाम्। प्रजननायेति प्र–जननाय। न। सादयति। असंन्नात्। हि। प्रजा इति प्र–जाः। प्रजायन्त इति प्र–जायन्ते। न। अन्विति। वषट्। करोति। यत्। अनुवषट्कुर्यादित्यनु–वषट्कुर्यात्। रुद्रम्। प्रजा इति प्र–जाः। अन्ववसृजेदित्यनु–अवसृजेत्। एषः। वै। गायत्रः। देवानाम्। यत्। सविता। एषः। गायत्रियै। लोके। गृह्यते। यत्। आग्रयणः। यत्। अन्तर्यामपात्रेणेत्यन्तर्याम–पात्रेणं। सावित्रम्। आग्रयणात्। गृह्णाति। स्वात्। एव। एनम्। योनेः। निरिति। गृह्णाति। विश्वे (१)। देवाः।

तृतीयम् । सवनम् । न । उदिति । अयच्छन् । ते । सवितारम् । प्रातःसवनभागमिति प्रातःसवन—भागम् । सन्तम् । तृतीयसवनमिति तृतीय—सवनम् । अभि । परीति । अनयन् । ततः । वै । ते । तृतीयम् । सवनम् । उदिति । अयच्छन् । यत् । तृतीयसवन इति तृतीय—सवने । सावित्रः । गृह्यते । तृतीयस्य । सवनस्य । उद्यत्या इत्युत्—यत्यै । सवितृपात्रेणेति सवितृ—पात्रेण । वैश्वदेवमिति वैश्व—देवम् । कलशात् । गृह्णाति । वैश्वदेव्य इति वैश्व—देव्यः । वै । प्रजा इति प्र—जाः । वैश्वदेव इति वैश्व—देवः । कलशः । सविता । प्रसवानामिति प्र—सवानाम् । ईशे । यत् । सवितृपात्रेणेति सवितृ—पात्रेण । वैश्वदेवमिति वैश्व—देवम् । कलशात् । गृह्णाति । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । अस्मै । प्रजा इति प्र—जाः । प्रेति ( २ ) । जनयति । सोमे । सोमम् । अभीति । गृह्णाति । रेतः । एव । तत् । दधाति । सुशर्मेति सु—शर्मा । असि । सुप्रतिष्ठान इति सु—प्रतिष्ठानः । इति । आह । सोमे । हि । सोमम् । अभिगृह्णातीत्यभि—गृह्णाति । प्रतिष्ठित्या इति प्रति—स्थित्यै । एतस्मिन् । वै । अपीति । ग्रहे । मनुष्येभ्यः । देवेभ्यः । पितृभ्य इति पितृ—भ्यः । क्रियते । सुशर्मेति सु—शर्मा । असि ।

सुप्रतिष्ठान इति सु-प्रतिष्ठानः । इति । आह । मनुष्येभ्यः । एव । एतेन । करोति । बृहत् । इति । आह । देवेभ्यः । एव । एतेन । करोति । नमः । इति । आह । पितृभ्य इति पितृ-भ्यः । एव । एतेन । करोति । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णाति । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः । इति । आह । वैश्वदेव इति वैश्व-देवः । हि । एषः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः )

---

प्राणो वा एष यदुपांशुर्यदुपांशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानु प्रयन्ति प्राणमनूद्यन्ति प्रजापतिर्वा एष यदाग्रयणः प्राण उपांशुः पत्नीः प्रजाः प्र जनयन्ति यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति प्रजानां प्रजननाय तस्मात्प्राणं प्रजा अनु प्र जायन्ते देवा वा इतइतः पत्नीः सुवर्गम् ( १ ) लोकमजिगांसन्ते सुवर्गं लोकं न प्राजानन्त एतं पात्नीवतमपश्यन्त-

मगृह्णत ततो वै सुवर्गं लोकं प्राजानन्यत्पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्तं घृतं वज्रं कृत्वाऽघ्नन्तं निरिन्द्रियं भूतमगृह्णन्तस्मात्स्त्रियो निरिन्द्रिया अदायादीरपि पापात्पुꣳस उपस्तितरम् ( २ ) वदन्ति यद्घृतेन पात्नीवतꣳश्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णात्युपयामगृहीतोऽसीत्याहेयं वा उपयामस्तस्मादिमां प्रजा अनु प्र जायन्ते बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयतीन्दो इत्याह रेतो वा इन्दू रेत एव तद्दधातीन्द्रियाव इति ( ३ ) आह प्रजा वा इन्द्रियं प्रजा एवास्मै प्र जनयत्यग्ना ३ इत्याहाग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाꣳरूपकृद्रूपमेव पशुषु दधाति देवा वै त्वष्टारमजिघाꣳसन्त्स पत्नीः प्रापद्यत तं न प्रति प्रायच्छन्तस्मादपि ( ४ ) वध्यं प्रपन्नं न प्रति प्र यच्छन्ति तस्मात्पात्नीवते त्वष्ट्रेऽपि गृह्यते न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नानुवषट्कु-

यदशान्तमग्नीत्सोमं भक्षयेदुपाꣳश्वनु वषट्करोति न रुद्रं प्रजा अन्ववसृजति शान्तमग्नीत्सोमं भक्षयत्यग्नीन्नेष्टुरुपस्थमा सीद ( ५ ) नेष्टः पत्नीमुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्नियामुद्गात्रा सं ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानां प्रजननायाप उप प्र वर्तयति रेत एव तत्सिञ्चत्यूरुणोप प्र वर्तयत्यूरुणा हि रेतः सिच्यते नग्नंकृत्योरुमुप प्र वर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनी भवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्र जायन्ते ( ६ ) ॥

( पत्नीः सुवर्गमुपस्तितरमिन्द्रियाव इत्यपि सीद मिथुन्यष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

प्राण इति प्र–अनः । वै । एषः । यत् । उपाꣳशुरित्युप–अꣳशुः । यत् । उपाꣳशुपात्रेणेत्युपाꣳशु–पात्रेण । प्रथमः । च । उत्तम इत्युत्–तमः । च । ग्रहौ । गृह्येते इति । प्राणमिति प्र–अनम् । एव । अन्विति । प्रय-

न्तीति प्र—यन्ति । प्राणमिति प्र—अनम् । अनु । उदिति । यन्ति । प्रजापतिरिति प्रजा—पतिः । वै । एषः । यत् । आग्रयणः । प्राण इति प्र—अनः । उपाꣳशुरित्युप—अꣳशुः । पत्नीः । प्रजा इति प्र—जाः । प्रेति । जनयन्ति । यत् । उपाꣳशुपात्रेणेत्युपाꣳशु—पात्रेण । पात्नीवतमिति पात्नी—वतम् । आग्रयणात् । गृह्णाति । प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जननाय । तस्मात् । प्राणमिति प्र—अनम् । प्रजा इति प्र—जाः । अनु । प्रेति । जायन्ते । देवाः । वै । इतइत इतीतः—इतः । पत्नीः । सुवर्गमिति सुवः—गम् ( १ ) । लोकम् । अजिगाꣳसन् । ते । सुवर्गमिति सुवः—गम् । लोकम् । न । प्रेति । अजानन् । ते । एतम् । पात्नीवतमिति पात्नी—वतम् । अपश्यन् । तम् । अगृह्णत । ततः । वै । ते । सुवर्गमिति सुवः—गम् । लोकम् । प्रेति । अजानन् । यत् । पात्नीवत इति पात्नी—वतः । गृह्यते । सुवर्गस्येति सुवः—गस्य । लोकस्य । प्रज्ञात्या इति प्र—ज्ञात्यै । सः । सोमः । न । अतिष्ठत । स्त्रीभ्यः । गृह्यमाणः । तम् । घृतम् । वज्रम् । कृत्वा । अघ्नन् । तम् । निरिन्द्रियमिति निः—इन्द्रियम् । भूतम् । अगृह्णन् । तस्मात् । स्त्रियः । निरिन्द्रिया इति निः—इन्द्रियाः । अदायादीरित्यदाय—अदीः । अपीति ।

पापात् । पुंश्सः । उपस्तितरमित्युपस्ति–तरम् ( २ ) । वदन्ति । यत् । घृतेन । पात्नीवतमिति पात्नी–वतम् । श्रीणाति । वज्रेण । एव । एनम् । वशे । कृत्वा । गृह्णाति । उपयामगृहीत इत्युपयाम–गृहीतः । असि । इति । आह । इयम् । वै । उपयाम इत्युप–यामः । तस्मात् । इमाम् । प्रजा इति प्र–जाः । अनु । प्रेति । जायन्ते । बृहस्पतिसुतस्येति बृहस्पति–सुतस्य । ते । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । प्रजा इति प्र–जाः । प्रेति । जनयति । इन्दो इति । इति । आह । रेतः । वै । इन्दुः । रेतः । एव । तत् । दधाति । इन्द्रियावइतीन्द्रिय–वः । इति ( ३ ) । आह । प्रजा इति प्र–जाः । वै । इन्द्रियम् । प्रजा इति प्र–जाः । एव । अस्मै । प्रेति । जनयति । अग्ना३इ । इति । आह । अग्निः । वै । रेतोधा इति रेतः–धाः । पत्नीव इति पत्नी–वः । इति । आह । मिथुनत्वायेति मिथु-न–त्वाय । सजूरिति स–जूः । देवेन । त्वष्ट्रा । सोमम् । पिब । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप–कृत् । रूपम् । एव । पशुषु । दधाति । देवाः । वै । त्वष्टारम् । अजिघाꣳसन् । सः । पत्नीः । प्रेति । अपद्यत ।

तम् । न । प्रति । प्रेति । अयच्छन् । तस्मात् । अपीति ( ४ ) । वध्यम् । प्रपन्नमिति प्र—पन्नम् । न । प्रति । प्रेति । यच्छन्ति । तस्मात् । पात्नीवत इति पात्नी—वते । त्वष्ट्रे । अपीति । गृह्यते । न । सादयति । असन्नात् । हि । प्रजा इति प्र—जाः । प्रजायन्त इति प्र—जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु—वषट्कुर्यात् । रुद्रम् । प्रजा इति प्र—जाः । अन्ववसृजेदित्यनु—अवसृजेत् । यत् । न । अनुवषट्कुर्यादित्यनु—वषट्कुर्यात् । अशान्तम् । अग्नीदित्यग्नि—इत् । सोमम् । भक्षयेत् । उपांश्वित्युप—अंशु । अन्विति । वषट् । करोति । न । रुद्रम् । प्रजा इति प्र—जाः । अन्ववसृजतीत्यनु—अवसृजति । शान्तम् । अग्नीदित्यग्नि—इत् । सोमम् । भक्षयति । अग्नीदित्यग्नि—इत् । नेष्टुः । उपस्थमित्युप—स्थम् । एति । सीद ( ५ ) । नेष्टः । पत्नीम् । उदानयेत्युत्—आनय । इति । आह । अग्नीदित्यग्नि—इत् । एव । नेष्टरि । रेतः । दधाति । नेष्टा । पत्नियाम् । उद्गात्रेत्युत्—गात्रा । समिति । ख्यापयति । प्रजापतिरिति प्रजा—पतिः । वै । एषः । यत् । उद्गातेत्युत्—गाता । प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जननाय । अपः । उप । प्रेति । वर्तयति । रेतः । एव । तत् । सिञ्चति । ऊरुणा । उप । प्रेति । वर्तयति ।

ऊरुणा । हि । रेतः । सिच्यते । नग्नंकृत्येति नग्नम्-कृत्य ।
ऊरुम् । उप । प्रेति । वर्तयति । यदा । हि । नग्नः ।
ऊरुः । भवति । अथ । मिथुनी । भवतः । अथ । रेतः ।
सिच्यते । अथ । प्रजा इति प्र-जाः । प्रेति । जायन्ते (६) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

इन्द्रो वृत्रमहन्तस्य शीर्षकपालमुदौब्जत्स
द्रोणकलशोऽभवत्तस्मात्सोमः समस्रवत्स हारियो-
जनोऽभवत्तं व्यचिकित्सज्जुहवानी ३ मा हौषा ३-
मिति सोऽमन्यत यद्धोष्याम्यामꣳ होष्यामि यन्न
होष्यामि यज्ञवेशसं करिष्यामीति तमध्रियत
होतुꣳ सोऽग्निरब्रवीन्न मय्यामꣳ होष्यसीति तं
धानाभिरश्रीणात् ( १ ) तꣳ शृतं भूतमजुहो-
द्यद्धानाभिर्हारियोजनꣳ श्रीणाति शृतत्वाय शृत-
मेवैनं भूतं जुहोति बह्वीभिः श्रीणात्येतावतीरेवा-
स्यामुष्मिंल्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा
इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्मा-

द्रुह्वीभिः श्रीणीयादृक्सामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानं यदप्रहृत्य परिधीञ्जुहुयाद्-न्तराधानाभ्याम् (२) घासं प्र यच्छेत्प्रहृत्य परि-धीञ्जुहोति निराधानाभ्यामेव घासं प्र यच्छत्युन्नेता जुहोति यातयामेव ह्येतर्ह्यध्वर्युः स्वगाकृतो यदध्वर्यु-र्जुहुयाद्यथा विमुक्तं पुनर्युनक्ति तादृगेव तच्छीर्षन्न-धिनिधाय जुहोति शीर्षतो हि स समभवद्विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै पशवो वै हारियोजनीर्यत्संभिन्याद्ल्पाः (३) एनं पशवो भुञ्जन्त उप तिष्ठेरन्यन्न संभिन्याद्बहव एनं पशवोऽ-भुञ्जन्त उप तिष्ठेरन्मनसा सं बाधत उभयं करोति बहव एवैनं पशवो भुञ्जन्त उप तिष्ठन्त उन्नेतर्युपह-वमिच्छन्ते य एव तत्र सोमपीथस्तमेवाव रुन्धत उत्तरवेद्यां नि वपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून्प्रति ष्ठाप-यन्ति (४) ॥

(अश्रीणादन्तराधानाभ्यामल्पाः स्थापयन्ति ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

———

(हारियोजनग्रहकथनम्)

(अथ षष्ठाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः।)

---

इन्द्रः। वृत्रम्। अहन्। तस्य। शीर्षकपालमिति शीर्ष-कपालम्। उदिति। औब्जत्। सः। द्रोणकलश इति द्रोण-कलशः। अभवत्। तस्मात्। सोमः। समिति। अस्रवत्। सः। हारियोजन इति हारि-योजनः। अभवत्। तम्। वीति। अचिकित्सत्। जुहवानी३। मा। होषाम३। इति। सः। अमन्यत। यत्। होष्यामि। आमम्। होष्यामि। यत्। न। होष्यामि। यज्ञवेशसमिति यज्ञ-वेशसम्। करिष्यामि। इति। तम्। अध्रियत। होतुम्। सः। अग्निः। अब्रवीत्। न। मयि। आमम्। होष्यसि। इति। तम्। धानाभिः। अश्रीणात् (१)। तम्। शृतम्। भूतम्। अजुहोत्। यत्। धानाभिः। हारियोजनमिति हारि-योजनम्। श्रीणाति। शृतत्वायेति शृत-त्वाय। शृतम्। एव। एनम्। भूतम्। जुहोति। बह्वीभिः। श्रीणाति। एतावतीः। एव। अस्य। अमुष्मिन्। लोके। कामदुघा इति काम-दुघाः। भवन्ति। अथो इति। खलु। आहुः। एताः। वै। इन्द्रस्य। पृश्नयः। कामदुघा इति काम-दुघाः। यत्। हारियोजनीरिति हारि-योजनीः। इति।

तस्मात् । बह्वीभिः । श्रीणीयात् । ऋक्सामे इत्यृक्-सामे । वै । इन्द्रस्य । हरी इति । सोमपानाविति सोम-पानौ । तयोः । परिधय इति परि-धयः । आधान-मित्या-धानम् । यत् । अप्रहृत्येत्यप्र-हृत्य । परिधीनिति परि-धीन् । जुहुयात् । अन्तराधानाभ्यामित्यन्तः-आधा-नाभ्याम् ( २ ) । घासम् । प्रेति । यच्छेत् । प्रहृत्येति प्र-हृत्य । परिधीनिति परि-धीन् । जुहोति । निराधाना-भ्यामिति निः-आधानाभ्याम् । एव । घासम् । प्रेति । यच्छति । उन्नेतेत्युत्-नेता । जुहोति । यातयामेति यात-यामा । इव । हि । एतर्हि । अध्वर्युः । स्वगाकृत इति स्वगा-कृतः । यत् । अध्वर्युः । जुहुयात् । यथा । विमु-क्तमितिवि-मुक्तम् । पुनः । युनक्ति । तादृक् । एव । तत् । शीर्षन् । अधिनिधायेत्यधि-निधाय । जुहोति । शीर्षतः । हि । सः । समभवदिति सम्-अभवत् । विक्रम्येति वि-क्रम्य । जुहोति । विक्रम्येति वि-क्रम्य । हि । इन्द्रः । वृत्रम् । अहन् । समृद्ध्या इति सम् -ऋद्ध्यै । पशवः । वै । हारियोजनीरिति हारि-योजनीः । यत् । संभि-न्द्यादिति सं-भिन्द्यात् । अल्पाः ( ३ ) । एनम् । पशवः । भुञ्जन्तः । उपेति । तिष्ठेरन् । यत् । न । संभि-न्द्यादिति सं-भिन्द्यात् । बहवः । एनम् । पशवः । अभु-

अन्तः । उपेति । तिष्ठरन् । मनसा । समिति । बाधते । उभयम् । करोति । बहवः । एव । एनम् । पशवः । भुञ्जतः । उपेति । तिष्ठन्ते । उन्नेतरीत्युत्–नेतरि । उपहवमित्युप–हवम् । इच्छन्ते । यः । एव । तत्र । सोमपीथ इति सोम–पीथः । तम् । एव । अवेति । रुन्धते । उत्तरवेद्यामित्युत्तर–वेद्याम् । नीति । वपति । पशवः । वै । उत्तरवेदिरित्युत्तर–वेदिः । पशवः । हारियोजनीरिति हारि–योजनीः । पशुषु । एव । पशून् । प्रतीति । स्थापयन्ति (४) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ षष्ठाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ।)

---

ग्रहान्वा अनु प्रजाः पशवः प्र जायन्त उपाꣳश्वन्तर्यामावजावयः शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गाव आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते तस्माद्गावः पशूनां भूयिष्ठा यत्त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्माद्द्वौ त्रीनजा जनयत्यथावयो भूयसीः पिता वा एष यदाग्रयणः पुत्रः

कलशो यदाग्रयण उपदस्येत्कलशाद्गृह्णीयाद्यथा पिता ( १ ) पुत्रं क्षित उपधावति तादृगेव तद्यत्कलशं उपदस्येदाग्रयणाद्गृह्णीयाद्यथा पुत्रः पितरं क्षित उपधावति तादृगेव तदात्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद्गृह्णीयादात्मन एवाधि यज्ञं निष्करोत्यविज्ञातो वा एष गृह्यते यदाग्रयणः स्थाल्या गृह्णाति वायव्येन जुहोति तस्मात् ( २ ) गर्भेणाविज्ञातेन ब्रह्महाऽवभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात्स्त्रियं जातां पराऽस्यन्त्युत्पुमांसꣳ हरन्ति यत्पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद्ग्रहं गृह्णाति यथा वस्यस आहृत्य प्राऽऽह तादृगेव तद्यत्सादयति यथा वस्यस उपनिधायापक्रामति तादृगेव तद्यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै ( ३ )

( यथा पिता तस्मादपक्रामति तादृगेव तद्यद्ष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

(अथ षष्ठाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ।)

---

ग्रहान् । वै । अन्विति । प्रजा इति प्र-जाः । पशवः । प्रेति । जायन्ते । उपाꣳश्वन्तर्यामावित्युपाꣳशु-अन्तर्यामौ । अजावय इत्यजा-अवयः । शुक्रामन्थिनाविति शुक्रा-मन्थिनौ । पुरुषाः । ऋतुग्रहानित्यृतु-ग्रहान् । एकशफा इत्येक-शफाः । आदित्यग्रहमित्यादित्य-ग्रहम् । गावः । आदित्यग्रह इत्यादित्य-ग्रहः । भूयिष्ठाभिः । ऋग्भिरित्यृक्-भिः । गृह्यते । तस्मात् । गावः । पशूनाम् । भूयिष्ठाः । यत् । त्रिः । उपाꣳशुमित्युप-अꣳशुम् । हस्तेन । विगृह्णातीति वि-गृह्णाति । तस्मात् । द्वौ । त्रीन् । अजा । जनयति । अथ । अवयः । भूयसीः । पिता । वै । एषः । यत् । आग्रयणः । पुत्रः । कलशः । यत् । आग्रयणः । उपदस्येदित्युप-दस्येत् । कलशात् । गृह्णीयात् । यथा । पिता (१) । पुत्रम् । क्षितः । उपधावतीत्युप-धावति । तादृक् । एव । तत् । यत् । कलशः । उपदस्येदित्युप-दस्येत् । आग्रयणात् । गृह्णीयात् । यथा । पुत्रः । पितरम् क्षितः । उपधावतीत्युप-धावति । तादृक् । एव । तत् । आत्मा । वै । एषः । यज्ञस्य । यत् । आग्रयणः । । यत् । ग्रहः । वा । कलशः । वा । उपदस्येदित्युप-दस्येत् । आग्र-

यणात् । गृह्णीयात् । आत्मनः । एव । अधीति । यज्ञम् । निरिति । करोति । अविज्ञात इत्यवि—ज्ञातः । वै । एषः । गृह्यते । यत् । आग्रयणः । स्थाल्या । गृह्णाति । वायव्येन । जुहोति । तस्मात् (२) । गर्भेण । अविज्ञातेनेत्यवि—ज्ञातेन । ब्रह्महेति ब्रह्म—हा । अवभृथमित्यव—भृथम् । अवेति । यन्ति । परेति । स्थालीः । अस्यन्ति । उदिति । वायव्यानि । हरन्ति । तस्मात् । स्त्रियम् । जाताम् । परेति । अस्यन्ति । उदिति । पुमाꣳसम् । हरन्ति । यत् । पुरोरुचमिति पुरः—रुचम् । आह । यथा । वस्यसे । आहरतीत्या—हरति । तादृक् । एव । तत् । यत् । ग्रहम् । गृह्णाति । यथा । वस्यसे । आहृत्ये त्या—हृत्य । प्रेति । आह । तादृक् । एव । तत् । यत् । सादयति । यथा । वस्यसे । उपनिधायेत्युप—निधाय । अपक्रामती त्यप—क्रामति । तादृक् । एव । तत् । यत् । वै । यज्ञस्य । साम्ना । यजुषा । क्रियते । शिथिलम् । तत् । यत् । ऋचा । तत् । दृढम् । पुरस्तादुपयामा इति पुरस्तात्—उपयामाः । यजुषा । गृह्यन्ते । उपरिष्टादुपयामा इत्युपरिष्टात्—उपयामाः । ऋचा । यज्ञस्य । धृत्यै ( ३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ षष्ठाष्टके पञ्चमप्रपाठके एकादशोऽनुवाकः।)

प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुनः पुनरिव ह्ययं लोकः प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः (१) प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमप यन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति यो वै ग्रहाणां निदानं वेद निदानवान्भवत्याज्यमित्युक्थं तद्वै ग्रहाणां निदानं यदुपाꣳशु शꣳसति तत् (२) उपाꣳश्वन्तर्यामयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै ग्रहाणां निदानं य एवं वेद निदानवान्भवति यो वै ग्रहाणां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणां मिथुनं य एवं वेद प्र प्रजया

पशुभिर्मिथुनैर्जायत इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत्स विष्वङ् ( ३ ) व्यार्च्छत्स आत्मन्नारमणं नाविन्दत्स एताननुसवनं पुरोडाशानपश्यत्तान्निरवपत्तैर्वै स आत्मन्नारमणमकुरुत तस्मादनुसवनं पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राश्नीयादात्मन्नेवाऽऽरमणं कुरुते नैनꣳ सोमोऽति पवते ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम् ( ४ ) ॥

( भवन्ति यानि पुनः शꣳसति तद्विष्वङ्कि चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

इन्द्रो वृत्रायाऽऽयुर्वै यज्ञेन सुवर्गायेन्द्रो मरुद्भिरदितिरन्तर्यामपात्रेण प्राण उपाꣳशुपात्रेणेन्द्रो वृत्रमहन्तस्य ग्रहान्वै प्रान्यानि पात्राण्येकादश ॥ ११ ॥

इन्द्रो वृत्राय पुनर्ऋतुनाऽऽह मिथुनं पशवो नेष्टः पत्नीमुपाꣳशवन्तर्यामयोर्द्विचत्वारिꣳशत् ॥ ४२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

---

(अथ षष्ठाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ।)

---

प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्त इति प्र—युज्यन्ते । अमुम् । एव । तैः । लोकम् । अभीति । जयति । पराङ् । इव । हि । असौ । लोकः । यानि । पुनः । प्रयुज्यन्त इति प्र—युज्यन्ते । इमम् । एव । तैः । लोकम् । अभीति । जयति । पुनः पुनरिति पुनः—पुनः । इव । हि । अयम् । लोकः । प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । ओषधयः । परेति । भवन्ति । यानि । पुनः (१) । प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । ओषधयः । पुनः । एति । भवन्ति । प्रेति । अन्यानि । पत्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । आरण्याः । पशवः । अरण्यम् । अपेति । यन्ति । यानि । पुनः । प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । ग्राम्याः । पशवः । ग्रामम् । उपावयन्तीत्युप—अवयन्ति । यः । वै । ग्रहाणाम् । निदानमिति नि—दानम् । वेद । निदानवानिति निदान—वान् । भवति ।

आज्यम् । इति । उक्थम् । तत् । वै । ग्रहाणाम् । निदानमिति नि–दानम् । यत् । उपाꣳश्वित्युप–अꣳशु । शꣳसति । तत् ( २ ) । उपाꣳश्वन्तर्यामयोरित्युपाꣳशु–अन्तर्यामयोः । यत् । उच्चैः । तत् । इतरेषाम् । ग्रहाणाम् । एतत् । वै । ग्रहाणाम् । निदानमिति नि–दानम् । यः । एवम् । वेद । निदानवानिति निदान–वान् । भवति । यः । वै । ग्रहाणाम् । मिथुनम् । वेद । प्रेति । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । मिथुनैः । जायते । स्थालीभिः । अन्ये । ग्रहाः । गृह्यन्ते । वायव्यैः । अन्ये । एतत् । वै । ग्रहाणाम् । मिथुनम् । यः । एवम् । वेद । प्रेति । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । मिथुनैः । जायते । इन्द्रः । त्वष्टुः । सोमम् । अभीषहेत्यभि–सहा । अपिबत् । सः । विष्वङ् ( ३ ) । वीति । आर्छत् । सः । आत्मन् । आरमणमित्या–रमणम् । न । अविन्दत् । सः । एतान् । अनुसवनमित्यनु–सवनम् । पुरोडाशान् । अपश्यत् । तान् । निरिति । अवपत् । तैः । वै । सः । आत्मन् । आरमणमित्या–रमणम् । अकुरुत । तस्मात् । अनुसवनमित्यनु–सवनम् । पुरोडाशाः । निरिति । उप्यन्ते । तस्मात् । अनुसवनमित्यनु–सवनम् । पुरोडाशानाम् । प्रेति । अश्री-

यात् । आत्मन् । एव । आरम्भणमित्या—रम्भणम् । कुरुते । न । एनम् । सोमः । अतीति । पवते । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । न । ऋचा । न । यजुषा । पङ्क्तिः । आप्यते । अथ । किम् । यज्ञस्य । पाङ्क्तत्वमिति पाङ्क्त—त्वम् । इति । धानाः । करम्भः । परिवाप इति परि—वापः । पुरोडाशः । पयस्या । तेन । पङ्क्तिः । आप्यते । तत् । यज्ञस्य । पाङ्क्तत्वमिति पाङ्क्त—त्वम् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ षष्ठाष्टके षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि द्वाभ्य। गार्हपत्ये जुहोति द्विपाद्यजमानः

प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमते सदोऽभ्यैति सुवर्गमेवैनं लोकं गमयति सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकश्समारोहयति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै दिवं गच्छ सुवःपतेति हिरण्यम् (१) हुत्वोद्गृह्णाति सुवर्गमेवैनं लोकं गमयति रूपेण वो रूपमभ्यैमीत्याह रूपेण ह्यासाश्रूपमभ्यैति यद्धिरण्येन तुथो वो विश्ववेदा वि भजत्वित्याह तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा वि भजति तेनैवैना वि भजत्येतत्ते अग्ने राधः ( २ ) ऐति सोमच्युतमित्याह सोमच्युतश्ह्यस्य राध ऐति तान्मित्रस्य पथा नयेत्याह शान्त्या ऋतस्य पथा प्रेत चन्द्रदक्षिणा इत्याह सत्यं वा ऋतश्सत्येनैवैना ऋतेन वि भजति यज्ञस्य पथा सुविता नयन्तीरित्याह यज्ञस्य ह्येताः पथा यन्ति यद्दक्षिणा ब्राह्मणमद्य राध्यासम् ( ३ ) ऋषिमार्षेयमित्याहैष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान्तस्मादेवमाह वि सुवः पश्य व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति यतस्व सदस्यैरित्याह मित्रत्वायास्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतेत्याह वयमिह प्रदातारः स्मोऽस्मा

नमुत्र मधुमतीरा विशतेति ( ४ ) वावैतदाह हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्या अग्नीधे ददात्यग्निमुखानेवर्तून्प्रीणाति ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोताऽऽत्मानमेव यज्ञस्य दक्षिणाभिः समर्धयति ( ५ ) ॥

[ हिरण्यꣳराधो राध्यासं मधुमतीरा विशतेत्यष्टात्रिꣳशच । ]

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः )

---

हरिः ॐ ।

सुवर्गायेति सुवः–गाय । वै । एतानि । लोकाय । हूयन्ते । यत् । दाक्षिणानि । द्वाभ्याम् । गार्हपत्य इति गार्ह–पत्ये । जुहोति । द्विपादिति द्वि–पात् । यजमानः । प्रतिष्ठित्या इति प्रति–स्थित्यै । आग्नीध्र इत्याग्नि–इध्रे । जुहोति । अन्तरिक्षे । एव । एति । क्रमते । सदः । अभि । एति । एति । सुवर्गमिति सुवः–गम् । एव । एनम् ।

लोकम् । गमयति । सौरीभ्याम् । ऋग्भ्यामित्यृक्–भ्याम् । गार्हपत्य इति गार्ह–पत्ये । जुहोति । अमुम् । एव । एनम् । लोकम् । समारोहयतीति सम्–आरोहयति । नर्यवत्येति नर्य–वत्या । ऋचा । आग्नीध्र इत्याग्नि–इध्रे । जुहोति । सुवर्गस्येति सुवः–गस्य । लोकस्य । अभिनीत्या इत्यभि–नीत्यै । दिवम् । गच्छ । सुवः । पत । इति । हिरण्यम् ( १ ) । हुत्वा । उदिति । गृह्णाति । सुवर्गमिति सुवः–गम् । एव । एनम् । लोकम् । गमयति । रूपेण । वः । रूपम् । अभि । एति । एमि । इति । आह । रूपेण । हि । आसाम् । रूपम् । अभि । एति । एति । यत् । हिरण्येन । तुथः । वः । विश्ववेदा इति विश्व–वेदाः । वीति । भजतु । इति । आह । तुथः । ह । स्म । वै । विश्ववेदा इति विश्व–वेदाः । देवानाम् । दक्षिणाः । वीति । भजति । तेन । एव । एनाः । वीति । भजति । एतत् । ते । अग्ने । राधः (२) । एति । एति । सोमच्युतमिति सोम–च्युतम् । इति । आह । सोमच्युतमिति सोम–च्युतम् । हि । अस्य । राधः । एति । एति । तत् । मित्रस्य । पथा । नय । इति । आह । शान्त्यै । ऋतस्य । पथा । प्रेति । इत । चन्द्रदक्षिणा इति चन्द्र–दक्षिणाः । इति । आह । सत्यम् । वै । ऋतम् । सत्येन । एव ।

एनाः। ऋतेन। वीति। भजाति। यज्ञस्य। पथा। सुविता। नयन्तीः। इति। आह। यज्ञस्य। हि। एताः। पथा। यन्ति। यत्। दक्षिणाः। ब्राह्मणम्। अद्य। राध्यासम् (३)। ऋषिम्। आर्षेयम्। इति। आह। एषः। वै। ब्राह्मणः। ऋषिः। आर्षेयः। यः। शुश्रुवान्। तस्मात्। एवम्। आह। वीति। सुवः। पश्य। वीति। अन्तरिक्षम्। इति। आह। सुवर्गमिति सुवः–गम्। एव। एनम्। लोकम्। गमयति। यतस्व। सदस्यैः। इति। आह। मित्रत्वायेति मित्र–त्वाय। अस्मद्दात्रा इत्यस्मत्–दात्राः। देवत्रेति देव–त्रा। गच्छत। मधुमतीरिति मधु–मतीः। प्रदातारमिति प्र–दातारम्। एति। विशत। इति। आह। वयम्। इह। प्रदातार इति प्र–दातारः। स्मः। अस्मान्। अमुत्र। मधुमतीरिति मधु–मतीः। एति। विशत। इति (४)। वाव। एतत्। आह। हिरण्यम्। ददाति। ज्योतिः। वै। हिरण्यम्। ज्योतिः। एव। पुरस्तात्। धत्ते। सुवर्गस्येति सुवः–गस्य। लोकस्य। अनुख्यात्या इत्यनु–ख्यात्यै। अग्नीध इत्यग्नि–इधे। ददाति। अग्निमुखानित्यग्नि–मुखान्। एव। ऋतून्। प्रीणाति। ब्रह्मणे। ददाति। प्रसूत्या इति प्र–सूत्यै। होत्रे। ददाति। आत्मा। वै।

एषः । यज्ञस्य । यत् । होता । आत्मानम् । एव । यज्ञस्य । दक्षिणाभिः । समिति । अर्धयति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः )

---

समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापि करोति तदेव तैः प्रीणाति नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञः संमितो यावानेव यज्ञस्तं प्रीणाति षडृग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति त्रीणि यजूꣳषि ( १ ) त्रय इमे लोका इमानेव लोकान्प्रीणाति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञपतिमेवैनं गमयति स्वां योनिं गच्छेत्याह स्वामेवैनं योनिं गमयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीर इत्याह यजमान एव वीर्यं दधाति वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजो यज्ञे

(२) यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३ विति स होवाच यज्ञपताविति सत्याद्वै सृंजयाः परा बभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्यापराभावायेति देवा गातुविदो गातुं वित्त्वा गातु मितेत्याह यज्ञ एव यज्ञं प्रति ष्ठापयति यजमानस्यापराभावाय (३)॥

(यजूꣳषि यज्ञ एकचत्वारिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः।)

---

समिष्टयजूꣳषीति समिष्ट-यजूꣳषि । जुहोति । यज्ञस्य । समिष्ट्या इति सम्-इष्ट्यै । यत् । वै । यज्ञस्य । क्रूरम् । यत् । विलिष्टमिति वि-लिष्टम् । यत् । अत्येतीत्यति-एति । यत् । न । अत्येतीत्यति-एति । यत् । अतिकरोतीत्यति-करोति । यत् । न । अपीति । करोति । तत् । एव । तैः । प्रीणाति । नव । जुहोति । नव । वै । पुरुषे । प्राणा इति प्र-अनाः । पुरुषेण । यज्ञः । संमित इति सं-मितः । यावान् । एव । यज्ञः ।

तम् । प्रीणाति । षट् । ऋग्मियाणि । जुहोति । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । त्रीणि । यजूꣳषि ( १ ) । त्रयः । इमे । लोकाः । इमान् । एव । लोकान् । प्रीणाति । यज्ञ । यज्ञम् । गच्छ । यज्ञपतिमिति यज्ञ—पतिम् । गच्छ । इति । आह । यज्ञपतिमिति यज्ञ—पतिम् । एव । एनम् । गमयति । स्वाम् । योनिम् । गच्छ । इति । आह । स्वाम् । एव । एनम् । योनिम् । गमयति । एषः । ते । यज्ञः । यज्ञपत इति यज्ञ—पते । सहसूक्तवाक इति सह—सूक्त—वाकः । सुवीर इति सु—वीरः । इति । आह । यजमाने । एव । वीर्यम् । दधाति । वासिष्ठः । ह । सात्यहव्य इति सात्य—हव्यः । देवभागमिति देव—भागम् । पप्रच्छ । यत् । सृञ्जयान् । बहुयाजिन इति बहु—याजिनः । अयीयजः । यज्ञे (२) । यज्ञम् । प्रतीति । अतिष्ठिपा३ः । यज्ञपता३वीति यज्ञ—पता३उ । इति । सः । ह । उवाच । यज्ञपताविति यज्ञ—पतौ । इति । सत्यात् । वै । सृञ्जयाः । परेति । बभूवुः । इति । ह । उवाच । यज्ञे । वाव । यज्ञः । प्रतिष्ठाप्य इति प्रति—स्थाप्यः । आसीत् । यजमानस्य । अपराभावायेत्यपरा—भावाय । इति । देवाः । गातुविद इति गातु—विदः । गातुम् । वित्वा । गातुम् । इत । इति । आह ।

यज्ञे । एव । यज्ञम् । प्रतीति । स्थापयति । यजमानस्य । अपराभावायेत्यपरा–भावाय ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः । )

---

अवभृथयजूꣳषि जुहोति यदेवार्वाचीनमेकहायनादेनः करोति तदेव तैरव यजतेऽपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजते वर्त्मना वा अन्वित्य यज्ञꣳरक्षाꣳसि जिघाꣳसन्ति साम्नः प्रस्तोताऽन्ववैति साम वै रक्षोहा रक्षसामपहत्यै त्रिर्निधनमुपैति त्रयं इमे लोका एभ्य एव लोकेभ्यो रक्षाꣳसि ( १ ) अप हन्ति पुरुषः पुरुषो निधनमुपैति पुरुषःपुरुषो हि रक्षस्वी रक्षसामपहत्या उरुꣳहि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै शतं ते राजन्भिषजः सहस्रमित्याह भेषजमेवास्मै करोत्यभिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाभि तिष्ठति बर्हिरभि जुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोत्यपबर्हिषः प्रयाजान् ( २ ) यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मु-

श्चत्याज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति वरुणं यजति वरुणपाशादेवैनं मुञ्चत्यग्नीवरुणौ यजति साक्षादेवैनं वरुणपाशान्मुञ्चत्यपबर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चति चतुरः प्रयाजान्यजति द्वावनूयाजौ षट्सं पद्यन्ते षड्वा ऋतवः (३) ऋतुष्वेव प्रति तिष्ठत्यवभृथ निचङ्कुणेत्याह यथोदितमेव वरुणमव यजते समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणः सं त्वा विशन्त्वोषधीरुताऽऽप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत्पशवो वै (४) सोमो यद्भिन्दूनां भक्षयेत्पशुमान्त्स्याद्वरुणस्त्वेनं गृह्णीयाद्यन्न भक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान्भवति नैनं वरुणो गृह्णाति प्रतियुतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यतेऽप्रतीक्षमा यन्ति वरुणस्यान्तर्हित्या एधोऽस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्त उपायन्ति तेजोऽसि तेजो मयि धेहीत्याह तेज एवाऽऽत्मन्धत्ते (५)

(रक्षाꣳसि प्रयाजानृतवो वै नमस्यन्तो द्वादश च)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

(अथ षष्ठाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः।)

---

अवभृथयजूꣳषीत्यवभृथ–यजूꣳषि। जुहोति। यत्। एव। अर्वाचीनम्। एकहायनादित्येक–हायनात्। एनः। करोति। तत्। एव। तैः। अवेति। यजते। अपः। अवभृथमित्यव–भृथम्। अवेति। एति। अप्स्वित्यप्–सु। वै। वरुणः। साक्षादिति स–अक्षात्। एव। वरुणम्। अवेति। यजते। वर्त्मना। वै। अन्वित्येत्यनु–इत्य। यज्ञम्। रक्षाꣳसि। जिघाꣳसन्ति। साम्ना। प्रस्तोतेति प्र–स्तोता। अन्ववैतीत्यनु–अवैति। साम। वै। रक्षोहेति रक्षः–हा। रक्षसाम्। अपहत्या इत्यप–हत्यै। त्रिः। निधनमिति नि–धनम्। उपेति। एति। त्रयः। इमे। लोकाः। एभ्यः। एव। लोकेभ्यः। रक्षाꣳसि। (१)। अपेति। हन्ति। पुरुषः पुरुषः इति पुरुषः–पुरुषः। निधनमिति नि–धनम्। उपेति। एति। पुरुषः पुरुष इति पुरुषः–पुरुषः। हि। रक्षस्वी। रक्षसाम्। अपहत्या इत्यप–हत्यै। उरुम्। हि। राजा। वरुणः। चकार। इति। आह। प्रतिष्ठित्या इति प्रति–स्थित्यै। शतम्। ते। राजन्। भिषजः। सहस्रम्। इति। आह। भेषजम्। एव। अस्मै। करोति। अभिष्ठित इत्यभि–

स्थितः । वरुणस्य । पाशः । इति । आह । वरुणपाशमिति वरुण—पाशम् । एव । अभीति । तिष्ठति । बर्हिः । अभीति । जुहोति । आहुतीनामित्या—हुतीनाम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । अग्निवतीत्यग्नि—वति । एव । जुहोति । अपबर्हिष इत्यप—बर्हिषः । प्रयाजानिति प्र—याजान् । यजति । प्रजा इति प्र—जाः । वै । बर्हिः । प्रजा इति प्र—जाः । एव । वरुणपाशादिति वरुण—पाशात् । मुञ्चति । आज्यभागावित्याज्य—भागौ । यजति । यज्ञस्य । एव । चक्षुषी इति । न । अन्तः । एति । वरुणम् । यजति । वरुणपाशादिति वरुण—पाशात् । एव । एनम् । मुञ्चति । अग्नीवरुणावित्यग्नी—वरुणौ । यजति । साक्षादिति स—अक्षात् । एव । एनम् । वरुणपाशादिति वरुण—पाशात् । मुञ्चति । अपबर्हिषावित्यप—बर्हिषौ । अनूयाजावित्यनु—याजौ । यजति । प्रजा इति प्र—जाः । वै । बर्हिः । प्रजा इति प्र—जाः । एव । वरुणपाशादिति वरुण—पाशात् । मुञ्चति । चतुरः । प्रयाजानिति प्र—याजान् । यजति । द्वौ । अनूयाजावित्यनु—याजौ । षट् । समिति । पद्यन्ते । षट् । वै । ऋतवः । ( ३ ) । ऋतुषु । एव । प्रतीति । तिष्ठति । अवभृथेत्यव—भृथ । निचङ्कुणेति नि—चङ्कुण । इति । आह । यथोदित-

मिति यथा—उदितम् । एव । वरुणम् । अवेति । यजते । समुद्रे । ते । हृदयम् । अप्स्वित्यप्—सु । अन्तः । इति । आह । समुद्रे । हि । अन्तः । वरुणः । समिति । त्वा । विशन्तु । ओषधीः । उत । आपः । इति । आह । अद्भिरित्यत्—भिः । एव । एनम् । ओषधीभिरित्योषधि—भिः । सम्यञ्चम् । दधाति । देवीः । आपः । एषः । वः । गर्भः । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । पशवः । वै ( ४ ) । सोमः । यत् । भिन्दूनाम् । भक्षयेत् । पशुमानिति पशु—मान् । स्यात् । वरुणः । तु । एनम् । गृह्णीयात् । यत् । न । भक्षयेत् । अपशुः । स्यात् । न । एनम् । वरुणः । गृह्णीयात् । उपस्पृश्यमित्युप—स्पृश्यम् । एव । पशुमानिति पशु—मान् । भवति । न । एनम् । वरुणः । गृह्णाति । प्रतियुत इति प्रति—युतः । वरुणस्य । पाशः । इति । आह । वरुणपाशादिति वरुण—पाशात् । एव । निरिति । मुच्यते । अप्रतीक्षमित्यप्रति—ईक्षम् । एति । यन्ति । वरुणस्य । अन्तर्हित्या इत्यन्तः—हित्यै । एधः । असि । एधिषीमहि । इति । आह । समिधेति सम्—इधा । एव । अग्निम् । नमस्यन्तः । उपायन्तीत्युप—आयन्ति । तेजः । असि । तेजः । मयि । धेहि ।

इति । आह । तेजः । एव । आत्मन् । धत्ते (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ।)

---

स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपं मिनोति त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै यदन्तर्वेदि मिनुयाद्देवलोकमभि जये-द्यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य संधौ मिनोत्युभ-योर्लोकयोरभिजित्या उपरसंमितां मिनुयात्पितृलो-ककामस्य रशनसंमितां मनुष्यलोककामस्य चषाल-संमितामिन्द्रियकामस्य सर्वान्त्समान्प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान्पशुकामस्यैतान्वै (१) अनु पशव उपतिष्ठन्ते पशुमानेव भवति व्यतिषज-दितरान्प्रजयैवैनं पशुभिर्व्यतिषजति यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक्प्र मीयते दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्सुवर्गका-मस्याथ ह्रसीयाꣳसमाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै (२) यदेकं-

स्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकाꣳ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत्स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्र वेष्टयेत्पुमानेवास्य (३) जायतेऽसुरा वै देवान्दक्षिणत उपानयन्तान्देवा उपशयेनैवापानुदन्त तदुपशयस्योपशयत्वं यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः पशुर्यन्न निर्दिशेदार्तिमार्छेद्यजमानोऽसौ ते पशुरिति निर्दिशेद्यं द्विष्याद्यमेव (४) द्वेष्टि तमस्मै पशुं निर्दिशति यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यान्प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत्तया वै सोऽन्नाद्यमवारुन्ध यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे (५) य एकादशः स्तन एवास्यै स दुह एवैनां तेन वज्रो वा एषा सं मीयते यदेकादशिनी सेश्वरा पुरस्तात्प्रत्यञ्चं यज्ञꣳ संमर्दि-

तोर्यत्पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सय-
त्वाय (६)

( वै समंष्ट्यै पुमानिवास्य यमेव रुन्धे त्रि॑ꣳशच्च॑ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके
षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

स्फ्येन॑ । वेदि॑म् । उदिति॑ । हन्ति । रथाक्षेणेति॑ रथ—अक्षेण॑ । वीति॑ । मिमीते । यूप॑म् । मिनोति । त्रिवृतमिति॑ त्रि—वृत॑म् । एव । वज्र॑म् । संभृत्येति॑ सं—भृत्य॑ । भ्रातृ॑व्याय । प्रेति॑ । हरति । स्तृत्यै॑ । यत् । अन्तर्वेदीत्यन्तः—वेदि । मिनुयात् । देवलोकमिति॑ देव—लोकम् । अभीति॑ । जयेत् । यत् । बहिर्वेदीति॑ बहिः—वेदि । मनुष्यलोकमिति॑ मनुष्य—लोकम् । वेद्यन्तस्येति॑ वेदि—अन्तस्य॑ । संधाविति॑ सं—धौ । मिनोति । उभयो॑ः । लोकयो॑ः । अभिजित्या इत्यभि—जित्यै॑ । उपरसंमितामित्युपर—सं॑मिताम् । मिनुयात् । पितृलोकका॑मस्येति॑ पितृलोक—कामस्य । रशनसं॑मितामिति॑ रशन—सं॑मिताम् । मनुष्यलोकका॑मस्येति॑ मनुष्यलोक—कामस्य । चषालसंमितामिति॑ चषाल—संमि-

ताम् । इन्द्रियकामस्येतीन्द्रिय–कामस्य । सर्वान् । समान् । प्रतिष्ठाकामस्येति प्रतिष्ठा–कामस्य । ये । अयः । मध्यमाः । तान् । समान् । पशुकामस्येति पशु–कामस्य । एतान् । वै ( १ ) । अन्विति । पशवः । उपेति । तिष्ठन्ते । पशुमानिति पशु–मान् । एव । भवति । व्यतिषजेदिति वि–अतिषजेत् । इतरान् । प्रजयेति प्र–जया । एव । एनम् । पशुभिरिति पशु–भिः । व्यतिषजतीति वि–अतिषजति । यं । कामयेत । प्रमायुक इति प्र–मायुकः । स्यात् । इति । गर्तमितमिति गर्त–मितम् । तस्य । मिनुयात् । उत्तरार्ध्यमित्युत्तर–अर्ध्यम् । वर्षिष्ठम् । अथ । ह्रसीयाꣳसम् । एषा । वै । गर्तमिदिति गर्त–मित् । यस्य । एवम् । मिनोति । ताजक् । प्रेति । मीयते । दक्षिणार्ध्यमिति दक्षिण–अर्ध्यम् । वर्षिष्ठम् । मिनुयात् । सुवर्गकामस्येति सुवर्ग–कामस्य । अथ । ह्रसीयाꣳसम् । आक्रमणमित्या–क्रमणम् । एव । सत् । सेतुम् । यजमानः । कुरुते । सुवर्गस्येति सुवः–गस्य । लोकस्य । समष्ट्या इति सम्–अष्ट्यै ( २ ) । यत् । एकस्मिन् । यूपे । द्वे इति । रशने इति । परिव्ययतीति परि–व्ययति । तस्मात् । एकः । द्वे इति । जाये इति । विन्दते । यत् । न । एकाम् । रशनाम् । द्वयोः । यूपयोः । परिव्ययतीति परि–व्ययति । तस्मात् । न ।

एका । द्वौ । पती इति । विन्दते । यम् । कामयेत । स्त्री । अस्य । जायेत । इति । उपान्त इत्युप–अन्ते । तस्य । व्यतिषजेदिति वि–अतिषजेत् । स्त्री । एव । अस्य । जायते । यम् । कामयेत । पुमान् । अस्य । जायेत । इति । आन्तमित्या–अन्तम् । तस्य । प्रेति । वेष्टयेत् । पुमान् । एव । अस्य ( ३ ) । जायते । असुराः । वै । देवान् । दक्षिणतः । उपेति । अनयन् । तान् । देवाः । उपशयेनेत्युप–शयेन । एव । अपेति । अनुदन्त । तत् । उपशयस्येत्युप–शयस्य । उपशयत्वमित्युपशय–त्वम् । यत् । दक्षिणतः । उपशय इत्युप–शयः । उपशय इत्युप–शये । भ्रातृव्यापनुत्त्या इति भ्रातृव्य–अपनुत्त्यै । सर्वे । वै । अन्ये । यूपाः । पशुमन्त इति पशु–मन्तः । अथ । उपशय इत्युप–शयः । एव । अपशुः । तस्य । यजमानः । पशुः । यत् । न । निर्दिशेदिति निः–दिशेत् । आर्तिम् । एति । ऋच्छेत् । यजमानः । असौ । ते । पशुः । इति । निरिति । दिशेत् । यम् । द्विष्यात् । यम् । एव ( ४ ) । द्वेष्टि । तम् । अस्मै । पशुम् । निरिति । दिशति । यदि । न । द्विष्यात् । आखुः । ते । पशुः । इति । ब्रूयात् । न । ग्राम्यान् । पशून् । हिनस्ति । न । आरण्यान् । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत ।

सः। अन्नाद्येनेत्यन्न–अद्येन। वीति। आर्ध्यत। सः। एताम्। एकादशिनीम्। अपश्यत्। तया। वै। सः। अन्नाद्यमित्यन्न–अद्यम्। अवेति। अरुन्ध। यत्। दश। यूपाः। भवन्ति। दशाक्षरेति दश–अक्षरा। विराडिति वि–राट्। अन्नम्। विराडिति वि–राट्। विराजेति वि–राजा। एव। अन्नाद्यमित्यन्न–अद्यम्। अवेति। रुन्धे (५)। यः। एकादशः। स्तनः। एव। अस्यै। सः। दुहे। एव। एनाम्। तेन। वज्रः। वै। एषा। समिति। मीयते। यत्। एकादशिनी। सा। ईश्वरा। पुरस्तात्। प्रत्यञ्चम्। यज्ञम्। संमर्दितोरिति सं–मर्दितोः। यत्। पात्नीवतमिति पात्नी–वतम्। मिनोति। यज्ञस्य। प्रतीति। उत्तब्ध्या इत्युत्–स्तब्ध्यै। सयत्वायेति सय–त्वाय (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः)

---

प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामेकादशिनीमपश्यत्तया वै स आयुरिन्द्रियं

वीर्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्यं यजमान आत्मन्धत्ते प्रैवाऽऽग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः ( १ ) सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्म-णैवास्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्र जनयतीन्द्रिय-मेवैन्द्रेणाव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणो मध्यत ऐन्द्रमा लभते मध्यत एवेन्द्रियं यजमाने दधाति ( २ ) पुरस्तादैन्द्रस्य वैश्वदेवमा लभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात्पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमा लभते विड्वै मरुतो विशमेवास्मा अनु बध्नाति यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्वित्यैन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रम् ( ३ ) य एवावगतः सोऽप रुध्यते योऽपरुद्धः सोऽव गच्छति यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेत्प्रजा एव मोहयति यदभिवाहतोऽपां

(पश्वेकादशिनीकथनम्)

वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपां प्रजानामवरुणग्राहाय (४) ॥

(रेतो यजमाने दधाति लोक ऐन्द्रं सप्तत्रिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ।)

---

प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । सः । रिरिचानः । अमन्यत । सः । एताम् । एकादशिनीम् । अपश्यत् । तया । वै । सः । आयुः । इन्द्रियम् । वीर्यम् । आत्मन् । अधत्त । प्रजा इति प्र–जाः । इव । खलु । वै । एषः । सृजते । यः । यजते । सः । एतर्हि । रिरिचानः । इव । यत् । एषा । एकादशिनी । भवति । आयुः । एव । तया । इन्द्रियम् । वीर्यम् । यजमानः । आत्मन् । धत्ते । प्रेति । एव । आग्नेयेन । वापयति । मिथुनम् । सारस्वत्या । करोति । रेतः (१) । सौम्येन । दधाति । प्रेति । जनयति । पौष्णेन । बार्हस्पत्यः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । प्रजा इति प्र–जाः ।

प्रेति । जनयति । वैश्वदेव इति वैश्व—देवः । भवति । वैश्वदेव्य इति वैश्व—देव्यः । वै । प्रजा इति प्र—जाः । प्रजा इति प्र—जाः । एव । अस्मै । प्रेति । जनयति । इन्द्रियम् । एव । ऐन्द्रेण । अवेति । रुन्धे । विशम् । मारुतेन । ओजः । बलम् । ऐन्द्राग्नेनेत्यैन्द्र—अग्नेन । प्रसवायेति प्र—सवाय । सावित्रः । निर्वरुणत्वायेति निर्व-रुण—त्वाय । वारुणः । मध्यतः । ऐन्द्रम् । एति । लभते । मध्यतः । एव । इन्द्रियम् । यजमाने । दधाति (२) । पुरस्तात् । ऐन्द्रस्य । वैश्वदेवमिति वैश्व—देवम् । एति । लभते । वैश्वदेवमिति वैश्व—देवम् । वै । अन्नम् । अन्नम् । एव । पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । अन्नम् । अद्यते । ऐन्द्रम् । आलभ्येत्या—लभ्य । मारुतम् । एति । लभते । विट् । वै । मरुतः । विशम् । एव । अस्मै । अन्विति । बध्नाति । यदि । कामयेत । यः । अवगत इत्यव—गतः । सः । अपेति । रुध्यताम् । यः । अपरुद्ध इत्यप—रुद्धः । सः । अवेति । गच्छतु । इति । ऐन्द्रस्य । लोके । वारुणम् । एति । लभेत । वारुणस्य । लोके । ऐन्द्रम् (३) । यः । एव । अवगत इत्यव—गतः । सः । अपेति । रुध्यते । यः । अपरुद्ध इत्यप—रुद्धः । सः । अवेति । गच्छति । यदि । कामयेत । प्रजा इति प्र—जाः ।

(पात्नीवतपशुकथनम्)

मुह्येयुः। इति। पशून्। व्यतिषजेदिति वि-अतिषजेत्। प्रजा इति प्र-जाः। एव। मोहयति। यत्। अभिवाहत इत्यभि-वाहतः। अपाम्। वारुणम्। आलभेतेत्या-लभेत। प्रजा इति प्र-जाः। वरुणः। गृह्णीयात्। दक्षिणतः। उदश्वम्। एति। लभते। अपवाहत इत्यप-वाहतः। अपाम्। प्रजानामिति प्र-जानाम्। अवरुणग्राहायेत्यवरुण-ग्राहाय (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः।)

---

इन्द्रः पत्निया मनुमयाजयत्तां पर्यग्निकृतामुदसृजत्तया मनुरार्ध्नोद्यत्पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति यज्ञस्य वा अप्रतिष्ठिताद्यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति यदाज्येन पात्नीवतꣳ संस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रति तिष्ठतीष्टं वपया (१) भवत्यनिष्टं वशयाऽथ पात्नीवतेन प्र

चरति तीर्थ एव प्र चरत्यथो एतर्ह्येवास्य यामस्त्वाष्ट्रो भवति त्वष्टा वै रेतसः सिक्तस्य रूपाणि वि करोति तमेव वृषाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति ( २ ) ॥

( वपया षट्त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः । )

---

इन्द्रः । पत्निया । मनुम् । अयाजयत् । ताम् । पर्यग्निकृतामिति पर्यग्नि—कृताम् । उदिति । असृजत् । तया । मनुः । आर्ध्नोत् । यत् । पर्यग्निकृतमिति पर्यग्नि—कृतम् । पात्नीवतमिति पात्नी—वतम् । उत्सृजतीत्युत्—सृजति । याम् । एव । मनुः । ऋद्धिम् । आर्ध्नोत् । ताम् । एव । यजमानः । ऋध्नोति । यज्ञस्य । वै । अप्रतिष्ठितादित्यप्रति—स्थितात् । यज्ञः । परेति । भवति । यज्ञम् । पराभवन्तमिति परा—भवन्तम् । यजमानः । अनु । परेति । भवति । यत् । आज्येन । पात्नीवतमिति पात्नी—वतम् । सꣳस्थापयतीति सं—स्थापयति । यज्ञस्य ।

प्रतिष्ठित्या इति प्रति-स्थित्यै । यज्ञम् । प्रतितिष्ठन्तमिति प्रति-तिष्ठन्तम् । यजमानः । अनु । प्रतीति । तिष्ठति । इष्टम् । वपया ( १ ) । भवति । अनिष्टम् । वशया । अथ । पात्नीवतेनेति पात्नी-वतेन । प्रेति । चरति । तीर्थे । एव । प्रेति । चरति । अथो इति । एतर्हि । एव । अस्य । यामः । त्वाष्ट्रः । भवति । त्वष्टा । वै । रेतसः । सिक्तस्य । रूपाणि । वीति । करोति । तम् । एव । वृषाणम् । पत्नीषु । अपीति । सृजति । सः । अस्मै । रूपाणि । वीति । करोति ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तयदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यः समदं दध्याद्दक्षिणार्धे जुहोत्येषा वै पितॄणां दिक्स्वायामेव दिशि पितॄन्निरवदयत उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति तस्यैव स

शान्तिरवं ( १ ) ईक्षन्ते पवित्रं वै सौम्य आत्मानमेव पवयन्ते य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वाऽवेक्षेत तस्मिन्ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते यो गतमनाः स्यात्सोऽवेक्षेत यन्मे मनः परागतं यद्वा मे अपरागतम्। राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवाऽऽत्मन्दाधार ( २ ) न गतमना भवत्यप वै तृतीयसवने यज्ञः क्रामतीजानादनीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं च दाधारोपाꣳशु यजति मिथुनत्वाय ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टं युवते वरुणो दुरिष्टं क्व तर्हि यज्ञः क्व यजमानो भवतीति यन्मैत्रावरुणीं वशामालभते मित्रेणैव ( ३ ) यज्ञस्य स्विष्टꣳ शमयति वरुणेन दुरिष्टं नाऽऽर्तिमार्छति यजमानो यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्र भिन्तो यन्मैत्रावरुणीं वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै यातयामानि वा एतस्य छन्दाꣳसि य ईजानश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीं वशामालभते छन्दाꣳस्येव

(सौम्यचरुकथनम्)

पुनरा प्रीणात्ययातयामत्वायाथो छन्दःस्वेव रसं दधाति (४)॥

(अर्थ दाधार मित्रेणैव प्रीणाति षट्चं।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः।)

---

घ्नन्ति। वै। एतत्। सोमम्। यत्। अभिषुण्वन्तीत्यभि—सुन्वन्ति। यत्। सौम्यः। भवति। यथा। मृताय। अनुस्तरणीमित्यनु—स्तरणीम्। घ्नन्ति। तादृक्। एव। तत्। यत्। उत्तरार्ध इत्युत्तर—अर्धे। वा। मध्ये। वा। जुहुयात्। देवताभ्यः। समदमिति स—मदम्। दध्यात्। दक्षिणार्ध इति दक्षिण—अर्धे। जुहोति। एषा। वै। पितृणाम्। दिक्। स्वायाम्। एव। दिशि। पितॄन्। निरवदयत इति निः—अवदयते। उद्गातृभ्य इत्युद्गातृ—भ्यः। हरन्ति। सामदेवत्य इति साम—देवत्यः। वै। सौम्यः। यत्। एव। साम्नः। छम्बट्कुर्वन्तीति छम्बट्—कुर्वन्ति। तस्य। एव। सः। शान्तिः। अवेति (१)। ईक्षन्ते। पवित्रम्। वै। सौम्यः। आत्मानम्। एव। पवयन्ते। यः। आत्मानम्। न। परिपश्येदिति परि—पश्येत्। इतासुरितीत—असुः।

स्यात् । अभिदद्विमित्यभि—ददिम् । कृत्वा । अवेति । ईक्षेत । तस्मिन् । हि । आत्मानम् । परिपश्यतीति परि-पश्यति । अथो इति । आत्मानम् । एव । पवयते । यः । गतमना इति गत—मनाः । स्यात् । सः । अवेति । ईक्षेत । यत् । मे । मनः । परागतमिति परा—गतम् । यत् । वा । मे । अपरागतमित्यपरा—गतम् । राज्ञा । सोमेन । तत् । वयम् । अस्मासु । धारयामसि । इति । मनः । एव । आत्मन् । दाधार (२) । न । गतमना इति गत—मनाः । भवति । अपेति । वै । तृतीयसवन इति तृतीय—सवने । यज्ञः । क्रामति । ईजानात् । अनीजानम् । अभीति । आग्नावैष्णव्येत्याग्ना—वैष्णव्या । ऋचा । घृतस्य । यजति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताः । च । एव । यज्ञम् । च । दाधार । उपांश्वि-त्युप—अंशु । यजति । मिथुनत्वायेति मिथुन—त्वाय । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । मित्रः । यज्ञस्य । स्विष्टमिति सु—इष्टम् । युवते । वरुणः । दुरिष्टमिति दुः—इष्टम् । क्व । तर्हि । यज्ञः । क्व । यजमानः । भवति । इति । यत् । मैत्रावरुणीमिति मैत्रा—वरुणीम् । वशाम् । आलभत इत्या—लभते । मित्रेण । एव (३) । यज्ञस्य । स्विष्टमिति सु—इष्टम् । शमयति । वरुणेन ।

दुरिष्टमिति दुः—इष्टम् । न । आर्तिम् । एति । ऋच्छति । यजमानः । यथा । वै । लाङ्गलेन । उर्वराम् । प्रभिन्दन्तीति प्र—भिन्दन्ति । एवम् । ऋक्सामे इत्यृक्—सामे । यज्ञम् । प्रेति । भिन्तः । यत् । मैत्रावरुणीमिति मैत्रा—वरुणीम् । वशाम् । आलभत इत्या—लभते । यज्ञाय । एव । प्रभिन्नायेति प्र—भिन्नाय । मत्यम् । अन्ववास्यतीत्यनु—अवास्यति । शान्त्यै । यातयामानीति यात—यामानि । वै । एतस्य । छन्दाꣳसि । यः । ईजानः । छन्दसाम् । एषः । रसः । यत् । वशा । यत् । मैत्रावरुणीमिति मैत्रा—वरुणीम् । वशाम् । आलभत इत्या—लभते । छन्दाꣳसि । एव । पुनः । एति । प्रीणाति । अयातयामत्वायेत्ययातयाम—त्वाय । अथो इति । छन्दःस्विति छन्दः—सु । एव । रसम् । दधाति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

देवा वा इन्द्रियं वीर्यं१ व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन्तदतिग्राह्याणामतिग्रा-

ह्यत्वं यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं यजमान आत्मन्धत्ते तेज आग्नेयेनेन्द्रियमैन्द्रेण ब्रह्मवर्चसꣳ सौर्येणोपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानि यत्पृष्ठ्येन गृह्णीयात्प्राञ्चं यज्ञं पृष्ठानि सꣳ शृणीयुर्यदुक्थ्ये ( १ ) गृह्णीयात्प्रत्यञ्चं यज्ञमतिग्राह्याः सꣳ शृणीयुर्विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स प्रियास्तनूरप म्यधत्त तदतिग्राह्या अभवन्वितनुस्तस्य यज्ञ इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय देवता वै सर्वाः सदृशीरासन्ता न व्यावृतमगच्छन्ते देवाः ( २ ) एत एतान्ग्रहानपश्यन्तानगृह्णताऽऽग्नेयमग्निरैन्द्रमिन्द्रः सौर्यꣳ सूर्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृतमगच्छन्यस्यैवं विदुष एते ग्रहा गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छतीमे लोका ज्योतिष्मन्तः समावद्वीर्याः कार्या इत्याहुराग्नेयेनास्मिँल्लोके ज्योतिर्धत्त ऐन्द्रेणान्तरिक्ष इन्द्रवायू हि सयुजौ सौर्येणामुष्मिँल्लोके ( ३ ) ज्योतिर्धत्ते ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति समावद्वीर्यानेनान्कुरुत एतान्वै ग्रहान्बम्बाविश्ववयसाववित्तां ताभ्यामिमे लोकाः

(अतिग्राह्यग्रहकथनम्)

परांञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहां गृह्यन्ते प्रास्मां इमे लोकाः परांञ्चश्चार्वाञ्चश्च भान्ति (४) ॥

( उक्थ्ये देवा अमुष्मिँल्लोक एकान्नचत्वारिँशच्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

देवाः । वै । इन्द्रियम् । वीर्यम् । वीर्तिं । अभजन्त । ततः । यत् । अत्यशिष्यतेत्यति–अशिष्यत । तत् । अतिग्राह्या इत्यति–ग्राह्याः । अभवन् । तत् । अतिग्राह्याणामित्यति–ग्राह्याणाम् । अतिग्राह्यत्वमित्यतिग्राह्य–त्वम् । यत् । अतिग्राह्या इत्यति–ग्राह्याः । गृह्यन्ते । इन्द्रियम् । एव । तत् । वीर्यम् । यजमानः । आत्मन् । धत्ते । तेजः । आग्नेयेन । इन्द्रियम् । ऐन्द्रेण । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । सौर्येण । उपस्तम्भनमित्युप–स्तम्भनम् । वै । एतत् । यज्ञस्य । यत् । अतिग्राह्या इत्यति–ग्राह्याः । चक्रे इति । पृष्ठानि । यत् । पृष्ठ्ये । न । गृह्णीयात् । प्राञ्चम् । यज्ञम् । पृष्ठानि । समिति । शृणीयुः । यत् । उक्थ्ये (१) । गृह्णीयात् । प्रत्यञ्चम् । यज्ञम् । अतिग्राह्याः

इत्यति–ग्राह्याः । समिति । शृणीयुः । विश्वजितीति विश्व–जिति । सर्वपृष्ठ इति सर्व–पृष्ठे । ग्रहीतव्याः । यज्ञस्य । सवीर्यत्वायेति सवीर्य–त्वाय । प्रजापतिरिति प्रजा–पतिः । देवेभ्यः । यज्ञान् । व्यादिशदिति वि–आदिशत् । सः । प्रियाः । तनूः । अप । नीति । अधत्त । तत्। अतिग्राह्या इत्यति–ग्राह्याः । अभवन् । वितनुरिति वि–तनुः। तस्य । यज्ञः । इति । आहुः । यस्य । अतिग्राह्या इत्यति–ग्राह्याः । न । गृह्यन्ते । इति । अपीति । अग्निष्टोम इत्यग्नि–स्तोमे । ग्रहीतव्याः । यज्ञस्य । सतनुत्वायेति सतनु–त्वाय । देवताः । वै । सर्वाः । सदृशीः । आसन् । ताः । न । व्यावृतमिति वि–आवृतम् । अगच्छन् । ते । देवाः ( २ ) । एते । एतान् । ग्रहान् । अपश्यन् । तान् । अगृह्णत । आग्नेयम् । अग्निः । ऐन्द्रम् । इन्द्रः । सौर्यम् । सूर्यः । ततः । वै । ते । अन्याभिः । देवताभिः । व्यावृतमिति वि–आवृतम् । अगच्छन् । यस्य । एवम् । विदुषः । एते । ग्रहाः । गृह्यन्ते । व्यावृतमिति वि–आवृतम् । एव । पाप्मना । भ्रातृव्येण । गच्छति । इमे । लोकाः । ज्योतिष्मन्तः । समावद्वीर्या इति समावत्–वीर्याः । कार्याः । इति । आहुः । आग्नेयेन । अस्मिन् । लोके । ज्योतिः । धत्ते । ऐन्द्रेण । अन्तरिक्षे ।

(अदाभ्यग्रहकथनम्)

इन्द्रवायू इतीन्द्र—वायू । हि । सयुजाविति स—युजौ । सोर्येण । अमुष्मिन् । लोके (३) । ज्योतिः । धत्ते । ज्योतिष्मन्तः । अस्मै । इमे । लोकाः । भवन्ति । समावद्वीर्यानिति समावत्—वीर्यान् । एनान् । कुरुते । एतान् । वै । ग्रहान् । बम्बाविश्ववयसाविति बम्बा—विश्ववयसौ । अविन्ताम् । ताभ्याम् । इमे । लोकाः । पराञ्चः । च । अर्वाञ्चः । च । प्रेति । अभुः । यस्य । एवम् । विदुषः । एते । ग्रहाः । गृह्यन्ते । प्रेति । अस्मै । इमे । लोकाः । पराञ्चः । च । अर्वाञ्चः । च । भान्ति (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ।)

---

देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दाꣳसि सवनानि समस्थापयन्ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यद्वै देवा असुरानदाभ्येनादभ्नुवन्तददाभ्यस्यादाभ्यत्वं य एवं वेद दभ्नोत्येव भ्रातृव्यं नैनं भ्रातृव्यो दभ्नोति (१)

एषा वै प्रजापतेरतिमोक्षिणी नाम तनूर्यददाभ्य उपनद्धस्य गृह्णात्यातिमुक्त्या अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येन जीवन्त्सुवर्गं लोकमेतीति जीवग्रहो वा एष यद-दाभ्योऽनभिषुतस्य गृह्णाति जीवन्तमेवैनꣳ सुवर्गं लोकं गमयति वि वा एतद्यज्ञं छिन्दन्ति यददाभ्ये सꣳस्थापयन्त्यꣳशूनपि सृजति यज्ञस्य संतत्यै (२)॥

(दध्नोत्यनभिषुतस्य गृह्णात्येकान्नविꣳशतिश्च)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ।)

---

देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । अदाभ्ये । छन्दाꣳसि । सवनानि । समिति । अस्थापयन् । ततः । देवाः । अभवन् । परेति । असुराः । यस्य । एवम् । विदुषः । अदाभ्यः । गृह्यते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । यत् । वै । देवाः । असुरान् । अदाभ्येन । अदभ्नुवन् ।

तत्। अदाभ्यस्य। अदाभ्यत्वमित्यदाभ्य-त्वम्। यः।
एवम्। वेद। दभ्नोति। एव। भ्रातृव्यम्। न। एनम्।
भ्रातृव्यः। दभ्नोति (१)। एषा। वै। प्रजापतेरिति
प्रजा-पतेः। अतिमोक्षिणीत्यति-मोक्षिणी। नाम। तनूः।
यत्। अदाभ्यः। उपनद्धस्येत्युप-नद्धस्य। गृह्णाति।
अतिमुक्त्या इत्यति-मुक्त्यै। अतीति। पाप्मानम्।
भ्रातृव्यम्। मुच्यते। यः। एवम्। वेद। घ्नन्ति। वै।
एतत्। सोमम्। यत्। अभिषुण्वन्तीत्यभि-सुन्वन्ति।
सोमे। हन्यमाने। यज्ञः। हन्यते। यज्ञे। यजमानः।
ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। किम्। तत्।
यज्ञे। यजमानः। कुरुते। येन। जीवन्। सुवर्गमिति
सुवः-गम्। लोकम्। एति। इति। जीवग्रह इति जीव-
ग्रहः। वै। एषः। यत्। अदाभ्यः। अनभिषुतस्येत्यनभि-
सुतस्य। गृह्णाति। जीवन्तम्। एव। एनम्। सुवर्गमिति
सुवः-गम्। लोकम्। गमयति। वीति। वै। एतत्।
यज्ञम्। छिन्दन्ति। यत्। अदाभ्ये। सꣳस्थापयन्तीति
सं-स्थापयन्ति। अꣳशून्। अपीति। सृजति। यज्ञस्य।
संतत्या इति सं-तत्यै (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके
षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ षष्ठाष्टके षष्ठप्रपाठके दशमोऽनुवाकः )

---

देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत्तमगृह्णीत तेन वै स आर्ध्नोद्यस्यैवं विदुषोऽꣳशुर्गृह्यतं ऋध्नोत्येव सकृदभिषुतस्य गृह्णाति सकृद्धि स तेनाऽऽर्ध्नोन्मनसा गृह्णाति मन इव हि प्रजापतिः प्रजापतेराप्त्या औदुम्बरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे चतुःस्रक्ति भवति दिक्षु ( १ ) एव प्रति तिष्ठति यो वा अꣳशोरायतनं वेदाऽऽयतनवान्भवति वामदेव्यमिति साम तद्वा अस्याऽऽयतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति यदध्वर्युरꣳशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्येताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्येतानवानं गृह्णाति सैवास्यर्धिर्हिरण्यमभि व्यनित्यमृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभि धिनोति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति ( २ ) ॥

( दिक्ष्वनिति विꣳशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके दशमोऽनुवाकः। )

---

देवाः। वै। प्रबाहुगिति प्र-बाहुक्। ग्रहान्। अगृह्णत। सः। एतम्। प्रजापतिरिति प्रजा-पतिः। अꣳशुम्। अपश्यत्। तम्। अगृह्णीत। तेन। वै। सः। आर्ध्नोत्। यस्य। एवम्। विदुषः। अꣳशुः। गृह्यते। ऋध्नोति। एव। सकृदभिषुतस्येति सकृत्-अभिषुतस्य। गृह्णाति। सकृत्। हि। सः। तेन। आर्ध्नोत्। मनसा। गृह्णाति। मनः। इव। हि। प्रजापतिरिति प्रजा-पतिः। प्रजापतेरिति प्रजा-पतेः। आप्त्यै। औदुम्बरेण। गृह्णाति। ऊर्क्। वै। उदुम्बरः। ऊर्जम्। एव। अवेति। रुन्धे। चतुःस्रक्तीति चतुः-स्रक्ति। भवति। दिक्षु (१)। एव। प्रतीति। तिष्ठति। यः। वै। अꣳशोः। आयतनमित्या-यतनम्। मनसा। गायमानः। गृह्णाति। आयतनवानित्यायतन-वान्। एव। भवति। यत्। अध्वर्युः। अꣳशुम्। गृह्णन्। न। अर्धयेत्। उभाभ्याम्। न। ऋध्येत। अध्वर्यवे। च। यजमानाय। च। यत्। अर्धयेत्। उभाभ्याम्। ऋध्येत। अनवानमित्यनव-अनम्। गृह्णाति। सा। एव। अस्य। ऋद्धिः। हिरण्यम्। अभि। वीति। अनिति। अमृतम्। वै। हिरण्यम्। आयुः।

प्राण इति प्र—अनः । आयुषा । एव । अमृतम् । अभीति । धिनोति । शतमानमिति शत—मानम् । भवति । शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ षष्ठाष्टके षष्ठप्रपाठके एकादशोऽनुवाकः । )

---

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स रिरिचानोऽमन्यत स यज्ञाना॑ षोडशधेन्द्रियं वीर्यमात्मानमभि समक्खिदत्तत्षोडश्यभवन्न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडश॑ स्तोत्र॑ षोडश॑ शस्त्रं तेन षोडशी तत्षोडशिनः षोडशित्वं यत्षोडशी गृह्यत इन्द्रियमेव तद्वीर्यं यजमान आत्मन्धत्ते देवेभ्यो वै सुवर्गो लोकः ( १ ) न प्राभवत्त एत॑ षोडशिनमपश्यन्तमगृह्णत ततो वै तेभ्यः सुवर्गो लोकः प्राभवद्यत्षोडशी गृह्यते सुवर्गस्य लोकस्याभिजित्या इन्द्रो वै देवानामानुजावर आसीत्स प्रजापतिमुपाधावत्तस्मा एत॑ षोडशिनं प्रायच्छत्तमगृह्णीत ततो वै सोऽग्रं देवतानां पर्यैयस्यैवं विदुषः षोडशी गृह्यते ( २ )

(षोडशिग्रहकथनम्)

अग्रमेव समानानां पर्येति प्रातःसवने गृह्णाति वज्रो
वै षोडशी वज्रः प्रातःसवनꣳ स्वादेवैनं योनेर्निर्गृ-
ह्णाति सवनेसवनेऽभि गृह्णाति सवनात्सवनादेवैनं प्र
जनयति तृतीयसवने पशुकामस्य गृह्णीयाद्वज्रो वै
षोडशी पशवस्तृतीयसवनं वज्रेणैवास्मै तृतीयसवना-
त्पशूनव रुन्धे नोक्थ्ये गृह्णीयात्प्रजा वै पशव
उक्थानि यदुक्थ्ये (३) गृह्णीयात्प्रजां पशूनस्य
निर्दहेदतिरात्रे पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी
वज्रेणैवास्मै पशूनवरुध्य रात्रियोपरिष्टाच्छमयत्यप्य-
ग्निष्टोमे राजन्यस्य गृह्णीयाद्व्यावृत्कामो हि राजन्यो
यजते साह्न एवास्मै वज्रं गृह्णाति स एनं वज्रो
भूत्वा इन्धे निर्वा दहत्येकविꣳशꣳ स्तोत्रं भवति
प्रतिष्ठित्यै हरिवच्छस्यत इन्द्रस्य प्रियं धाम (४)
उपाऽऽप्नोति कनीयाꣳसि वै देवेषु छन्दाꣳस्यास-
ञ्ज्यायाꣳस्यसुरेषु ते देवाः कनीयसा छन्दसा ज्याय-
श्छन्दोऽभि व्यशꣳसन्ततो वै तेऽसुराणां लोकमवृञ्जत
यत्कनीयसा छन्दसा ज्यायश्छन्दोऽभि विशꣳसति
भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते षडक्षराण्यति रेचयन्ति
षड्वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्वाण्यव
कल्पयन्ति (५) चतुष्पद एव पशूनव रुन्धे द्वे

उत्तरे द्विपदे एवावं रुन्धेऽनुष्टुभमभि सं पादयन्ति वाग्वा अनुष्टुप्तस्मात्प्राणानां वागुत्तमा समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोत्येतस्मिन्वै लोक इन्द्रो वृत्रमहन्त्साक्षादेव वज्रं भ्रातृव्याय प्र हरत्यरुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृद्ध्यै ( ६ ) ॥

( लोको विदुर्षः षोडशी गृह्यते यदुक्थ्यें धाम कल्पयन्ति सप्तचत्वारिꣳशच्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

सुवर्गाय यद्दाक्षिणानि समिष्टयजूꣳष्यवभृथयजूꣳषि स्फ्येन वेदिं प्रजापतिरिन्द्रो घ्नन्ति देवा वा इन्द्रियं देवा वा अदाभ्ये देवा वै प्रवाहुक्प्रजापतिः स रिरिचानः स यज्ञानाꣳ षोडशैकादश ॥ ११ ॥

सुवर्गायं यजति प्रजाः सौम्येन गृह्णीयात्प्रत्यञ्चं गृह्णीयात्प्रजा पशून्त्रिचत्वारिꣳशत् ॥ ४३ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां षष्ठाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

---

(अथ षष्ठाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः।)

---

प्रजापतिरिति प्रजा–पतिः। देवेभ्यः। यज्ञान्। व्यादिशदिति वि–आदिशत्। सः। रिरिचानः। अमन्यत। सः। यज्ञानाम्। षोडशधेति षोडश–धा। इन्द्रियम्। वीर्यम्। आत्मानम्। अभि। समिति। अक्खिदत्। तत्। षोडशी। अभवत्। न। वै। षोडशी। नाम। यज्ञः। अस्ति। यत्। वाव। षोडशम्। स्तोत्रम्। षोडशम्। शस्त्रम्। तेन। षोडशी। तत्। षोडशिनः। षोडशित्वमिति षोडशि–त्वम्। यत्। षोडशी। गृह्यते। इन्द्रियम्। एव। तत्। वीर्यम्। यजमानः। आत्मन्। धत्ते। देवेभ्यः। वै। सुवर्ग इति सुवः–गः। लोकः (१)। न। प्रेति। अभवत्। ते। एतम्। षोडशिनम्। अपश्यन्। तम्। अगृह्णत। ततः। वै। तेभ्यः। सुवर्ग इति सुवः–गः। लोकः। प्रेति। अभवत्। यत्। षोडशी। गृह्यते। सुवर्गस्येति सुवः–गस्य। लोकस्य। अभिजित्या इत्यभि–जित्यै। इन्द्रः। वै। देवानाम्। आनुजावर इत्यानु–जावरः। आसीत्। सः। प्रजापतिमिति प्रजा–पतिम्। उपेति। अधावत्। तस्मै। एतम्। षोडशिनम्। प्रेति। अयच्छत्। तम्। अगृह्णीत। ततः। वै। सः। अग्रम्। देवतानाम्। परीति। ऐत्। यस्य। एवम्।

विदुषः । षोडशी । गृह्यते ( २ ) । अग्रम् । एव । समानानाम् । परीति । एति । प्रातःसवन इति प्रातः—सवने । गृह्णाति । वज्रः । वै । षोडशी । वज्रः । प्रातःसवनमिति प्रातः—सवनम् । स्वात् । एव । एनम् । योनेः । निरिति । गृह्णाति । सवनेसवन इति सवने—सवने । अभीति । गृह्णाति । सवनात्सवनादिति सवनात्—सवनात् । एव । एनम् । प्रेति । जनयति । तृतीयसवन इति तृतीय—सवने । पशुकामस्येति पशु—कामस्य । गृह्णीयात् । वज्रः । वै । षोडशी । पशवः । तृतीयसवनमिति तृतीय—सवनम् । वज्रेण । एव । अस्मै । तृतीयसवनादिति तृतीय—सवनात् । पशून् । अवेति । रुन्धे । न । उक्थ्ये । गृह्णीयात् । प्रजेति प्र—जा । वै । पशवः । उक्थानि । यत् । उक्थ्ये ( ३ ) । गृह्णीयात् । प्रजामिति प्र—जाम् । पशून् । अस्य । निरिति । दहेत् । अतिरात्र इत्यति—रात्रे । पशुकामस्येति पशु—कामस्य । गृह्णीयात् । वज्रः । वै । षोडशी । वज्रेण । एव । अस्मै । पशून् । अवरुध्येत्यव—रुध्य । रात्रिया । उपरिष्टात् । शमयति । अपीति । अग्निष्टोम इत्यग्नि—स्तोमे । राजन्यस्य । गृह्णीयात् । व्यावृत्काम इति व्यावृत्—कामः । हि । राजन्यः । यजते । साह्न इति स—अह्ने । एव । अस्मै । वज्रम् । गृह्णाति । सः । एनम् । वज्रः । भूत्यै ।

इन्धे। निरिति। वा। दहति। एकविꣳशमित्येक—विꣳशम्। स्तोत्रम्। भवति। प्रतिष्ठित्या इति प्रति—स्थित्यै। हरिवदिति हरि—वत्। शस्यते। इन्द्रस्य। प्रियम्। धाम (४)। उपेति। आप्नोति। कनीयाꣳसि। वै। देवेषु। छन्दाꣳसि। आसन्। ज्यायाꣳसि। असुरेषु। ते। देवाः। कनीयसा। छन्दसा। ज्यायः। छन्दः। अभि। वीति। अशꣳसन्। ततः। वै। ते। असुराणाम्। लोकम्। अवृञ्जत। यत्। कनीयसा। छन्दसा। ज्यायः। छन्दः। अभीति। विशꣳसतीति वि—शꣳसति। भ्रातृव्यस्य। एव। तत्। लोकम्। वृङ्क्ते। षट्। अक्षराणि। अतीति। रेचयन्ति। षट्। वै। ऋतवः। ऋतून्। एव। प्रीणाति। चत्वारि। पूर्वाणि। अवेति। कल्पयन्ति (५)। चतुष्पद इति चतुः—पदः। एव। पशून्। अवेति। रुन्धे। द्वे इति। उत्तरे इत्युत्—तरे। द्विपद इति द्वि—पदः। एव। अवेति। रुन्धे। अनुष्टुभमित्यनु—स्तुभम्। अभि। समिति। पादयन्ति। वाक्। वै। अनुष्टुबित्यनु—स्तुप्। तस्मात्। प्राणानामिति प्र—अनानाम्। वाक्। उत्तमेत्युत्—तमा। समयाविषित इति समया—विषिते। सूर्ये। षोडशिनः। स्तोत्रम्। उपाकरोतीत्युप—आकरोति। एतस्मिन्। वै। लोके। इन्द्रः। वृत्रम्। अहन्। साक्षादिति स—अक्षात्।

एव । वज्रम् । भ्रातृव्याय । प्रेति । हरति । अरुणपिशङ्ग इत्यरुण-पिशङ्गः । अश्वः । दक्षिणा । एतत् । वै । वज्रस्य । रूपम् । समृद्ध्या इति सम्-ऋद्ध्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे षष्ठाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

---

मूलक्रमेण षष्ठाष्टके—प्र० ६ अ० ६६

भाष्यक्रमेण षष्ठकाण्डे—प्र० ६ अ० ६६

मूलक्रमेणाऽऽदितः समष्ट्यङ्काः— अष्ट० ६ प्र० ३९ अ० ५३४

भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ६ प्र० ३९ अ० ५२९

समाप्तोऽयं सपदपाठकृष्णयजुर्वेदीयतैत्तिरीयसंहितायाः
षष्ठः काण्डः ।

अथ सभाष्यसपदपाठकृष्णयजुर्वेदीयतैत्तिरीयसंहितायां

## सप्तमं काण्डम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
चयनब्राह्मणं काण्डे पञ्चमे स्फुटमीरितम् ।
षष्ठे तु काण्डे सोमस्य मन्त्राणां ब्राह्मणं क्रमात् ॥ २ ॥
उक्तं मन्त्रास्त्वाद्यकाण्डे द्वितीयादिप्रपाठकैः ।
त्रिभिरुक्ता ब्राह्मणं च व्याख्यातं तत्र तैः सह ॥ ३ ॥
षट्स्युः प्रपाठकाः षष्ठे काण्डे प्रत्येकमेषु च ।
एकादशानुवाकाः स्युस्तदर्थान्वच्म्यनुक्रमात् ॥ ४ ॥
प्राग्वंशं क्षुरकर्मादिसंस्कृतः प्रविशेदिति ।
आद्ये प्रोक्तं द्वितीये तु दीक्षाहुतय ईरिताः ॥ ५
कृष्णाजिनेन वस्त्रेण दीक्षा मेखलया तथा ।
कुर्यात्तृतीये तत्प्रोक्तं तथा कृष्णविषाणया ॥ ६ ॥
चतुर्थे दण्डमादाय मुष्टीकरणवाग्यमौ ।
कृत्वाऽसौ दीक्षितो भूत्वा नियमाननु तिष्ठति ॥ ७ ॥
पञ्चमे प्रायणीया स्यात्षष्ठे त्वरुणया क्रयः ।
सप्तमे तत्प्रकारः स्यादष्टमे पदसंग्रहः ॥ ८ ॥
सोमोन्मानं तु नवमे दशमेऽन्यैश्च तत्क्रयः ।
एकादशे क्रीतसोमं शकटेन नयेदिति ॥ ९ ॥
प्रपाठकेऽस्मिन्प्रथमेऽनुवाकार्थाः समीरिताः ।
प्रपाठके द्वितीयेऽत्रानुवाकार्थान्क्रमाद्ब्रुवे ॥ १० ॥
आतिथ्येष्टिरिहाऽऽद्ये स्यात्तानूनप्त्रं द्वितीयके ।
तथाऽवान्तरदीक्षा च तृतीये तूपसद्भवेत् ॥ ११ ॥
वेदिरुक्ता चतुर्थेऽथ पञ्चमे व्रतनिर्णयः ।
षष्ठे काम्या यागभूमिः सप्तमे वेदिरुत्तरा ॥ १२ ॥

ऽघारणं त्वष्टमे स्याद्धविर्धानमनन्तरे ।
दशमे तु सदः प्रोक्तं प्रोक्ता उपरवाः परे ॥ १३ ॥
प्रपाठकेऽनुवाकार्था द्वितीयेऽस्मिन्नुदीरिताः ।
तृतीयस्याऽऽदिमे सर्वे धिष्णियाः स्युर्द्वितीयके ॥ १४ ॥
अग्नीषोमप्रणयनं तृतीये यूपखण्डनम् ।
चतुर्थे स्थापयेद्यूपं बर्हिं मन्नाति पञ्चमे ॥ १५ ॥
नियुनक्ति पशुं षष्ठे सामिधेन्यस्तु सप्तमे ।
आघारौ च प्रयाजाश्च ह्यष्टमे हिंसनं पशोः ॥ १६ ॥
नवमे स्याद्वपाहोमोऽवदानानि त्वनन्तरे ।
एकादशे त्वनूयाजास्तृतीयोऽयं प्रपाठकः ॥ १७ ॥
गुदयागश्चतुर्थाद्ये वसतीवर्य ईरिताः ।
द्वितीयेऽथ तृतीये सोमोपावहरणं श्रुतम् ॥ १८ ॥
सोमोन्मानं चतुर्थे स्यात्पञ्चमादिषु सप्तसु ।
उपांशुप्रमुखा आग्रयणान्ता हि ग्रहाः श्रुताः ॥ १९ ॥
उपांशुरन्तर्यामश्च तृतीयश्चैन्द्रवायवः ।
मैत्रावरुणनामा स्यादाश्विनाख्यग्रहस्तथा ॥ २० ॥
शुक्रामन्थिग्रहावाग्रयणस्तुर्यः प्रपाठकः ।
उक्थ्यग्रहः पञ्चमाद्ये द्वितीये ध्रुव ईरितः ॥ २१ ॥
ऋतुग्रहास्तृतीये स्युरैन्द्राग्नस्तु चतुर्थके ।
मरुत्वतीया माहेन्द्रश्चेत्येते पञ्चमे श्रुताः ॥ २२ ॥
स्यादादित्यग्रहः षष्ठे सावित्रः सप्तमे तथा ।
वैश्वदेवोऽथाष्टमे हि श्रुतः पात्नीवतो ग्रहः ॥ २३ ॥
हारियोजनसंज्ञस्तु नवमे ग्रह ईरितः ।
क्षये त्वाग्रयणादीनां दशमे स्यात्पुनर्ग्रहः ॥ २४ ॥
*सोमपात्रस्तुतिस्त्वन्त्ये पञ्चमोऽयं प्रपाठकः ।
षष्ठाद्ये दक्षिणाहोमः समिष्टयजुरुत्तरे ॥ २५ ॥
तृतीयेऽवभृथस्तुर्ये यूपैकादशिनी स्मृता ।
पश्वेकादशिनी तूर्ध्वे षष्ठे पात्नीवतः पशुः ॥ २६ ॥

---

* एतदर्धस्थाने ख च. पुस्तकयोः 'सवनीयपुरोडाशविधिरेकादशे स्थितः । प्रपाठके पञ्चमेऽनुवाकार्था एवमीरिताः' । एतादृशः श्लोको वर्तते ।

१ क. °णादान स° ।

(ज्योतिष्टोमतदाद्यसंस्थारूपाग्निष्टोमयोर्विधानम् )

सौम्यश्चरुः सप्तमे स्यादतिग्राह्यास्तथाऽष्टमे ।
अदाभ्यो नवमे तद्वदंशुस्तु दशमे श्रुतः ॥ २७ ॥
षोडश्येकादशे प्रोक्त एवं षष्ठः समापितः ।
एकाहाहीनसत्राणि सोमभेदा इमे त्रयः ॥ २८ ॥
वर्ण्यन्ते सप्तमे काण्डे मन्त्राः केऽप्यश्वमेधगाः ।
ज्योतिष्टोमः सोमयागप्रकृतिः स तु सप्तधा ॥ २९ ॥
अग्निष्टोमो ज्योतिर्भेदैर्मूलप्रकृतिरादिमः ।
स्तोमा ज्योतींषि यस्यासौ ज्योतिष्टोमः स ईरितः ॥ ३० ॥
त्रिवृत्पञ्चदशः सप्तदशः स्तोमास्त्रयो मताः ।
तथैकविंश एतानि ज्योतींषीत्यभ्यधाच्छ्रुतिः ॥ ३१ ॥
सोऽयमेतादृशो ज्योतिष्टोम आदौ विधीयते ॥

(इति भाष्यकारोपोद्घातः ।)

(अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमोऽष्टकः ।)

(तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः ।)

हरिः ॐ ।

प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट्छन्दसां ज्योतिर्विराड्वाचोऽग्नौ सं तिष्ठते विराजमभि सं पद्यते तस्मात्तज्ज्योतिरुच्यते द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च द्वौ माध्यंदिनꣳ सवनं यथा चक्षुश्च श्रोत्रं च द्वौ तृतीयसवनं यथा वाक्च प्रतिष्ठा च पुरुषसंमितो वा एष यज्ञोऽस्थूरिः (१) यं कामं कामयते तमेतेनाभ्यश्नुते सर्वꣳ ह्य-स्थूरिणाऽभ्यश्नुतेऽग्निष्टोमेन वै प्रजापतिः प्रजा

असृजत ता अग्निष्टोमेनैव पर्यगृह्णात्तासां परिगृहीतानामश्वतरोऽत्यप्रवत तस्यानुहाय रेत आऽदत्त तद्गर्दभे न्यमार्ट्तस्माद्गर्दभो द्विरेता अथो आहुर्वडबायां न्यमार्डिति तस्माद्वडबा द्विरेता अथो आहुरोषधीषु ( २ ) न्यमार्डिति तस्मादोषधयोऽनभ्यक्ता रेभन्त्यथो आहुः प्रजासु न्यमार्डिति तस्माद्यमौ जायेते तस्मादश्वतरो न प्र जायत आत्तरेता हि तस्माद्बर्हिष्यनवक्लृप्तः सर्ववेदसे वा सहस्रे वाऽवक्लृप्तोऽति ह्यप्रवत य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति ( ३ ) प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजत प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथंतरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्तोरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप्छन्दो बृहत् ( ४ ) साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त मध्यतः सप्तदशं निरमिमीत तं विश्वे देवा देवता अन्वसृज्यन्त जगती

छन्दो वैरूपꣳ साम वैश्यो मनुष्याणां गावः पशूनां तस्मात्त आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त पत्त एकविꣳशं निरमिमीत तमनुष्टुप्छन्दः ( ५ ) अन्वसृज्यत वैराजꣳ साम शूद्रो मनुष्याणामश्वः पशूनां तस्मात्तौ भूतसंक्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत तस्मात्पादावुप जीवतः पत्तो ह्यसृज्येतां प्राणा वै त्रिवृदर्धमासाः पञ्चदशः प्रजापतिः सप्तदशस्त्रय इमे लोका असावादित्य एकविꣳश एतस्मिन्वा एते श्रिता एतस्मिन्प्रतिष्ठिता य एवं वेदैतस्मिन्नेव श्रयत एतस्मिन्प्रति तिष्ठति ( ६ ) ॥

( अस्थूरिरोषधीषु ज्येष्ठयज्ञ इति बृहदनुष्टुप्छन्दः प्रतिष्ठिता नव च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमोऽष्टकः । )

---

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

प्रजननमिति प्र-जननम् । ज्योतिः । अग्निः । देव-

तानाम् । ज्योतिः । विराडिति वि—राट् । छन्दसाम् । ज्योतिः । विराडिति वि—राट् । वाचः । अग्नौ । समिति । तिष्ठते । विराजमिति वि—राजम् । अभि । समिति । पद्यते । तस्मात् । तत् । ज्योतिः । उच्यते । द्वौ । स्तोमौ । प्रातःसवनमिति प्रातः—सवनम् । वहतः । यथा । प्राण इति प्र—अनः । च । अपान इत्यप—अनः । च । द्वौ । माध्यंदिनम् । सवनम् । यथा । चक्षुः । च । श्रोत्रम् । च । द्वौ । तृतीयसवनमिति तृतीय—सवनम् । यथा । वाक् । च । प्रतिष्ठेति प्रति—स्था । च । पुरुषसंमित इति पुरुष—संमितः । वै । एषः । यज्ञः । अस्थूरिः ( १ ) । यम् । कामम् । कामयते । तम् । एतेन । अभीति । अश्नुते । सर्वम् । हि । अस्थूरिणा । अभ्यश्नुत इत्यभि—अश्नुते । अग्निष्टोमेनेत्यग्नि—स्तोमेन । वै । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । ताः । अग्निष्टोमेनेत्यग्नि—स्तोमेन । एव । परीति । अगृह्णात् । तासाम् । परिगृहीतानामिति परि—गृहीतानाम् । अश्वतरः । अतीति । अप्रवत । तस्य । अनुहायेत्यनु—हाय । रेतः । एति । अदत्त । तत् । गर्दभे । नीति । अमार्ट् । तस्मात् । गर्दभः । द्विरेता इति द्वि—रेताः । अथो इति । आहुः । वडबायाम् । नीति । अमार्ट् । इति । तस्मात् । वडबा । द्विरेता इति

द्वि-रेताः। अथो इति। आहुः। ओषधीषु (२)। नीति। अमार्ट्। इति। तस्मात्। ओषधयः। अनभ्यक्ता इत्यनभि-अक्ताः। रेभन्ति। अथो इति। आहुः। प्रजास्विति प्र-जासु। नीति। अमार्ट्। इति। तस्मात्। यमौ। जायेते इति। तस्मात्। अश्वतरः। न। प्रेति। जायते। आत्तरेता इत्यात्त-रेताः। हि। तस्मात्। बर्हिषि। अनवक्लृप्त इत्यनव-क्लृप्तः। सर्ववेदस इति सर्व-वेदसे। वा। सहस्रे। वा। अवक्लृप्त इत्यव-क्लृप्तः। अतीति। हि। अप्रवत। यः। एवम्। विद्वान्। अग्निष्टोमेनेत्यग्नि-स्तोमेन। यजते। प्रेति। अजाताः। प्रजा इति प्र-जाः। जनयति। परीति। प्रजाता इति प्र-जाताः। गृह्णाति। तस्मात्। आहुः। ज्येष्ठयज्ञ इति ज्येष्ठ-यज्ञः। इति (३)। प्रजापतिरिति प्रजा-पतिः। वाव। ज्येष्ठः। सः। हि। एतेन। अग्रे। अयजत। प्रजापतिरिति प्रजा-पतिः। अकामयत। प्रेति। जायेय। इति। सः। मुखतः। त्रिवृतमिति त्रि-वृतम्। निरिति। अमिमीत। तम्। अग्निः। देवता। अन्विति। असृज्यत। गायत्री। छन्दः। रथंतरमिति रथं-तरम्। साम। ब्राह्मणः। मनुष्याणाम्। अजः। पशूनाम्। तस्मात्। ते। मुख्याः। मुखतः। हि। असृज्यन्त। उरसः। बाहुभ्यामिति बाहु-भ्याम्। पञ्चदश-

मिति पञ्च–दशम् । निरिति । अमिमीत । तम् । इन्द्रः । देवता । अन्विति । असृज्यत । त्रिष्टुप् । छन्दः । बृहत् ( ४ ) । साम । राजन्यः । मनुष्याणाम् । अविः । पशूनाम् । तस्मात् । ते । वीर्यावन्त इति वीर्य–वन्तः । वीर्यात् । हि । असृज्यन्त । मध्यतः । सप्तदशमिति सप्त–दशम् । निरिति । अमिमीत । तम् । विश्वे । देवाः । देवताः । अन्विति । असृज्यन्त । जगती । छन्दः । वैरूपम् । साम । वैश्यः । मनुष्याणाम् । गावः । पशूनाम् । तस्मात् । ते । आद्याः । अन्नधानादित्यन्न–धानात् । हि । असृज्यन्त । तस्मात् । भूयाꣳसः । अन्येभ्यः । भूयिष्ठाः । हि । देवताः । अन्विति । असृज्यन्त । पत्तः । एकविꣳशमित्येक–विꣳशम् । निरिति । अमिमीत । तम् । अनुष्टुबित्यनु–स्तुप् । छन्दः ( ५ ) । अन्विति । असृज्यत । वैराजम् । साम । शूद्रः । मनुष्याणाम् । अश्वः । पशूनाम् । तस्मात् । तौ । भूतसंक्रामिणाविति भूत–संक्रामिणौ । अश्वः । च । शूद्रः । च । तस्मात् । शूद्रः । यज्ञे । अनवक्लृप्त इत्यनव–क्लृप्तः । न । हि । देवताः । अन्विति । असृज्यत । तस्मात् । पादौ । उपेति । जीवतः । पत्तः । हि । असृज्येताम् । प्राणा इति प्र–अनाः । वै । त्रिवृदिति त्रि–वृत् । अर्धमासा इत्यर्ध–मासाः । पञ्चदश इति पञ्च–

दृशः। प्रजापतिरिरिति प्रजा—पतिः। सप्तदश इति सप्त—दशः। त्रयः। इमे। लोकाः। असौ। आदित्यः। एक-विंशश इत्येक—विंशशः। एतस्मिन्। वै। एते। श्रिताः। एतस्मिन्। प्रतिष्ठिता इति प्रति—स्थिताः। यः। एवम्। वेद। एतस्मिन्। एव। श्रयते। एतस्मिन्। प्रतीति। तिष्ठति (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः।)

---

तमेतं ज्योतिष्टोमं विधातुं दृष्टान्तत्रयेण ज्योतिष्ट्वं तावद्दर्शयति—

प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट्छन्दसां ज्योतिर्विराड्वाचोऽग्नौ सं तिष्ठते विराजमभि सं पद्यते तस्मात्तज्ज्योतिरुच्यते, इति।

मनुष्याणां मध्ये प्रजोत्पादनं[1] ज्योतिः। अपत्यरहितास्तु म्लानमुखा-[...]पःसदृशा भवन्ति। देवतानां मध्ये ज्योतिरग्निः। अन्यासां देवतानां [...]मध्ये यथा दीपापेक्षा नैवमग्नेरन्यापेक्षाऽस्ति। छन्दसां मध्ये विराट्छन्दो [...]ोतिः। दीप्तिवाचकेन राजतिधातुना व्यवह्रियमाणत्वात्। तदेतत्त्रिविधमपि [...]कप्रसिद्धं ज्योतिः सोमयागे संपादयितुं शक्यते। प्रजोत्पत्तिसाधनरूपत्वं [...]वद्वक्ष्यते—"अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत" इति। अग्निरूपत्वं [...]राड्रूपत्वं चात्रैव संपाद्यते। या वाचो विराट्त्तदुपलक्षिता दशसंख्या दशा-[...]ा विराडिति श्रुतेः, सेयं संख्याऽग्नौ समाप्यते। तथा हि—प्रातःसवने [...]हिष्पवमानाख्यस्तोत्रस्य त्रिवृत्स्तोमः। तत्र त्रिषु सूक्तेष्वेकैकस्मिंस्तिस्र ऋच [...]यवं नव स्तोत्रियाः। तथा तस्मिन्नेव सवने चतुर्ष्वाज्यस्तोत्रेषु पञ्चदशस्तोमे

---

[1] ख. घ. च. 'दनत्वं ज्यो'।

सति षष्टिः स्तोत्रीयाः संपद्यन्ते । तथा माध्यंदिनसवने माध्यंदिनपवमानाख्य स्तोत्रस्य पञ्चदशस्तोमे सति पञ्चदश स्तोत्रीयाः संपद्यन्ते । तथाऽस्मिन् सवने चतुर्षु पृष्ठस्तोत्रेषु सप्तदशस्तोमे सत्यष्टषष्टिः स्तोत्रीयाः संपद्यन्ते । त तृतीयसवन आर्भवपवमानाख्यस्तोत्रस्य सप्तदशस्तोमे सति सप्तदश स्तोत्री याः संपद्यन्ते । यद्यपि माध्यंदिनपवमानार्भवपवमानयोः सूक्तभेदादृचोऽत्य बहवः सन्ति तथाऽपि स्तोत्रगतस्तोमप्रयुक्त्या गणनेयमित्यविरोधः । तथा तस्मि न्नेव सवने यज्ञायज्ञियस्तोत्रस्यैकविंशस्तोमे सत्येकविंशतिसंख्याकाः स्तोत्रीयाः संपद्यन्ते । तदेवं प्रातःसवन एकोनसप्ततिर्माध्यंदिनसवने ऽष्टाशीतिस्तृतीयसव नेऽष्टात्रिंशदिति मिलित्वा नवत्यधिकाः शतसंख्याकाः स्तोत्रीया भवन्ति ताश्च दशभिर्विभक्ताः सत्य एकोनविंशतिविराड्रूपाः संपद्यन्ते । सेयं संपद्यमा स्तोत्रीयाख्या वाचः संबन्धिनी विराडुपलक्षिता दशसंख्याऽग्नौ समाप्यते अन्तिमस्य यज्ञायज्ञियस्तोत्रस्याऽऽग्नेयत्वात् । अग्निर्हि तत्र प्रतिपाद्यते । य यज्ञा वो अग्नय इत्याम्नानात् । अतोऽग्निरूपत्वं विराड्रूपत्वं च सोमयाग सिद्धम् । यस्मादयं सोमयागो विराड्रूपमभिसंपद्यते तस्माद्विराड्रूपत्वात् जोत्पत्तिहेतुत्वाच्च सोमयागस्वरूपं ज्योतिरित्युच्यते ॥

तदेवं विधेयस्य सोमयागस्य संबन्धिनि ज्योतिष्टोमनाम्नि ज्योतिरित्य मंशः प्रतिपादितः । अथावशिष्टमंशं प्रतिपादयति—

**द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च द्वौ माध्यंदिनꣳ सवनं यथा चक्षुश्च श्रोत्रं च द्वौ तृतीयसवनं यथा वाक्च प्रतिष्ठा च पुरुषसंमितो वा एष यज्ञोऽस्थूरिः,** इति ।

तत्र त्रिवृत्स्तोमो बहिष्पवमानाख्यं स्तोमं वहति निष्पादयति । पञ्चद स्तोमश्चत्वार्याज्यस्तोत्राणि वहति । एवं द्वौ स्तोमौ प्रातःसवनं निर्वहत यथा लोके पुरुषस्य प्राणापानौ जीवनं निर्वहतस्तद्वत् । ततःपञ्चदशस्तोमो मा दिनं पवमानस्तोत्रं वहति । सप्तदशस्तोमश्चत्वारि पृष्ठस्तोत्राणि वहति । द्वौ स्तोमौ माध्यंदिनसवनं वहतः । यथा पुरुषस्य चक्षुःश्रोत्रे रूपदर्शनश्र श्रवणव्यवहारं वहतस्तद्वत् । सप्तदशस्तोम आर्भवपवमानं वहति । एकवि स्तोमो यज्ञायज्ञियस्तोत्रं वहति । एवं द्वौ स्तोमौ तृतीयसवनं वहतः । य पुरुषस्य वागिन्द्रियं पादेन्द्रियं चाभिवदनगमनव्यवहारं वहतस्तद्वत् । प्र तिष्ठन्ति मार्गे यया पादेन्द्रियप्रवृत्त्या सेयं प्रतिष्ठा । तदेवं स्तोमैर्निष्पन्ना

सोमयागः पुरुषसदृशो ननु स्थूरिः, केनाप्यङ्गेन न्यूनः स्थूरिरित्युच्यते, न त्वयं न्यूनः, प्राणापानादिकृत्स्नपुरुषावयवसाम्यस्य प्रतिपादितत्वात् । एवं स्तोमरूपत्वे सिद्धे सति ज्योतीरूपाः स्तोमा अत्रेति व्युत्पत्त्या ज्योतिष्टोम इत्युच्यते । एतदेवाभिप्रेत्यान्यत्राऽऽम्नातम्—"तदाहुः । कतमानि वाव तानि ज्योतीꣳषि । य एतस्य स्तोमा इति । त्रिवृत्पञ्चदशः सप्तदश एकविꣳशः । एतानि वाव तानि ज्योतीꣳषि । य एतस्य स्तोमाः" इति । स्तोमानां च स्वरूपविशेषः प्रथमकाण्डे राजसूयप्रकरणे समिधमातिष्ठेत्यनुवाके सामब्राह्मणोदाहरणेन विस्पष्टः प्रतिपादितः ॥

तदेवं ज्योतिष्टोमनामव्युत्पादनमुखेन विधेयार्थप्रशंसा संपादिता । इदानीं तद्विधिमुन्नयति—

यं कामं कामयते तमेतेनाभ्य-
श्नुते सर्वꣳ ह्यस्थूरिणाऽभ्यश्नुते, इति, ।

एतेन ज्योतिष्टोमेन सर्वकामानां(णां) प्राप्तुं शक्यत्वादिमं ज्योतिष्टोमं कुर्यादित्यभिप्रायः । यस्माल्लोकेऽप्यस्थूरिणा सर्वावयवसंपूर्णेन साधनेन तत्फलं सर्वमप्यश्नुते तस्मादत्रापि स्तोमसंपूर्णेनानेन सर्वकामप्राप्तिर्युक्ता ॥

इत्थं ज्योतिष्टोमं सर्वसोमयागप्रकृतिभूतं विधाय तदीयासु सप्तसंस्थासु मध्ये प्रथमसंस्थारूपमग्निष्टोमं विधातुं प्रस्तौति—

अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ता
अग्निष्टोमेनैव पर्यगृह्णात्तासां परिगृहीतानामश्वतरोऽ-
त्यप्रवत तस्यानुहाय रेत आऽदत्त तद्गर्दभे
न्यमार्ट् तस्माद्गर्दभो द्विरेता अथो आहुर्वडबायां
न्यमार्डिति तस्माद्वडबा द्विरेता अथो आहुरो-
षधीषु न्यमार्डिति तस्मादोषधयोऽनभ्यक्ता रेभन्त्यथो
आहुः प्रजासु न्यमार्डिति तस्माद्यमौ जायेते तस्मादश्व-

---

१ घ. ङ. च. 'के सोम°'।

तरो न प्र जायत आत्तरेता हि तस्माद्बर्हिष्यनव-
क्लृप्तः सर्ववेदसे वा सहस्रे वाऽवक्लृप्तोऽति ह्यप्रवत, इति ।

पुरा सिसृक्षुः प्रजापतिरग्निष्टोमेन साधनेन प्रजाः सृष्ट्वा तेनैव स्वाधीनतया परिगृहीतवान् । तासां परिगृहीतानां प्रजानां मध्ये गर्दभाश्वाभ्यामुत्पादितः संकीर्णजातिरश्वतरः । सोऽयं प्रजापतिपरिग्रहमुल्लङ्घ्यात्यन्तदूरं गतः । स च प्रजापतिस्तस्याश्वस्य पृष्ठतो गत्वा तदीयं शरीरगतं सारभूतं रेत आदाय गर्दभशरीरे न्यमार्ड् नितरां मृष्टवान् । अत एव गर्दभो द्विविधरेतोयुक्तः । गर्दभजातेरश्वतरजातेश्चोत्पादनेन द्विविधत्वम् । अपि चान्ये केचिदभिज्ञा एवमाहुः—वडबायामश्वयोषिति नितरां मृष्टवानिति । तस्मादियं वडबा रेतोद्वययुक्ता । साऽप्यश्वजातिमश्वतरजातिं चोत्पादयति । अपि चान्येऽभिज्ञा एवमाहुः—ओषधीषु नितरां मृष्टवानिति । अत एवौषधयो मनुष्याणामिव घृततैलाभ्यञ्जाभावेऽपि साराधिक्येन वर्धन्ते स्निग्धवद्दृश्यन्त इत्यर्थः । अपि चान्येऽभिज्ञा एवमाहुः—प्रजासु मनुष्यजातिषु नितरां मृष्टवानिति । अत एव क्वचिदेकस्मिन्गर्भे शरीरद्वयमुत्पद्यते । यस्मादयमश्वतरः प्रजापत्यपहृतरेतस्कस्तस्मान्नपुंसकवदयं प्रजामुत्पादयितुमसमर्थः । यस्माच्चायं निःसारस्तस्मादेव यज्ञेऽप्ययोग्यः । यस्तु यज्ञविशेषः सर्वस्वदक्षिणाकः सहस्रदक्षिणाको वा तत्रायं नियमेन दानयोग्यः । रेतोराहित्येऽप्यतिलङ्घ्य गन्तुं समर्थत्वादतिलङ्घितप्राकृतदक्षिणाके यज्ञे योग्यो भवति । 'अश्वतरं साहस्रे सर्ववेदसे च ददाति' इति सूत्रकारवचनात् ।

इदानीं विधत्ते—

य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जन-
यति परिप्रजाता गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति
प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजत, इति ।

अग्निष्टोमयाजी पूर्वमनुत्पन्नाः प्रजा उत्पादयितुमुत्पन्नाश्च स्वाधीनत्वेन परिग्रहीतुं समर्थो भवति । यस्मात्सर्वेषां देवानां मध्ये ज्येष्ठः प्रजापतिः सृष्टिसाधनत्वेनाग्र एतेनायजत तस्माज्ज्येष्ठेनेष्टत्वात्प्रथममिष्टत्वाच्चायमग्निष्टोमो ज्येष्ठयज्ञः सर्वेषामुक्थ्यादीनां मूलप्रकृतिभूत इत्यर्थः । अग्निवि-

१ ख. भ. च. °नुष्यादिजा° ।

पर्येण यज्ञायज्ञा वो अग्नय इति मन्त्रेण संपाद्यमानो योऽयमेकविंशः स्तोमस्तेन समाप्यमानत्वादयमग्निष्टोम इत्युच्यते ।

तस्य च प्रजोत्पादनसाधनत्वं यत्पूर्वमुक्तम्—"अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत" इति, तदिदं मुखादिस्थानचतुष्टयेन प्रपञ्चयितुं मुखजन्यां सृष्टिं दर्शयति—

प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथंतरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त, इति ।

सिसृक्षुः प्रजापतिस्तत्साधनत्वेनाग्निष्टोममनुष्ठाय तत्सामर्थ्येन सत्यसंकल्पः सन्स्वकीयान्मुखात्त्रिवृदादय उत्पद्यन्तामिति संकल्प्य तथैव निर्मितः सन्नादौ त्रिवृत्स्तोमः सृष्टः । तमनु देवतानां मध्येऽग्निः । तमप्यनु च्छन्दसां मध्ये गायत्री सृष्टा । तामप्यनु साम्नां मध्ये रथंतरं सृष्टम् । तदप्यनु मनुष्याणां मध्ये ब्राह्मणः सृष्टः । तमप्यनु पशूनां मध्येऽजः सृष्टः । यस्मादेते मुखतः सृष्टास्तस्मान्मुख्या वक्ष्यमाणेभ्यः श्रेष्ठाः ॥

अथ द्वितीयस्थानादुत्पत्तिं दर्शयति—

उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप्छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त, इति ।

पूर्ववद्व्याख्येयम् । वीर्ययुक्ताद्बाहुदेशादुत्पन्नत्वात्तेषामपि सामर्थ्याधिक्यम् ॥

अथ तृतीयस्थानादुत्पत्तिं दर्शयति—

मध्यतः सप्तदशं निरमिमीत तं विश्वे देवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपꣳ साम वैश्यो मनुष्याणां गावः पशूनां तस्मात्त

---

१ ख. घ. ङ. च. उत्पाद्य° ।

आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳसोऽन्ये-
भ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त, इति।

मध्यत उदरप्रदेशात्। यस्मादन्नाधारादुदरादसृज्यन्त तस्मादाद्या भोग्याः। वैश्या वाणिज्येन धनसंपादकत्वाद्भोग्याः। गावश्च क्षीरादिसंपादनेन भोग्याः। यस्मादतिबहून्विश्वान्देवानन्वेते वैश्याः सृष्टास्तस्माद्वाणिज्यकर्तारो लोके भूयांसः॥

अथ चतुर्थस्थानादुत्पत्तिं दर्शयति—

पत्त एकविꣳशं निरमिमीत तमनुष्टुप्छन्दोऽन्व-
सृज्यत वैराजꣳ साम शूद्रो मनुष्याणामश्वः पशूनां
तस्मात्तौ भूतसंक्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो
यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत
तस्मात्पादावुप जीवतः पत्तो ह्यसृज्येताम्, इति।

पत्तः पादतः। भूतानां पूर्वोत्पन्नानां ब्राह्मणादीनां संक्रामः सम्यगाक्रमणं तदधीनत्वेनावस्थानमित्यर्थः। सोऽयं भूतसंक्रामो ययोरश्वशूद्रयोस्तावुभौ भूतसंक्रामिणौ। शूद्राणां वर्णत्रयपरिचर्यामुख्यत्वेन तदधीनत्वम्। अश्वानां च वहनेन तदधीनत्वम्। अत्र पूर्वस्थानेभ्य इव पादतो न काचिद्देवता सृष्टा, तस्माद्देवतामनु सृज्यत्वाभावाच्छूद्रो यज्ञे प्रवर्तितुं न योग्यः। यस्मादश्वशूद्रौ पादत उत्पन्नौ तस्मात्पादावेव तयोर्जीवनसाधनम्। शूद्रो हि ब्राह्मणाद्याज्ञया पद्भ्यां यत्र क्वापि गमनागमने कुर्वञ्जीवति। अश्वश्च ब्राह्मणादिवाहिपादैर्यत्र क्वापि गच्छन्खाद्यं लभते॥

एवं सृष्टिसाधनमग्निष्टोमं प्रशंसितुं सृष्टिं प्रपञ्च्य तत्र प्रकृतोपयुक्तान्स्तोमान्विशेषतः प्रशंसति—

प्राणा वै त्रिवृदर्धमासाः पञ्चदशः प्रजापतिः
सप्तदशस्त्रय इमे लोका असावादित्य एकविꣳश

१ ख. घ. ङ. च. °श्वादीनां।

( स्तोमानां संभूयकारित्वकथनम् )

एतस्मिन्वा एते श्रिता एतस्मिन्प्रतिष्ठिता य एवं वेदै-
तस्मिन्नेव श्रयत एतस्मिन्प्रति तिष्ठति, इति।

बहिष्पवमानस्तोत्रे सूक्तानां त्रित्वादेकैकस्मिन्सूक्ते भक्तीनां त्रित्वाच्च तदीयस्य स्तोमस्य त्रिवृत्त्वम्। प्राणापानव्यानानां चोर्ध्वाधोमध्यवर्तिनां त्रित्वात्तत्साम्यम्। अर्धमासगतानां रात्रीणां संख्यया पञ्चदशस्तोमसाम्यम्। प्रजापतिरूपाणामाश्रावयेत्यादीनामक्षराणां संख्यया सप्तदशस्तोमसाम्यम्। आदित्यस्य संख्ययैकविंशस्तोमसाम्यं वक्तुं त्रय इमे लोका इत्यनेन ब्राह्मणान्तरं प्रत्यभिज्ञाप्यते। तच्च ब्राह्मणान्तरमेवमाम्नातम्—"द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" इति। एतस्मिन्नेकविंशस्तोमे पूर्वोक्तास्त्रिवृदादय आश्रिताः। अधिकसंख्यायामल्पसंख्यान्तर्भावात्। किंचैतस्मिन्नेव स्तोमाः प्रतिष्ठिताः समाप्ताः। नह्येकविंशादूर्ध्वमग्निष्टोमे कश्चिदधिकः स्तोमो विद्यते। य एवमेतस्य महिमानं वेद स एतस्मिन्नाश्रितः प्रतिष्ठितो भवति। अग्निष्टोममनुष्ठातुं फलं प्राप्तुं च योग्यो भवतीत्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
प्रथमोऽनुवाकः॥ १॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः। )

---

प्रातःसवने वै गायत्रेण छन्दसा त्रिवृते
स्तोमाय ज्योतिर्दधद्देति त्रिवृता ब्रह्मवर्चसेन
पञ्चदशाय ज्योतिर्दधद्देति पञ्चदशेनौजसा वीर्येण
सप्तदशाय ज्योतिर्दधद्देति सप्तदशेन प्राजापत्येन
प्रजननेनैकविंशाय ज्योतिर्दधद्देति स्तोम एव
तत्स्तोमाय ज्योतिर्दधदेत्यथो स्तोम एव स्तोममभि
प्र णयति यावन्तो वै स्तोमास्तावन्तः कामास्ता-
वन्तो लोकास्तावन्ति ज्योतींष्येतावत एव

स्तोमानेतावतः कामानेतावतो लोकानेतावन्ति ज्योतीꣳष्यवं रुन्धे ( १ ) ॥

( तावन्तो लोकास्त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रातःसवन इति प्रातः—सवने । वै । गायत्रेण । छन्दसा । त्रिवृत इति त्रि—वृते । स्तोमाय । ज्योतिः । दधत् । एति । त्रिवृतेति त्रि—वृता । ब्रह्मवर्चसेनेति ब्रह्म—वर्चसेन । पञ्च-दशायेति पञ्च—दशाय । ज्योतिः । दधत् । एति । पञ्चदशे-नेति पञ्च—दशेन । ओजसा । वीर्येण । सप्तदशायेति सप्त—दशाय । ज्योतिः । दधत् । एति । सप्तदशेनेति सप्त—दशेन । प्राजापत्येनेति प्राजा—पत्येन । प्रजननेनेति प्र—जननेन । एकविꣳशायेत्येक—विꣳशाय । ज्योतिः । दधत् । एति । स्तोमः । एव । तत् । स्तोमाय । ज्योतिः । दधत् । एति । अथो इति । स्तोमे । एव । स्तोमम् । अभि । प्रेति । नयति । यावन्तः । वै । स्तोमाः । तावन्तः । कामाः । तावन्तः । लोकाः । तावन्ति । ज्योतीꣳषि । एतावतः । एव । स्तोमान् । एतावतः । कामान् । एतावतः ।

(स्तोमानां संभूयकारित्वकथनम्)

लोकान् । एतावन्ति । ज्योतींषि । अवेति । रुन्धे (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ सप्तमाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ।)

---

प्रथमेऽनुवाके सोमयागानामाद्यो ज्योतिष्टोमस्तदीयसप्तसंस्थानामाद्यसंस्थारूपोऽग्निष्टोमश्चेत्युभयं विहितम् ॥

अथ तत्र स्तोमानां मुख्यत्वं दर्शयितुं द्वितीयेऽनुवाके स्तोमानां संभूयकारित्वं तावदादौ दर्शयति—

प्रातःसवने वै गायत्रेण छन्दसा त्रिवृते स्तोमाय ज्योतिर्दधदेति त्रिवृता ब्रह्मवर्चसेन पञ्चदशाय ज्योतिर्दधदेति पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति सप्तदशेन प्राजापत्येन प्रजननेनैकविंशाय ज्योतिर्दधदेति स्तोम एव तत्स्तोमाय ज्योतिर्दधदेत्यथो स्तोम एव स्तोममभि प्र णयति, इति ।

आदौ प्रजापतिरग्निष्टोममनुतिष्ठन्प्रातःसवनकाल उपास्मै गायता नर * इत्येतन्मन्त्रगतेन गायत्रेण च्छन्दसा युक्तस्तावता परितोषं प्राप्य त्रिवृत्स्तोमसिध्यर्थं ज्योतिर्दधत्तद्विषयप्रसारितां मनोवृत्तिं धारयन्नेति प्रवर्तते, त्रिवृत्स्तोम इत्थं प्रयोक्तव्य इति विचारयन्नेवाऽऽस्त इत्यर्थः । स च स्तोमो ब्रह्मवर्चसप्रदत्वात्तद्रूपः । तेन ब्रह्मवर्चसरूपेण त्रिवृत्स्तोमेन तुष्टोऽप्यपरितुष्टः पञ्चदशस्तोमाय मनोवृत्तिं धारयन्नास्ते । स च पञ्चदशः शारीरबलस्येन्द्रियसामर्थ्यस्य च हेतुत्वात्तदुभयात्मकः । तेनापि युक्तः पुनः सप्तदशस्तोमानुष्ठानाय

---

* सर्वपुस्तकेषु 'इत्येतस्मिन्मन्त्रगतेन' इति वर्तते तदयुक्तमिति प्रतिभाति ।

---

१ क 'मुष्ठितवान्प्रा॰ ।

मनोवृत्तिं धारयन्प्रवर्तते । स च स्तोमः संख्ययाऽऽश्रावयेत्याद्यक्षरसाम्यात्त-दक्षरात्मकप्रजापतिसंबन्धि(न्धी) प्रजोत्पत्तिहेतुश्च । तादृशेन स्तोमेन युक्तोऽपि पुनरेकविंशस्तोमानुष्ठानाय मनोवृत्तिं धारयन्प्रवर्तते । तदेवं स्तोम एव पूर्वोक्त-स्तोमरूप एव सन्नुत्तरस्तोमाय तज्ज्योतिर्मनोवृत्तिं धारयन्प्रवर्तते । अपि च तथा प्रवृत्तः सन्नुत्तरस्तोममाभिमुख्येन प्रणयति ॥

इत्थं स्तोमानां संभूयकारित्वं दर्शितम् । अथ स्तोमान्प्रशंसति—

यावन्तो वै स्तोमास्तावन्तः कामास्ता-
वन्तो लोकास्तावन्ति ज्योतीꣳषि, इति ।

स्तोमा यावन्तो यावत्संख्याकास्तावन्त एव कामाः काम्यानि फलानि तैर्निष्पाद्यानि[2] । तच्च पूर्वमेव सूचितम् । त्रिवृता ब्रह्मवर्चसं निष्पद्यते । पञ्च-दशेनौजो वीर्यं च । सप्तदशेन प्रजास्वामित्वं प्रजोत्पादकत्वं[3] च । तत्रयमत्रैव सूचितम् । एकविंशेन प्रतिष्ठोत्पाद्यते । तच्च पूर्वानुवाक एतस्मिन्प्रतितिष्ठतीति सूचितम् । एवं सति यावन्तः स्तोमास्तावन्तः कामाः संपन्नाः । तत्फलभोगा-धारभूता देहा लोकास्तेऽपि तावन्त एव । तेषु देहेषु तत्फलानुभवा[4] एव ज्योतींषि । तान्यपि तावन्त्येव ॥

इत्थं स्तोमान्प्रशस्य योऽग्निष्टोमेन यजते तस्य फलं प्रशंसति—

एतावत एव स्तोमानेतावतः कामानेतावतो
लोकानेतावन्ति ज्योतीꣳष्यव रुन्धे, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतै-
त्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

ब्रह्मवादिनो वदन्ति स त्वै यजेत योऽग्नि-
ष्टोमेन यजमानोऽथ सर्वस्तोमेन यजेतेति यस्य

---

१ ख. घ. च. °वृत्तिरूपं धा° । २ ख. निष्पाद्य° । ३ ख. च. °कत्वम् । एत° । ४ क. घ. ङ. च. °भव ए° ।

त्रिवृतमन्तर्यन्ति प्राणाꣳस्तस्यान्तर्यन्ति प्राणेषु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्य पञ्चदशमन्तर्यन्ति वीर्यं तस्यान्तर्यन्ति वीर्ये मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्य सप्तदशमन्तर्यन्ति (१) प्रजां तस्यान्तर्यन्ति प्रजायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्यैकविꣳशमन्तर्यन्ति प्रतिष्ठां तस्यान्तर्यन्ति प्रतिष्ठायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्य त्रिणवमन्तर्यन्त्यृतूꣳश्च तस्य नक्षत्रियां च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्नक्षत्रियायां च विराजीति (२) खलु वै यज्ञेन यजमानो यजते यस्य त्रयस्त्रिꣳशमन्तर्यन्ति देवतास्तस्यान्तर्यन्ति देवतासु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यो वै स्तोमानामवमं परमतां गच्छन्तं वेद परमतामेव गच्छति त्रिवृद्वै स्तोमानामवमस्त्रिवृत्परमो य एवं वेद परमतामेव गच्छति (३) ॥

(सप्तदशमन्तर्यन्ति विराजीति चतुश्चत्वारिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ सप्तमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । सः । तु । वै । यजेत । यः । अग्निष्टोमेनेत्यग्नि—स्तोमेन । यजमानः । अथ । सर्वस्तोमेनेति सर्व—स्तोमेन । यजेत । इति । यस्य । त्रिवृतमिति त्रि—वृतम् । अन्तर्यन्तीत्यन्तः—यन्ति । प्राणानिति प्र—अनान् । तस्य । अन्तः । यन्ति । प्राणेष्विति प्र—अनेषु । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । पञ्चदशमिति पञ्च—दशम् । अन्तर्यन्तीत्यन्तः—यन्ति । वीर्यम् । तस्य । अन्तः । यन्ति । वीर्ये । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । सप्तदशमिति सप्त—दशम् । अन्तर्यन्तीत्यन्तः—यन्ति ( १ ) । प्रजामिति प्र—जाम् । तस्य । अन्तः । यन्ति । प्रजायामिति प्र—जायाम् । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । एकविंशमित्येक—विंशम् । अन्तर्यन्तीत्यन्तः—यन्ति । प्रतिष्ठामिति प्रति—स्थाम् । तस्य । अन्तः । यन्ति । प्रतिष्ठायामिति प्रति—स्थायाम् । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । त्रिणवमिति त्रि—

नवम् । अन्तर्यन्तीत्यन्तः—यन्ति । ऋतून् । च । तस्य । नक्षत्रियाम् । च । विराजमिति वि—राजम् । अन्तः । यन्ति । ऋतुषु । मे । अपीति । असत् । नक्षत्रियायाम् । च । विराजीति वि—राजि । इति (२) । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । त्रयस्त्रिंशमिति त्रयः—त्रिंशम् । अन्तर्यन्तीत्यन्तः—यन्ति । देवताः । तस्य । अन्तः । यन्ति । देवतासु । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यः । वै । स्तोमानाम् । अवमम् । परमताम् । गच्छन्तम् । वेद । परमताम् । एव । गच्छति । त्रिवृदिति त्रि—वृत् । वै । स्तोमानाम् । अवमः । त्रिवृदिति त्रि—वृत् । परमः । यः । एवम् । वेद । परमताम् । एव । गच्छति (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ।)

---

प्रथमानुवाकविहिते ज्योतिष्टोमे पुरुषं प्ररोचयितुं द्वितीयेऽनुवाके स्तोमप्रशंसा कृता । अग्निष्टोमस्य तु प्राथम्यं "तस्मादाहुर्ज्येष्ठयज्ञः" इतिवाक्येनोक्तम् । तत्प्राथम्यवत्प्राथम्यमतिरात्रस्यापि वैकल्पिकमस्ति । अत एव सूत्रकारेणोक्तम्—'अग्निष्टोमः प्रथमयज्ञोऽतिरात्रमेके पूर्वं समामनन्ति' इति ॥

तस्यैतस्यातिरात्रस्य तृतीयानुवाके विधिमुन्नयति—

**ब्रह्मवादिनो वदन्ति स त्वै यजेत योऽग्निष्टो-
मेन यजमानोऽथ सर्वस्तोमेन यजेतेति,** इति।

यः पुरुषोऽग्निष्टोममनुतिष्ठति स पुनः सर्वस्तोमेन चेद्यजेत तदा स एव मुख्यो यष्टेति ब्रह्मवादिन आहुः। तस्मात्सर्वस्तोममनुतिष्ठेदिति विधिरुन्नेयः। अग्निष्टोमे चत्वार एव स्तोमास्त्रिवृदादयः। अतिरात्रे तु त्रिणवत्रयस्त्रिंशावपि स्तोमौ विद्येते। तस्मादयं सर्वस्तोमः॥

तत्रान्वयव्यतिरेकाभ्यां प्रथमस्तोमं प्रशंसति—

**यस्य त्रिवृतमन्तर्यन्ति प्राणाꣳस्तस्यान्त-
र्यन्ति प्राणेषु मेऽप्यसदिति खलु वै
यज्ञेन यजमानो यजते,** इति।

यस्य यजमानस्य यागे वर्तमाना ऋत्विजस्त्रिवृत्स्तोममन्तरितं कुर्युस्तस्य स्तोमस्य प्राणरूपत्वात्त ऋत्विजस्तस्य यजमानस्य प्राणानेवान्तरितान्कुर्वन्ति। न त्वेतद्युक्तम्। अयं यजमानो हि प्राणेष्वपि मे भागित्वमस्त्वित्यभिप्रेत्य यज्ञमनुतिष्ठति। तस्मात्त्रिवृत्स्तोमोऽवश्यंभावी॥

अथ द्वितीयस्तोमं प्रशंसति—

**यस्य पञ्चदशमन्तर्यन्ति वीर्यं तस्यान्तर्यन्ति वीर्ये मेऽप्यस-
दिति खलु वै यज्ञेन यजमानो यजते,** इति।

पञ्चदशस्य वीर्यसाधनत्वात्तदन्तराये वीर्यस्यान्तरायः। अन्यत्पूर्ववत्॥

अथ तृतीयस्तोमं प्रशंसति—

**यस्य सप्तदशमन्तर्यन्ति प्रजां तस्यान्तर्यन्ति प्रजायां
मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते,** इति।

पूर्ववत्॥

अथ चतुर्थस्तोमं प्रशंसति—

**यस्यैकविꣳशमन्तर्यन्ति प्रतिष्ठां तस्यान्तर्यन्ति प्रतिष्ठायां
मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते,** इति।

(अतिरात्रविध्युन्नयनम्)

पूर्ववत् ॥

अथ पञ्चमं स्तोमं प्रशंसति—

यस्य त्रिणवमन्तर्यन्त्यृतूꣳश्च तस्य नक्षत्रियां च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्नक्षत्रियायां च विराजीति खलु वै यज्ञेन यजमानो यजते, इति ।

ऋतुत्वेन त्रिणवस्य स्तुतिः शाखान्तरे द्रष्टव्या । अतस्त्रिणवस्यान्तराय ऋतूनामेवान्तरायो भवति । त्रिणवस्तोमे सप्तविंशतिसंख्याकाः स्तोत्रीया नक्षत्राणि च कृत्तिकादीनि सप्तविंशतिसंख्याकानि । विराट्शब्दोऽपि विविध-राज्यवाची नक्षत्रेष्टिषु श्रूयमाणं फलसमूहमुपलक्षयति । तथा सति त्रिणवा-न्तरायेण नक्षत्रसंबन्धिन्या विराजोऽन्तरायः । शेषं पूर्ववत् ॥

अथ षष्ठं स्तोमं प्रशंसति—

यस्य त्रयस्त्रिꣳशमन्तर्यन्ति देवतास्तस्यान्तर्यन्ति देवतासु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते, इति ।

त्रिष्वपि लोकेषु प्रत्येकमेकादशसंख्याका देवताः । ताश्च "ये देवा दिव्येकादश स्थे" इति मन्त्रे समाम्नाताः । तथा सति त्रयस्त्रिंशस्तोमान्तराये त्रयस्त्रिंशस्तोमाख्य(ख्या)साम्यात्तासां देवतानामन्तरायो भवति । सोऽयमन्तरायोऽनुपपन्नः । देवतासु यत्फलं तदपि मे भूयादित्यभिप्रेत्य यजमानेन यष्टुं प्रवृत्तत्वात् । तदेवमतिरात्रविवक्षया सर्वे स्तोमाः प्रशस्ताः । सन्ति हि कस्मिंश्चिदतिरात्रे सर्वे स्तोमाः । अत एव ह्युपरिष्टाद्विधास्यति—'सर्वस्तोमोऽतिरात्र उत्तरम्' इति ॥

तथाऽन्यमतिरात्रगतं विशेषं विधित्सया प्रशंसति—

यो वै स्तोमानामवमं परमतां गच्छन्तं वेद परमतामेव गच्छति त्रिवृद्वै स्तोमानामवमस्त्रिवृत्परमो य एवं वेद परमतामेव गच्छति, इति ॥

स्तोमानां मध्ये ह्यूनसंख्याकस्तोत्रियोपेतस्त्रिवृत्स्तोमोऽवमः[1] स एवोत्तमः य च परमत्वादन्ते प्रयोगः । अतिरात्रे हि तथा प्रयुज्यते । त्रिवृद्राथंतर[2]

---

१ क. °मः । त° । २ ख. °तरसं° ।

संधिरिति चरमे संधिस्तोत्रे त्रिवृतो विधानात् । य एवं वेदेति पुनर्वचनमुपसं-
हारार्थम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदी-
यतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ।)

---

अङ्गिरसो वै सत्रमासत ते सुवर्गं लोकमाय-
न्तेषाꣳ हविष्मांश्च हविष्कृच्चाहीयेतां तावकाम-
येताꣳ सुवर्गं लोकमियावेति तावेतं द्विरात्रमपश्यतां
तमाऽहरतां तेनायजेतां ततो वै तौ सुवर्गं लोकमैतां
य एवं विद्वान्द्विरात्रेण यजते सुवर्गमेव लोकमेति
तावैतां पूर्वेणाह्नाऽगच्छतामुत्तरेण (१) अभिप्लवः
पूर्वमहर्भवति गतिरुत्तरं ज्योतिष्टोमोऽग्निष्टोमः पूर्वम-
हर्भवति तेजस्तेनाव रुन्धे सर्वस्तोमोऽतिरात्र उत्तरꣳ
सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्यै गायत्रं पूर्वेऽहन्त्साम
भवति तेजो वै गायत्री गायत्री ब्रह्मवर्चसं तेज
एव ब्रह्मवर्चसमात्मन्धत्ते त्रैष्टुभमुत्तर ओजो वै
वीर्यं त्रिष्टुगोज एव वीर्यमात्मन्धत्ते रथंतरं पूर्वे
(२) अहन्त्साम भवतीयं वै रथंतरमस्यामेव
प्रति तिष्ठति बृहदुत्तरेऽसौ वै बृहदमुष्यामेव प्रति

तिष्ठति तदाहुः क्व जगती चानुष्टुप्चेति वैखानसं पूर्वेऽहन्त्साम भवति तेन जगत्यै नेति षोडश्युत्तरे तेनानुष्टुभोऽथाऽऽहुर्यत्समानेऽर्धमासे स्यातामन्यतरस्याह्नो वीर्यमनु पद्येतेत्यमावास्यायां पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरं नानैवार्धमासयोर्भवतो नानावीर्ये भवतो हविष्मन्निधनं पूर्वमहर्भवति हविष्कृन्निधनमुत्तरं प्रतिष्ठित्यै ( ३ ) ॥

( उत्तरेण रथंतरं पूर्वेऽन्वेकविंशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

अङ्गिरसः । वै । सत्रम् । आसत । ते । सुवर्गमिति सुवः-गम् । लोकम् । आयन् । तेषाम् । हविष्मान् । च । हविष्कृदिति हविः-कृत् । च । अहीयेताम् । तौ । अकामयेताम् । सुवर्गमिति सुवः-गम् । लोकम् । इयाव । इति । तौ । एतम् । द्विरात्रमिति द्वि-रात्रम् । अपश्यताम् । तम् । एति । अहरताम् । तेन । अयजेताम् । ततः । वै । तौ । सुवर्गमिति सुवः-गम् । लोकम् । ऐताम् ।

यः । एवम् । विद्वान् । द्विरात्रेणेति द्वि—रात्रेण । यजते । सुवर्गमिति सुवः—गम् । एव । लोकम् । एति । तौ । ऐताम् । पूर्वेण । अह्ना । अगच्छताम् । उत्तरेणेत्युत्—तरेण (१) । अभिप्लव इत्यभि—प्लवः । पूर्वम् । अहः । भवति । गतिः । उत्तरमित्युत्—तरम् । ज्योतिष्टोम इति ज्योतिः—स्तोमः । अग्निष्टोम इत्यग्नि—स्तोमः । पूर्वम् । अहः । भवति । तेजः । तेन । अवेति । रुन्धे । सर्वस्तोम इति सर्व—स्तोमः । अतिरात्र इत्यति—रात्रः । उत्तरमित्युत्—तरम् । सर्वस्य । आप्त्यै । सर्वस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । गायत्रम् । पूर्वे । अहन् । साम । भवति । तेजः । वै । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । तेजः । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । आत्मन् । धत्ते । त्रैष्टुभम् । उत्तर इत्युत्—तरे । ओजः । वै । वीर्यम् । त्रिष्टुक् । ओजः । एव । वीर्यम् । आत्मन् । धत्ते । रथंतरमिति रथं—तरम् । पूर्वे (२) । अहन् । साम । भवति । इयम् । वै । रथंतरमिति रथं—तरम् । अस्याम् । एव । प्रतीति । तिष्ठति । बृहत् । उत्तर इत्युत्—तरे । असौ । वै । बृहत् । अमुष्याम् । एव । प्रतीति । तिष्ठति । तत् । आहुः । क्व । जगती । च । अनुष्टुबित्यनु—स्तुप् । च । इति । वैखानसम् । पूर्वे । अहन् । साम । भवति । तेन ।

जगत्यै । न । एति । षोडशि । उत्तर इत्युत्-तरे । तेन ।
अनुष्टुभ इत्यनु-स्तुभः । अथ । आहुः । यत् । समाने ।
अर्धमास इत्यर्ध-मासे । स्याताम् । अन्यतरस्य । अह्नः ।
वीर्यम् । अन्विति । पद्येत । इति । अमावास्यायामित्यमा-
वास्यायाम् । पूर्वम् । अहः । भवति । उत्तरस्मिन्नित्युत्-
तरस्मिन् । उत्तरमित्युत्-तरम् । नाना । एव । अर्धमास-
योरित्यर्ध-मासयोः । भवतः । नानावीर्ये इति नाना-वीर्ये ।
भवतः । हविष्मन्निधनमिति हविष्मत्-निधनम् । पूर्वम् ।
अहः । भवति । हविष्कृन्निधनमिति हविष्कृत-निधनम् ।
उत्तरमित्युत्-तरम् । प्रतिष्ठित्या इति प्रति-स्थित्यै (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ।)

---

तृतीयानुवाके सर्वस्तोमोऽतिरात्र उक्तः । सचैकाह इति सर्वेऽप्येकाहा एतेनोपलक्षिताः । अथाहीना द्विरात्रादयः क्रमेणोच्यन्ते । चत्वारो हि द्विरात्रभेदाः । तत्र व्युष्टिद्विरात्रो राज्ञां विहितः ॥

अथाङ्गिरसां द्विरात्रो विधीयते—

अङ्गिरसो वै सत्रमासत ते सुवर्गं लोकमायन्ते-
षाꣳ हविष्माꣳश्च हविष्कृच्चाहीयेतां तावकाम-
येताꣳ सुवर्गं लोकमियावेति तावेतं द्विरात्रमपश्यतां

तमाऽहरतां तेनायजेतां ततो वै तौ सुवर्गं लोकमैतां य एवं विद्वान्द्विरात्रेण यजते सुवर्गमेव लोकमेति, इति।

अङ्गिरसो महर्षयो यदा सत्रमनुष्ठाय स्वर्गं प्राप्तास्तदानीं तेषां मध्ये हविष्मान्हविष्कृदित्येतौ पुरुषावनुष्ठानेन स्वर्गतावपि हीनौ स्या(नावभव)ताम्। तौ पुनः स्वर्गप्राप्तिं कामयमानौ द्विरात्राख्यं यागं तत्साधनत्वेन निश्चित्य तृतीयां सामग्रीं संपाद्य तदनुष्ठानेन स्वर्गं प्राप्तौ। अतोऽन्योऽपि स्वर्गप्राप्तये द्विरात्रेण यजेत ॥

अथाहर्विशेषं विधत्ते—

तावैतां पूर्वेणाह्नाऽगच्छतामुत्तरेणाभिप्लवः पूर्वमहर्भवति गतिरुत्तरम्, इति।

तौ हविष्मद्धविष्कृन्नामानावृषी द्विरात्रगतेन पूर्वेणाह्ना स्वर्गं प्रविष्टौ। अत्र सर्वत्राहःशब्देनैकदिनसाध्यस्तोमप्रयोग उपलक्ष्यते। अभिप्लवाख्यः कश्चित्षडहयागविशेषः। तस्य च प्रथमदिने ज्योतिष्टोमप्रथमसंस्थारूपोऽग्निष्टोमो विहितोऽस्ति। स एवात्राभिप्लवशब्देनोपलक्ष्यते। सोऽत्र पूर्वमहर्भवति, पूर्वदिनेऽनुष्ठेय इत्यर्थः। गम्यते स्वर्गो येनातिरात्रेण सोऽयमतिरात्रविशेषो गतिः। स च गतिरुत्तरमहर्भवति, द्वितीयदिने सोऽतिरात्रोऽनुष्ठेय इत्यर्थः ॥

उक्तार्थस्पष्टीकरणद्वारेण स्तोमविशेषान्विधत्ते—

ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति तेजस्तेनाव रुन्धे सर्वस्तोमोऽतिरात्र उत्तरꣳ सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्यै, इति।

अभिप्लव इत्यस्य व्याख्यानं ज्योतिष्टोम इति। तत्र हि ज्योतिष्टोमे[2] निरूपितास्त्रिवृदादयश्चत्वारः स्तोमाः क्रियन्ते। तदनुष्ठानेन तेजः प्राप्नोति। सर्वस्तोमैरुपेतोऽतिरात्र इत्यनेन त्रिणवत्रयस्त्रिंशस्तोमाभ्यां सहिता अशेषस्तोमा उक्ताः। तेन च सर्वमप्यप्राप्यं प्राप्यते, स्वाधीनं च भवति। द्वादशभिः स्तोत्रैरुपेतोऽग्निष्टोम एकोनत्रिंशद्भिः स्तोत्रैरुपेतोऽतिरात्र इति तयोर्भेदः ॥

१ क. ख. ङ. च. °ष्टोमः प्र°। २ ख. घ. ङ. च. °मेन नि°।

अथ होतारं प्रति प्रयोक्तव्ये स्तोत्रे दिनभेदेन सामविशेषं विधत्ते—

गायत्रं पूर्वेऽहन्त्साम भवति तेजो वै गायत्री गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमात्मन्धत्ते त्रैष्टुभमुत्तर ओजो वै वीर्यं त्रिष्टुगोज एव वीर्यमात्मन्धत्ते, इति।

गायत्रीछन्दस्कायामृच्युत्पन्नं गायत्रमेतन्नामै(म)कं साम, तदेतद्धोतुरभिमुख्येन पठनीये स्तोत्रे गायेत्। तदेतत्पूर्वेऽह्नि द्रष्टव्यम्। गायत्र्या अग्निना सहोत्पन्नत्वात्तेजस्त्वं, ब्राह्मणैरनुष्ठेयत्वाद्ब्रह्मवर्चसत्वं, तदुभयमनेन साम्ना स्वस्मिन्समापयन्ति। यद्यपि त्रैष्टुभाख्यं किंचित्साम नास्ति तथाऽपि त्रिष्टुप्छन्दस्कायामुत्पन्नत्वात्त्रैष्टुभमित्युच्यते। तदेतदुत्तरदिने गायेत्। तेन शारीरं बलमिन्द्रियसामर्थ्यं च प्राप्नोति॥

अथ पृष्ठस्तोत्रसामविशेषं चोदकप्राप्तविकल्पनिवारणाय नियमयति—

रथंतरं पूर्वेऽहन्त्साम भवतीयं वै रथंतरमस्यामेव प्रति तिष्ठति बृहदुत्तरेऽसौ वै बृहदमुष्यामेव प्रति तिष्ठति, इति।

प्रकृतौ तु बृहद्रथंतरयोरैच्छिको विकल्पः। इह तु दिनभेदेन व्यवस्था॥

पुनरपि दिनभेदेन व्यवस्थितं सामान्तरं विधत्ते—

तदाहुः क्व जगती चानुष्टुप्चेति वैखानसं पूर्वेऽहन्त्साम भवति तेन जगत्यै नैति षोडश्युत्तरे तेनानुष्टुभः, इति।

अत्र ब्रह्मवादिनश्चोदयन्ति—अत्र विद्यमाने द्वे एवाहनी, तयोः पूर्वस्मिन्गायत्र्यामुत्पन्नं साम गीतं, तदुत्तरस्मिंस्तु त्रिष्टुभ्युत्पन्नं साम गीतं, न ह्यत्र तृतीयचतुर्थे अहनी विद्येते। ततो जगत्यनुष्टुभौ द्वावत्रातिष्ठेते इति। तत्राभिज्ञाः सामान्तरविधानमुखेनोत्तरमाहुः—यद्बृहत्यामृच्युत्पन्नं वैखानसाख्यं साम तत्पूर्वदिने गायेत्। बृहती च षट्त्रिंशदक्षरा सती चतुर्वारमावर्त्यमाना जगतीयं संपद्यते। अष्टाचत्वारिंशदक्षराणां जगतीनां तिसृणामक्षरसंख्यया बृह-

तीचतुष्टयसमानत्वात् । तेन वैखानससाम्नाऽयं द्विरात्रयागो जगत्याः सकाशा-न्नापैति । षोडशिशब्देन षोडशस्तोत्रे गीयमानं गौरिवीताख्यं सामोच्यते । तच्चोत्तरेऽहनि गायेत् । तदाधारभूतामृचमवलम्ब्य पूर्ववदनुष्टुभं संपादयेत् । तेन षोडशी(शि)साम्नाऽयं द्विरात्रोऽनुष्टुभः सकाशान्नापैति ॥

अथ दिनद्वयस्य पक्षव्यवस्थां विधत्ते—

**अथाऽऽहुर्यत्समानेऽर्धमासे स्यातामन्यतरस्याह्नो वीर्य-मनु पद्येतेत्यमावास्यायां पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरं नानैवार्धमासयोर्भवतो नानावीर्ये भवतः,** इति ।

शुक्लः कृष्णो वैक एव पक्षः समानोऽर्धमासः । तस्मिन्नेव यद्युभे अहनी स्यातां तदानीमेकपक्षगतत्वादेकस्याह्नो यावद्वीर्यं तावदेव भवेत् । इतरस्य वीर्यं तु लुप्येत । अतः कृष्णपक्षस्यान्तिमदिने प्रथममहः कर्तव्यम् । शुक्लपक्षस्य प्रथमदिने द्वितीयमहः । एवं सति भिन्नार्धमासवर्तित्वाद्भिन्नवीर्ये भवतः ॥

अथ दिनभेदेन निधनविशेषं विधत्ते—

**हविष्मन्निधनं पूर्वमहर्भवति हवि-ष्कृन्निधनमुत्तरं प्रतिष्ठित्यै,** इति ॥

पञ्चधा विभक्तस्य साम्नः पञ्चमभागो निधनम् । हविष्मच्छब्दरूपं निधनं यस्मिन्नहनि तद्धविष्मन्निधनं, पूर्वदिने हविष्मदितिशब्दः प्रयोक्तव्य इत्यर्थः । एवमितरत्रापि । उत्तरस्मिन्नहनि हविष्कृच्छब्द इत्यर्थः । निधनयोर्द्वित्वात्पादस-दृशत्वेन प्रतिष्ठित्यै संपद्यते ॥

अत्र मीमांसा—

दशमाध्यायस्य पञ्चमपादे चतुर्थाधिकरणे चिन्तितम्—

द्विरात्रादौ द्वादशाहप्रायणीयादिकः क्रमः ।
आद्यन्तौ वर्जयित्वा वा विशेषाभावतोऽग्रिमः ॥
द्वादशाहे द्वितीयस्य द्विरात्रे प्रथमत्वतः ।
जागतस्यान्तरायाच्च विध्यन्तो दशरात्रगः ॥

अहीनरूपस्य द्वादशाहस्य विकृतयो द्विरात्रत्रिरात्रादयः । तेषु किं द्वाद-शाहस्य प्रथममहः प्रायणीयसंज्ञकमारभ्य क्रमेण विध्यन्तः प्रवर्तते, किंवा

प्रायणीयोदयनीयावाद्यन्तौ वर्जयित्वा तन्मध्यगतस्य विध्यन्तः प्रवर्तत इति संशयः । ईदृशमहरुपादेयमीदृशं वर्जनीयमिति विशेषनियामकाभावादादित आरभ्य प्रवर्तत इति पूर्वः पक्षः । द्विरात्रं प्रकृत्यैवमाम्नायते—'यत्प्रथमं तद्द्वितीयं यद्द्वितीयं तत्तृतीयम्' इति । अयमर्थः—द्विरात्रस्य यत्प्रथममहरनुष्ठेयं तद्द्वादशाहस्य द्वितीयमिति । एवमुत्तरत्रापि योज्यम् । तदेतत्प्रायणीयवर्जने लिङ्गम् । तथा जगतीमन्तर्यन्तीति जागतस्याह्नोऽन्तराय आम्नायते । तच्च वर्जने लिङ्गम् । एवमादिभिर्लिङ्गैरुभयं वर्जयित्वाऽवशिष्टो विध्यन्तो यत्र यावानपेक्षितस्तत्र तावान्प्रवर्तयितव्य इत्यवगन्तव्यम् ॥

तत्रैव त्रयोदशाधिकरणेऽन्यच्चिन्तितम्—

> द्विरात्रेऽङ्गिरसां षोडश्यप्राप्तः किं विधीयते ।
> परिसंख्यायते वाऽऽद्यश्चोदकाच्छीघ्रबुद्धितः ॥
> अनारभ्यविधेः प्राप्तौ परिसंख्याऽतिदेशतः ।
> विकल्पोऽन्यद्विरात्रेषु प्रोक्तं वृत्तिकृतो मतम् ॥

सन्ति बहवो द्विरात्राः । तेष्वङ्गिरसां द्विरात्रे श्रूयते—'वैखानसं पूर्वेऽहन्त्साम भवति, षोडश्युत्तरे' इति । सोऽयं षोडश्यप्राप्तः सन्विधीयते । न च चोदकात्प्राप्तिः शङ्कनीया, प्रत्यक्षवचनस्य शीघ्रप्रवृत्तेः । चोदको ह्यानुमानिकत्वेन विलम्बित इति प्राप्ते ब्रूमः—मा भूच्चोदकः । अस्ति ह्यनारभ्याधीतं प्रत्यक्षं विध्यन्तरम्—'उत्तरेऽहन्द्विरात्रस्य गृह्यते' इति । तेषु(न) सर्वेषु द्विरात्रेषु प्राप्तः सन्नङ्गिरसां द्विरात्र एव नान्येषु द्विरात्रेष्विति परिसंख्यायते । ततोऽङ्गिरसां द्विरात्रे नियमेन षोडशी गृह्यत इतरेष्वतिरात्रविकृतित्वेनातिरात्रवद्विकल्प्यते । तदेतद्वृत्तिकारमतम् ॥

तत्रैव भाष्यकारमतेनाऽऽरचयति—

> परिसंख्या पूर्वपक्षे(क्षो) न सा युक्ता त्रिदोषतः ।
> प्राप्तस्यान्या(स्यैवा)नुवादेन विधेये सा न शक्यते ॥

वृत्तिकारस्य सिद्धान्तरूपा या परिसंख्या सैव भाष्यकारमते पूर्वः पक्षः । सिद्धान्तस्तु[1] षोडश्युत्तर इत्ययं विधिरेव न भवति । विविदिसितवैखानससावाक्यशेषत्वेनार्थवत्त्वात्[2] । अतः परिसंख्या दोषत्रयोपेता नात्र कल्पनीया ।

---

१ क. ग. घ. ङ. च. 'स्तु नैव षो' । २ च. 'र्थवादत्वात्' ।

प्राप्तस्य विध्यर्थस्य परित्यागः । अप्राप्तस्य निषेधार्थस्य स्वीकारः । अन्यत्र प्राप्तस्य बाध इति दोषत्रयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजा-
पतिर्वायुर्भूत्वाऽचरत्स इमामपश्यत्तां वराहो भूत्वाऽ-
हरत्तां विश्वकर्मा भूत्वा व्यमार्ट्साऽप्रथत सा
पृथिव्यभवत्तत्पृथिव्यै पृथिवित्वं तस्यामश्राम्यत्प्रजा-
पतिः स देवानसृजत वसून्रुद्रानादित्यान्ते देवाः
प्रजापतिमब्रुवन्प्र जायामहा इति सोऽब्रवीत्
( १ ) यथाऽहं युष्माꣳस्तपसाऽसृक्ष्येवं तपसि
प्रजननमिच्छध्वमिति तेभ्योऽग्निमायतनं प्रायच्छ-
देतेनाऽऽयतनेन श्राम्यतेति तेऽग्निनाऽऽयतनेना-
श्राम्यन्ते संवत्सर एकां गामसृजन्त तां वसुभ्यो
रुद्रेभ्य आदित्येभ्यः प्रायच्छन्नेताꣳ रक्षध्वमिति तां
वसवो रुद्रा आदित्या अरक्षन्त सा वसुभ्यो रुद्रेभ्य
आदित्येभ्यः प्राजायत त्रीणि च ( २ ) शतानि
त्रयस्त्रिꣳशतं चाथ सैव सहस्रतम्यभवत्ते देवाः

प्रजापतिमब्रुवन्त्सहस्रेण नो याजयेति सोऽग्निष्टोमेन वसूनयाजयत्त इमं लोकमजयन्तच्चाददुः स उक्थ्येन रुद्रानयाजयन्तेऽन्तरिक्षमजयन्तच्चाददुः सोऽतिरात्रेणाऽऽदित्यानयाजयत्तेऽमुं लोकमजयन्तच्चाददुस्तदन्तरिक्षम् ( ३ ) व्यवैर्यत तस्माद्रुद्रा घातुका अनायतना हि तस्मादाहुः शिथिलं वै मध्यममहस्त्रिरात्रस्य वि हि तदवैर्यतेति त्रैष्टुभं मध्यमस्याह्न आज्यं भवति संयानानि सूक्तानि शꣳसति षोडशिनꣳ शꣳसत्यह्नो धृत्या अशिथिलंभावाय तस्मात्त्रिरात्रस्याग्निष्टोम एव प्रथममहः स्यादथोक्थ्योऽथातिरात्र एषां लोकानां विधृत्यै त्रीणित्रीणि शतान्यनूचीनाहमव्यवच्छिन्नानि ददाति ( ४ ) एषां लोकानामनु संतत्यै दशतं न वि च्छिन्द्याद्विराजं नेद्विच्छिनदानीत्यथ या सहस्रतम्यासीत्तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेताꣳ स इन्द्रोऽमन्यतानया वा इदं विष्णुः सहस्रं वर्क्ष्यत इति तस्यामकल्पेतां द्विभाग इन्द्रस्तृतीये विष्णुस्तद्वा एषाऽभ्यनूच्यत उभा जिग्यथुरिति तां वा एतामच्छावाकः ( ५ ) एव शꣳसत्यथ या सहस्रतमी सा होत्रे देयेति होतारं वा अभ्यतिरिच्यते यदतिरिच्यते होताऽनाप्तस्याऽऽ—

पयिताऽथाऽऽहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा सहस्र-
स्यातिरिक्त उन्नेतर्त्विजामथाऽऽहुः सर्वेभ्यः सदस्येभ्यो
देयेत्यथाऽऽहुरुदाकृत्या सा वशं चरेदित्यथाऽऽहुर्ब्र-
ह्मणे चाग्नीधे च देयेति ( ६ ) द्विभागं ब्रह्मणे
तृतीयमग्नीध ऐन्द्रो वै ब्रह्मा वैष्णवोऽग्नीधयथैव ताव-
कल्पेतामित्यथाऽऽहुर्या कल्याणी बहुरूपा सा देये-
त्यथाऽऽहुर्या द्विरूपोभयतएनी सा देयेति सहस्रस्य
परिगृहीत्यै तद्वा एतत्सहस्रस्यायनꣳ सहस्रꣳ
स्तोत्रीयाः सहस्रं दक्षिणाः सहस्रसंमितः सुवर्गो
लोकः सुवर्गस्य लोकस्याभिजित्यै ( ७ ) ॥

( अब्रवीच्च तदन्तरिक्षं ददात्यच्छावाकश्च देयेति
सप्तचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् ।
तस्मिन् । प्रजापतिरिति प्रजा—पतिः । वायुः । भूत्वा ।
अचरत् । सः । इमाम् । अपश्यत् । ताम् । वराहः ।

(गर्गत्रिरात्राभिधानम)

भूत्वा। एति। अहरत्। ताम्। विश्वकर्मेति विश्व-कर्मा। भूत्वा। वीति। अमार्ट्। सा। अप्रथत। सा। पृथिवी। अभवत्। तत। पृथिव्यै। पृथिवित्वमिति पृथिवि-त्वम्। तस्याम्। अश्राम्यत्। प्रजापतिरिति प्रजा-पतिः। सः। देवान्। असृजत। वसून्। रुद्रान्। आदित्यान्। ते। देवाः। प्रजापतिमिति प्रजा-पतिम्। अब्रुवन्। प्रेति। जायामहै। इति। सः। अब्रवीत् (१)। यथा। अहम्। युष्मान्। तपसा। असृक्षि। एवम्। तपसि। प्रजननमिति प्र-जननम्। इच्छध्वम्। इति। तेभ्यः। अग्निम्। आयतनमित्या-यतनम्। प्रेति। अयच्छत्। एतेन। आयतनेनेत्या-यतनेन। श्राम्यत। इति। ते। अग्निना। आयतनेनेत्या-यतनेन। अश्राम्यन्। ते। संवत्सर इति सं-वत्सरे। एकाम्। गाम्। असृजन्त। ताम्। वसुभ्य इति वसु-भ्यः। रुद्रेभ्यः। आदित्येभ्यः। प्रेति। अयच्छन्। एताम्। रक्षध्वम्। इति। ताम्। वसवः। रुद्राः। आदित्याः। अरक्षन्त। सा। वसुभ्य इति वसु-भ्यः। रुद्रेभ्यः। आदित्येभ्यः। प्रेति। अजायत। त्रीणि। च (२)। शतानि। त्रयस्त्रिंशतमिति त्रयः-त्रिंशतम्। च। अथ। सा। एव। सहस्रतमीति सहस्र-तमी।

अभवत् । ते । देवाः । प्रजापतिमिति प्रजा-पतिम् । अब्रुवन् । सहस्रेण । नः । याजय । इति । सः । अग्निष्टोमेनेत्यग्नि-स्तोमेन । वसून् । अयाजयत् । ते । इमम् । लोकम् । अजयन् । तत् । च । अददुः । सः । उक्थ्येन । रुद्रान् । अयाजयत् । ते । अन्तरिक्षम् । अजयन् । तत् । च । अददुः । सः । अतिरात्रेणेत्यति-रात्रेण । आदित्यान् । अयाजयत् । ते । अमुम् । लोकम् । अजयन् । तत् । च । अददुः । तत् । अन्तरिक्षम् ( ३ ) । व्यैवर्यतेति वि-ऐवर्यत । तस्मात् । रुद्राः । घातुकाः । अनायतना इत्यना-यतनाः । हि । तस्मात् । आहुः । शिथिलम् । वै । मध्यमम् । अहः । त्रिरात्रस्येति त्रि-रात्रस्य । वीति । हि । तत् । अवैर्यतेत्यव-ऐर्यत । इति । त्रैष्टुभम् । मध्यमस्य । अह्नः । आज्यम् । भवति । संयानानीति सं-यानानि । सूक्तानीति सु-उक्तानि । शꣳसति । षोडशिनम् । शꣳसति । अह्नः । धृत्यै । अशिथिलंभावायेत्यशिथिलं-भावाय । तस्मात् । त्रिरात्रस्येति त्रि-रात्रस्य । अग्निष्टोम इत्यग्नि-स्तोमः । एव । प्रथमम् । अहः । स्यात् । अथ । उक्थ्यः । अथ । अतिरात्र इत्यति-रात्रः । एषाम् । लोकानाम् । विधृत्या इति वि-धृत्यै । त्रीणित्रीणीति

त्रीणि–त्रीणि । शतानि । अनूचीनाहमित्यनूचीन–अहम् ।
अव्यवच्छिन्नानीत्यवि–अवच्छिन्नानि । ददाति (४) ।
एषाम् । लोकानाम् । अन्विति । संतत्या इति सं–तत्यै ।
दशतम् । न । भीति । छिन्द्यात् । विराजमिति वि–राजम्।
न । इत् । विच्छिनदानीति वि–छिनदानि । इति । अथ।
या । सहस्रतमीति सहस्र–तमी । आसीत् । तस्याम् ।
इन्द्रः । च । विष्णुः । च । व्यायच्छेतामिति वि–आय-
च्छेताम् । सः । इन्द्रः । अमन्यत । अनया । वै । इदम् ।
विष्णुः । सहस्रम् । वक्ष्यते । इति । तस्याम् । अकल्पे-
ताम् । द्विभाग इति द्वि–भागे । इन्द्रः । तृतीये । विष्णुः।
तत् । वै । एषा । अभ्यनूच्यत इत्यभि–अनूच्यते । उभा।
जिग्यथुः । इति । ताम् । वै । एताम् । अच्छावाकः(५)।
एव । शंसति । अथ । या । सहस्रतमीति सहस्र–तमी।
सा । होत्रे । देया । इति । होतारम् । वै । अभ्यतिरिच्यत
इत्यभि–अतिरिच्यते । यत् । अतिरिच्यत इत्यति–रिच्यते।
होता । अनाप्तस्य । आपयिता । अथ । आहुः । उन्नेत्र
इत्युत्–नेत्रे । देया । इति । अतिरिक्तेत्यति–रिक्ता । वै ।
एषा । सहस्रस्य । अतिरिक्त इत्यति–रिक्तः । उन्नेतेत्युत्–
नेता । ऋत्विजाम् । अथ । आहुः । सर्वेभ्यः । सदस्येभ्यः ।

देयो । इति । अथ । आहुः । उदाकृत्येत्युत्—आकृत्या । सा । वशम् । चरेत् । इति । अथ । आहुः । ब्रह्मणे । च । अग्नीध इत्यग्नि—इधे । च । देयो । इति ( ६ ) । द्विभागमिति द्वि—भागम् । ब्रह्मणे । तृतीयम् । अग्नीध इत्यग्नि—इधे । ऐन्द्रः । वै । ब्रह्मा । वैष्णवः । अग्नीदित्यग्नि—इत् । यथा । एव । तौ । अकल्पेताम् । इति । अथ । आहुः । या । कल्याणी । बहुरूपेति बहु—रूपा । सा । देयो । इति । अथ । आहुः । या । द्विरूपेति द्वि—रूपा । उभयतएनीत्युभयतः—एनी । सा । देयो । इति । सहस्रस्य । परिगृहीत्या इति परि—गृहीत्यै । तत् । वै । एतत् । सहस्रस्य । अयनम् । सहस्रम् । स्तोत्रीयाः । सहस्रम् । दक्षिणाः । सहस्रसंमित इति सहस्र—संमितः । सुवर्ग इति सुवः—गः । लोकः । सुवर्गस्येति सुवः—गस्य । लोकस्य । अभिजित्या इत्यभि—जित्यै ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थे द्विरात्रोऽभिहितः । अथ त्रिरात्रं विधातुं काचिदाख्यायिकोच्यते ।

तस्यां चाऽऽख्यायिकायामादौ पृथिव्युत्पत्तिं दर्शयति —

आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापति-
र्वायुर्भूत्वाऽचरत्स इमामपश्यत्तां वराहो भूत्वाऽ-
हरत्तां विश्वकर्मा भूत्वा व्यमार्ट्साऽप्रथत सा
पृथिव्यभवत्तत्पृथिव्यै पृथिवित्वम्, इति ।

इदमितीदानीं दृश्यमानं गिरिनदीसमुद्रादिकं जगत्पृथिव्युत्पत्तेः पूर्वं सलिलमासीत् । तस्मिन्नेव सलिले केवला आप एव नतु भूतान्तरं तत्कार्यं वा किंचिदपि नाऽऽसीत् । तदानीं प्रजापतिर्मूर्तस्य शरीरस्यावस्थातुं स्थानाभावाद्वायुरूपो भूत्वा तस्मिन्सलिले सर्वत्राचरत् । चरित्वा च सलिले निमग्नां भूमिं दृष्ट्वा स्वयं वराहो भूत्वा दंष्ट्राग्रेण तां भूमिं जलस्योपर्याहरत् । आहृत्य च वराहरूपमुत्सृज्य विश्वकर्मा भूत्वा विशेषेण मार्जनं कृत्वा तत्रत्यं द्रवमपनीय तां विस्तारितवान् । तत इयं दृश्यमाना सर्वप्राण्याधारभूता पृथिव्यभवत् । प्रथनादेव पृथिवीनाम संपन्नम् ॥

अथ देवसृष्टिं गोसृष्टिं च क्रमेण दर्शयति —

तस्यामश्राम्यत्प्रजापतिः स देवानसृजत वसून्रुद्राना-
दित्यान्ते देवाः प्रजापतिमब्रुवन्प्र जायामहा इति
सोऽब्रवीद्यथाऽहं युष्माꣳस्तपसाऽसृक्ष्येवं तपसि
प्रजननमिच्छध्वमिति तेभ्योऽग्निमायतनं प्रायच्छ-
देतेनाऽऽयतनेन श्राम्यतेति तेऽग्निनाऽऽयतनेनाश्रा-
म्यन्ते संवत्सर एकां गामसृजन्त तां वसुभ्यो
रुद्रेभ्य आदित्येभ्यः प्रायच्छन्नेताꣳ रक्षध्वमिति
तां वसवो रुद्रा आदित्या अरक्षन्त सा वसुभ्यो
रुद्रेभ्य आदित्येभ्यः प्राजायत त्रीणि च शतानि
त्रयस्त्रिꣳशतं चाथ सैव सहस्रतम्यभवत्, इति ।

तस्यां भूमौ स प्रजापतिः स्वेनैव शरीरेणावस्थाय सिसृक्षुरश्राम्यत्तपस्तवान् । तस्माच्च तपःसामर्थ्यात्त्रीन्वस्वादिदेवगणानसृजत । ते च वस्वादयः

प्रजापतिं प्रति प्रजोत्पादनोपायं पप्रच्छुः। स च प्रजापतिर्मद्वत्तपसि कृते सति पश्चाद्भूयमुत्पादनमिच्छतेत्युक्त्वा होमाख्यस्य तपस आधारभूतमग्निं दत्त्वा तेना-ग्निना होमलक्षणं तपः कुरुतेत्युक्तवान्। ते च संवत्सरं तथा कृत्वा तदन्ते सर्वेऽप्येकां गामसृजन्त। तां च गां स प्रजापतिर्वसुभ्यो रक्षणार्थं दत्तवान्। सा च रक्षिता सती वस्वर्थं गवां शतत्रयं त्रयस्त्रिंशतं चोत्पादयामास। ततः प्रजापतिस्तामेव गां रुद्रेभ्यो दत्तवान्। रुद्रार्थमपि सा तथैवोत्पादयामास। एवमादित्यार्थमप्युत्पादयामास। तमिमं (दिदं) पर्यायत्रयं संगृह्य श्रुतिरेकेनैव वाक्येनोदाजहार। तत्र त्रेधा वाक्यं विभज्य योजयितव्यम्। एवं सत्येकोन-सहस्रं गवां संपन्नम्। येयं सहस्रतमी गौः सेयं सहस्रसंख्यापूरण्यभवत्॥

अतः सहस्रदक्षिणाकेन त्रिरात्रयागेन(ण) याजनं दर्शयति—

ते देवाः प्रजापतिमब्रुवन्त्सहस्रेण नो याजयेति सोऽग्निष्टोमेन वसूनयाजयत्त इमं लोकमजयन्तच्चाददुः स उक्थ्येन रुद्रानया-जयत्तेऽन्तरिक्षमजयन्तच्चाददुः सोऽतिरात्रेणाऽऽ-दित्यानयाजयत्तेऽमुं लोकमजयन्तच्चाददुः, इति।

वसुरुद्रादित्याः सर्वे मिलित्वा गोसहस्रदक्षिणाकयज्ञार्थं प्रजापतिं प्रार्थया-मासुः। स च प्रजापतिर्देवगणत्रयं विभज्य त्रिषु दिनेषु क्रमादग्निष्टोमोक्थ्या-तिरात्रैर्याजितवान्। द्वादशस्तोत्रोऽग्निष्टोमः। पञ्चदशस्तोत्र उक्थ्यः। एकोन-त्रिंशत्स्तोत्रोऽतिरात्रः। ते च त्रैलोक्यत्रयमजयन्। स्वकीयं स्वकीयं तत्तद्गोधनं च दक्षिणार्थमृत्विग्भ्यो दत्तवन्तः॥

अथोक्थ्यरूपे मध्यमेऽहनि कांश्चिच्छंसनविशेषान्विधत्ते—

तदन्तरिक्षं व्यवैर्यत तस्माद्रुद्रा घातुका अनायतना हि तस्मादाहुः शिथिलं वै मध्यममहस्त्रिरात्रस्य वि हि तदवैर्यतेति त्रैष्टुभं मध्यमस्याह्न आज्यं भवति संयानानि

सूक्तानि शꣳसति षोडशिनꣳ शꣳस-
त्यह्नो धृत्या अशिथिलंभावाय; इति।

यदन्तरिक्षं रुद्रैर्जितं तदन्तरिक्षं व्यवैर्यत विशीर्णमभूत्। गृहरूपं लोकसंस्थानं भग्नमभूदित्यर्थः। यस्माद्रुद्राणामायतनमन्तरिक्षलोकस्थानं विशीर्णमभूत्तस्मादायतनाभावाद्रुद्राः कोपाविष्टाः सन्तः सर्वत्र प्राणिघातिनोऽभवन्। यस्मात्फलभूतमन्तरिक्षं विशीर्णमभूत्तस्मात्तत्साधनमात्रं त्रिरात्रयागस्य मध्यममहः केनापि वैकल्येन शिथिलमित्येवमभिज्ञा आहुः। तस्मान्मध्यमस्याह्नो दार्ढ्येन शैथिल्यपरिहाराय कानिचिच्छस्त्राण्यनुष्ठेयानि। त्रिष्टुप्छन्दस्कायामुत्पन्नं त्रैष्टुभं होतुराज्यशस्त्रं शंसनीयम्। तथा संयानाख्यानि दाशतय्यां प्रसिद्धानि सूक्तानि शंसेत्। तथा षोडश्याख्यमपि शस्त्रं शंसेत्॥

इत्थमाख्यायिकां प्रस्तुत्य मध्यमे विशेषांश्च विधाय त्रिरात्रयागस्याहर्विशेषान्विधत्ते—

तस्मात्त्रिरात्रस्याग्निष्टोम एव प्रथ-
ममहः स्यादथोक्थ्योऽथातिरात्र
एषां लोकानां विधृत्यै, इति।

यस्मादुक्थ्यादिभिरहस्त्रयेण लोकत्रयजयायाहस्त्रयसंघातरूपमनुष्ठितं तस्मात्त्रिरात्रयागमनुतिष्ठेदित्यर्थः॥

यदुक्तं सूत्रकारेण—'सहस्रं दक्षिणास्त्रीणि शतानि त्रयस्त्रिंशतं च प्रथमेऽहनि ददात्येवं द्वितीये तृतीये च साहस्र्यतिरिच्यते' इति, तदिदं विधत्ते—

त्रीणित्रीणि शतान्यनूचीनाह-
मव्यवच्छिन्नानि ददात्येषां
लोकानामनु संतत्यै, इति।

अनुक्रमेणाञ्चति प्रवर्तत इत्यनूचीनं, तादृशं च तदहश्चानूचीनाहं प्रतिदिनमित्यर्थः। प्रतिदिनमविच्छिन्नानि यथा भवन्ति तथा त्रीणि त्रीणि शतानि ददाति। त्रयस्त्रिंशत्संख्याया अप्येतदुपलक्षणम्। तथा सत्येकैकस्मिन्दिने

१ ख. च. °त्, स्पृहा°।

अपर्स्त्रिंशदधिकं गवां शतत्रयं दद्यादित्यर्थो भवति। एतच्च लोकानां भूरादीनां संतत्यै भवति ॥

यदुक्तं सूत्रकारेण—'दक्षिणानयने न्यूना दशधा नयेत्' इति, तदेतद्धिधत्ते—

दशतं न वि च्छिन्द्याद्विराजं नेद्विच्छिनदानीति, इति।

दशानां वर्गो दशतस्तस्य वर्गस्य विच्छेदं न कुर्यात्। वेदेर्दक्षिणस्यां दिश्यवस्थिता गाः प्राग्वंशसदसोर्मध्येन यदोत्तरस्यां दिशि दक्षिणार्थं नयति तदानीमेकैकं दशकं सहैव नयेत्। न तु दशतो न्यूनं नयेत्। दशसंख्याया विराड्रूपत्वात्। विराजं नैव विच्छिन्नां करोमीति नेतुरभिप्रायः। यत्तु त्रिंशत उपरि त्रयमधिकं तदपि चरमेण दशकेन सह नयेत्। न्यूनत्वस्यैवात्र [दशधेति] विधानात् ॥

एवमेकोनसहस्रे त्रिषु दिनेषु दत्ते सति सहस्रतमी परिशिष्यते। तद्दानं तु बहुधा विकल्पितं प्रदर्शयितुं प्रस्तौति—

अथ या सहस्रतम्यासीत्तस्यामिन्द्रश्च
विष्णुश्च व्यायच्छेताꣳ स इन्द्रोऽमन्यतानया
वा इदं विष्णुः सहस्रं वर्क्ष्यत इति तस्या-
मकल्पेतां द्विभाग इन्द्रस्तृतीये विष्णुस्त-
द्वा एषाऽभ्यनूच्यत उभा जिग्यथुरिति, इति।

क्लृप्तिः कल्पनं, तयैव क्लृप्त्या तस्यां सहस्रतम्यां गवि निमित्तभूतायां ममैवेयं भूयादित्येवमिन्द्रश्च विष्णुश्च परस्परं कलहं कुरुतः। तदानीमिन्द्रो मनस्येवमचिन्तयत्—तां गां गृहीत्वा विष्णुरनया गवा सहस्रमिदं सर्वं मां वर्जयित्वा स्वाधीनं करिष्यति, तस्मान्म(मै)यैवाधिकेन भागेन भवितव्यमिति। ततस्तावुभौ तस्यां गव्यकल्पेतां व्यवस्थां कृतवन्तौ। इन्द्रो द्विभागे व्यवस्थितः। विष्णुस्तृतीये भागे व्यवस्थितः। तदेतमर्थमभिलक्ष्य काचिदृग्वेदेऽप्यृगनूच्यते। सा च भागत्रयप्रतिपादिका। तस्याश्च प्रतीकम् 'उभा जिग्यथुः' इत्येतत्। इयं चोपरितनेऽनुवाके समाम्नास्यते ॥

---

१ क. ङ. तयैव।

अथैतस्या ऋचः शंसननियमं विधत्ते—

तां वा एतामच्छावाक एव शꣳसति, इति।

विकल्पितेषु दानपक्षेषु प्रथमं पक्षमाह—

अथ या सहस्रतमी सा होत्रे देयेति होतारं वा अभ्यतिरिच्यते यदतिरिच्यते होताऽनाप्तस्याऽऽपयिता, इति।

प्रतिदिनं त्रयस्त्रिंशदधिकशतत्रये साम्येन दत्ते सति सेयं सहस्रतम्यतिरिच्यते। यत्तु द्रव्यं यागेऽतिरिक्तं भवति तत्सर्वं होतारमभिलक्ष्यैवातिरिच्यते। होता ह्यनाप्तस्य सर्वस्य फलस्य प्रापयिता। तस्माद्धोत्रे सहस्रतमी देयेत्याद्यः पक्षः॥

द्वितीयं पक्षं दर्शयति—

अथाऽऽहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा सहस्रस्यातिरिक्त उन्नेतर्त्विजाम्, इति।

एषा गौः सहस्रस्य मध्येऽतिरिक्तवीर्या। उन्नेताऽप्यृत्विजां मध्येऽतिरिक्तवीर्यः। अत एव हि हारियोजनभक्षे श्रूयते—‘उन्नेतर्युपहवमिच्छन्ते’ इति। तस्मादियमुन्नेत्रे देयेत्येवं केचिदाहुः॥

तृतीयं पक्षं दर्शयति—

अथाऽऽहुः सर्वेभ्यः सदस्येभ्यो देयेति, इति।

अत्रोपपत्तिर्बहिरेव द्रष्टव्या। ‘यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः’ इत्यन्यत्राऽऽम्नातम्। तस्मात्सदस्येभ्यो देया॥

चतुर्थं पक्षं दर्शयति—

अथाऽऽहुरुदाकृत्या सा वशं चरेदिति, इति।

अत्राप्युपपत्तिः पूर्ववत्। दिनत्रये त्रिभागसाम्येन दक्षिणा दत्ता। इयं चैका भागवैषम्यं च न युक्तम्। अतो यज्ञभूमेरुद्धृतां कृत्वा स्ववशत्वेन यथा चरति तथा कुर्यात्॥

पञ्चमं पक्षं दर्शयति—

अथाऽऽहुर्ब्रह्मणे चाग्नीधे च देयेति द्विभागं ब्रह्मणे तृतीयमग्नीध ऐन्द्रो वै ब्रह्मा वैष्णवोऽग्नीद्यथैव तावकल्पेतामिति, इति।

इन्द्रस्य विष्णोश्च या भागक्लृप्तिस्तद्वत्तदीययोर्ब्रह्माग्नीध्रयोर्देया ॥

षष्ठं पक्षं दर्शयति—

अथाऽऽहुर्या कल्याणी बहुरूपा सा देयेति, इति।

इयं वै सहस्रतमी न कस्मैचिद्देया। किं त्वेतत्प्रतिनिधिरूपा या काचित्कल्याणी बहुक्षीरादिगुणवती विचित्रवर्णा सा दातव्या ॥

सप्तमं पक्षं दर्शयति—

अथाऽऽहुर्या द्विरूपोभयतएनी सा देयेति सहस्रस्य परिगृहीत्यै, इति।

या गौः शुक्लकृष्णवर्णाभ्यामुपेतत्वेन द्विरूपा, पार्श्वद्वये शुक्लकेशोपेतत्वादुभयत एनी, सहस्रसंख्यापूर्त्यर्थं तादृशी काचिद्देया ॥

तदिदं सहस्रदानोपेतं कर्म प्रशंसति—

तद्वा एतत्सहस्रस्यायनꣳ सहस्रꣳ स्तोत्रीयाः सहस्रं दक्षिणाः सहस्रसंमितः सुवर्गो लोकः सुवर्गस्य लोकस्याभिजित्यै, इति ॥

त्रिरात्राख्यं यत्कर्मोक्तं तदेतत्सहस्रसंख्याकफलस्य प्राप्तिहेतुः। यस्मादत्र त्रिषु दिनेषु मिलित्वा स्तोत्रीया ऋचः सहस्रं विद्यन्ते, दक्षिणाश्चोक्तरीत्या सहस्रं गावः, स्वर्गलोकश्च सुखाधिक्याद्भूलोकसहस्रेण समानः, [ तस्मात् ] तादृशस्य स्वर्गस्याभिजयायेदं कर्म योग्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( सहस्रतम्यभिधानम् )

( अथ सप्तमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

सोमो वै सहस्रमविन्दत्तमिन्द्रोऽन्वविन्दत्तौ यमो न्यागच्छत्तावब्रवीदस्तु मेऽत्रापीत्यस्तु ही३ इत्यब्रूता॒ꣳ स यम एकस्यां वीर्यं पर्यपश्यदियं वा अस्य सहस्रस्य वीर्यं बिभर्तीति तावब्रवीदियं ममास्त्वेतद्युवयोरिति तावब्रूता॒ꣳ सर्वं वा एतदेतस्यां वीर्यम् ( १ ) परि पश्यामोऽꣳशमा हरामहा इति तस्यामꣳशमाऽहरन्त तामप्सु प्रावेशयन्त्सोमायोदेहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहोदैत्तस्माद्रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणीयाद्य एवं विद्वान्रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति त्रयस्त्रिꣳशता चैवास्य त्रिभिश्च ( २ ) शतैः सोमः क्रीतो भवति सुक्रीतेन यजते तामप्सु प्रावेशयन्निन्द्रायोदेहीति सा रोहिणी लक्ष्मणा पष्ठौही वार्त्रघ्नी रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहोदैत्तस्माद्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्याद्य एवं विद्वान्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं ददाति त्रयस्त्रिꣳशच्चैवास्य त्रीणि च शतानि सा दत्ता ( ३ ) भवति तामप्सु

प्रावेशयन्यमायोदेहीति सा जरती मूर्खा तेज्जघन्या रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहो- देतस्माज्जरतीं मूर्खां तेज्जघन्यामनुस्तरणीं कुर्वीत य एवं विद्वाञ्जरतीं मूर्खां तेज्जघन्यामनुस्तरणीं कुरुते त्रयस्त्रिꣳशच्चैवास्य त्रीणि च शतानि साऽमु- ष्मिꣳल्लोके भवति वागेव सहस्रतमी तस्मात् ( ४ ) वरो देयः सा हि वरः सहस्रमस्य सा दत्ता भवति तस्माद्वरो न प्रतिगृह्यः सा हि वरः सहस्रमस्य प्रतिगृहीतं भवतीयं वर इति ब्रूयादथान्यां ब्रूयादियं ममेति तथाऽस्य तत्सहस्रमप्रतिगृहीतं भवत्युभयत- एनी स्यात्तदाहुरन्यतएनी स्यात्सहस्रं परस्तादेत- मिति येव वरः ( ५ ) कल्याणी रूपसमृद्धा सा स्यात्सा हि वरः समृद्ध्यै तामुत्तरेणाऽऽग्नीध्रं पर्या- णीयाऽऽहवनीयस्यान्ते द्रोणकलशमव घ्रापयेदा जिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्वि- न्दवः समुद्रमिव सिन्धवः सा मा सहस्र आ भज प्रजया पशुभिः सह पुनर्माऽऽविशताद्रयिरिति प्रज- यैवैनं पशुभी रय्या सम् ( ६ ) अर्धयति प्रजावा- न्पशुमान्रयिमान्भवति य एवं वेद तया सहाऽऽग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादुभा जिग्य-

थुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति त्रेधाविभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति सहस्रस्यैवैनां मात्राम् (७) करोति रूपाणि जुहोति रूपैरेवैनाꣳ समर्धयति तस्या उपोत्थाय कर्णमा जपेदिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति देवेभ्य एवैनमा वेदयत्यन्वेनं देवा बुध्यन्ते ( ८ ) ॥

( एतदेतस्यां वीर्यमस्य त्रिभिश्च दत्ता सहस्रतमी तस्मादेव वरः मं मात्रामेकान्नचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

सोमः । वै । सहस्रम् । अविन्दत् । तम् । इन्द्रः । अन्विति । अविन्दत् । तौ । यमः । न्यागच्छदिति नि-आगच्छत् । तौ । अब्रवीत् । अस्तु । मे । अत्र । अपीति । इति । अस्तु । ही३ । इति । अब्रुताम् । सः । यमः । एकस्याम् । वीर्यम् । परीति । अपश्यत् । इयम् ।

वै । अस्य । सहस्रस्य । वीर्यम् । बिभर्ति । इति । तौ । अब्रवीत् । इयम् । मम । अस्तु । एतत् । युवयोः । इति । तौ । अब्रूताम् । सर्वं । वै । एतत् । एतस्याम् । वीर्यम् ( १ ) । परीति । पश्यामः । अꣳशम् । एति । हरामहै । इति । तस्याम् । अꣳशम् । एति । अहरन्त । ताम् । अप्स्वित्यप्–सु । प्रेति । अवेशयन् । सोमाय । उदेहीत्युत्–एहि । इति । सा । रोहिणी । पिङ्गला । एकहायनीत्येक–हायनी । रूपम् । कृत्वा । त्रयस्त्रिꣳशतेति त्रयः–त्रिꣳशता । च । त्रिभिरिति त्रि–भिः । च । शतैः । सह । उदैदित्युत–ऐत् । तस्मात् । रोहिण्या । पिङ्गलया । एकहायन्येत्येक–हायन्या । सोमम् । क्रीणीयात् । यः । एवम् । विद्वान् । रोहिण्या । पिङ्गलया । एकहायन्यत्येक–हायन्या । सोमम् । क्रीणाति । त्रयस्त्रिꣳशतेति त्रयः–त्रिꣳशता । च । एव । अस्य । त्रिभिरिति त्रि–भिः । च ( २ ) । शतैः । सोमः । क्रीतः । भवति । सुक्रीतेनेति सु–क्रीतेन । यजते । ताम् । अप्स्वित्यप्–सु । प्रेति । अवेशयन् । इन्द्राय । उदेहीत्युत्–एहि । इति । सा । रोहिणी । लक्ष्मणा । षष्ठौही । वार्त्रघ्नीति वार्त्र–घ्नी । रूपम् । कृत्वा । त्रयस्त्रिꣳशतेति त्रयः–त्रिꣳशता । च । त्रिभिरिति त्रि-भिः ।

च । शतैः । सह । उदैदित्युत्—ऐत् । तस्मात् । रोहिणीम् । लक्ष्मणाम् । पष्ठौहीम् । वार्त्रघ्नीमिति वार्त्र—घ्नीम् । दद्यात् । यः । एवम् । विद्वान् । रोहिणीम् । लक्ष्मणाम् । पष्ठौहीम् । वार्त्रघ्नीमिति वार्त्र—घ्नीम् । ददाति । त्रयस्त्रिꣳशदिति त्रयः—त्रिꣳशत् । च । एव । अस्य । त्रीणि । च । शतानि । सा । दत्ता ( ३ ) । भवति । ताम् । अप्स्विव-त्यप्—सु । प्रेति । अवेशयन् । यमाय । उदेहीत्युत्—एहि । इति । सा । जरती । मूर्खा । तज्जघन्येति तत्—जघन्या । रूपम् । कृत्वा । त्रयस्त्रिꣳशतेति त्रयः—त्रिꣳशता । च । त्रिभिरिति त्रि—भिः । च । शतैः । सह । उदैदित्युत्—ऐत् । तस्मात् । जरतीम् । मूर्खाम् । तज्जघन्यामिति तत्—जघन्याम् । अनुस्तरणीमित्यनु—स्तरणीम् । कुर्वीत । यः । एवम् । विद्वान् । जरतीम् । मूर्खाम् । तज्जघन्यामिति तत्—जघन्याम् । अनुस्तरणीमित्यनु—स्तरणीम् । कुरुते । त्रयस्त्रिꣳशदिति त्रयः—त्रिꣳशत् । च । एव । अस्य । त्रीणि । च । शतानि । सा । अमुष्मिन् । लोके । भवति । वाक् । एव । सहस्रतमीति सहस्र—तमी । तस्मात् ( ४ )। वरः । देयः । सा । हि । वरः । सहस्रम् । अस्य । सा । दत्ता । भवति । तस्मात् । वरः । न । प्रतिगृह्य इति प्रति—गृह्यः । सा । हि । वरः । सहस्रम् । अस्य । प्रतिगृहीत-

मिति प्रति—गृहीतम् । भवति । इयम् । वरः । इति ।
ब्रूयात् । अथ । अन्याम् । ब्रूयात् । इयम् । मम । इति ।
तथा । अस्य । तत् । सहस्रम् । अप्रतिगृहीतमित्यप्रति—
गृहीतम् । भवति । उभयतएनीत्युभयतः—एनी । स्यात् ।
तत् । आहुः । अन्यतएनीत्यन्यतः—एनी । स्यात् ।
सहस्रम् । परस्तात् । एताम् । इति । या । एव । वरः
( ५ ) । कल्याणी । रूपसमृद्धेति रूप—समृद्धा । सा ।
स्यात् । सा । हि । वरः । समृद्ध्या इति सम्—ऋद्ध्यै ।
ताम् । उत्तरेणेत्युत्—तरेण । आग्नीध्रमित्याग्नि—इध्रम् ।
पर्याणीयेति परि—आनीय । आहवनीयस्येत्या—हवनीयस्य ।
अन्ते । द्रोणकलशमिति द्रोण—कलशम् । अवेति । घ्राप-
येत् । एति । जिघ्र । कलशम् । महि । उरुधारेत्युरु—धारा ।
पयस्वती । एति । त्वा । विशन्तु । इन्दवः । समुद्रम् । इव ।
सिन्धवः । सा । मा । सहस्रे । एति । भज । प्रजयेति
प्र—जया । पशुभिरिति पशु—भिः । सह । पुनः । मा ।
एति । विशतात् । रयिः । इति । प्रजयेति प्र—जया । एव ।
एनम् । पशुभिरिति पशु—भिः । रय्या । समिति ( ६ ) ।
अर्धयति । प्रजावानिति प्रजा—वान् । पशुमानिति पशु—
मान् । रयिमानिति रयि—मान् । भवति । यः । एवम् ।

वेद । तया । सह । आग्नीध्रमित्याग्नि–इध्रम् । परेत्येति परा–इत्य । पुरस्तात् । प्रतीच्याम् । तिष्ठन्त्याम् । जुहुयात् । उभा । जिग्यथुः । न । परेति । जयेथे इति । न । परेति । जिग्ये । कतरः । चन । एनोः । इन्द्रः । च । विष्णो इति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वीति । तत् । ऐरयेथाम् । इति । त्रेधाविभक्तमिति त्रेधा–विभक्तम् । वै । त्रिरात्र इति त्रि–रात्रे । सहस्रम् । साहस्रीम् । एव । एनाम् । करोति । सहस्रस्य । एव । एनाम् । मात्राम् (७)। करोति । रूपाणि । जुहोति । रूपैः । एव । एनाम् । समिति । अर्धयति । तस्याः । उपोत्थायेत्युप–उत्थाय । कर्णम् । एति । जपेत् । इडे । रन्ते । अदिते । सरस्वति । प्रिये । प्रेयसि । महि । विश्रुतीति वि–श्रुति । एतानि । ते । अघ्निये । नामानि । सुकृतमिति सु–कृतम् । मा । देवेषु । ब्रूतात् । इति । देवेभ्यः । एव । एनम् । एति । वेदयति । अन्विति । एनम् । देवाः । बुध्यन्ते (८) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

पञ्चमेऽनुवाके त्रिरात्रोऽभिहितः । अथ षष्ठे तत्रत्यां सहस्रतमीं प्रपञ्चयितु मुपाख्यानं दर्शयति—

सोमो वै सहस्रमविन्दत्तमिन्द्रोऽन्वविन्दत्तौ यमो न्यागच्छत्तावब्रवीदस्तु मेऽत्रापीत्यस्तु ही३ इत्यब्रूता॑ स यम एकस्यां वीर्यं पर्यपश्यदियं वा अस्य सहस्रस्य वीर्यं बिभर्तीति तावब्रवीदियं ममास्त्वेतद्युवयोरिति तावब्रूता॑ सर्वे वा एतदेतस्यां वीर्यं परिपश्यामोऽ॑शमा हरामहा इति तस्याम॑शमाऽहरन्त, इति ।

पुरा कदाचित्सोमो गोसहस्रमलभत । तमनुगम्येन्द्रोऽपि तदेव गोसहस्रमलभत । तौ सोमेन्द्रौ प्रति यमोऽपि भागं निकामयमान आगच्छत् । आगत्य चात्र गोसहस्रे ममापि कश्चिद्भागोऽस्त्वित्यब्रवीत् । तावपि तथाऽस्त्वित्यङ्गी कुरुतः । आदरार्थः प्लुतः । ततः स यमः परीक्ष्य तस्मिन्सहस्र एकस्यामुत्तमायां गवि सामर्थ्यमपश्यत् । तत इयमेकैवास्य गोसहस्रस्य वीर्यं बिभर्तीति मनसा निश्चित्येयमेव ममास्तु युवयोरितरत्सहस्रमित्यब्रवीत् । ततस्तौ सोमेन्द्रावेवमुक्तवन्तौ सर्वेऽपि वयं मिलित्वैतस्यामुत्तमायां गवि वीर्यं परीक्ष्य तस्यामंशमेकैकं स्वी कुर्म इति विचार्य तथैव कृतवन्तः ॥

तत्र सोमस्य प्रथममंशहरणप्रकारं दर्शयति—

तामप्सु प्रावेशयन्त्सोमायोदेहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रि॑शता च त्रिभिश्च शतैः सहोदैत्तस्माद्रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणीयाद्य एवं विद्वान्रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति

त्रयस्त्रिꣳशता चैवास्य त्रिभिश्च शतैः सोमः
क्रीतो भवति सुक्रीतेन यजते, इति।

ते त्रयोऽपि मिलित्वा तामुत्तमां गां सोमायोदेहीत्येवं ब्रुवन्तोऽप्सु प्रावेशयन्। सोमस्य यथावद्रूपं योग्यं तत्तावद्रूपं गृहीत्वा जलादुद्गच्छेत्यर्थः। ततः सा गौरप्सु प्रविष्टा जलादुद्गमनवेलायां तत्प्रार्थितं रूपं कृत्वोदगच्छत्। तदेव रूपं स्पष्टी क्रियते—रोहिणी शरीरे लोहितवर्णा पिङ्गला पिङ्गलाक्ष्येकहायन्येक-संवत्सरवयस्का, ईदृशी सती लावण्योपेतं रूपं च कृत्वा गवामन्यासां त्रय-स्त्रिंशत्संख्यया शतत्रयसंख्यया च सह जलादुदगच्छत्। यस्मात्सोमार्थे रोहिण्यादिरूपं धृतवती तस्माद्रोहिण्यैकहायन्या पिङ्गलाक्ष्या सोमं क्रीणीयात्। तया क्रीतः सोमस्त्रयस्त्रिंशदधिकेन शतत्रयेण क्रीतो भवति। ततः सुक्रीतेन सोमेनासौ यजते॥

अथेन्द्रस्य तदीयांशहरणप्रकारं दर्शयति—

तामप्सु प्रावेशयन्निन्द्रायोदेहीति सा रोहिणी
लक्ष्मणा पष्ठौही वार्त्रघ्नी रूपं कृत्वा त्रयस्त्रिꣳशता
च त्रिभिश्च शतैः सहोदैत्तस्माद्रोहिणीं लक्ष्मणां
पष्ठौहीं वार्त्रघ्नीं दद्याद्य एवं विद्वान्रोहिणीं लक्ष्मणां
पष्ठौहीं वार्त्रघ्नीं ददाति त्रयस्त्रिꣳशच्चैवास्य
त्रीणि च शतानि सा दत्ता भवति, इति।

पूर्ववद्व्याख्येयम्। लक्ष्मणा शृङ्गपुच्छाद्यवयवसौष्ठवयोग्यलक्षणोपेता। पष्ठौही चतुर्वर्षा। वार्त्रघ्नी दर्शनमात्रेण मानसक्लेशापहन्त्री। यस्मादिन्द्रस्येदृशी प्रियोदैत्तस्मादीदृशीमेव दक्षिणात्वेन दद्यात्॥

अथ यमस्य तदीयांशहरणप्रकारं दर्शयति—

तामप्सु प्रावेशयन्यमायोदेहीति सा जरती मूर्खा
तज्जघन्या रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च
शतैः सहोदैत्तस्माज्जरतीं मूर्खां तज्जघन्यामनुस्त-

१ क. घ. ङ. च. °लक्ष्मणो°।

रणीं कुर्वीत य एवं विद्वाञरतीं मूर्खां तज्जघन्या-
मनुस्तरणीं कुरुते त्रयस्त्रिꣳशच्चैवास्य त्रीणि
च शतानि साऽमुष्मिँल्लोके भवति, इति।

जरती वृद्धा। मूर्खा रोपणशीला। सैव जघन्या तज्जघन्या, इयमेवात्यन्तकु-
रूपा नान्येत्यर्थः। अनुस्तरणी मृतं पुरुषमनु यां गां हत्वा तदवयवान्मेतपु-
रुषावयवेष्वास्तृणन्ति सेयमनुस्तरणी। सा च जरादिगुणयुक्ता कार्या।
*त(अ)स्याऽऽस्तरणेन परलोके त्रयस्त्रिंशदधिकगोशतत्रयं संपद्यते। शेषं पूर्व-
वत्। अत्र क्रयदानानुस्तरणीविषयः प्रासङ्गिकाः॥

एवमाख्यायिकया सहस्रतमीं प्रशस्याथ प्रकारान्तरेण प्रशंसति—

वागेव सहस्रतमी तस्माद्वरो देयः सा
हि वरः सहस्रमस्य सा दत्ता भवति तस्मा-
द्वरो न प्रतिगृह्यः सा हि वरः सहस्रमस्य प्रतिगृहीतं
भवतीयं वर इति ब्रूयादथान्यां ब्रूयादियं ममेति
तथाऽस्य तत्सहस्रमप्रतिगृहीतं भवति, इति।

येयं सहस्रतमी सोमाद्यर्थे रूपत्रयं स्वीकृत्य जलादुद्गता सा वाग्देवतैव। यस्मा-
दस्या वाग्देवतैव(ता)रूपं(पत्वं) तस्मात्सहस्रदक्षिणे यागे वाग्देवतात्वसंपादनाय
श्रेष्ठ एव गोविशेषो देयः। यस्मात्सहस्रतमी श्रेष्ठो गोविशेषस्तस्माच्छ्रेष्ठे दत्ते
सत्यस्य यजमानस्य सहस्रस्वरूपा सा सहस्रतमी दत्ता भवति। यस्माच्छ्रेष्ठो
गोविशेषः सहस्रसदृशस्तस्माच्छ्रेष्ठं गोविशेषं न प्रतिगृह्णीयात्। तत्प्रतिग्रहे
सति गोसहस्रप्रतिग्रहदोषो भवेत्। अथ कथंचित्प्रतिगृह्णीयात्तदानीमेवं निर्दि-
शेत्—योऽयं वरः सेयं सहस्रतमीति। एवं निर्दिश्याथान्यां प्रत्येवं ब्रूयात्-इयं
वरव्यतिरिक्ता ममेति। एवं निर्देशे सति वरप्रतिग्रहेऽपि सहस्रप्रतिग्रहदोषो न
भवति॥

* सर्वपुस्तकेषु 'तस्यास्तरणेन' इति वर्तते, परं तत्र पदच्छेदाविषये संदेहः। अतः श्रुत्यनुकूलतया 'अस्याऽऽस्तरेणेन' इति स्थापितम्। अस्यापि शेषपूरणेनार्थो ज्ञेयः।

१ ख. °रणी मृ°। २ ख. च 'स्माद्वाग्दे'। ३ ख. 'दा तामे°।

इत्थं सहस्रतमीं बहुधा प्रशस्य तस्या दातव्याया लक्षणं विधत्ते—

**उभयतएनी स्यात्**, इति ।

उभयोः पार्श्वयोः शुक्लरेखा यस्याः सेयमुभयतएनी ॥

अथ प्रकारान्तरेण लक्षणं विधत्ते—

**तदाहुरन्यतएनी स्यात्सहस्रं परस्तादेतमिति**, इति ।

तस्मिन्सहस्रतमीविषयेऽभिज्ञा एवमाहुः—अन्यतरस्मिन्नेव पार्श्वे शुक्लरेखा पर्याप्ता । तत्रोपपत्तिं चैवमाहुः—एतं परस्तात्सहस्रमेतस्य गोविशेषस्य परभागे गोसहस्रं तिष्ठत्यतो न तत्र शुक्लरेखाऽपेक्षितेति ॥

अथ सहस्रतमीप्रतिनिधित्वेन पक्षान्तरं विधत्ते—

**यैव वरः कल्याणी रूपसमृद्धा सा**
**स्यात्सा हि वरः समृद्ध्यै**, इति ।

या गौः कल्याणी बहुक्षीरादिगुणवती रूपसमृद्ध्यै द्धा) समीचीनशृङ्गपुच्छायुक्ता सैवात्र वरो दातव्यो गोविशेषः स्यात् । तद्दानेनैव समृद्धिर्भवति ॥

दातव्यायास्तस्या गोराघ्रापणं विधत्ते—

**तामुत्तरेणाऽऽग्नीध्रं पर्याणीयाऽऽहवनी-**
**यस्यान्ते द्रोणकलशमव घ्रापयेत्**, इति ।

अग्नीधः शरणमाग्नीध्रं तस्योत्तरभागे तां दातव्यां गां प्रदक्षिणत्वेनाऽऽनीयाऽऽहवनीयस्य समीपे द्रोणकलशस्थितं सोममवघ्रापयेत् ॥

तस्मिन्नाघ्रापणे मन्त्रमुत्पादयति—

**आ जिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः**
**समुद्रमिव सिन्धवः सा मा सहस्र आ भज प्रजया**
**पशुभिः सह पुनर्माऽऽ विशताद्रयिरिति**, इति ।

महीति गोर्नाम ल(व)क्ष्यते । हे महि त्वं द्रोणकलशं सर्वतो जिघ्र । कीदृशी त्वम्, उरुधारा दीर्घक्षीरधारोपेता । पयस्वती बहुलक्षीरोपेता । तादृशीं त्वामिन्दवः सोमबिन्दव आविशन्तु । यथा समुद्रं सिन्धवः प्रविशन्ति तद्वत् ।

सा त्वं मामस्मिन्गोसहस्र आभज सर्वतः प्रापय। तथा रयिर्धनं प्रजया पशुभिश्च सह मां पुनराविशतु ॥

आघ्रापणस्य फलं दर्शयति—

प्रजयैवैनं पशुभी रय्या समर्धयति, इति।

वेदनं प्रशंसति—

प्रजावान्पशुमान्रयिमान्भवति य एवं वेद, इति।

अथ तदङ्गभूतं कंचिद्धोमं विधत्ते—

तया सहाऽऽग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयात्, इति।

आहवनीयसमीपे स्थितया तया गवा सह पुनराग्नीध्रसमीपे प्रत्यागत्य तस्याऽऽग्नीध्रस्य पूर्वभागे प्रत्यङ्मुखत्वेन गवि स्थितायां जुहुयात् ॥

होमाङ्गभूतं मन्त्रं दर्शयति—

उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः। इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति, इति।

हे इन्द्राविष्णू युवामुभोभौ जिग्यथुः सर्वत्र जितवन्तौ, न पराजयेथे क्वापि पराजयं न प्राप्नुथः। एनोरेनयोरुभयोर्मध्ये कतरश्चनैकोऽपि न पराजिग्ये पराजयं न प्राप्तवान्। हे विष्णो त्वमिन्द्रश्चोभौ यदपस्पृधेथां यदा परस्परं स्पर्धितवन्तौ तत्तदा गोसहस्रं त्रेधा विभज्यैरयेथामिन्द्रस्य द्वौ भागौ विष्णोरेको भाग इत्येवं प्राप्तवन्तौ ॥

त्रेधा सहस्रमिति मन्त्रभागस्य तात्पर्यं दर्शयति—

त्रेधाविभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति सहस्रस्यैवैनां मात्रां करोति, इति।

त्रिरात्राख्ये यागे गोसहस्रं दिनत्रयार्थं त्रेधाविभक्तव्यमिति यत्तेनैनां सहस्रतमीमेव गां साहस्रीं सहस्रोपेतां करोति, न केवलं सहस्रोपेता किंतु तस्य सहस्रस्य यावती मात्रा तावन्मात्रामेवैनां करोति ॥

अथैतदङ्गभूतं होमान्तरं विधत्ते—

रूपाणि जुहोति रूपैरेवैनाꣳ समर्धयति, इति ।

रोहिणी पिङ्गलैकहायनीत्यादीनि यानि रूपाण्युक्तानि तानि जुहुयात् । रोहिण्यै स्वाहेत्यादयो मन्त्रास्तत्रोन्नेयाः । एतस्मिन्होमे कृते सत्यपोक्षितै रूपैरेवैनां गां समृद्धां करोति ॥

अथैतदङ्गभूतं जपं विधत्ते—

तस्या उपोत्थाय कर्णमा जपेत्, इति ।

तस्या गोः कर्णसमीपं प्रत्युपस्थितो भूत्वा वक्ष्यमाणं मन्त्रं जपेत् ॥

तमिमं मन्त्रं दर्शयति—

इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि
विश्रुत्येतानि ते अघ्निये नामानि
सुकृतं मा देवेषु ब्रुतादिति, इति ।

केनापि न हन्यत इत्यघ्निया गौः । हेऽघ्निये, इडादीनि तव नामानि । अतस्तैर्नामभिरिह संबोध्यते । एतादृशी त्वं देवेषु मध्ये मां यजमानं सुकृतं पुण्यकृतं ब्रूहि ॥

मन्त्रस्य तात्पर्यं दर्शयति—

देवेभ्य एवैनमा वेदयत्यन्वेनं देवा बुध्यन्ते, इति ॥

एतन्मन्त्रपाठेनेयं गौर्देवेभ्य एवैनं यजमानमावेदयति । ते च देवा एनं यजमानं पुण्यकारिणं जानन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

सहस्रतम्या वै यजमानः सुवर्गं लोकमेति सैनꣳ सुवर्गं लोकं गमयति सा मा सुवर्गं लोकं गमये-

त्याह सुवर्गमेवैनं लोकं गमयति सा मा ज्योति-ष्मन्तं लोकं गमयेत्याह ज्योतिष्मन्तमेवैनं लोकं गमयति सा मा सर्वान्पुण्यांल्लोकान्गमयेत्याह सर्वा-नेवैनं पुण्यांल्लोकान्गमयति सा (१) मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्माऽऽ विंशताद्रयि-रिति प्रजयैवैनं पशुभी रय्यां प्रति ष्ठापयति प्रजावान्पशुमान्रयिमान्भवति य एवं वेद तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाऽध्वर्यवे वा दद्यात्सहस्रमस्य सा दत्ता भवति सहस्रमस्य प्रति-गृहीतं भवति यस्तामविद्वान् ( २ ) प्रतिगृह्णाति तां प्रति गृह्णीयादेकाऽसि न सहस्रमेकां त्वा भूतां प्रति गृह्णामि न सहस्रमेका मा भूताऽऽ विश मा सहस्रमित्येकामेवैनां भूतां प्रति गृह्णाति न सहस्रं य एवं वेद स्योनाऽसि सुषदा सुशेवा स्योना माऽऽ विश सुषदा माऽऽ विश सुशेवा माऽऽ विश ( ३ ) इत्याह स्योनैवैनꣳ सुषदा सुशेवा भूताऽऽ विशति नैनꣳ हिनस्ति ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती३ सहस्रतमीꣳ सहस्रा३-मिति यत्प्राचीमुत्सृजेत्सहस्रꣳ सहस्रतम्यन्वियात्त-त्सहस्रमप्रज्ञात्रꣳ सुवर्गं लोकं न प्र जानीयात्प्रती-

(सहस्रतमीदानविधिः)

चीमुत्सृजति ताँ सहस्रमनु पर्यावर्तते सा प्रजानती सुवर्गं लोकमेति यजमानमभ्युत्सृजति क्षिप्रे सहस्रं प्र जायत उत्तमा नीयते प्रथमा देवान्गच्छति (४)

(लोकान्गमयति साऽविद्वान्त्सुशेवा माऽऽ विश यजमानं द्वादश च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ।)

---

सहस्रतम्येति सहस्र—तम्या । वै । यजमानः । सुवर्गमिति सुवः—गम् । लोकम् । एति । सा । एनम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । सा । मा । सुवर्गमिति सुवः—गम् । लोकम् । गमय । इति । आह । सुवर्गमिति सुवः—गम् । एव । एनम् । लोकम् । गमयति । सा । मा । ज्योतिष्मन्तम् । लोकम् । गमय । इति । आह । ज्योतिष्मन्तम् । एव । एनम् । लोकम् । गमयति । सा । मा । सर्वान् । पुण्यान् । लोकान् । गमय । इति । आह । सर्वान् । एव । एनम् । पुण्यान् । लोकान् । गमयति । सा (१) । मा । प्रतिष्ठामिति प्रति—स्थाम् ।

गमय । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । सह । पुनः । मा । एति । विशतात् । रयिः । इति । प्रजयेति प्र—जया । एव । एनम् । पशुभिरिति पशु—भिः । रय्याम् । प्रतीति । स्थापयति । प्रजावानिति प्रजा—वान् । पशुमानिति पशु—मान् । रयिमानिति रयि—मान् । भवति । यः । एवम् । वेद । ताम् । अग्नीध इत्यग्नि—इधे । वा । ब्रह्मणे । वा । होत्रे । वा । उद्गात्र इत्युत्—गात्रे । वा । अध्वर्यवे । वा । दद्यात् । सहस्रम् । अस्य । सा । दत्ता । भवति । सहस्रम् । अस्य । प्रतिगृहीतमिति प्रति—गृहीतम् । भवति । यः । ताम् । अविद्वान् ( २ ) । प्रतिगृह्णातीति प्रति—गृह्णाति । ताम् । प्रतीति । गृह्णीयात् । एका । असि । न । सहस्रम् । एकाम् । त्वा । भूताम् । प्रतीति । गृह्णामि । न । सहस्रम् । एका । मा । भूता । एति । विश । मा । सहस्रम् । इति । एकाम् । एव । एनाम् । भूताम् । प्रतीति । गृह्णाति । न । सहस्रम् । यः । एवम् । वेद । स्योना । असि । सुषदेति सु—सदा । सुशेवेति सु—शेवा । स्योना । मा । एति । विश । सुषदेति सु—सदा । मा । एति । विश । सुशेवेति सु—शेवा । मा । एति । विश ( ३ ) । इति । आह । स्योना । एव । एनम् । सुषदेति सु—सदा । सुशेवेति सु—शेवा । भूता । एति ।

विंशति । न । एनम् । हिनास्ति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । सहस्रम् । सहस्रतमीति सहस्र-तमी । अन्विति । एती३ । सहस्रतमीमिति सहस्र-तमीम् । सहस्रा३म् । इति । यत् । प्राचीम् । उत्सृजेदित्युत्-सृजेत् । सहस्रम् । सहस्रतमीति सहस्र-तमी । अन्विति । इयात् । तत् । सहस्रम् । अप्रज्ञात्रमित्यप्र-ज्ञात्रम् । सुवर्गमिति सुवः-गम् । लोकम् । न । प्रेति । जानीयात् । प्रतीचीम् । उदिति । सृजति । ताम् । सहस्रम् । अन्विति । पर्यावर्तत इति परि-आवर्तते । सा । प्रजानतीति प्र-जानती । सुवर्गमिति सुवः-गम् । लोकम् । एति । यजमानम् । अभि । उदिति । सृजति । क्षिप्रे । सहस्रम् । प्रेति । जायते । उत्तमेत्युत्-तमा । नीयते । प्रथमा । देवान् । गच्छति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाके सहस्रतमीं प्रशस्य तदङ्गभूतं होमादिकमुक्तम् । अथ सप्तमे तद्दानं ·भीयते ॥

तत्र यदुक्तं सूत्रकारेण 'तां यजमानोऽभिमन्त्रयते सा मा सुवर्गं लोकं गमयेति' इति, तानेतान्सहस्रतम्या अनुमन्त्रणमन्त्रांश्चतुरो ह्युत्पाद्य व्याचिख्यासुः प्रथममन्त्रतात्पर्यं दर्शयति—

सहस्रतम्या वै यजमानः सुवर्गं लोकमेति सैनꣳ सुवर्गं लोकं गमयति सा मा सुवर्गं लोकं गमयेत्याह सुवर्गमेवैनं लोकं गमयति, इति ।

यजमानोऽयं सहस्रतम्या गत्वा स्वर्गं लोकं प्राप्नोति । सा ह्येनं प्रापयति । तस्मात्सा मेत्यादिमन्त्रं पठेत् । हे सहस्रतमि सा त्वं मां स्वर्गं लोकं प्रापयेति तस्यार्थः । तेन सा स्वर्गं प्रापयत्येव ॥

एवमुत्तरेषां त्रयाणामपि मन्त्राणां क्रमेण तात्पर्यं दर्शयति—

सा मा ज्योतिष्मन्तं लोकं गमयेत्याह ज्योतिष्मन्तमेवैनं लोकं गमयति सा मा सर्वान्पुण्याँल्लोकान्गमयेत्याह सर्वानेवैनं पुण्याँल्लोकान्गमयति सा मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्माऽऽ विशताद्रयिरिति प्रजयैवैनं पशुभी रय्यां प्रति ष्ठापयति, इति ।

ज्योतिष्मानादित्यलोकः । इन्द्रलोकादयः पुण्याः । प्रतिष्ठां स्थिरावस्थानम् । प्रजया पशुभिश्च सह रयिर्धनं पुनर्मां प्रविशतु ॥

वेदनं प्रशंसति—

प्रजावान्पशुमान्रयिमान्भवति य एवं वेद, इति ।

तस्याः सहस्रतम्या दानं विधत्ते—

तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाऽध्वर्यवे वा दद्यात्सहस्रमस्य सा दत्ता भवति, इति ।

---

१ ग. व्युत्पाद्य ।

( सहस्रतमीदानविधिः )

अथ प्रतिग्रहदोषपरिहाराय तत्प्रतिग्रहमन्त्रं विधत्ते—

सहस्रमस्य प्रतिगृहीतं भवति यस्तामविद्वा-न्प्रतिगृह्णाति तां प्रति गृह्णीयादेकाऽसि न सहस्रमेकां त्वा भूतां प्रति गृह्णामि न सहस्रमेका मा भूताऽऽ विश मा सहस्रमिति, इति।

यो मन्त्रमविद्वान्सहस्रतमीं प्रतिगृह्णीयादस्य गोसहस्रं प्रतिगृहीतं भवति, तावान्प्रत्यवाय इत्यर्थः। अत एकाऽसीत्यादिमन्त्रेण तां सहस्रतमीं प्रतिगृह्णीयात्। मन्त्रार्थस्तु—सहस्रतमी त्वमेकैव गौरसि नतु सहस्रम्। अतस्त्वामेकामेवं भूतां प्रतिगृह्णामि न तु सहस्रं, त्वमप्येकैव भूता मां प्रविश, सहस्रं भूत्वा मा प्रविश। इतिशब्दो मन्त्रसमाप्त्यर्थः॥

मन्त्रवेदनं प्रशंसति—

एकामेवैनां भूतां प्रति गृह्णाति न सहस्रं य एवं वेद, इति।

अथ प्रतिग्रहादूर्ध्वं जप्यं मन्त्रमुत्पाद्य तात्पर्यं दर्शयति—

स्योनाऽसि सुषदा सुशेवा स्योना माऽऽ विश सुषदा माऽऽ विश सुशेवा माऽऽ विशे इत्याह स्योनैवैन॑सुषदा सुशेवा भूताऽऽ विशति नैन॑हिनस्ति, इति।

हे सहस्रतमि त्वं स्योना सुखप्रदा सुषदा दोहनादिकाले सुखेन प्राप्तुं शक्या सुशेवा कण्डूयनादिना सुखेन सेवितुं शक्या चासि। अतस्तथाविधैव भूत्वा मां प्रविश। एतन्मन्त्रपाठेन तथैव भूत्वा प्रविश्य सर्वप्रकारेणाप्येनं न हिनस्ति॥

अथान्वयव्यतिरेकाभ्यां प्रत्यङ्मुखत्वेनोत्सर्जनं विधत्ते—

ब्रह्मवादिनो वदन्ति सहस्र॑ सहस्रतम्यन्वेती३ सहस्रतमी॑ सहस्रा३मिति यत्प्राची मुत्सृजेत्सहस्र॑ सहस्रतम्यन्वियात्तत्सहस्रमप्रज्ञात्र॑ सुवर्गं लोकं न

प्र जानीयात्प्रतीचीमुत्सृजति ताᳪं सहस्रमनु पर्यावर्तते सा प्रजानती सुवर्गं लोकमेति, इति ।

किं गोसहस्रस्य पुरतो गमनं किं वा सहस्रतम्याः पुरतो गमनमिति ब्रह्मवादिनां विचारः । तत्र यदि प्राङ्मुखीमेनामुत्सृजेत्तदानीं पुरतो गोसहस्रे गच्छति सति पश्चादियं गच्छेत् । तदानीं प्रज्ञानरहितं गोसहस्रं स्वर्गं न जानीयात् । तस्मात्तत्परिहाराय प्रत्यङ्मुखीमेनामुत्सृजेत् । तदानीं पुरतो गच्छन्तीं तां सहस्रतमीमनु पृष्ठतो गोसहस्रं गच्छति । सा च सहस्रतमी मार्गाभिज्ञा सती स्वर्गं प्राप्नोति ॥

यदुक्तं सूत्रकारेण—'तां शतमानेन हिरण्येन निष्क्रीय यजमानस्य गोष्ठे विसृजति' इति, तदेतद्विधत्ते—

यजमानमभ्युत्सृजति क्षिप्रे सहस्रं प्र जायत उत्तमा नीयते प्रथमा देवान्गच्छति, इति ॥

ऋत्विग्भ्यो निष्क्रीतां तां सहस्रतमीं यजमानगृहाभिमुख्येनोत्सृजेत् । तथा सति यजमानगृहे स्वल्प एव काले सहस्रमुत्पद्यते । इयं च सहस्रतमी दक्षिणानयनकाले चरमा सती नीयते । स्वर्गप्राप्तिकाले प्रथमा सती यजमानेन सह देवान्गच्छति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः )

---

अत्रिरददादौर्वाय प्रजां पुत्रकामाय स रिरिचानोऽमन्यत निर्वीर्यः शिथिलो यातयामा स एतं चतूरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै तस्य चत्वारो वीरा आऽजायन्त सुहोता सूद्गाता स्वध्वर्युः

सुसंभेयो य एवं विद्वाꣳश्चतूरात्रेण यजेत आऽस्य चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्युः सुसंभेयो ये चतुर्विꣳशाः पवमाना ब्रह्मवर्चसं तत् (१) य उद्यन्तः स्तोमाः श्रीः साऽत्रिꣳ श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपानमन्तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यꣳ स एताꣳ-श्चतुरश्चतुष्टोमान्सोमानपश्यत्तानाऽहरत्तैरयजत तेज एव प्रथमेनावारुन्धेन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन य एवं विद्वाꣳश्चतुरश्चतुष्टोमा-न्सोमानाहरति तैर्यजते तेज एव प्रथमेनाव रुन्ध इन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन यामेवात्रिर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति (२)

( तत्तेज एवाष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

अत्रिः । अददात् । और्वाय । प्रजामिति प्र-जाम् । पुत्रकामायेति पुत्र-कामाय । सः । रिरिचानः । अमन्यत ।

निर्वीर्य इति निः—वीर्यः । शिथिलः । यातयामेति यात—यामा । सः । एतम् । चतूरात्रमिति चतुः—रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । तस्य । चत्वारः । वीराः । एति । अजायन्त । सुहोतेति सु—होता । सूद्गातेति सु—उद्गाता । स्वध्वर्युरिति सु—अध्वर्युः । सुसंभेय इति सु—सभेयः । यः । एवम् । विद्वान् । चतूरात्रेणेति चतुः—रात्रेण । यजते । एति । अस्य । चत्वारः । वीराः । जायन्ते । सुहोतेति सु—होता । सूद्गातेति सु—उद्गाता । स्वध्वर्युरिति सु—अध्वर्युः । सुसंभेय इति सु—सभेयः । ये । चतुर्विंशा इति चतुः—विंशाः । पवमानाः । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । तत् ( १ ) । ये । उद्यन्त इत्युत्—यन्तः । स्तोमाः । श्रीः । सा । अत्रिम् । श्रद्धादेवमिति श्रद्धा—देवम् । यजमानम् । चत्वारि । वीर्याणि । न । उपेति । अनमन् । तेजः । इन्द्रियम् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अन्नाद्यमित्यन्न—अद्यम् । सः । एतान् । चतुरः । चतुष्टोमानिति चतुः—स्तोमान् । सोमान् । अपश्यत् । तान् । एति । अहरत् । तैः । अयजत । तेजः । एव । प्रथमेन । अवेति । अरुन्ध । इन्द्रियम् । द्वितीयेन । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । तृतीयेन । अन्नाद्यमित्यन्न—अद्यम् । चतुर्थेन । यः । एवम् । विद्वान् ।

चतुरः । चतुष्टोमानिति चतुः-स्तोमान् । सोमान् । आहरतीत्या-हरति । तैः । यजते । तेजः । एव । प्रथमेन । अवेति । रुन्धे । इन्द्रियम् । द्वितीयेन । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । तृतीयेन । अन्नाद्यमित्यन्न-अद्यम् । चतुर्थेन । याम् । एव । अत्रिः । ऋद्धिम् । आर्ध्नोत् । ताम् । एव । यजमानः । ऋध्नोति (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ।)

---

सप्तमे सहस्रतमीदानमुक्तम् । तावता पञ्चममारभ्य त्रिष्वनुवाकेषु गर्ग-त्रिरात्रः समापितः । अथाष्टमनवमयोर्द्वौ चतूरात्रावुच्येते ॥

तत्रात्रेश्चतूरात्रमष्टमेऽभिधत्ते—

अत्रिरददादौर्वाय प्रजां पुत्रकामाय स रिरिचानोऽमन्यत निर्वीर्यः शिथिलो यातयामा स एतं चतूरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै तस्य चत्वारो वीरा आऽजायन्त सुहोता सूद्गाता स्वध्वर्युः सुसभेयो य एवं विद्वाꣳश्चतूरात्रेण यजत आऽस्य चत्वारो वीरा जायन्ते सूहोता सुद्गाता स्वध्वर्युः सुसभेयः, इति ।

उर्वस्य पुत्र और्वः । स च पुत्रकामोऽत्रिं याचितवान् । तस्मै सोऽत्रिः स्वीयां प्रजां ददौ । ततः प्रजाराहित्येन रिक्तः सन्मनस्येवममन्यत—अहं निर्वीर्यः प्रजोत्पादनसामर्थ्यरहितः, शिथिलः कार्येष्वक्षमः, यातयामा गत-सारश्चास्मीति विचार्य प्रजोत्पादनसाधनं चतूरात्रं निश्चित्य तत्सामग्रीमाहृत्य

तेनायजत । तस्य सुहोत्रादयश्चत्वारः पुत्रा उत्पन्नाः । ते च हौत्र औद्गात्र आध्वर्यवे यज्ञप्रयोगोपदेशे च कुशलाः । अतोऽन्येऽपि चतूरात्रेणेष्ट्वा तादृशा न्पुत्राँल्लभन्ते ॥

अत्र बहिष्पवमानमाध्यंदिनपवमानार्भवपवमानेषु त्रिष्वपि स्तोमविशेषं विधत्ते—

ये चतुर्विꣳशाः पवमाना ब्रह्मवर्चसं तत्, इति ।

चतुर्विंशतिसंख्यया यत्र स्तोत्रिया ऋच आवृत्ताः स स्तोमश्चतुर्विंशः । तादृशेन स्तोमेन युक्ता ये पवमानास्ते कर्तव्याः । तथा सति तत्पवमानत्रयं सर्वं ब्रह्मवर्चसस्वरूपं भवति । चतुर्विंशतिसंख्याया गायत्रीजपादिना ब्रह्मवर्चसहेतुत्वात् ॥

अथ पवमानव्यतिरिक्तस्तोत्रेषूत्तरोत्तरस्तोमवृद्धिं विधत्ते—

य उद्यन्तः स्तोमाः श्रीः सा, इति ।

उत्तरोत्तरमुत्कर्षं गच्छन्तः स्तोमा उद्यत्स्तोमाः । तादृशा ये सन्ति सैः श्रीः । तद्धेतुत्वेन तेषां श्रीत्वम् । अभिवृद्धिप्रकारः सूच्यते—सन्ति त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः षट्स्तोमाः । तत्र प्रथमेऽह्नि प्रातःसवनं त्रिवृत्स्तोमयुक्तम् । माध्यंदिनं सवनं पञ्चदशस्तोमयुक्तम् । तृतीयसवनं सप्तदशस्तोमयुक्तम् । अथ द्वितीयेऽह्नि त्रिवृतं परित्यज्यैकविंशं स्तोमं स्वीकृत्य पञ्चदशसप्तदशैकविंशैः सवनत्रयं निष्पाद्यम् । तृतीयेऽह्नि सप्तदशैकविंशत्रिणवैः । चतुर्थे त्वह्नि एकविंशत्रिणवत्रयस्त्रिंशैः । तदिदमुद्यत्स्तोमत्वम् ॥

तमिमं चतूरात्रविकारं प्रशंसति—

अत्रिꣳ श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपानमन्तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यꣳ स एताꣳश्चतुरश्चतुष्टोमान्सोमानपश्यत्तानाऽहरत्तैरयजत तेज

---

१ च. °संख्यया गायत्रीछन्दसा च ब्र° । २ ख. °यम्या त्र° । ३ क. घ. ङ. °मविशेषं वि° ।
४ च. °त्रका° ।

एव प्रथमेनावारुन्धेन्द्रियं द्वितीयेन ब्रह्म-
वर्चसं तृतीयेनान्नाद्यं चतुर्थेन, इति ।

श्रद्धादेवो यस्यासौ श्रद्धादेवः । यथा देवतायामादरस्तथा श्रद्धायामित्यर्थः । तादृशोऽत्रिर्यजमानः सर्वदा यागान्करोति । तथाविधं यजमानं तेजआदीनि न प्राप्नुवन् । तेजः शरीरकान्तिः । इन्द्रियं चक्षुरादिसामर्थ्यम् । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः । अन्नाद्यं स्वाद्वन्नसंपत्तिः । एकैकस्मिन्नह्नि पवमानेषु चतुर्विंशस्तोमः । पवमानत्रयार्थमुक्तरीत्या त्रिवृदादयस्त्रयःस्तोमाः । एवं चतुर्ष्वपि दिनेषु चतुष्टोमाश्चत्वारः सोमयागास्तदनुष्ठानेनात्रिस्तेजआदिकमलभत ॥

पूर्वं चतूरात्रेणायजतेति कृत्स्नः क्रतुर्विहितः । इदानीं कत्ववयवांश्चतुरहार्विशेषान्विधत्ते —

य एवं विद्वाꣳश्चतुरश्चतुष्टोमान्सोमानाहरति
तैर्यजते तेज एव प्रथमेनाव रुन्ध इन्द्रियं
द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन यामेवात्रिर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति, इति ॥

तेज एव प्रथमेनेत्यादेरुक्तस्यैव संग्रहार्थं यामेवेत्यादिपुनर्वचनम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः )

---

जमदग्निः पुष्टिकामश्चतूरात्रेणायजत स एतान्पोषाꣳ अपुष्यत्तस्मात्पलितौ जामदग्न्यौ न सं

जानाते एतानेव पोषान्पुष्यति य एवं विद्वाꣳश्चतूरात्रेण यजते पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशः पशूनेवाव रुन्धेऽन्नं वै पुरोडाशोऽन्नमेवाव रुन्धेऽन्नादः पशुमान्भवति य एवं विद्वाꣳश्चतूरात्रेण यजते ( १ ) ॥

( जमदग्निरष्टाचत्वारिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

जमदग्निः । पुष्टिकाम इति पुष्टि—कामः । चतुरात्रेणेति चतुः—रात्रेण । अयजत । सः । एतान् । पोषान् । अपुष्यत् । तस्मात् । पलितौ । जामदग्नियौ । न । समिति । जानाते इति । एतान् । एव । पोषान् । पुष्यति । यः । एवम् । विद्वान् । चतूरात्रेणेति चतुः—रात्रेण । यजते । पुरोडाशिन्यः । उपसद इत्युप—सदः । भवन्ति । पशवः । वै । पुरोडाशः । पशून् । एव । अवेति । रुन्धे । अन्नम् । वै । पुरोडाशः । अन्नम् । एव । अवेति । रुन्धे । अन्नाद इत्यन्न—अदः । पशुमानिति पशु—मान् । भवति । यः ।

( जामदग्न्यचतूरात्राभिधानम् )

एवम् । विद्वान् । चतूरात्रेणेति चतुः-रात्रेण । यजते (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाके चतूरात्र आत्रेयो निरूपितः। अथ नवमे जामदग्न्यश्चतूरात्रो निरूप्यते ॥

तमिमं विधातुं प्रस्तौति—

जमदग्निः पुष्टिकामश्चतूरात्रेणायजत स एतान्पोषा१ँ अपुष्यत्तस्मात्पलितौ जामदग्नियौ न सं जानाते, इति ।

एताँल्लोकप्रसिद्धान्प्रजापशुधनपोषानपुष्यत्संपादितवान्। यस्मादेव जमदग्निः पुष्टिहेतुयागप्रवर्तकस्तस्माज्जामदग्नियौ तद्वंशोत्पन्नौ द्वौ पितृपुत्रौ पुष्टिमन्तरेण वृथैव पलितौ दरिद्रौ न जानाते नोत्पद्येते। यद्वा वृथैव पलितं स्वकीयं देहं न जानाते। अयमर्थः—पुष्टिसंप्रदायस्य जमदग्निना प्रवर्तितत्वात्तद्वंशे कोऽपि दरिद्रो नास्ति। यदि कश्चित्प्रमादात्स्यात्तथाऽपि नैरन्तर्येण द्वौ पुरुषौ पुष्टिमन्तरेण वृथा पलितौ न स्त एवेति ॥

अथ विधत्ते—

एतानेव पोषान्पुष्यति य एवं विद्वा१ँश्चतूरात्रेण यजते, इति ।

अत्रोपसत्सु कंचिद्विशेषं विधत्ते—

पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशः पशूनेवाव रुन्धेऽन्नं वै पुरोडाशोऽन्नमेवाव रुन्धे, इति ।

पुरोडाश आसूपसत्स्वस्तीति पुरोडाशिन्यः। द्वादशसूपसत्सु द्वादश पुरोडा-

शविशेषान्सूत्रकारो दर्शयति—'आग्नेय एककपाल आश्विनो द्विकपालो वैष्णव-स्त्रिकपालः सौर्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः षट्कपालो मारुतः सप्तकपालो बार्हस्पत्योऽष्टाकपालो मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालो दर्विहोमा भवन्ति' इति । पुरोडा-शानां पशुहेतुत्वादन्नहेतुत्वादन्नरूपत्वाच्च तदुभयप्राप्तिः ॥

एतद्वेदनपूर्वकमनुष्ठानं प्रशंसति—

अन्नादः पशुमान्भवति य एवं
विद्वाꣳश्चतूरात्रेण यजते, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतै-
त्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

संवत्सरो वा इदमेक आसीत्सोऽकामयतर्तून्त्सृजे-येति स एतं पञ्चरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स ऋतूनसृजत य एवं विद्वान्पञ्चरात्रेण यजते प्रैव जायते त ऋतवः सृष्टा न व्यावर्तन्त त एतं पञ्चरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै ते व्यावर्तन्त ( १ ) य एवं विद्वान्पञ्चरात्रेण यजते वि पाप्मना भ्रातृव्येणाऽऽ वर्तते सार्वसेनिः शौचेयोऽकामयत पशुमान्त्स्यामिति स एतं पञ्चरा-त्रमाऽहरत्तेनायजत ततो वै स सहस्रं पशून्प्राऽऽप्नोद्य एवं विद्वान्पञ्चरात्रेण यजते प्र सहस्रं पशूनाप्नोति

बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति स एतं पञ्चरात्रमा (२) अहरत्तेनायजत ततो वै स वाचः प्रवदिताऽभवद्य एवं विद्वान्पञ्चरात्रेण यजते प्रवदितैव वाचो भवत्यथो एनं वाचस्पतिरित्याहुरनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथ वा एष संप्रति यज्ञो यत्पञ्चरात्रो य एवं विद्वान्पञ्चरात्रेण यजते संप्रत्येव यज्ञेन यजते पञ्चरात्रो भवति पञ्च वा ऋतवः संवत्सरः (३) ऋतुष्वेव संवत्सरे प्रति तिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायते पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै (४) ॥

(ते व्यावर्तन्त प्रवदिता स्यामिति स एतं पञ्चरात्रमा संवत्सरेऽभिजित्यै)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

संवत्सर इति सं–वत्सरः । वै । इदम् । एकः । आसीत् । सः । अकामयत । ऋतून् । सृजेय । इति । सः । एतम् । पञ्चरात्रमिति पञ्च–रात्रम् । अपश्यत् । तम् । एति । अह-रत् । तेन । अयजत । ततः । वै । सः । ऋतून् । असृ-जत । यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च–रात्रेण । यजते । प्रेति । एव । जायते । ते । ऋतवः । सृष्टाः । न । व्यावर्तन्तेति वि–आवर्तन्त । ते । एतम् । पञ्चरात्रमिति पञ्च–रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अयजन्त । ततः । वै । ते । व्यावर्तन्तेति वि–आवर्तन्त ( १ ) । यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च–रात्रेण । यजते । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तते । सार्वसेनिरिति सार्व–सेनिः । शौचेयः । अकामयत । पशुमानिति पशु–मान् । स्याम् । इति । सः । एतम् । पञ्चरात्रमिति पञ्च–रात्रम् । एति । अहरत् । तेन । अय-जत । ततः । वै । सः । सहस्रम् । पशून् । प्रेति । आप्नोत । यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च–रात्रेण । यजते । प्रेति । सहस्रम् । पशून् । आप्नोति । बबरः । प्रावाहणिः । अकामयत । वाचः । प्रवदितेति प्र–

वदिता । स्याम् । इति । सः । एतम् । पञ्चरात्रमिति पञ्च–रात्रम् । एति ( २ ) । अहरत् । तेन । अयजत । ततः । वै । सः । वाचः । प्रवदितेति प्र–वदिता । अभवत् । यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च–रात्रेण । यजते । प्रवदितेति प्र–वदिता । एव । वाचः । भवति । अथो इति । एनम् । वाचः । पतिः । इति । आहुः । अनाप्तः । चतूरात्र इति चतुः–रात्रः । अतिरिक्त इत्यति–रिक्तः । षड्रात्र इति षट्–रात्रः । अथ । वै । एषः । संप्रतीति सं–प्रति । यज्ञः । यत् । पञ्चरात्र इति पञ्च–रात्रः । यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च–रात्रेण । यजते । संप्रतीति सं–प्रति । एव । यज्ञेन । यजते । पञ्चरात्र इति पञ्च–रात्रः । भवति । पञ्च । वै । ऋतवः । संवत्सर इति सं–वत्सरः ( ३ ) । ऋतुषु । एव । संवत्सर इति सं–वत्सरे । प्रतीति । तिष्ठति । अथो इति । पञ्चाक्षरेति पञ्च–अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । त्रिवृदिति त्रि–वृत् । अग्निष्टोम इत्यग्नि–स्तोमः । भवति । तेजः । एव । अवेति । रुन्धे । पञ्चदश इति पञ्च–दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धे । सप्तदश इति सप्त–दशः । भवति । अन्नाद्यस्येत्यन्न–अद्यस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । अथो

इति । प्रेति । एव । तेन । जायते । पञ्चविꣳश इति पञ्च—विꣳशः । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । महाव्रतवानिति महाव्रत—वान् । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । विश्वजिदिति विश्व—जित् । सर्वपृष्ठ इति सर्व—पृष्ठः । अतिरात्र इत्यति—रात्रः । भवति । सर्वस्य । अभिजित्या इत्यभि—जित्यै (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः)

---

नवमेऽनुवाके जामदग्न्यचतूरात्र उक्तः । अथ दशमे पञ्चरात्रोऽभिधीयते ॥

तमिमं विधत्ते—

संवत्सरो वा इदमेक आसीत्सोऽकामयतर्तून्सृजेयेति स एतं पञ्चरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स ऋतूनसृजत य एवं विद्वान्पञ्चरात्रेण यजते प्रैव जायते, इति ।

इदं वसन्ताद्यृतुभेदोपेतं कालस्वरूपमृतूत्पत्तेः पूर्वं संवत्सरात्मक एक एव प्रजापतिरासीत् । स ऋतून्सिसृक्षुस्तत्साधनत्वेन पञ्चरात्रयागमनुष्ठाय सृष्टवान् । एवमन्योऽपि प्रजाकामस्तेन यागेन प्रजामुत्पादयति ।

अथ व्यावृत्तिकामस्य तमेव विधत्ते—

त ऋतवः सृष्टा न व्यावर्तन्त त एतं पञ्चरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै ते व्यावर्तन्त य एवं विद्वा-

न्पञ्चरात्रेण यजते वि पाप्मना भ्रातृव्येणाऽऽवर्तते, इति ।

प्रजापतिना सृष्टा वसन्ताद्यृतुदेवास्तत्तदृतुलिङ्गविशेषैर्व्यावृत्तिमलभमानास्तत्साधनत्वेन पञ्चरात्रमनुष्ठाय तत्तदृतुलिङ्गैर्व्यावृत्तिं प्राप्ताः । एवमन्योऽप्यनुष्ठाय पाप्मना भ्रातृव्येण च वियोगं प्राप्नोति ॥

अथ पशुप्राप्त्यर्थं तमेव विधत्ते—

सार्वसेनिः शौचेयोऽकामयत पशुमान्त्स्यामिति स एतं पञ्चरात्रमाऽहरत्तेनायजत ततो वै स सहस्रं पशून्प्राऽऽप्नोद्य एवं विद्वान्पञ्चरात्रेण यजते प्र सहस्रं पशूनाप्नोति, इति ।

सर्वसेनाख्यस्य पुरुषस्यापत्यं सार्वसेनिः। शुच्याख्यायाः स्त्रिया अपत्यं शौचेयः ॥

अथ सभायां वक्तृत्वविशेषं कामयमानस्य तमेव पञ्चरात्रं विधत्ते—

बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति स एतं पञ्चरात्रमाऽहरत्तेनायजत ततो वै स वाचः प्रवदिताऽभवद्य एवं विद्वान्पञ्चरात्रेण यजते प्रवदितैव वाचो भवत्यथो एनं वाचस्पतिरित्याहुः, इति ।

बबरो नामतः, प्रवाहणस्यापत्यं प्रावाहणिः। बबरवदन्योऽपि पञ्चरात्रेण सभायां प्रकर्षेण वक्ता भवति । तदीयं वक्तृत्वमनुमोदमानाः सर्वे सभ्यास्तं वाचस्पतिरित्येवं व्यवहरन्ति ॥

एवं बहुविधफलसाधनत्वेन पञ्चरात्रं विधाय न्यूनातिरेकाभावेन तं प्रशंसति—

अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथवा एष संप्रति यज्ञो यत्पञ्चरात्रो य एवं विद्वान्पञ्चरात्रेण

यजते संप्रत्येव यज्ञेन यजते, इति ।

एकेनाह्ना न्यूनत्वाच्चतूरात्रो नोक्तेभ्यः फलेभ्यः पर्याप्तः । पञ्चभिरेवाहोभिस्तत्फलनिर्वृत्तेरेकेनाह्ना षड्रात्रोऽतिरिक्तः । एष पञ्चरात्रः संप्रति समीचीनो न्यूनातिरेकाभावेन योग्यः । अत एतदनुष्ठायी योग्येनैव यज्ञेनेष्टवान्भवति ॥

अथाहर्गतां पञ्चसंख्यां प्रशंसति—

पञ्चरात्रो भवति पञ्च वा ऋतवः संवत्सर
ऋतुष्वेव संवत्सरे प्रति तिष्ठत्यथो पञ्चाक्षरा
पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे, इति ।

हेमन्तशिशिरयोः समासादृतूनां पञ्चत्वम् ॥

अथ पञ्चरात्रावयवभूतानि पञ्चाहानि विधत्ते—

त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवन्तीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायते पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै, इति ।

प्रकृतौ हि त्रिवृत्पञ्चदशसप्तदशैकविंशैश्चतुर्भिः स्तोमैरग्निष्टोमगतानि द्वादश स्तोत्राणि निष्पाद्यन्ते । अत्र त्वेकेनैव त्रिवृत्स्तोमेन सर्वस्तोत्रनिष्पत्तिः । तादृशोऽग्निष्टोमः प्रथममहः । त्रिवृदग्न्योरुभयोर्मुखेन सहोत्पन्नत्वात्त्रिवृता तेजःप्राप्तिः । पञ्चदशेनैकेनैव स्तोमेन युक्त उक्थ्यो द्वितीयमहः । पञ्चदशस्तोमस्येन्द्रस्य चोरसो बाहुभ्यां सहोत्पन्नत्वात्पञ्चदशेनेन्द्रियप्राप्तिः । सप्तदशेनैकेन स्तोमेन युक्त उक्थ्यस्तृतीयमहः । सप्तदशस्यान्नाधारे मध्यप्रदेश उत्पन्नत्वात्तेनान्नप्राप्तिः अपि च सप्तदशस्य प्राजापत्यत्वात्तेन प्रजोत्पादनमपि भवति । यद्यप्यत्रो भयत्रोक्थ्यो न श्रुतस्तथाऽप्यहीनानामेतेषां द्वादशाहविकृतित्वाद्द्वादशाहे च प्रायणीयानन्तरभाविनः पृष्ठ्यषडहस्य पञ्चरात्रप्रकृतित्वात्पृष्ठ्यषडहे च द्वितीयतृतीययोरुभयोरुक्थ्यत्वात्तद्विकृतिरूपयोरनयोरप्यह्नोरुक्थ्यत्वं लभ्यते । एतदेवाभिप्रेत्य बौधायनेनोक्तम्—‘ तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः

सप्तदश उक्थ्यः पञ्चविंशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः' इति। चोदकप्राप्तानामपि त्रयाणामत्रैवाम्नानं विस्पष्टार्थं पुनर्विधानम्। पञ्चविंशेनैकेनैव स्तोमेन युक्तोऽग्निष्टोमश्चतुर्थमहः। यद्यपि त्रिवृदादिस्तोमवत्सामब्राह्मणे पञ्चविंशस्तोमो नाऽऽम्नातस्तथाऽपि सूत्रकारोक्तप्रकारेण स स्तोम उन्नेयः। अस्य च स्तोमस्य प्रजापतिदेवताकत्वात्तेन तत्प्राप्तिः। स चाग्निष्टोमो महाव्रतधर्मवान्। गवामयने महाव्रताख्यमेकमहः। तस्मिन्नहनि यानि स्तोत्राणि तान्यत्र प्रयोक्तव्यानीत्यर्थः। महाव्रतस्यान्नसाधनत्वात्तेनान्नप्राप्तिः। विश्वजिन्नामाऽग्निष्टोमविकारः कश्चिदेकाहः। सोऽत्रातिरात्रविकृतित्वमापादितः पञ्चममहर्भवति। स पुनः सर्वपृष्ठो रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यानि पृष्ठस्तोत्रगतानि सामानि सर्वाण्यपि यस्यासौ सर्वपृष्ठः। स च सर्वस्य फलस्याभिजित्यै संपद्यते॥

अत्र मीमांसा।

अष्टमाध्यायस्य प्रथमपादे दशमाधिकरणे चिन्तितम्—

अहर्गणेषु सोमस्य द्वादशाहस्य वाऽग्रिमः।
पूर्ववद्दिनसंघादिविशेषैरन्तिमो भवेत्॥

द्विरात्रमारभ्य शतरात्रपर्यन्तेषु अहर्गणेषु गवामयने च पूर्ववदव्यक्तलिङ्गेन सोमस्य धर्मा इति चेन्न। विशेषलिङ्गसद्भावात्। द्वादशाहपदान्तर्गतोऽहःशब्दः षष्टिघटिकात्मकदिनपरः। द्विरात्रादिपदान्तरगतो रात्रिशब्दश्च तादृशः एतदेकं विशेषलिङ्गम्। अहःसंघो द्वितीयं, द्वादश दीक्षास्तृतीयं, तच्च गवामयने विद्यते। तत्र ह्यभीन्धत एव दीक्षाभिरित्युक्त्वा दीक्षायुग्मानि(णि) षड्न्यस्तानि—'द्वाभ्यां लोमावद्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृद्द्वाभ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रम्' इति। तस्मादहर्गणेषु द्वादशाहस्य धर्माः॥

प्रथमाध्यायस्य तृतीयपादे पञ्चमाधिकरणे चिन्तितम्—

लौकिको वाक्यगो वाऽर्थस्त्रिवृदादेः समत्वतः।
उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः॥

त्रिवृद्बहिष्पवमानमिति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोके प्रसिद्धोऽर्थः। दशपादकत्रयात्मकेषु त्रिषु सूक्तेष्ववस्थितानां बहिष्पवमानस्तोत्रनिष्पादनानामुपास्मै गायता नर इत्यादीनामृचां नवकमर्थः। तत्र धर्मनिर्णये वेदस्य बलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वादुभावर्थौ विकल्पेन

ग्रहीतव्याविति चेन्मैवम् । लौकिकार्थस्वीकारपक्षे विधिवाक्येऽर्थस्त्रैगुण्यम्, अर्थवादवाक्ये स्तोत्रियाणामृचां नवकमित्येवं विध्यर्थवादवाक्ययोर्वैयधिकरण्यादेकवाक्यत्वं न स्यादत एकवाक्यत्वाय स्तोत्रियाणां नवकमेव विधिवाक्ये नियतोऽर्थः ॥

दशमाध्यायस्य षष्ठपादे सप्तमाधिकरणे चिन्तितम्—

त्रिवृदग्निष्टुदित्येतत्सर्वत्र स्तोम एव वा ।
आद्यस्त्रैगुण्यवाचित्वादन्त्यः स्तोमेऽस्य रूढितः ॥

एवं श्रूयते—'त्रिवृदग्निष्टुदग्निष्टोमः' इति । किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु संपद्यते, किं वा स्तोममात्रसंबन्धि । तत्र त्रिवृद्रज्जुरित्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनादत्रापि क्रतुसाधनेषु या या संख्या श्रूयते सा सर्वा त्रित्वेन विक्रियत इति प्राप्ते ब्रूमः—यद्यपि त्रिवृच्छब्दोऽवयवप्रसिद्ध्या लोके त्रैगुण्यं ब्रूते तथाऽपि वेदे रूढ्या स्तोमवाची । त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तोत्रियाणां नवानामृचामनुक्रमणादत्र स्तोमविषयमेव त्रिवृत्त्वम् ॥

सप्तमाध्यायस्य तृतीयपादे तृतीयाधिकरणे चिन्तितम्—

विश्वजित्सर्वपृष्ठः किमनुवादो रथंतरम् ।
बृहता वा समुच्चेयं यद्वा षाडहिकानि षट् ॥
अतिदेश्यानि तत्राऽऽद्यो माहेन्द्रादिचतुष्टये ।
पृष्ठशब्दाच्चोदकेन सर्वेषामिह संभवात् ॥
समुच्चयो वा विषये सर्वत्वं बह्वपेक्षया ।
न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ॥

"विश्वजित्सर्वपृष्ठो भवति" इति श्रूयते । तत्र सर्वपृष्ठशब्दोऽनुवादः । कुतः प्राप्तत्वात् । तथा हि ज्योतिष्टोमे माध्यंदिनपवमानानन्तरभावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति । 'अभि त्वा शूर नोनुमः' 'कया नश्चित्र आभुवत्' 'तं वो दस्ममृतीषहं' 'तरोभिर्वो विदद्वसुम्' इत्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदशस्तोमतामापाद्य गीयन्ते । एकस्मिन्सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन सप्तदशधाऽभ्यासः सप्तदशस्तोमः । तादृशेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते—'सप्तदशानि पृष्ठानि' इति । तानि चत्वारि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात्सर्वपृष्ठशब्देनानूद्यन्त इत्याद्यः पक्षः

१ च. °न इत्यु° । २ क. घ. ङ. च. स्तोत्रवि° । ३ क. घ. ङ. °नि चो° ।

रथंतरपृष्ठबृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पमाप्तौ सर्वशब्देन समुच्चयो विधीयते । तथा सत्यनुवादकृतं वैयर्थ्यं न भविष्यतीति द्वितीयः पक्षः । सर्वत्वं बहुषु मुख्यं न तु द्वयोः । तस्मादनेन सर्वपृष्ठशब्देन षट्संख्याकानि पृष्ठान्यतिदिश्यन्ते । षडहे प्रतिदिनमेकैकं पृष्ठं विहितम् । तानि च षट्पृष्ठानि रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामभिर्निष्पाद्यानि । यद्यपि विश्वजित एकाहत्वाज्ज्योतिष्टोमविकृतित्वमेव नतु षडहविकृतित्वं, तथाऽपि सर्वपृष्ठोक्तिबलात्तानि षट्पृष्ठान्यतिदिश्यन्ते ॥

दशमाध्यायस्य षष्ठे पादे पञ्चमाधिकरणे चिन्तितम्—

किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा ।
पृष्ठशब्दात्पृष्ठदेशे वचनात्तु व्यवस्थितिः ॥

इदमाम्नायते—'विश्वजित्सर्वपृष्ठः' इति । षडहे षट्स्वहःसु क्रमेण रथंतर-बृहद्वैरूपमित्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम् । तानि सर्वाणि पृष्ठसामानि यस्मिन्विश्वजिति सोऽयं सर्वपृष्ठः । तत्र माध्यंदिनप-वमानमैत्रावरुणसाम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि, किंवा यथावचनं देशव्यवस्थेति संशयः । पृष्ठकार्यगमकेन(ण) पृष्ठशब्देन पृष्ठदेशे प्राप्ते वचनेन देशविशेषो व्यवस्थाप्यते । वचनं चैवमा-म्नायते—'पवमाने रथंतरं करोत्यार्भवे बृहन्मध्यत इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम शाक्वरं मैत्रावरुणसाम रैवतमच्छावाकसाम' इति । वचनं हि न्यायाद्बलीयः । तस्माद्देशविशेषा[3] व्यवस्थिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ।)

---

देवस्य॑ त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्या॒मा द॑द इ॒माम॑गृभ्णन्रश॒नामृ॒तस्य॑

---

१ क. घ. ङ. च. °दकत्वेन । २ ख. च. भवती° । ३ क. ख. °शेषे व्य° । ४ क. व्यव-स्थितिः ।

पूर्वे आयुषि विदथेषु कव्या । तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती । अभिधा असि भुवनमसि यन्ताऽसि धर्ताऽसि सोऽग्निं वैश्वानरꣳ सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड्यन्ताऽसि यमनो धर्ताऽसि धरुणः कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः ( १ ) ॥

( धरुणः पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । पूष्णः । हस्ताभ्याम् । एति । ददे । इमाम् । अगृभ्णन् । रशनाम् । ऋतस्य । पूर्वे । आयुषि । विदथेषु । कव्या । तया । देवाः । सुतम् । एति । बभूवुः । ऋतस्य । सामन् ।

सरम् । आरपन्तीत्या—रपन्ती । अभिधा इत्यभि—धाः । असि । भुवनम् । असि । यन्ता । असि । धर्ता । असि । सः । अग्निम् । वैश्वानरम् । सप्रथसमिति स—प्रथसम् । गच्छ । स्वाहाकृत इति स्वाहा—कृतः । पृथिव्याम् । यन्ता । राट् । यन्ता । असि । यमनः । धर्ता । असि । धरुणः । कृष्यै । त्वा । क्षेमाय । त्वा । रय्यै । त्वा । पोषाय । त्वा । पृथिव्यै । त्वा । अन्तरिक्षाय । त्वा । दिवे । त्वा । सते । त्वा । असते । त्वा । अद्भ्य इत्यत्—भ्यः । त्वा । ओषधीभ्य इत्योषधि—भ्यः । त्वा । विश्वेभ्यः । त्वा । भूतेभ्यः (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः ।)

---

दशमेऽनुवाके पञ्चरात्रो वर्णितः । अथात्राहीनविशेषानवस्थाप्यैकादशारभ्य प्रपाठकसमाप्तिपर्यन्तमश्वमेधमन्त्रा उच्यन्ते । तेषां यथासंभवं ब्राह्मणग्रन्थोक्ता विनियोगा उदाह्रियन्ते । तत्र ब्राह्मणवाक्यमेवं पठ्यते–'देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । व्यृद्धं वा एतद्यज्ञस्य । यदयजुष्केण क्रियते' इति ॥

---

१ ख. घ. च. °त्यै' इ° ।

मन्त्रपाठस्तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनो-
र्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे, इति

हे रशने सवितुर्देवस्य प्रेरणे सत्याश्विसंबन्धिभ्यां बाहुमूलाभ्यां पूषसंबन्धिभ्यां हस्ताग्राभ्यां त्वामाददे ॥

अथ ब्राह्मणम्—'इमामगृभ्णन्रशनामृतस्येत्यधिवदति यजुष्कृत्यै' इति ॥

पाठस्तु—

इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि
विदथेषु कव्या। तया देवाः सुत-
मा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती, । इति ।

विदथेषु यज्ञेषु आयुषि यजमानायुर्निमित्ते पूर्वे कव्या कवयो विद्वांस ऋत्विज ऋतस्य यज्ञस्य संबन्धिनीमिमां रशनामगृभ्णन्स्वीकृतवन्तः । तया रशनया देवाः सर्वे सुतमाबभूवुरश्वबन्धनद्वारा तस्मिन्नश्वमेधे प्रधानभूतं त्रिरात्राख्यं सोमयागमभितः प्राप्ताः । कीदृशी रशना, ऋतस्य यज्ञस्य सामन्सामानि समाप्तौ निमित्तभूतायां सत्यां सरं सरणं प्रवृत्तिमारपन्ती कथयन्ती । हे ऋत्विग्यजमानाः शीघ्रं यज्ञं समापयतेति वदन्ती सेयं रशना लक्ष्यते, स्वकीयदीर्घत्वेनाश्वबन्धनयोग्यत्वदर्शनात् ॥

कल्पः—'अभिधा असीत्यश्वमभि दधाति' इति ॥

पाठस्तु—

अभिधा असि भुवनमसि यन्ताऽसि धर्ताऽसि सोऽग्निं
वैश्वानरँ सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां
यन्ता राड्यन्ताऽसि यमनो धर्ताऽसि धरुणः कृष्यै
त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै
त्वाऽन्तरिक्षाय त्वा दिवे त्वा सते त्वाऽसते त्वाऽद्-
भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः, इति ॥

अभिधीयते धार्यते बध्यत इत्यभिधा । हेऽश्व त्वं तादृशो बध्यमानोऽसि । तथा भुवनादिरूपोऽसि । तव प्राजापत्यत्वात्प्रजापतिगुणाः सर्वेऽपि त्वय्य-

१ ख. सेयं ।

वस्थिताः। प्रजापतिश्च भुवनकारणत्वाद्भुवनरूपः। अन्तर्यामित्वाच्च यन्ता। पोषकत्वाच्च धर्ता। तद्द्वारा त्वमपि तथाविधोऽसि। स तादृशस्त्वं वैश्वानरं सर्वपुरुषहितकारिणं सप्रथसं विस्तारेण सहितमग्निमाहवनीयं गच्छ। आहवनीये ह्यश्वाङ्गानि हूयन्ते। तत्र गत्वा च स्वाहाकृतः स्वाहाकारेणास्माभिर्देवेभ्यो दत्तो भव। ततो हुतः सद्रूपो भूत्वा पृथिव्यां यन्ता राड्भव नियामको राजा भव। ततोऽनन्तरभाविन्यन्तरिक्षे च ग्रहनक्षत्रादीनां यन्ता यमनश्चापि, नियन्तुमुद्युक्तो यन्ता, नियन्तुं समर्थो यमनस्तादृशो भव। ततोऽप्युपरितने द्युलोके धर्ता धरुणोऽसि, स्वर्गस्थितानां पुरुषाणां धर्ता पोषयितुमुद्युक्तः, धरुणः पोषयितुं समर्थः, तादृशो भव। तथाविधं त्वां कृष्यै [illegible] बध्नामीति शेषः। एवमुत्तरत्रापि योज्यम्। क्षेमः प्राप्तस्य धनस्य रक्षणम्। रयिः प्रापणीयं धनम्। पोषस्तज्जन्या भोगपुष्टिः। पृथिव्यादयः [illegible] प्राप्तव्या लोकाः। तेषु लोकेषु पूर्वं विद्यमानं द्रव्यं सत्। इतः परं संपादनीयं द्रव्यमसत्। तत्सर्वं भाविजन्मविषयम्। अग्निरन्नमन्यपेक्षिता आप ओषधयः सर्वप्राणिनश्च। तस्य सर्वस्य सिद्ध्यर्थं त्वामिह बध्नामि। एतच्च सर्वं यागद्वारेणोपपद्यते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः।)

---

विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामास्यादित्यानां पत्वान्विंहि। अग्नये स्वाहा स्वाहेन्द्राग्निभ्याᳪं स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो

देवताभ्य इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्यो देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायत (१)॥

(रन्तिः स्वाहा द्वाविंशतिश्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः ।)

---

विभूरिति वि–भूः । मात्रा । प्रभूरिति प्र–भूः । पित्रा । अश्वः । असि । हयः । असि । अत्यः । असि । नरः । असि । अर्वा । असि । सप्तिः । असि । वाजी । असि । वृषा । असि । नृमणा इति नृ–मनाः । असि । ययुः । नाम । असि । आदित्यानाम् । पत्वा । अन्विति । इहि । अग्नये । स्वाहा । स्वाहा । इन्द्राग्निभ्यामितीन्द्राग्नि–भ्याम् । स्वाहा । प्रजापतय इति प्रजा–पतये । स्वाहा । विश्वेभ्यः । देवेभ्यः । स्वाहा । सर्वाभ्यः । देवताभ्यः । इह । धृतिः । स्वाहा । इह । विधृतिरिति

वि–धृतिः। स्वाहा। इह। रन्तिः। स्वाहा। इह। रमतिः। स्वाहा। भूः। असि। भुवे। त्वा। भव्याय। त्वा। भविष्यते। त्वा। विश्वेभ्यः। त्वा। भूतेभ्यः। देवाः। आशापाला इत्याशा–पालाः। एतम्। देवेभ्यः। अश्वम्। मेधाय। प्रोक्षितमिति प्र–उक्षितम्। गोपायत (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके द्वादशोऽनुवाकः॥ १२॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः।)

---

कल्पः—'विभूर्मात्रा प्रभूः पित्रेत्यश्वस्य दक्षिणे कर्णे यजमानं वाच-[illegible]त्वा' इति॥

पाठस्तु—

विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामास्यादित्यानां पत्वान्विहि, इति।

हेऽश्व त्वं मात्रा त्वदीयया पृथिवीरूपया विभूरसि व्याप्तिमानसि। पित्र[illegible] [illegible]करूपेण प्रभूः प्रभुत्वशक्तिमानसि। 'इयं वै माता। असौ पिता' इति हि [illegible]णम्। पृथिव्या विभुत्वाद्द्युलोकस्य भोगप्र[1]भुत्वाच्च तदुभयमस्मिन्नुपच-[illegible]। तथा त्वमश्वोऽसि मुख्याश्वजातिमानसि, न तु तत्र गर्दभसांकर्यम्। [illegible]तेः क्रमणार्थकादुत्पन्नो हयशब्दः। अतो हयोऽसि समीचीनक्रमणवा-[illegible]। खुरसांकर्येण भूमावाक्रमणं त्वदीयं स्थिरमित्यर्थः। अत्योऽसि सतत-[illegible]शीलोऽसि। नरोऽस्युपर्यारूढानां नेताऽसि। अर्वाऽसि समीचीनगतिमा-

१ च. भोग्यप्र'। २ ख. 'प्रदत्वा°।

नसि। सप्तिरसि सर्वेष्वपि युद्धादिकार्येषु संबद्धोऽसि। वाजी वेगवानसि वृषा पुंस्त्वसामर्थ्यवानसि। नृमणा नृभिर्मननीयोऽसि। ययुर्नामासि स्वर्गप्रापक इत्येतदेव तव प्रियं नाम। अत एव ब्राह्मणं 'ययुर्नामासीत्याह एतद्वा अश्वस्य प्रियं नामधेयम्' इति। ईदृशस्त्वमादित्यानां प्रतिमासवर्तिनां द्वादशसंख्यानां पत्वे पतनं यदन्तरिक्षगमनं तदन्वन्तरिक्षमार्गेणेहि गच्छ॥

कल्पः—'अग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पूर्वहोमान्हुत्वा' इति॥

पाठस्तु—

अग्नये स्वाहा स्वाहेन्द्राग्निभ्याꣳ स्वा-
हा प्रजापतये स्वाहा विश्वेभ्यो देवे-
भ्यः स्वाहा सर्वाभ्यो देवताभ्यः, इति।

अत्र प्रथममन्त्रः स्वाहान्त उत्तरे चत्वारो मन्त्राः स्वाहादयः॥

कल्पः—'रथकारगृहे वसतिर्भवतीह धृतिरिति सायमश्वस्य चतुर्षु पत्सु चतस्रो धृतीर्जुहोति' इति॥

पाठस्तु—

इह धृतिः स्वाहेह विधृतिः स्वाहेह
रन्तिः स्वाहेह रमतिः स्वाहा, इति।

इहास्मिन्दक्षिणपूर्वपादे धृतिर्धारणं स्थैर्यं भवतु। तदर्थमिदं स्वाहुतमस्तु। इहास्मिन्दक्षिणपृष्ठपादे विधृतिर्विशेषेण स्थैर्यमस्तु। इहास्मिन्नुत्तरपृष्ठपादे रन्तिः स्थैर्येण रमणमस्तु। इहास्मिन्नुत्तरपूर्वपादे रमतिरत्यन्तं स्थिरं रमणमस्तु॥

भूरसि भुवे त्वा भव्याय त्वा भविष्यते
त्वा विश्वेभ्यस्त्वा भूतेभ्यः, इति।

कल्पः—'भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्यश्वमुत्सृज्य' इति

विश्वेभ्यस्त्वा भूतेभ्य इति [illegible]। हेऽश्व त्वं भूरस्यतीतानामनागतानां वर्तमानानां भावयिताऽसि। भूतशब्दोऽतीतवाचकः, भव्यशब्दो वर्तमानं, भविष्यच्छब्द आगामि, तस्य त्रिविधस्य श्रेयसः सिद्ध्यर्थं त्वामुत्सृजामि। तथा विश्वेभ्यो भूतेभ्यः सर्वप्राणिस्वाधीनत्वार्थं त्वामुत्सृजामि॥

कल्पः—'देवा आशापाला इति रत्निभ्यः परिददाति' इति॥

पाठस्तु—

१ क. घ. ङ. च. 'शेषेण पा'।

(अश्वमेधमन्त्रकथनम्)

देवा आशापाला एतं देवेभ्योऽश्वं
मेधाय प्रोक्षितं गोपायत, इति ॥

आशापाला दिक्षु पालकाः । हे देवा देवमूर्तिधारिणो रत्नाद्याभरणभूषिताः शतसंख्याका राजपुत्रा मेधाय यज्ञाय प्रोक्षितमेतमश्वं देवेभ्यो देवार्थं गोपायत रक्षत ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः।)

---

आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा पलायिताय स्वाहाऽऽपलायिताय स्वाहाऽऽवल्गते स्वाहा परावल्गते स्वाहाऽऽयते स्वाहा प्रयते स्वाहा सर्वस्मै स्वाहा ( १ ॥

(आयनायोत्तरमापलायिताय षड्विंशतिः।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
प्रथमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः।)

---

आयनायेत्या-अयनाय । स्वाहा । प्रायणायेति प्र-अयनाय । स्वाहा । उद्द्रावायेत्युत्-द्रावाय । स्वाहा ।

उद्द्रुतायेत्युत्—द्रुताय । स्वाहा । शूकारायेति शू—काराय । स्वाहा । शूकृतायेति शू—कृताय । स्वाहा । पलायिताय । स्वाहा । आपलायितायेत्या—पलायिताय । स्वाहा । आवल्गत इत्या—वल्गते । स्वाहा । परावल्गत इति परा—वल्गते । स्वाहा । आयत इत्या—यते । स्वाहा । प्रयत इति प्र—यते । स्वाहा । सर्वस्मै । स्वाहा (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः)

---

कल्पः—'आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावान्' इति ॥
पाठस्तु—

आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा पलायिताय स्वाहाऽऽपलायिताय स्वाहाऽऽवल्गते स्वाहा परावल्गते स्वाहाऽऽयते स्वाहा प्रयते स्वाहा सर्वस्मै स्वाहा, इति ॥

आभिमुख्येनायनं गमनं यस्यासावायनस्तस्मा अश्वाय, तत्प्रीत्यर्थमिदं स्वाहुतम् । आभिमुख्यगमनमपि द्विविधं—मन्दगमनं तीव्रगमनं च । तत्राऽऽद्यं पूर्वमन्त्रेऽभिहितं, द्वितीयं प्रायणमन्त्रेऽभिधीयते । केचन धूर्ता अश्वा गन्तुमनिच्छन्तस्ताडिताः सन्तः पूर्वपादावुन्नमयन्ति, अन्ये चापरौ पादावुन्नमयन्ति, तदुभयमुद्द्रावोद्द्रुतशब्दाभ्यामभिधीयते । कशया घातितेनोद्द्रवणार्थं क्रियमाणस्य शब्दविशेषस्यानुकरणार्थं शूकार इति प्रयुक्तम् । शूकृतमेतदेव । पूर्वापरपाद

विषयत्वेन द्वेधाऽभिधानम्। पुरतो वेगेन धावनं पलायनम्। आभिमुख्येन धावनमापलायनम्। चतुर्णामपि पादानां सकृदुत्क्षेपणमाभिमुख्यविषयमावल्गनम्। पराङ्मुखत्वविषयं परावल्गनम्। पूर्वमायनप्रायणशब्दाभ्यां योऽर्थोऽभिहितः सोऽतीतविषयः। इह त्वायत्प्रयच्छब्दाभ्यां वर्तमानविषयः स एवार्थोऽभिधीयते। अतो यथोक्ततत्तद्गुणयुक्तायाश्वाय तत्प्रीत्यर्थं स्वाहा हुतमिदमस्तु। किं बहुना सर्वस्मै सर्वप्रकारगमनविशेषयुक्ताश्वप्रीत्यर्थमिदं स्वाहा हुतमस्तु। उत्क्रमणगमनविषयत्वादेतेषां होमानामुद्द्रावा इति नामधेयम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः।)

---

अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहाऽपां मोदाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा (१)

(अग्नये वायवेऽपां मोदायेन्द्राय त्रयोविंशतिः।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः।)

---

अग्नये। स्वाहा। सोमाय। स्वाहा। वायवे। स्वाहा। अपाम्। मोदाय। स्वाहा। सवित्रे। स्वाहा। सरस्वत्यै।

स्वाहा । इन्द्राय । स्वाहा । बृहस्पतये । स्वाहा । मित्राय । स्वाहा । वरुणाय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः । )

---

कल्पः—‘ अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमान् ’ इति ॥

पाठस्तु—

अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहाऽपां मोदाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहे-न्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा, इति ॥

अपां मोदः पर्जन्यः । अनुक्तानां पूर्वहोमाङ्गानां देवानां संग्रहार्थं सर्वशब्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके पञ्चदशोऽनुवाकः )

---

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहा

दिग्भ्यः स्वाहाऽवान्तरदिशाभ्यः स्वाहा समाभ्यः स्वाहा शरद्भ्यः स्वाहाऽहोरात्रेभ्यः स्वाहाऽर्धमासेभ्यः स्वाहा मासेभ्यः स्वाहर्तुभ्यः स्वाहा संवत्सराय स्वाहा सर्वस्मै स्वाहा (१)॥

(पृथिव्यै सूर्याय नक्षत्रेभ्यः प्राच्यै सप्तचत्वारिꣳशत्।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके पञ्चदशोऽनुवाकः।)

---

पृथिव्यै। स्वाहा। अन्तरिक्षाय। स्वाहा। दिवे। स्वाहा। सूर्याय। स्वाहा। चन्द्रमसे। स्वाहा। नक्षत्रेभ्यः। स्वाहा। प्राच्यै। दिशे। स्वाहा। दक्षिणायै। दिशे। स्वाहा। प्रतीच्यै। दिशे। स्वाहा। उदीच्यै। दिशे। स्वाहा। ऊर्ध्वायै। दिशे। स्वाहा। दिग्भ्य इति दिक्-भ्यः। स्वाहा। अवान्तरदिशाभ्य इत्यवान्तर-दिशाभ्यः। स्वाहा। समाभ्यः। स्वाहा। शरद्भ्य इति शरत्-भ्यः। स्वाहा। अहोरात्रेभ्य इत्यहः-रात्रेभ्यः। स्वाहा। अर्धमासेभ्य इत्यर्ध-मासेभ्यः। स्वाहा। मासेभ्यः। स्वाहा।

ऋतुभ्य इत्यृतु—भ्यः । स्वाहा । संवत्सरायेति सं—वत्सराय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके पञ्चदशोऽनुवाकः ।)

---

कल्पः—'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्येतं हुत्वा' इति ॥ एतमनुवाकं पूर्वनामकहोमान्तःपातित्वेनैव हुत्वेत्यर्थः ॥

पाठस्तु—

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहा दिग्भ्यः स्वाहाऽवान्तरदिशाभ्यः स्वाहा समाभ्यः स्वाहा शरद्भ्यः स्वाहाऽहोरात्रेभ्यः स्वाहाऽर्धमासेभ्यः स्वाहा मासेभ्यः स्वाहर्तुभ्यः स्वाहा संवत्सराय स्वाहा सर्वस्मै स्वाहा, इति ॥

प्राच्यादिशब्दा विशेषवाचिनः । दिक्शब्दः सामान्यवाची । समाशरत्संवत्सरशब्दाः सौरचान्द्रनाक्षत्रविषयाः । सर्वशब्दोऽनुक्तकालविषयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके षोडशोऽनुवाकः । )

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहाऽपां मोदाय स्वाहा वायवे स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा ( १ )

( अग्नये सवित्रे पूष्णेऽपां मोदाय वायवे त्रयोविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ सप्तमाष्टके प्रथमप्रपाठके षोडशोऽनुवाकः । )

अग्नये । स्वाहा । सोमाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । पूष्णे । स्वाहा । बृहस्पतये । स्वाहा । अपाम् । मोदाय । स्वाहा । वायवे । स्वाहा । मित्राय । स्वाहा । वरुणाय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ सप्तमकाण्डे प्रथमप्रपाठके षोडशोऽनुवाकः । )

कल्पः—' अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षाम् ' इति ॥

पाठस्तु—

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा
सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये

स्वाहाऽपां मोदाय स्वाहा वायवे स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा, इति ॥

पूर्वहोमानुवाकव्याख्यानेनानुवाको व्याख्येयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके सप्तदशोऽनुवाकः । )

---

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहाऽग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहाऽह्ने स्वाहा रात्रियै स्वाहर्जवे स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहाऽऽशितिम्ने स्वाहा रोगाय स्वाहा हिमाय स्वाहा शीताय स्वाहाऽऽतपाय स्वाहाऽरण्याय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( पृथिव्या अग्नयेऽह्ने चतुश्चत्वारिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके सप्तदशोऽनुवाकः । )

---

पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । अग्नये । स्वाहा । सोमाय । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । अह्ने । स्वाहा । रात्रियै ।

स्वाहा। ऋजवे। स्वाहा। साधवे। स्वाहा। सुक्षित्या इति सु-क्षित्यै। स्वाहा। क्षुधे। स्वाहा। आशितिम्ने। स्वाहा। रोगाय। स्वाहा। हिमाय। स्वाहा। शीताय। स्वाहा। आतपायेत्या-तपाय। स्वाहा। अरण्याय। स्वाहा। सुवर्गायेति सुवः-गाय। स्वाहा। लोकाय। स्वाहा। सर्वस्मै। स्वाहा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके सप्तदशोऽनुवाकः। )

---

कल्पः—'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्येकविंशिनीं दीक्षाम्' इति ॥
पाठस्तु—

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहाऽग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहाऽह्ने स्वाहा रात्रियै स्वाहर्जवे स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहाऽऽशितिम्ने स्वाहा रोगाय स्वाहा हिमाय स्वाहा शीताय स्वाहाऽऽतपाय स्वाहाऽरण्याय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा, इति।

अत्र ऋज्वादयस्त्रयः पृथिव्यादिलोकाः। तथा च ब्राह्मणम्—'इयं वा ऋजुः। [अन्त]रिक्षं साधु। असौ सुक्षितिः' इति। अशितिमशब्देन क्षुन्निवारक-

माशितृत्व+मभिधीयते । स्वर्गः पुण्यफलभूतः । लोकशब्दः सामान्यवाची । अत्रातीतावग्नये स्वाहा पृथिव्यै स्वाहेत्यनुवाकौ पूर्वहोमविषयौ । तथा च ब्राह्मणम्—'अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमाञ्जुहोति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति । पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्याह । यथायजुरेवैतत् ।' इति । उत्तरौ त्वनुवाकौ दीक्षाविषयौ । तत्रापि ब्राह्मणम्—'अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षा जुहोति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति । पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्येकविꣳशिनीं दीक्षां जुहोति' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठकेऽष्टादशोऽनुवाकः )

---

भुवो देवानां कर्मणाऽपसर्तस्य पथ्याऽसि वसुभिर्दे-
वेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वस-
न्तेन त्वर्तुना हविषा दीक्षयामि रुद्रेभिर्देवेभिर्देवतया
त्रैष्टुभेन त्वा छन्दसा युनज्मि ग्रीष्मेण त्वर्तुना
हविषा दीक्षयाम्यादित्येभिर्देवेभिर्देवतया जागतेन
त्वा छन्दसा युनज्मि वर्षाभिस्त्वर्तुना हविषा
दीक्षयामि विश्वेभिर्देवेभिर्देवतयाऽऽनुष्टुभेन त्वा
छन्दसा युनज्मि ( १ ) शरदा त्वर्तुना हविषा

---

+ अत्र कस्मिंश्चित्पुस्तके 'आशितशब्दत्वम्' इति, कस्मिंश्चित्पुस्तके तु 'आशितृशब्दत्वम्' इति विद्यते तत्प्रामादिकमिति ज्ञेयम् ।

---

१ क. ख. ड. °शितशब्दत्व° । २ घ. च. 'तृशब्दत्व' ।

दीक्षयाम्यङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्यां त्वर्तुना हविषा दीक्षयाम्याऽहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ सत्येऽधाꣳ सत्यमृतेऽधाम्। महीमू षु सुत्रामाणमिह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा (२)॥

(आनुष्टुभेन त्वा छन्दसा युनज्म्येकान्नपञ्चाशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठकेऽष्टादशोऽनुवाकः।)

---

भुवः। देवानाम्। कर्मणा। अपसा। ऋतस्य। पथ्या। असि। वसुभिरिति वसु-भिः। देवेभिः। देवतया। गायत्रेण। त्वा। छन्दसा। युनज्मि। वसन्तेन। त्वा। ऋतुना। हविषा। दीक्षयामि। रुद्रेभिः। देवेभिः। देवतया। त्रैष्टुभेन। त्वा। छन्दसा। युनज्मि। ग्रीष्मेण। त्वा। ऋतुना। हविषा। दीक्षयामि। आदित्येभिः। देवेभिः। देवतया। जागतेन। त्वा। छन्दसा। युनज्मि। वर्षाभिः। त्वा। ऋतुना।

हविषा । दीक्षयामि । विश्वेभिः । देवेभिः । देवतया । आनुष्टुभेनेत्यानु-स्तुभेन । त्वा । छन्दसा । युनज्मि (१) । शरदा । त्वा । ऋतुना । हविषा । दीक्षयामि । अङ्गिरोभिरित्यङ्गिरः-भिः । देवेभिः । देवतया । पाङ्क्तेन । त्वा । छन्दसा । युनज्मि । हेमन्तशिशिराभ्यामिति हेमन्त-शिशिराभ्याम् । त्वा । ऋतुना हविषा । दीक्षयामि । एति । अहम् । दीक्षाम् । अरुहम् । ऋतस्य । पत्नीम् । गायत्रेण । छन्दसा । ब्रह्मणा । च । ऋतम् । सत्ये । अधाम् । सत्यम् । ऋते । अधाम् । महीम् । उ । स्विति । सुत्रामाणमिति सु-त्रामाणम् । इह । धृतिः । स्वाहा । इह । विधृतिरिति वि-धृतिः । स्वाहा । इह । रन्तिः । स्वाहा । इह । रमतिः । स्वाहा (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठके ष्टादशोऽनुवाकः ।)

---

...ल्पः—' भुवो देवानां कर्मणेत्यृतुदीक्षाभिः कृष्णाजिनमारोहन्तमभिमन्त्र- ...७.४ ' इति ॥

तत्र प्रथममन्त्रमाह—

भुवो देवानां कर्मणा पसर्तस्य पथ्याऽसि
घसुभिर्देवेभिर्देवतया गायत्रेण त्वा

छन्दसा युनज्मि वसन्तेन
त्वर्तुना हविषा दीक्षयामि, इति ।

हे दीक्षे त्वं देवानां संबन्धिना कर्मणर्तस्य यज्ञस्य संबन्धिनाऽपसा व्यापारेण भुवो युक्ता भव । त्वं पथ्याऽसि देवानां यज्ञस्य च हिताऽसि । अहं वसुभिर्देवेभिर्वसुसंज्ञकैर्देवैर्देवतया दीक्षाभिमानिन्या गायत्रेण च्छन्दसा च त्वां युनज्मि त्वां युक्तां करोमि । तथा वसन्तेनर्तुना सहितोऽहं त्वां हविषा दीक्षयामि संस्कृतां करोमि ॥

अथोत्तरांश्चतुरो मन्त्रानाह—

रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा
छन्दसा युनज्मि ग्रीष्मेण त्वर्तुना
हविषा दीक्षयाम्यादित्येभिर्देवेभिर्दे-
वतया जागतेन त्वा छन्दसा
युनज्मि वर्षाभिस्त्वर्तुना हविषा
दीक्षयामि विश्वेभिर्देवेभिर्देवतयाऽऽ-
नुष्टुभेन त्वा छन्दसा युनज्मि
शरदा त्वर्तुना हविषा दीक्षयाम्य-
ङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा
छन्दसा युनज्मि हेमन्तशिशिराभ्यां
त्वर्तुना हविषा दीक्षयामि, इति ।

एतेषु चतुर्ष्वपि मन्त्रेषु भुवो देवानामित्यादिभागमनुषज्य पूर्ववद्व्याख्येयम् ॥

अथ षष्ठमन्त्रमाह—

आऽहं दीक्षामरुहमृतस्य पत्नीं
गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ
सत्येऽधाꣳ सत्यमृतेऽधाम्, । इति ।

अहं यजमानो गायत्रेण च्छन्दसा ब्रह्मणा छन्दोरहितेन मन्त्रेण चानुगृहीतः ऋतस्य पत्नीं यज्ञस्य पालयित्रीं दीक्षां नियमविशेषरूपामारुहमारूढोऽस्मि ।

मदीयमृतं सत्ये स्थापयामि सत्यमप्यृते स्थापयामि । चिन्त्यमानं वस्तुतत्त्व मृतम् । उच्यमानं वस्तुतत्त्वं सत्यम् । अहं सर्वदा मनसा वस्तुतत्त्वं विचा पश्चाद्वक्ष्यामि । वाचाऽपि वस्तुतत्त्वमुच्चार्य पश्चादन्यद्वस्तुतत्त्वं चिन्तयामीत्यर्थः।

अथ सप्तमाष्टमयोर्मन्त्रयोः प्रतीके दर्शयति—

महीमू षु सुत्रामाणम्, इति ।

महीमू षु मातरमित्येको मन्त्रः । सुत्रामाणं पृथिवीं द्यामित्यपरो मन्त्रः । तौ च मन्त्रौ वैश्वानरो न ऊत्येत्यनुवाके व्याख्यातौ ॥

कल्पः—'सायं धृतिषु हूयमानासु राजन्यो वीणागाथी गायति' इति ॥

तानेतान्धृतिमन्त्रानाह—

इह धृतिः स्वाहेह विधृतिः स्वाहेह
रन्तिः स्वाहेह रमतिः स्वाहा, इति ॥

एतच्चतुष्टयं पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदी-
यतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके-
ऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठके एकोनविंशोऽनुवाकः । )

---

ईकाराय स्वाहेंकृताय स्वाहा क्रन्दते स्वाहाऽव-
क्रन्दते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा
गन्धाय स्वाहा घ्राताय स्वाहा प्राणाय स्वाहा
व्यानाय स्वाहाऽपानाय स्वाहा संदीयमानाय स्वाहा
संदिताय स्वाहा विचृत्यमानाय स्वाहा विचृत्ताय
स्वाहा पलायिष्यमाणाय स्वाहा पलायिताय
स्वाहोपरꣳस्यते स्वाहोपरताय स्वाहा निवेक्ष्यते
स्वाहा निविशमानाय स्वाहा निविष्टाय स्वाहा

निषत्स्यते स्वाहा निषीदते स्वाहा निषण्णाय स्वाहा (१) आसिष्यते स्वाहाऽऽसीनाय स्वाहाऽऽसिताय स्वाहा निपत्स्यते स्वाहा निपद्यमानाय स्वाहा निपन्नाय स्वाहा शयिष्यते स्वाहा शयानाय स्वाहा शयिताय स्वाहा संमीलिष्यते स्वाहा संमीलते स्वाहा संमीलिताय स्वाहा स्वप्स्यते स्वाहा स्वपते स्वाहा सुप्ताय स्वाहा प्रभोत्स्यते स्वाहा प्रबुध्यमानाय स्वाहा प्रबुद्धाय स्वाहा जागरिष्यते स्वाहा जाग्रते स्वाहा जागरिताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा श्रुताय स्वाहा वीक्षिष्यते स्वाहा (२) वीक्षमाणाय स्वाहा वीक्षिताय स्वाहा सꣳहास्यते स्वाहा संजिहानाय स्वाहोज्जिहानाय स्वाहा विवर्त्स्यते स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वाहोत्थिताय स्वाहा विधाविष्यते स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहोत्क्रꣳस्यते स्वाहोत्क्रामते स्वाहोत्क्रान्ताय स्वाहा चङ्क्रमिष्यते स्वाहा चङ्क्रम्यमाणाय स्वाहा चङ्क्रमिताय स्वाहा कण्डूयिष्यते स्वाहा कण्डूयमानाय स्वाहा कण्डूयिताय स्वाहा निकषिष्यते

स्वाहा निकर्षमाणाय स्वाहा निकर्षिताय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत्करोति तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा सर्वस्मै स्वाहा ( ३ ) ॥

( निषण्णाय स्वाहा वीक्षिष्यते स्वाहा निकर्षमाणाय स्वाहा सप्तविंशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके प्रथमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके प्रथमप्रपाठक एकोनविंशोऽनुवाकः । )

---

ईंकारायेतीं—काराय । स्वाहा । ईंकृतायेतीं—कृताय । स्वाहा । क्रन्दते । स्वाहा । अवक्रन्दत इत्यव—क्रन्दते । स्वाहा । प्रोथते । स्वाहा । प्रप्रोथत इति प्र—प्रोथते । स्वाहा । गन्धाय । स्वाहा । घ्राताय । स्वाहा । प्राणायेति प्र—अनाय । स्वाहा । व्यानायेति वि—अनाय । स्वाहा । अपानायेत्यप—अनाय । स्वाहा । संदीयमानायेति सं—दीयमानाय । स्वाहा । संदितायेति सं—दिताय । स्वाहा । विचृत्यमानायेति वि—चृत्यमानाय । स्वाहा । विचृत्तायेति वि—चृत्ताय । स्वाहा । पलायिष्यमाणाय । स्वाहा । पला-

थिताय । स्वाहा । उपरꣳस्यत इत्युप—रꣳस्यते । स्वाहा । उपरतायेत्युप—रताय । स्वाहा । निवेक्ष्यत इति नि—वेक्ष्यते । स्वाहा । निविशमानायेति नि—विशमानाय । स्वाहा । निविष्टायेति नि—विष्टाय । स्वाहा । निषत्स्यत इति नि—सत्स्यते । स्वाहा । निषीदत इति नि—सीदते । स्वाहा । निषण्णायेति नि—सन्नाय । स्वाहा ( १ ) । आसिष्यते । स्वाहा । आसीनाय । स्वाहा । आसिताय । स्वाहा । निपत्स्यत इति नि—पत्स्यते । स्वाहा । निपद्य-मानायेति नि—पद्यमानाय । स्वाहा । निपन्नायेति नि—पन्नाय । स्वाहा । शयिष्यते । स्वाहा । शयानाय । स्वाहा। शयिताय । स्वाहा । संमीलिष्यत इति सं—मीलिष्यते । स्वाहा । संमीलत इति सं—मीलते । स्वाहा । संमीलिता-येति सं—मीलिताय । स्वाहा । स्वप्स्यते। स्वाहा । स्वपते । स्वाहा । सुप्ताय । स्वाहा । प्रभोत्स्यत इति प्र—भोत्स्यते । स्वाहा । प्रबुध्यमानायेति प्र—बुध्यमानाय । स्वाहा । प्रबुद्धायेति प्र—बुद्धाय । स्वाहा । जागरिष्यते । स्वाहा । जाग्रते । स्वाहा । जागरिताय । स्वाहा । शुश्रूषमाणाय । स्वाहा । शृण्वते । स्वाहा । श्रुताय । स्वाहा । वीक्षिष्यत इति वि—ईक्षिष्यते । स्वाहा ( २ ) । वीक्षमाणायेति वि—ईक्षमाणाय । स्वाहा । वीक्षितायेति वि—ईक्षिताय ।

स्वाहा । सꣳहास्यत इति सं—हास्यते । स्वाहा । संजिहानायेति सं—जिहानाय । स्वाहा । उज्जिहानायेत्युत्—जिहानाय । स्वाहा । विवर्त्स्यत इति वि—वर्त्स्यते । स्वाहा । विवर्तमानायेति वि—वर्तमानाय । स्वाहा । विवृत्तायेति वि—वृत्ताय । स्वाहा । उत्थास्यत इत्युत्—स्थास्यते । स्वाहा । उत्तिष्ठत इत्युत्—तिष्ठते । स्वाहा । उत्थितायेत्युत्—स्थिताय स्वाहा । विधविष्यत इति वि—धविष्यते । स्वाहा । विधून्वानायेति वि—धून्वानाय । स्वाहा । विधूतायेति वि—धूताय । स्वाहा । उत्क्रꣳस्यत इत्युत्—क्रꣳस्यते । स्वाहा । उत्क्रामत इत्युत्—क्रामते । स्वाहा । उत्क्रान्तायेत्युत्—क्रान्ताय । स्वाहा । चङ्क्रमिष्यते । स्वाहा । चङ्क्रम्यमाणाय । स्वाहा । चङ्क्रमिताय । स्वाहा । कण्डूयिष्यते । स्वाहा । कण्डूयमानाय । स्वाहा । कण्डूयिताय । स्वाहा निकषिष्यत इति नि—कषिष्यते । स्वाहा । निकषमाणायेति नि—कषमाणाय । स्वाहा । निकषितायेति नि—कषिताय । स्वाहा । यत् । अत्ति । तस्मै । स्वाहा । यत् । पिबति । तस्मै । स्वाहा । यत् । मेहति । तस्मै । स्वाहा । यत् । शकृत् । करोति । तस्मै । स्वाहा । रेतसे । स्वाहा ।

प्रजाभ्य इति प्र-जाभ्यः। स्वाहा। प्रजननायेति प्र-जन-नाय। स्वाहा। सर्वस्मै। स्वाहा (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके प्रथमप्रपाठक एकोनविंशोऽनुवाकः॥ १९॥

---

(अथ सप्तमकाण्डे प्रथमप्रपाठकं एकोनविंशोऽनुवाकः।)

---

कल्पः—'ईंकाराय स्वाहेंकृताय स्वाहेत्यश्वचारितानि' इति॥
पाठस्तु—

ईंकाराय स्वाहेंकृताय स्वाहा क्रन्दते स्वाहाऽवक्र-न्दते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा संदीयमानाय स्वाहा संदिताय स्वाहा विचृत्यमानाय स्वाहा विचृत्ताय स्वाहा पलायिष्यमाणाय स्वाहा पलायिताय स्वाहोपरꣳस्यते स्वाहोपरताय स्वाहा निवेक्ष्यते स्वाहा निविशमानाय स्वाहा निविष्टाय स्वाहा निषत्स्यते स्वाहा निषीदते स्वाहा निषण्णाय स्वाहाऽऽसिष्यते स्वाहाऽऽसीनाय स्वाहाऽऽसिताय स्वाहा निपत्स्यते स्वाहा निपद्यमानाय स्वाहा निपन्नाय स्वाहा शयिष्यते स्वाहा शयानाय स्वाहा शयिताय स्वाहा संमीलिष्यते स्वाहा संमीलिताय स्वाहा स्वप्स्यते स्वाहा स्वपते स्वाहा सुप्ताय स्वाहा प्रभोत्स्यते स्वाहा प्रबुध्यमानाय

स्वाहा प्रबुद्धाय स्वाहा जागरिष्यते स्वाहा
ाग्रते स्वाहा जागरिताय स्वाहा शुश्रूषमाणाय
वाहा शृण्वते स्वाहा श्रुताय स्वाहा वीक्षिष्यते
वाहा वीक्षमाणाय स्वाहा वीक्षिताय स्वाहा
।ँहास्यते स्वाहा संजिहानाय स्वाहोज्जिहानाय
वाहा विवर्त्स्यते स्वाहा विवर्तमानाय स्वाहा
ावृत्ताय स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वाहोत्थिताय
वाहा विधविष्यते स्वाहा विधून्वानाय स्वाहा
ाधूताय स्वाहोत्क्रँस्यते स्वाहोत्क्रमते स्वाहोत्क्रा-
ताय स्वाहा चङ्क्रमिष्यते स्वाहा चङ्क्रम्यमा-
णाय स्वाहा चङ्क्रमिताय स्वाहा कण्डूयिष्यते
स्वाहा कण्डूयमानाय स्वाहा कण्डूयिताय स्वाहा
निकषिष्यते स्वाहा निकषमाणाय स्वाहा निक-
षिताय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति
तस्मै स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत्करोति
तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा
प्रजननाय स्वाहा सर्वस्मै स्वाहा, इति,[1] ॥

स्वाद्यं दृष्ट्वा यातुं यो(यं) मन्दशब्दं करोति तदनुकरणं तदींमित्यनेनोच्यते। स च शब्दो वर्तमान ईंकारः। अतीतस्त्वींकृतः। वडवां दृष्ट्वोच्चैर्घोषेणो-त्साहजनितं क्रन्दनम्। विरोधिनमश्वं दृष्ट्वा क्रोधेनोच्चैर्घोषणमवक्रन्दनम्। गमनकाले नासापुटयोः श्वासशब्दः प्रोथनम्। स एवानुवर्तमानः प्रप्रोथनम्। तृणभक्षणे वा श्वासशब्दः प्रप्रोथनम्। अश्वान्तराघ्राणं गन्धः। स एवातीतो घ्रातः। प्राणापानव्याना ऊर्ध्वाधोमध्यवृत्तयः। संदीयमानो बध्यमानः। संदितो बद्धः। विचृत्यमानो मुच्यमानः। विचृत्तो मुक्तः। पलायितुमुद्यतः

१ ख. च. 'ति। स्वाद्वम्बु दृष्ट्वा पातुं।

पलायिष्यमाणः। निर्वर्तितपलायनः पलायितः। पलायनपरित्याग उपरमः। स च भावी भूतश्च। शालाप्रवेशो निवेशनम्। तच्च भावि वर्तमानमतीतं चेति त्रिविधम्। प्रविश्य शालायां स्थितिर्निषदनम्। तदपि पूर्ववत्त्रिविधम्। एतच्च त्रैविध्यं सर्वत्र द्रष्टव्यम्। क्षणमात्रं पादसंकोच आसनम्। पार्श्वस्य भूमिस्पर्शो निपतनम्। पादप्रसारणं शयनम्। चक्षुषोर्निमीलनं संमीलनम्। स्वापो निद्रा। तत्परित्यागः प्रबोधः। बाह्यावलोकनं जागरणम्। अश्वपालकानामुत्थापनशब्दानुसंधानं श्रवणम्। तृणखाद्यान्वेषणं वीक्षणम्। शालाया बहिर्निर्गमनं संहानम्। निर्गत्य भूमौ विलुण्ठनं विवर्तनम्। तदनन्तरमूर्ध्वं स्थितिरुत्थानम्। उत्थितस्य धूलिमपनेतुं शरीरचालनं विधूननम्। पादस्योन्नमनमुत्क्रमणम्। मन्दगमनं चङ्क्रमणम्। दन्तपङ्क्तिभ्यां पृष्ठभागे दंशनं कण्डूयनम्। कुड्यस्तम्भादौ शरीरघर्षणं निकषणम्। अदनादयः प्रसिद्धाः। प्रजा अश्वस्यापत्यानि। प्रजननं तदुत्पादनम्। सर्वशब्देनावशिष्टान्यचरितानि संगृह्यन्ते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठक एकोनविंशोऽनुवाकः॥ १९॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके विंशोऽनुवाकः।)

---

अग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहर्तमस्यृतस्यर्तमसि सत्यमसि सत्यस्य सत्यमस्यृतस्य पन्था असि देवानां छायाऽमृतस्य नाम तत्सत्यं यत्त्वं प्रजापतिरस्यधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते दिवः सूर्येण विशोऽपो वृणानः पवते कव्यन्पशुं न गोपा इर्यः परिज्मा (१)॥

(अग्नये वायवेऽष्टाचत्वारिꣳशत्।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
प्रथमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

प्रजननं प्रातःसवने वै ब्रह्मवादिनः स त्वाङ्गिरस आपो वै सोमो वै संहस्रतम्याऽत्रिर्जप॑दग्निः संवत्सरो देवस्य विभूरायनायाग्नये पृथिव्या अग्नये पृथिव्यै भुवं ईंकारायाग्नये वायवे विंशतिः ॥ २० ॥

प्रजननमाङ्गिरसः सोमो वै प्रतिगृह्णाति विभूर्वीक्ष-
माणाय त्रिपंञ्चाशत् ॥ ५२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
प्रथमः प्रपाठकः ॥ १ ॥

---

(अथ सप्तमाष्टके प्रथमप्रपाठके विंशोऽनुवाकः ।)

---

अग्नये । स्वाहा । वायवे । स्वाहा । सूर्याय । स्वाहा । ऋतम् । असि । ऋतस्य । ऋतम् । असि । सत्यम् । असि । सत्यस्य । सत्यम् । असि । ऋतस्य । पन्थाः । असि । देवानाम् । छाया । अमृतस्य । नाम । तत् । सत्यम् । यत् । त्वम् । प्रजापतिरिति प्रजा—पतिः । असि । अधीति । यत् । अस्मिन् । वाजिनि । इव । शुभः । स्पर्धन्ते । दिवः । सूर्येण । विशः । अपः । वृणानः ।

पवते । कव्यन् । पशुम् । न । गोपा इति गो-पाः ।
इर्यः । परिज्मेति परि-ज्मा ( १ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
प्रथमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ सप्तमकाण्डे प्रथमप्रपाठके विंशोऽनुवाकः । )

---

कल्पः—'अग्नयेस्वाहा वायवे स्वाहेत्येतं हुत्वा' इति ॥
एतस्मिन्ननुवाके त्रीन्मन्त्रानाह—

अग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहा, इति ।

अथ चतुर्थपञ्चममन्त्रावाह—

ऋतमस्यृतस्यर्तमसि सत्यमसि सत्यस्य सत्यमसि, इति ।

हेऽश्व त्वमृतं यन्मानसं सत्यं तदसि । यागरहितानां पुरुषाणां यदृतं तस्या-प्युत्तमं त्वमृतं सत्यमसि । तव यागसाधनत्वात् । एवं सत्यवाक्यमपि वाच-(चि)कविषयत्वेन व्याख्येयम् ॥

अथ षष्ठमन्त्रमाह—

ऋतस्य पन्था असि देवानां छायाऽमृतस्य
नाम तत्सत्यं यत्त्वं प्रजापतिरसि, इति ।

ऋतस्य यज्ञस्य पन्था मार्गोऽसि । त्वद्द्वारेण हि यागो निर्वर्त्यते । तथा देवानां छायाऽसि । यथा धर्मकाले वृक्षस्य च्छाया सुखप्रदा तथा त्वं सुख-प्रदोऽसि । अत एव त्वममृतस्य नामासि । देवा हि त्वदीयं हविः पीयूष-

मित्येव स्वी कुर्वन्ति । त्वं प्रजापतिरूपोऽसीति यत्तत्सत्यं नात्र कश्चिदुप-चारोऽस्ति । प्रजापतेरक्ष्ण्येव हि त्वदाकारेण निष्पन्नम् ॥

अथ सप्तममन्त्रमाह—

**अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते दिवः सूर्येण विशोऽपो वृणानः पवते कव्यन्पशुं न गोपा इर्यः परिज्मा,** इति ॥

यद्यस्मात्कारणाद्वाजिन्यस्मिन्नश्वे शुभः शोभनो गुणसंघोऽधीव देवेभ्योऽप्य-धिक इव दृश्यते तस्मात्कारणाद्दिवः संबन्धिनो विशो मरुद्गणाः सूर्येण सूर्य-समानेनाश्वेन सार्धं स्पर्धन्ते वयं गुणाधिका अश्वो न गुणाधिक इत्येवं स्पर्धां कुर्वन्ति । तादृशोऽयमश्वः । किंचायमपो वृणान इदं कर्म प्रवर्तयितुमिच्छन्प-वते विश्वं पुनाति । तत्र दृष्टान्तः—कव्यन्पशुं न । यथा यागेषु स्तुतिमिच्छन्देवः पशुं वृणीते तथाऽयमश्वः कर्मेदं वृणीते । देवो हि नानाविधाभिः स्तुतिभिः स्तूयमानः पशुरूपं हविरतिप्रीतिपूर्वकमिच्छति । एवमश्वोऽप्यनेकैर्होमैः स्तोत्र-कैर्मन्त्रैश्च परितुष्टः कर्मेदं समापयितुमिच्छतीत्यर्थः । कीदृशोऽश्वः, गोपा ऋत्वि-[illegible] रक्षकः । [illegible] परिज्मा परितः स्वर्गलोकं [illegible]

[illegible] भिर्मन्त्रैर्होमो बौधायनेनाभि[illegible] 'सावित्राणि [illegible] स्वाहेति सप्त' इति ॥

[illegible] गसंग्रहः—

[illegible]च्यन्ते ह्यनुवाकार्थाः सप्तमाद्यप्रपाठके ।
आग्र[illegible]मविधिस्त्वाद्ये द्वितीये स्तोमसंस्तवः ॥
सर्वस्तोमस्तृतीये स्याच्चतुर्थे तु द्विरात्रकः ।
त्रिरात्रः पञ्चमे षष्ठे स्युः सहस्रतमीगताः ॥
होमाद्याः सप्तमे दानं चतूरात्रोऽग्रिमोऽष्टमे ।
द्वितीयो नवमे पञ्चरात्रो दशम ईरितः ॥
अत ऊर्ध्वं त्वश्वमेधमन्त्राणां विनियोजनम् ।
उच्यते रशनां देव गृहीत्वा मन्त्रयेदिमाम् ॥
अभिधेत्यश्वमाबध्य(श्वं बध्नीयात्)त्रयो मन्त्रा इहेरिताः ।
विभूः कर्णे वाचयीत अग्नये पूर्वहोमकान् ॥
पञ्चेह पत्सु जुहुयाच्चतुर्भिर्भूरसीत्यतः ।
अश्वमुत्सृजते देवा रत्निभ्योऽश्वं प्रयच्छति ॥

अनुवाके द्वादशेऽस्मिन्मन्त्रा द्वादश वर्णिताः।
आयनोद्द्रावहोमस्तु तत्र मन्त्रास्त्रयोदश॥
अग्नये पूर्वहोमाः स्युर्मन्त्रा एकादश स्मृताः।
पृथिव्या इति ते होमा मन्त्रा अत्रैकविंशतिः॥
अग्नये पूर्वदीक्षार्था होमा एकादश स्मृताः।
पृथ्वी(थी)त्यपि तथा होमा द्वाविंशतिरुदीरिताः॥
भुव इत्युत्तदीक्षाख्यमन्त्रैश्चर्माधिरोहणे।
मन्त्रयेदष्टभिः पत्सु जुहुयादिह पूर्ववत्॥
अष्टादशानुवाकेऽस्मिन्मन्त्रा द्वादश वर्णिताः।
ईमश्वचरितैर्होमाश्चतुरशीतिरीरिताः॥
अग्नये सप्तभिर्मन्त्रैर्होमः सावित्र ईरितः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके
विंशोऽनुवाकः॥ २०॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
सप्तमकाण्डे प्रथमः प्रपाठकः॥ १॥

---

(अथ सप्तमाष्टके द्वितीयः प्रपाठकः)

---

तत्र प्रथमोऽनुवाकः।

---

हरिः ॐ।

साध्या वै देवाः सुवर्गकामा एत१ँ षड्रात्रमपश्य-
न्तमाऽहरन्तेनायजन्त ततो वै ते सुवर्गं लोकमा-

यन्य एवं विद्वाꣳसः षड्रात्रमासते सुवर्गमेव लोकं यन्ति देवसत्रं वै षड्रात्रः प्रत्यक्षꣳ ह्येतानि पृष्ठानि य एवं विद्वाꣳसः षड्रात्रमासते साक्षादेव देवता अभ्यारोहन्ति षड्रात्रो भवति षड्वा ऋतवः षट्पृष्ठानि ( १ ) पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धते पञ्चदशो भवतीन्द्रियमेवाव रुन्धते सप्तदशः ( २ ) भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै सदोहविर्धानिन एतेन षड्रात्रेण यजेरन्नाश्वत्थी हविर्धानं चाऽऽग्नीध्रं च भवतस्तद्धि सुवर्ग्यं चक्रीवती भवतः सुवर्गस्य लोकस्य समष्ट्या उलूखलबुध्नो यूपो भवति प्रतिष्ठित्यै प्राञ्चो यान्ति प्राङिव हि सुवर्गः ( ३ ) लोकः सरस्वत्या यान्त्येष वै देवयानः पन्थास्तमेवान्वारो-

हन्त्याक्रोशन्तो यान्त्यवर्तिमेवान्यस्मिन्प्रतिषज्य प्रतिष्ठां गच्छन्ति यदा दश शतं कुर्वन्त्यथैकमुत्थानꣳ शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्थानꣳ सहस्रसंमितो वा असौ लोकोऽमुमेव लोकमभि जयन्ति यदेषां प्रमीयेत यदा वा जीयेरन्नथैकमुत्थानं तद्धि तीर्थम् ( ४ ) ॥

( पृष्ठानि सप्तदशः सुवर्गो जयन्ति यदेकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ सप्तमाष्टके द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

साध्याः । वै । देवाः । सुवर्गकामा इति सुवर्ग–कामाः । एतम् । षड्रात्रमिति षट्–रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अयजन्त । ततः । वै । ते । सुवर्गमिति सुवः–गम् । लोकम् । आयन् । ये । एवम् । विद्वाꣳसः । षड्रात्रमिति षट्–रात्रम् । आसते । सुवर्गमिति सुवः–गम् ।

एव । लोकम् । यन्ति । देवसत्रमिति देव—सत्रम् । वै । षड्रात्र इति षट्—रात्रः । प्रत्यक्षमिति प्रति—अक्षम् । हि । एतानि । पृष्ठानि । ये । एवम् । विद्वाꣳसः । षड्रात्रमिति षट्—रात्रम् । आसते । साक्षादिति स—अक्षात् । एव । देवताः । अभ्यारोहन्तीत्यभि—आरोहन्ति । षड्रात्र इति षट्—रात्रः । भवति । षट् । वै । ऋतवः । षट् । पृष्ठानि (१) । पृष्ठैः । एव । ऋतून् । अन्वारोहन्तीत्यनु—आरोहन्ति । ऋतुभिरित्यृतु—भिः । संवत्सरमिति सं—वत्सरम् । ते । संवत्सर इति सं—वत्सरे । एव । प्रतीति । तिष्ठन्ति । बृहद्रथंतराभ्यामिति बृहत्—रथंतराभ्याम् । यन्ति । इयम् । वाव । रथंतरमिति रथं—तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्जसा—अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । त्रिवृदिति त्रि—वृत् । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । तेजः । एव । अवेति । रुन्धते । पञ्चदश इति पञ्च—दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धते । सप्तदश इति सप्त—दशः (२) । भवति । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । अथो इति । प्रेति । एव । तेन । जायन्ते ।

एकविंश इत्येक–विंशः। भवति। प्रतिष्ठित्या इति प्रति–स्थित्यै। अथो इति। रुचम्। एव। आत्मन्। दधते। त्रिणव इति त्रि–नवः। भवति। विजित्या इति वि–जित्यै। त्रयस्त्रिंश इति त्रयः–त्रिंशः। भवति। प्रतिष्ठित्या इति प्रति–स्थित्यै। सदोहविर्धानिन इति सदः–हविर्धानिनः। एतेन। षड्रात्रेणेति षट्–रात्रेण। यजेरन्। आश्वत्थी इति। हविर्धानमिति हविः–धानम्। च। आग्नीध्रमित्याग्नि–इध्रम्। च। भवतः। तत्। हि। सुवर्ग्यमिति सुवः–ग्यम्। चक्रीवती इति। भवतः। सुवर्गस्येति सुवः–गस्य। लोकस्य। समष्ट्या इति सम्–अष्ट्यै। उलूखलबुध्न इत्युलूखल–बुध्नः। यूपः। भवति। प्रतिष्ठित्या इति प्रति–स्थित्यै। प्राञ्चः। यान्ति। प्राङ्। इव। हि। सुवर्ग इति सुवः–गः ( ३ )। लोकः। सरस्वत्या। यान्ति। एषः। वै। देवयान इति देव–यानः। पन्थाः। तम्। एव। अन्वारोहन्तीत्यनु–आरोहन्ति। आक्रोशन्त इत्या–क्रोशन्तः। यान्ति। अवर्तिम्। एव। अन्यस्मिन्। प्रतिषज्ज्येति प्रति–सज्ज्य। प्रतिष्ठामिति प्रति–स्थाम्। गच्छन्ति। यदा। दश। शतम्। कुर्वन्ति। अथ। एकम्। उत्थानमित्युत्–स्थानम्। शतायुरिति शत–आयुः। पुरुषः। शतेन्द्रिय इति शत–इन्द्रियः। आयुषि। एव।

इन्द्रिये । प्रतीति । तिष्ठन्ति । यदा । शतम् । सहस्रम् । कुर्वन्ति । अथ । एकम् । उत्थानमित्युत्—स्थानम् । सहस्रसंमित इति सहस्र—संमितः । वै । असौ । लोकः । अमुम् । एव । लोकम् । अभीति । जयन्ति । यदा । एषाम् । प्रमीयेतेति प्र—मीयेत । यदा । वा । जीयेरन् । अथ । एकम् । उत्थानमित्युत्—स्थानम् । तत् । हि । तीर्थम् ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ सप्तमकाण्डे द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अहीनाः पञ्चरात्रान्ताः प्रथमे समुदीरिताः ।
षड्रात्राद्या द्वितीयेऽथ वक्ष्यन्तेऽस्मिन्प्रपाठके ॥

तत्र प्रथमेऽनुवाके षड्रात्रं विधत्ते—

साध्या वै देवाः सुवर्गकामा एतꣳ षड्रात्रमपश्यन्त-माऽहरन्तेनायजन्त ततो वै ते सुवर्गं लोकमायन्य एवं विद्वाꣳसः षड्रात्रमासते सुवर्गमेव लोकं यन्ति, इति ।

साध्यशब्दो देवगणविशेषवाची । अत्र सर्वत्र दर्शनं शास्त्रीयनिश्चयः आहरणं सामग्रीसंपादनम् । यजनमनुष्ठानम् । यद्यप्ययं षड्रात्रोऽहीनत्वाद्

( षड्रात्रकथनम् )
जातिचोदनाविधेयस्तथाऽप्यत्र केषांचित्सारस्वतसत्रधर्माणां सद्भावमभिप्रेत्य विद्वांस आसत इत्यासिचोदनया विहितः। ते च धर्मा आश्वत्थी हविर्धानं चेत्यादिना वक्ष्यन्ते ॥

एतमेव सत्रत्वोपचारमभिप्रेत्य प्रशंसति—

देवसत्रं वै षड्रात्रः प्रत्यक्षꣳ ह्येतानि पृष्ठानि य एवं विद्वाꣳसः षड्रात्रमासते साक्षादेव देवता अभ्यारोहन्ति, इति।

देवानां सत्रवत्प्रियत्वादिदं देवसत्रम्। तदेव सत्रवत्प्रियत्वं स्पष्टी क्रियते—सत्ररूपे द्वादशाहे यः पृष्ठ्यः षडहस्तस्मिन्षट्सु दिनेषु यानि पृष्ठस्तोत्राणि रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यैः सामभिर्निष्पाद्यानि एतान्यत्रापि षट्सु दिनेषु क्रमेण[3] प्रत्यक्षमुपलभ्यन्तो यस्मादेवं तस्माद्देवानां सत्रवत्प्रियत्वमुचितम्। एवं देवप्रियत्वं विदित्वाऽनुष्ठानेन बहुकालव्यवधानमन्तरेणैव देवताः प्राप्नोति ॥

अत्राहर्गतां षट्संख्यां प्रशंसति—

षड्रात्रो भवति षड्वा ऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति, इति।

ऋतवो यथा षट्संख्याका एवं पृष्ठान्यपि षट्संख्याकानि। अतः पृष्ठैः ऋतुद्वारा संवत्सरं प्राप्य तत्र प्रतितिष्ठन्ति ॥

एतेषु षट्सु पृष्ठस्तोत्रेषु प्रथमद्वितीययोरह्नोरनुष्ठेये रथंतरबृहत्पृष्ठे ये स्तोत्रे ते विशेषेण प्रशंसति—

बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति, इति।

शब्दशास्त्रप्रोक्त एवात्र बृहच्छब्दस्य पूर्वनिपातः। अनुष्ठानं तु रथंतरस्यैव प्रथमम्। यन्ति स्तोत्रमनुतिष्ठेयुरित्यर्थः। अनयोः साम्नोर्लोकद्वयरूपत्वा-

१ घ. च. °दनया वि°। २ ख. °नाया विषय°। ३ ख. घ. च. °ण विशिष्टमु°।

लोकाभ्यामेव तदनुष्ठितं भवति। अपि चानुष्ठातारो लोकयोर्द्वयोः प्रतितिष्ठन्त्येव। किंचैते साधनी यज्ञस्याऽऽर्जवेन समाप्तिप्रापकौ मार्गावतस्ताभ्यामेव स्वर्गं प्राप्नुवन्ति ॥

अथ षट्संख्याकान्यहानि चोदकप्राप्तानि विस्पष्टं दर्शयति—

**त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धते पञ्चदशो भवतीन्द्रियमेवाव रुन्धते सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै,** इति।

त्रिवृदादयः शब्दाः पूर्वोक्तपञ्चरात्रानुवाक इवात्रापि व्याख्येयाः। तत्र सत्रधर्मातिदेशाभावेन बहुयजमानकत्वनियमाभावादेकवचनेन निर्देशः। इह तु तन्नियमसद्भावाद्बहुवचनेन निर्देशः। प्रकृतिरूपे पृष्ठ्यषडहे त्रिवृदग्निष्टोमो रथंतरसामा प्रथममहः। पञ्चदश उक्थ्यो बृहत्सामा द्वितीयः। सप्तदश उक्थ्यो वैरूपसामा तृतीयः। एकविंशः षोडशी वैराजसामा चतुर्थः। त्रिणव उक्थ्यः शाक्वरसामा पञ्चमः। त्रयस्त्रिंश उक्थ्यो रैवतसामा षष्ठः। तदिदं द्वादशाहान्तर्गतस्य पृष्ठ्यषडहस्य स्वरूपम्। तद्विकृतित्वादत्रापि तथाविधान्येवाहानि द्रष्टव्यानि ॥

अथ सारस्वतसत्रधर्मानुवाकसमाप्तिपर्यन्तमतिदिदिक्षुस्तावदेकं धर्मं विधत्ते—

**सदोहविर्धानिन एतेन षड्रात्रेण यजेरन्नाश्वत्थी हविर्धानं चाऽऽग्नीध्रं च भवतस्तद्धि सुवर्ग्यम्,** इति।

ये यजमानाः सदोहविर्धानाभ्यां मण्डपाभ्यां युक्ताः षड्रात्रे प्रवर्तन्ते तेषां हविर्धानमाग्नीध्रं चेति मण्डपद्वयमाश्वत्थी भवतोऽश्वत्थकाष्ठनिर्मिते उभे कार्ये। तत्राश्वत्थकाष्ठं स्वर्गसाधनम् ॥

धर्मान्तरं विधत्ते—

**चक्रीवती भवतः सुवर्गस्य लोकस्य समष्ट्यै,** इति।

यथा रथस्य शकटस्य वा चक्रं तथा चक्रं ययोराग्नीध्रहविर्धानमण्डपयोस्ते चक्रीवती। अयमर्थः—चक्रयोरक्षं प्रक्षिप्य शकटाकारं कृत्वा तस्योपरि

फलकान्यास्तीर्य तेषामुपरि भूमाविव मण्डपं निर्मातव्यमिति । ईदृशं च स्वर्गप्राप्त्यै भवति । रथेनेव चक्रयुक्तेन मण्डपेन गन्तुं शक्यत्वात् ॥

धर्मान्तरं विधत्ते—

उलूखलबुध्नो यूपो भवति प्रतिष्ठित्यै, इति ।

यथा काष्ठमयस्योलूखलस्य मूलमतिस्थूलं समतलं भवति तथा यूपमूलं कर्तव्यम् । एतच्च यत्र यत्र यूपो नीयते तत्र तत्र भूमौ खननमन्तरेणैव प्रतिष्ठापनार्थम् ॥

धर्मान्तरं विधत्ते—

प्राञ्चो यान्ति प्राङिव हि सुवर्गो लोकः, इति ।

चक्रयुक्ताग्नीध्रादिभिः सह प्राङ्मुखा गच्छेयुः । स्वर्गलोकस्य प्राग्वर्तित्वेन प्रतिभानात् । एतच्चोक्तं सूत्रकारेण—'तस्मिन्संस्थितेऽध्वर्युः शम्यां प्राचः प्रास्यति स यत्र निपतति तद्गार्हपत्यं तस्मिन्षट्त्रिंशतं प्राचः प्रक्रमान्प्रक्रामति तदाहवनीयः, चक्रीवन्ति सदोहविर्धानान्याग्नीध्रं चाऽऽश्वत्थी हविर्धानमाग्नीध्रं चोलूखलबुध्नो यूपः प्रकृष्येदुपोप्त एव नोपरवान्खनन्ति' इति । एकस्मिन्नहि समाप्ते सति परेद्युः प्रातः शम्याक्षेपमात्रं गत्वा तत्राहरन्तरमनुष्ठाय तस्मिन्नपि समाप्ते ततः परेद्युरपि तथेत्यर्थः ॥

धर्मान्तरं विधत्ते—

सरस्वत्या यान्त्येष वै देवयानः
पन्थास्तमेवान्वारोहन्ति, इति ।

या सरस्वत्याख्या नदी तया सह तत्तीरे प्रतिदिनं गच्छेयुः । एष सरस्वतीतीरगतो मार्गो देवयानो देवान्प्रापयितुं क्षमोऽतस्तमेव प्राप्नुवन्ति ॥

धर्मान्तरं विधत्ते—

आक्रोशन्तो यान्त्यवर्तिमेवान्यस्मिन्प्र-
तिषज्य प्रतिष्ठां गच्छन्ति, इति ।

उत्साहातिशयेन क्रियमाण उच्चतमो ध्वनिराक्रोशस्तं कुर्वन्तो गच्छेयुः । धनसंकोचमन्तरेण जीवनं वर्तिः । तद्वैपरीत्येन दारिद्र्यमवर्तिः । अत्रात्तिरेवा-

---

१ क. घ. ङ. मीयते । २ च. °न्तमनु° । ३ ख. °नुष्ठेयं त° ।

र्तिः। तां चार्तिमन्यस्मिन्वैरिणि प्रतिषज्ज्य प्रतिष्ठितत्वेन संयुक्तां कृत्वा स्वयं धनसंपन्नां प्रतिष्ठां गच्छन्ति ॥

एवमनुतिष्ठतः कालावधिरूपं धर्मान्तरं विधत्ते—

यदा दश शतं कुर्वन्त्यथैकमुत्थानꣳ शतायुःपुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति, इति।

एकेन वृषभेण सहिता दश गावो यावति कालेऽपत्यप्रसवेन गवां शतं संपादयन्ति तावन्तं कालं पौनःपुन्येनानुष्ठाय तदनुष्ठानादुत्थानं कर्तव्यमनुष्ठानं समापयेदित्यर्थः। सोऽयमेकः समाप्तिकालः। गोशते सति पुरुषस्य शतसंवत्सरायुष्ट्वान्नाडीशतकसंचारेण शतेन्द्रियत्वादा(चाऽऽ)युषीन्द्रिये च प्रतितिष्ठन्ति ॥

कालावधौ पक्षान्तरं विधत्ते—

यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्थानꣳ सहस्रसंमितो वा असौ लोकोऽमुमेव लोकमभि जयन्ति, इति।

शतं गावो यदा पूर्ववत्सहस्रं संपादयन्ति सोऽयमेक उत्थानकालः। न चातीतपक्षेण सांकर्यं शङ्कनीयम्। प्रसववैचित्र्येण न्यूनाधिककालसंभवात्। गवां सहस्रसंपत्तौ सत्यां सहस्रसंख्याकैर्भोग्यजातैः समृद्धः स्वर्गः प्राप्तो भवति ॥

कालावधावेवापरं पक्षद्वयं विधत्ते—

यदेषां प्रमीयेत यदा वा जीयेरन्नथैकमुत्थानं तद्धि तीर्थम्, इति ॥

एषां यजमानानां मध्ये कश्चिद्यदा प्रमीयेत, सोऽयमेक उत्थानकालः। यदा वा राष्ट्रक्षोभादिना शत्रुभिरेते यजमाना जिता अपहृतसर्वस्वा भवन्ति, सोऽयमेक उत्थानकालः। उक्तविधं यदुत्थानं तत्तीर्थं पापेभ्यस्तारकम्। तस्मात्तत्पर्यन्तं षड्रात्र आवर्तनीयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ सप्तमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

कुसुरुबिन्द औद्दालकिरकामयत पशुमान्त्स्यामिति स एतꣳ सप्तरात्रमाऽहरत्तेनायजत तेन वै स यावन्तो ग्राम्याः पशवस्तानवारुन्ध य एवं विद्वान्त्सप्तरात्रेण यजते यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धे सप्तरात्रो भवति सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै त्रिवृदग्निष्टोमो भवति तेजः ( १ ) एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायत एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते त्रिणवो भवति विजित्यै पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै यत्प्रत्यक्षं पूर्वेष्वहःसु पृष्ठान्युपेयुः प्रत्यक्षम् ( २ ) विश्वजिति यथा दुग्धामुपसीदत्येवमुत्तममहः स्यान्नैकरात्रश्चन स्याद्बृहद्रथंतरे पूर्वेष्वहःसूप यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव न यन्त्यथो अनयोरेव प्रति तिष्ठन्ति यत्प्रत्यक्षं

विश्वजितिं पृष्ठान्युपयन्ति यथा प्रत्तां दुहे तादृगेव तत् (३) ॥

(तेजं उपेयुः प्रत्यक्षं द्विचत्वारिंशश्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ।)

---

कुसुरुबिन्दः । औद्दालकिरित्यौत्—दालकिः । अकामयत । पशुमानितिं पशु—मान् । स्याम् । इतिं । सः । एतम् । सप्तरात्रमितिं सप्त—रात्रम् । एतिं । अहरत् । तेनं । अयजत । तेनं । वै । सः । यावन्तः । ग्राम्याः । पशवः । तान् । अवेतिं । अरुन्ध । यः । एवम् । विद्वान् । सप्तरात्रेणेतिं सप्त—रात्रेणं । यजते । यावन्तः । एव । ग्राम्याः । पशवः । तान् । एव । अवेतिं । रुन्धे । सप्तरात्र इतिं सप्त—रात्रः । भवति । सप्त । ग्राम्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दांꣳसि । उभयस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । त्रिवृदितिं त्रि—वृत् । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । तेजः (१) । एव । अवेतिं । रुन्धे । पञ्चदश इतिं पञ्च—दशः । भवति । इन्द्रियम् ।

एव। अवेति। रुन्धे। सप्तदश इति सप्त–दशः। भवति।
अन्नाद्यस्येत्यन्न–अद्यस्य। अवरुद्ध्या इत्यव–रुद्ध्यै।
अथो इति। प्रेति। एव। तेन। जायते। एकविꣳश
इत्येक–विꣳशः। भवति। प्रतिष्ठित्या इति प्रति–स्थित्यै।
अथो इति। रुचम्। एव। आत्मन्। धत्ते। त्रिणव
इति त्रि–नवः। भवति। विजित्या इति वि–जित्यै।
पञ्चविꣳश इति पञ्च–विꣳशः। अग्निष्टोम इत्यग्नि–स्तोमः।
भवति। प्रजापतेरिति प्रजा–पतेः। आप्त्यै। महाव्रतवानिति
महाव्रत–वान्। अन्नाद्यस्येत्यन्न–अद्यस्य। अवरुद्ध्या
इत्यव–रुद्ध्यै। विश्वजिदिति विश्व–जित्। सर्वपृष्ठ इति
सर्व–पृष्ठः। अतिरात्र इत्यति–रात्रः। भवति। सर्वस्य।
अभिजित्या इत्यभि–जित्यै। यत्। प्रत्यक्षमिति प्रति–
अक्षम्। पूर्वेषु। अहःस्वित्यहः–सु। पृष्ठानि। उपेयुरित्युप–
इयुः। प्रत्यक्षमिति प्रति–अक्षम् (२)। विश्वजितीति
विश्व–जिति। यथा। दुग्धाम्। उपसीदतीत्युप–सीदति।
एवम्। उत्तममित्युत्–तमम्। अहः। स्यात्। न। एक–
रात्र इत्येक–रात्रः। चन। स्यात्। बृहद्रथंतरे इति
बृहत्–रथंतरे। पूर्वेषु। अहःस्वित्यहः–सु। उपेति। यन्ति।
इयम्। वाव। रथंतरमिति रथं–तरम्। असौ। बृहत्।
आभ्याम्। एव। न। यन्ति। अथो इति। अनयोः।

एव । प्रतीति । तिष्ठन्ति । यत् । प्रत्यक्षमिति प्रति—अक्षम् ।
विश्वजितीति विश्व—जिति । पृष्ठानि । उपयन्तीत्युप—यन्ति ।
यथा । प्रत्ताम् । दुहे । तादृक् । एव । तत् ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ सप्तमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

प्रथमेऽनुवाके षड्रात्रोऽभिहितः । अथ द्वितीये सप्तरात्रोऽभिधीयते ॥
तमिमं विधत्ते—

कुसुरुबिन्द औद्दालकिरकामयत पशुमा-
न्त्स्यामिति स एतꣳ सप्तरात्रमाऽहरत्तेना-
यजत तेन वै स यावन्तो ग्राम्याः पशवस्तान-
वारुन्ध य एवं विद्वान्त्सप्तरात्रेण यजते यावन्त
एव ग्राम्याः पशवस्तानेवाव रुन्धे, इति ।

कुसुरुविन्दो नामतः । स चोद्दालकस्य पुत्रः । पशुमान्बहुपशुयुक्तः । गोछा-
गाश्वाविपुरुषगर्दभोष्ट्राः सप्त ग्राम्याः ॥

अथाहःसंख्यां प्रशंसति—

सप्तरात्रो भवति सप्त ग्राम्याः पशवः सप्ताऽऽ-
रण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै, इति ।

ग्राम्या उक्ताः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयाः सप्ताऽऽरण्याः ।
गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्य इति सप्त छन्दांसि । उभयस्य पशु-
समूहस्य च्छन्दसः समूहस्य च ॥

अथाहर्विशेषान्विधत्ते—

त्रिवृदग्निष्टोमो भवति तेज एवाव
रुन्धे पञ्चदशो भवतीन्द्रियमेवाव

रुन्धे सप्तदशो भवत्यन्नाद्यस्याव-
रुद्ध्या अथो प्रैव तेन जायत
एकविꣳशो भवति प्रतिष्ठित्या अथो
रुचमेवाऽऽत्मन्धत्ते त्रिणवो भवति
विजित्यै पञ्चविꣳशोऽग्निष्टोमो भवति
प्रजापतेराप्त्यै महाव्रतवानन्ना-
द्यस्यावरुद्ध्यै विश्वजित्सर्वपृष्ठोऽति-
रात्रो भवति सर्वस्याभिजित्यै, इति।

यथासंभवं पञ्चरात्रषष्ठाद्वच्च व्याख्येयम्। श्लोकेन पुरस्तात्सदसः स्तुव-न्त्यनुश्लोकेन पश्चादित्यादयो महाव्रतधर्माः। तद्धर्मोपेतत्वं महाव्रतवत्त्वम्॥

अत्र कंचिद्विशेषं विधत्ते—

यत्प्रत्यक्षं पूर्वेष्वहःसु पृष्ठान्युपेयुः प्रत्यक्षं
विश्वजिति यथा दुग्धामुपसीदत्येवमुत्तममहः
स्यान्नैकरात्रश्चन स्याद्बृहद्रथंतरे पूर्वेष्व-
हःसूप यन्तीयं वाव रथंतरमसौ बृहदाभ्या-
मेव न यन्त्यथो अनयोरेव प्रति तिष्ठन्ति
यत्प्रत्यक्षं विश्वजिति पृष्ठान्युपयन्ति यथा
प्रत्तां दुहे तादृगेव तत्, इति॥

सप्तमादह्नः पूर्वाण्यहानि यानि सन्ति तेष्वहःसु रथंतरबृहद्वैरूपवैराजशा-क्वररैवतानि पृष्ठानि यदि प्रत्यक्षमुपेयुः, अविकृतानि तथैव प्रयुज्यन्त इत्यर्थः। तथा सति सर्वपृष्ठ इति विधानाद्विश्वजित्यपि सप्तमेऽह्नि यत्प्रत्यक्षमविकृतं यथा भवति तथा पृष्ठस्तोत्राणि प्रयोक्तव्यानि। एवमुभयत्रापि[1] (वि)कृतप्रयोगे सति यथा लोके सकृद्दुग्धां गां पुनरपि दोग्धुं भ्रान्तः पुरुष उपासीदत्येवमिद-मपि सप्तममहः स्यात्। तथा सत्ययं विश्वजिद्दुग्धगोवन्निःसारत्वेन कश्चि-

१ क. ङ. °पि प्रकृ°। २ ख. कदाचिद°।

देकरात्रयागोऽपि न भवेत्, सप्तरात्रयागान्तर्भावोऽपि न संभवतीति किमु वक्तव्यम्। तस्माद्विश्वजितः सारत्वाय वैरूपादीनि पृष्ठान्यनवस्थाप्य पूर्वेषु षट्स्वहःसु बृहद्रथंतरे उभे एव पृष्ठे पर्यायेणाऽऽवर्तनीये। इयं वावेत्यादि पूर्ववत्। पूर्वानुवाके निषेधकस्य नकारस्याभावादाभ्यामेव यन्तीत्यत्र लोकाभ्यामनुष्ठानं निर्वर्तयन्तीति व्याख्यानम्। इह तु नकारस्य सद्भावादाभ्यां लोकाभ्यां नापगच्छन्तीति व्याख्येयम्। पूर्वेष्वहःसु बृहद्रथंतरे द्वे एवानुष्ठाय विश्वजित्यविकृतानां सर्वेषां पृष्ठानामनुष्ठाने सति यथा लोके प्रत्तां क्षीरं दातुं प्रवृत्तां प्रसूतां गां पुरुषो दुग्धे तादृगेवं तद्भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति स एतमष्टरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स ब्रह्मवर्चस्यभवद्य एवं विद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवत्यष्टरात्रो भवत्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धेऽष्टरात्रो भवति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे (१) त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो

---

१ ख. घ. ङ. च. तु न, न'। २ क. घ. ङ. च. 'गेत'।

भवतीन्द्रियमेवावं रुन्धे सप्तदशो भवत्यन्नाद्यस्याव-
रुद्ध्या अथो प्रैव तेन जायत एकविꣳशो भवति
प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते त्रिणवो भवति
विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै पञ्चविꣳ-
शोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्ना-
द्यस्यावरुद्ध्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्व-
स्याभिजित्यै ( २ ) ॥

( दिग्भ्य एव ब्रह्मवर्चसमवं रुन्धेऽभिजित्यै )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

बृहस्पतिः । अकामयत । ब्रह्मवर्चसीति ब्रह्म—वर्चसी ।
स्याम् । इति । सः । एतम् । अष्टरात्रमित्यष्ट—रात्रम् ।
अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः ।
वै । सः । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । अभवत् । यः ।
एवम् । विद्वान् । अष्टरात्रेणेत्यष्ट—रात्रेण । यजते । ब्रह्मव-
र्चसीति ब्रह्म—वर्चसी । एव । भवति । अष्टरात्र इत्यष्ट—
रात्रः । भवति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री ।

गायत्री । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे । अष्टरात्र इत्यष्ट—रात्रः । भवति । चतस्रः । वै । दिशः । चतस्रः । अवान्तरदिशा इत्यवान्तर—दिशाः । दिग्भ्य इति दिक्—भ्यः । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे ( १ ) । त्रिवृदिति त्रि—वृत् । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । तेजः । एव । अवेति । रुन्धे । पञ्चदश इति पञ्च—दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धे । सप्तदश इति सप्त—दशः । भवति । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । अथो इति । प्रेति । एव । तेन । जायते । एकविꣳश इत्येक—विꣳशः । भवति । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । रुचम् । एव । आत्मन् । धत्ते । त्रिणव इति त्रि—नवः । भवति । विजित्या इति वि—जित्यै । त्रयस्त्रिꣳश इति त्रयः—त्रिꣳशः । भवति । प्रतिष्ठित्या इति प्रति—स्थित्यै पञ्चविꣳश इति पञ्च—विꣳशः । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । महाव्रतवानिति महाव्रत—वान् । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । विश्वजिदिति विश्व—जित् । सर्व-

पृष्ठ इति सर्व–पृष्ठः । अतिरात्र इत्यति–रात्रः । भवति । सर्वस्य । अभिजित्या इत्यभि–जित्यै ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीये सप्तरात्रोऽभिहितः । अथ तृतीयेऽष्टरात्रोऽभिधीयते—

बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति स एतमष्टरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स ब्रह्मवर्चस्यभवद्य एवं विद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवत्यष्टरात्रो भवत्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धेऽष्टरात्रो भवति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे, इति ।

पूर्वत्र कुसुरुबिन्देन बाल्य एवाध्ययनकाले सप्तरात्रस्य गुरुमुखेन(ण) निश्चितत्वात्कामनाया ऊर्ध्वं दर्शनं नापेक्षितमिति नोक्तम् । इह तु तदभावा-पश्यदित्युक्तम् । गायत्र्या अष्टाक्षरत्वाद्दिशामवान्तरदिशां च मिलित्वाऽष्ट-संख्योपेतत्वात्संख्याद्वारा तदुभयमुखेन ब्रह्मवर्चसप्राप्तिः ॥

अथाहर्विशेषान्विधत्ते—

त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्याव-रुद्ध्या अथो प्रैव तेन जायत एकविंशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते त्रिणवो भवति

---

१ क. घ. ङ. च. °स्थ साश्रमु° ।

विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै पञ्च-
विꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महा-
व्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित्सर्वपृष्ठोऽति-
रात्रो भवति सर्वस्याभिजित्यै, इति ॥

पूर्वत्र पञ्चैव पृष्ठ्यषडहगतान्यहानि । षष्ठः पञ्चविंशोऽग्निष्टोमः । इह तु तस्य सप्तमत्वात्षाडहिकानि सर्वाण्यप्यहानि क्रमेणैवानुष्ठेयानि । अतिरात्रोऽष्टमः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ।)

---

प्रजापतिः प्रजा असृजत ताः सृष्टाः क्षुधं
न्यायन्त्स एतं नवरात्रमपश्यत्तमाऽहरत्तेनायजत ततो
वै प्रजाभ्योऽकल्पत यर्हि प्रजाः क्षुधं निगच्छेयु-
स्तर्हि नवरात्रेण यजेतेमे हि वा एतासां लोका
अक्लृप्ता अथैताः क्षुधं नि गच्छन्तीमानेवाऽऽभ्यो
लोकान्कल्पयति तान्कल्पमानान्प्रजाभ्योऽनु कल्पते
कल्पन्ते (१) अस्मा इमे लोका ऊर्जं प्रजासु
दधाति त्रिरात्रेणैवेमं लोकं कल्पयति त्रिरात्रेणान्त-
रिक्षं त्रिरात्रेणामुं लोकं यथा गुणे गुणमन्वस्यत्येव-

१ क. घ. ङ. सर्वत्र ।

मेव तल्लोके लोकमन्वंस्यति धृत्या अशिथिलंभावाय ज्योतिर्गौरायुरिति ज्ञाताः स्तोमा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठन्ति ज्ञात्रं प्रजानाम् ( २ ) गच्छति नवरात्रो भवत्यभिपूर्वमेवास्मिन्तेजो दधाति यो ज्योगामया-वी स्यात्स नवरात्रेण यजेत प्राणा हि वा एतस्य। धृता अथैतस्य ज्योगामयति प्राणानेवास्मिन्दा-धारोत यदीतासुर्भवति जीवत्येव ( ३ ) ॥

( कल्पन्ते प्रजानां त्रयस्त्रिंशच्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः।)

---

प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । ताः । सृष्टाः । क्षुधम् । नीति । आयन् । सः । एतम् । नवरात्रमिति नव–रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । प्रजाभ्य इति प्र–जाभ्यः । अकल्पत । यर्हि । प्रजा इति प्र–जाः । क्षुधम् । निगच्छेयुरिति नि–गच्छेयुः । तर्हि । नवरात्रे-

णेति नव—रात्रेण । यजेत । इमे । हि । वै । एतासाम् । लोकाः । अक्लृप्ताः । अथ । एताः । क्षुधम् । नीतिं । गच्छन्ति । इमान् । एव । आभ्यः । लोकान् । कल्पयति । तान् । कल्पमानान् । प्रजाभ्य इति प्र—जाभ्यः । अन्विति । कल्पते । कल्पन्ते (१) । अस्मै । इमे । लोकाः । ऊर्जम् । प्रजास्विति प्र—जासु । दधाति । त्रिरात्रेणेति त्रि—रात्रेण । एव । इमम् । लोकम् । कल्पयति । त्रिरात्रेणेति त्रि—रात्रेण । अन्तरिक्षम् । त्रिरात्रेणेति त्रि—रात्रेण । अमुम् । लोकम् । यथा । गुणे । गुणम् । अन्वस्यतीत्यनु—अस्यति । एवम् । एव । तत् । लोके । लोकम् । अन्विति । अस्यति । धृत्यै । अशिथिलंभावायेत्यशिथिलं—भावाय । ज्योतिः । गौः । आयुः । इति । ज्ञाताः । स्तोमाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । एषु । एव । लोकेषु । प्रतीति । तिष्ठन्ति । ज्ञात्रम् । प्रजानामिति प्र—जानाम् (२) । गच्छति । नवरात्र इति नव—रात्रः । भवति । अभिपूर्वमित्यभि—पूर्वम् । एव । अस्मिन् । तेजः । दधाति । यः । ज्योगामयावीति ज्योक्—आमयावी । स्यात् । सः । नवरात्रेणेति नव—रात्रेण । यजेत । प्राणा इति प्र—अनाः । हि । वै । एतस्य । अधृताः । अथ । एतस्य । ज्योक् ।

आमयति। प्राणानिति प्र-अनान्। एव। अस्मिन्। दाधार। उत। यदि। इतासुरितीत-असुः। भवति। जीवति। एव (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ सप्तमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः।)

---

तृतीयेऽनुवाकेऽष्टरात्रोऽभिहितः। अथ चतुर्थे नवरात्रोऽभिधीयते॥ तमेतं विधत्ते—

प्रजापतिः प्रजा असृजत ताः सृष्टाः क्षुधं न्यायन्त्स एतं नवरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै प्रजाभ्योऽकल्पत यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजेतेमे हि वा एतासां लोका अक्लृप्ता अथैताः क्षुधं नि गच्छन्तीमानेवाऽऽभ्यो लोकान्कल्पयति तान्कल्पमानान्प्रजाभ्योऽनु कल्पते कल्पन्तेऽस्मा इमे लोका ऊर्जं प्रजासु दधाति, इति।

न्यायन्नितरां प्राप्नुवन्। प्रजाभ्योऽकल्पत प्रजानां क्षुन्निवारणाय समर्थोऽभूत्। अतो यस्मिन्काले प्रजा अन्नाभावेन क्षुधं नितरां प्राप्नुवन्ति तदा नवरात्रेण यजेत। इमे भूम्यादयो लोकाः सस्यनिष्पत्त्यभावेनैतासां प्रजानां क्षुन्निवारणार्थमसमर्था यदा भवन्ति तदानीमेताः क्षुधं नितरां प्राप्नुवन्ति। नवरात्रयागेने(णे)माँल्लोकानेतासां प्रजानां क्षुन्निवारणसमर्थान्करोति लोकेषु सस्यं बहु निष्पद्यत इत्यर्थः। तान्समर्थाँल्लोकाननु यजमानोऽपि प्रजानां क्षुण समर्थो भवति। ते च लोका यजमानार्थं समर्था भवन्ति यजमान-

स्येच्छानुसारेण सर्वं निष्पादयन्तीत्यर्थः । ततो यजमानः प्रजास्वभरसं स्थापयति ॥

अथ नवरात्रं विभज्य तदवयवैस्त्रिभिर्लोकत्रयसामर्थ्यं दर्शयन्दृष्टान्तपुरः-सरं प्रशंसति—

त्रिरात्रेणैवेमं लोकं कल्पयति त्रिरात्रेणान्तरिक्षं त्रिरा-त्रेणामुं लोकं यथा गुणे गुणमन्वस्यत्येवमेव तल्लोके लोकमन्वस्यति धृत्या अशिथिलंभावाय, इति ।

नवरात्रमध्ये योऽयमाद्यस्त्रिरात्रस्तेन भूलोकं क्षुभिवारणसमर्थं करोति । स एव त्रिरात्रो यदा द्वितीयवारमावर्त्यते तदा तेनान्तरिक्षं समर्थं करोति । यदा तृतीयवारमावर्त्यते तेन तदा स्वर्गं समर्थं करोति । तत्र दृष्टान्तः—यथा लोके त्रिवृद्रज्जुं सिसृक्षुः पुरुष एकस्मिन्सूत्रे द्वितीयं सूत्रं योजयति ततस्तृती-यमपि योजयति एवमेतेन त्रिरात्रेण पुनः पुनरभ्यस्तेनैतस्मिँल्लोके प्रथमं समर्थे सति ततो द्वितीयं तृतीयं च लोकं समर्थं करोति । एतच्च सर्वासां प्रजानां धारणाय लोकानामशैथिल्याय च संपद्यते ॥

इदानीमावर्त्यमानस्य त्रिरात्रस्यावयवभूतान्यहानि विधत्ते—

ज्योतिर्गौरायुरिति ज्ञाताः स्तोमा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठन्ति ज्ञात्रं प्रजानां गच्छति, इति ।

ज्योतिरादिशब्दत्रयपूर्वकाः स्तोमशब्देनाभिधीयमानाः सामगैः सर्व-ज्ञातास्त्रयोऽहर्विशेषा विद्यन्ते । त एवात्राहर्विशेषाः कर्तव्याः । ज्योतिष्टोमः प्रथममहः, गोष्टोमो द्वितीयमहः, आयुष्टोमस्तृतीयमहः । एते चाहर्विशेषा अत्रापि गवामयनप्रसङ्गे स्पष्टी भविष्यन्ति । ज्योतिष्टोमं प्रथममुपयन्ति गोष्टोमं द्वितीयमुपयन्त्यायुष्टोमं तृतीयमुपयन्तीति ह्यभिधास्यते । एतेषां च स्तोत्रियावैषम्येण भेदः । अत एतस्मिन्प्रसङ्ग आम्नास्यते—'एकया गौरतिरिक्तः एकयाऽऽयुरूनः ।' इति । ज्योतिष्टोमे यावत्यः स्तोत्रीया गोष्टोमे तावतीभ्योऽ-प्येकाऽधिका । आयुष्टोमेऽप्येका न्यूना । एवमस्यामपि शाखायां ज्ञाता प्रसिद्धाः । सामशाखायां तु त्रिकद्रुका इति ज्ञाताः प्रसिद्धाः । त एतेऽत्रा

नुष्ठयाः । ज्योतिरादीनां लोकत्रयरूपत्वात्तेष्वयं प्रतितिष्ठति । किंच प्रजानां मध्ये ज्ञात्रं गच्छति क्षुन्निवर्तकोऽयमित्येवं सर्वैर्ज्ञातत्वं ज्ञात्रं ख्यातिं प्राप्नोतीत्यर्थः । ज्योतिर्गौरायुरित्ययमेव त्रिरात्र आवर्त्यमानो नवरात्रः संपद्यते । अत एव सूत्रकारेणोक्तम्— 'शललीपिशङ्गेनान्नाद्यकामो ज्योतिर्गौरायुर्गौर्ज्योतिरतिरात्रः' इति । चतुर्विधेषु नवरात्रयागेष्विदानीमुच्यमानस्य शललीपिशङ्ग इत्येतन्नाम ॥

नवरात्रक्रतुं प्रशंसति—

**नवरात्रो भवत्यभिपूर्वमेवास्मिन्तेजो दधाति,** इति ।

योऽयं ज्योतिरादिकस्त्रिरात्रः स एवाऽऽवर्त्यमानो नवरात्रो भवति । तदनुष्ठानेनाभिपूर्वमेवानुक्रमेणैव यजमाने तेजः संपादयति । सकृदनुष्ठितस्त्रिरात्रो द्विरनुष्ठितः षड्रात्रस्त्रिरनुष्ठितो नवरात्रः । एवं तेजोऽप्युत्तरोत्तरं वर्धत इत्यर्थः ॥

तदेवमन्नसंपादनद्वारा क्षुन्निवारणार्थं नवरात्रो विहितः । अथ दीर्घरोग निवृत्त्यर्थमपि तमेव विधत्ते—

**यो ज्योगामयावी स्यात्स नवरात्रेण यजेत प्राणा हि वा एतस्याधृता अथैतस्य ज्योगामयति प्राणानेवास्मिन्दाधारोत यदीतासुर्भवति जीवत्येव,** इति ॥

ज्योगामयावी चिरकालीनरोगयुक्तः । तस्य पुरुषस्य प्राणा यदा धातुवैषम्यादधृता धारयितुमशक्या भवन्ति तदानीमेतस्य पुरुषस्य ज्योगामयति दीर्घरोग उत्पद्यते । नवरात्रनुष्ठानेन प्राणानस्मिन्धारयत्येव । अपि च रोगाधिक्यान्मूर्छया पूर्वं मुहूर्तमात्रं याममात्रं वा गतप्राणो भवति, तदाऽप्येतत्क्रतुसामर्थ्यादयं पुनर्जीवत्येव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ सप्तमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

प्रजापतिरकामयत प्र जायेयेति स एतं दशहोतारमपश्यत्तमजुहोत्तेन दशरात्रमसृजत तेन दशरात्रेण प्राजायत दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहुयाद्दशहोत्रैव दशरात्रꣳ सृजते तेन दशरात्रेण प्र जायते वैराजो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान्दशरात्रेण यजते विराजमेव गच्छति प्राजापत्यो वा एष यज्ञो यद्दशरात्रः ( १ ) य एवं विद्वान्दशरात्रेण यजते प्रैव जायत इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापतिमुपाधावत्तस्मा एतं दशरात्रं प्रायच्छत्तमाऽहरत्तेनायजत ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एवं विद्वान्दशरात्रेण यजते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति त्रिककुद्वा ( २ ) एष यज्ञो यद्दशरात्रः ककुत्पञ्चदशः ककुदेकविꣳशः ककुत्त्रयस्त्रिꣳशो य एवं विद्वान्दशरात्रेण यजते त्रिककुदेव समानानां भवति यजमानः पञ्चदशो यजमान एकविꣳशो यजमानस्त्रयस्त्रिꣳशः पुर इतरा अभिचर्यमाणो दशरात्रेण यजेत देवपुरा एव पर्यू-

हते तस्य न कुतश्चनोपाव्याधो भवति नैनमभिच-
रन्त्स्तृणुते देवासुराः संयत्ता आसन्ते देवा एताः
( ३ ) देवपुरा अपश्यन्यद्दशरात्रस्ताः पर्यौहन्त
तेषां न कुतश्चनोपाव्याधोऽभवत्ततो देवा अभवन्प-
राऽसुरा यो भ्रातृव्यवान्त्स्यात्स दशरात्रेण यजेत
देवपुरा एव पर्यूहते तस्य न कुतश्चनोपाव्याधो
भवति भवत्यात्मना पराऽस्य भ्रातृव्यो भवति
स्तोमः स्तोमस्योपस्तिर्भवति भ्रातृव्यमेवोपस्तिं
कुरुते जामि वै ( ४ ) एतत्कुर्वन्ति यज्ज्यायाꣳसꣳ
स्तोममुपेत्य कनीयाꣳसमुपयन्ति यदग्निष्टोमसा-
मान्यवस्ताच्च परस्ताच्च भवन्त्यजामित्वाय त्रिवृदग्नि-
ष्टोमोऽग्निष्टुदाग्नेयीषु भवति तेज एवाव रुन्धे पञ्च-
दश उक्थ्य ऐन्द्रीष्विन्द्रियमेवाव रुन्धे त्रिवृदग्नि-
ष्टोमो वैश्वदेवीषु पुष्टिमेवाव रुन्धे सप्तदशोऽग्निष्टोमः
प्राजापत्यासु तीव्रसोमोऽन्नाद्यस्यावरुद्ध्या अथो
प्रैव तेन जायते ( ५ ) एकविꣳश उक्थ्यः सौरीषु
प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते सप्तदशोऽग्नि-
ष्टोमः प्राजापत्यासूपहव्य उपहवमेव गच्छति त्रिण-
वावग्निष्टोमावभित ऐन्द्रीषु विजित्यै त्रयस्त्रिꣳश

उक्थ्यो वैश्वदेवीषु प्रतिष्ठित्यै विश्वजित्सर्वपृष्ठोऽति-
रात्रो भवति सर्वस्याभिजित्यै ( ६ )॥

( प्राजापत्यो वा एष यज्ञो यद्दशरात्रस्त्रिककुद्वा एता
वै जायत एकत्रिꣳशच्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । अकामयत । प्रेति ।
जायेय । इति । सः । एतम् । दर्शहोतारमिति दर्श—
होतारम् । अपश्यत् । तम् । अजुहोत् । तेन । दशरात्र-
मिति दश—रात्रम् । असृजत । तेन । दशरात्रेणेति दश—
रात्रेण । प्रेति । अजायत । दशरात्रायेति दश—रात्राय ।
दीक्षिष्यमाणः । दर्शहोतारमिति दर्श—होतारम् । जुहुयात् ।
दर्शहोत्रेति दर्श—होत्रा । एव । दशरात्रमिति दश—रात्रम् ।
सृजते । तेन । दशरात्रेणेति दश—रात्रेण । प्रेति । जायते ।
वैराजः । वै । एषः । यज्ञः । यत् । दशरात्र इति दश—
रात्रः । यः । एवम् । विद्वान् । दशरात्रेणेति दश—रात्रेण ।
यजते । विराजमिति वि—राजम् । एव । गच्छति । प्राजा-
पत्य इति प्राजा—पत्यः । वै । एषः । यज्ञः । यत् । दश-

रात्र इति॑ दश–रात्रः ( १ ) । यः । एवम् । विद्वान् । दशरात्रेणेति॑ दश–रात्रेण॑ । यज॑ते । प्रेति॑ । एव । जायते । इन्द्रः॑ । वै । सदृङ्ङिति॑ स–दृङ् । देवता॑भिः । आसीत् । सः । न । व्यावृतमिति॑ वि–आवृत॑म् । अगच्छत् । सः । प्रजा-पतिमिति॑ प्रजा–पतिम् । उपेति॑ । अधावत् । तस्मै॑ । एतम् । दशरात्रमिति॑ दश–रात्रम् । प्रेति॑ । अयच्छत् । तम् । एति॑ । अहरत् । तेन॑ । अयजत । तत॑ः । वै । सः । अन्याभि॑ः । देवता॑भिः । व्यावृतमिति॑ वि–आवृत॑म् । अगच्छत् । यः । एवम् । विद्वान् । दशरात्रेणेति॑ दश–रात्रेण॑ । यज॑ते । व्यावृतमिति॑ वि–आवृत॑म् । एव । पाप्मना॑ । भ्रातृ॑व्येण । गच्छति । त्रिककुदिति॑ त्रि–ककुत् । वै (२) । एषः । यज्ञः । यत् । दशरात्र इति॑ दश–रात्रः । ककुत् । पञ्चदश इति॑ पञ्च–दशः । ककुत । एकविꣳश इत्येक–विꣳशः । ककुत् । त्रयस्त्रिꣳश इति॑ त्रयः–त्रिꣳशः । यः । एवम् । विद्वान् । दशरात्रेणेति॑ दश–रात्रेण॑ । यज॑ते । त्रिककुदिति॑ त्रि–ककुत् । एव । समानाना॑म् । भवति । यज॑-मानः । पञ्चदश इति॑ पञ्च–दशः । यज॑मानः । एकविꣳश इत्येक–विꣳशः । यज॑मानः । त्रयस्त्रिꣳश इति॑ त्रयः–त्रिꣳशः । पुर॑ः । इतराः । अभिचर्यमाण इत्य॑भि चर्यमाणः । दशरात्रेणेति॑ दश–

रात्रेण। यजेत। देवपुरा इति देव—पुराः। एव। परीति। ऊहते। तस्य। न। कुतः। चन। उपाव्याध इत्युप—आव्याधः। भवति। न। एनम्। अभिचरन्नित्यभि—चरन्। स्तृणुते। देवासुरा इति देव—असुराः। संयत्ता इति सं—यत्ताः। आसन्। ते। देवाः। एताः (३)। देवपुरा इति देव—पुराः। अपश्यन्। यत्। दशरात्र इति दश—रात्रः। ताः। परीति। औहन्त। तेषाम्। न। कुतः। चन। उपाव्याध इत्युप-आव्याधः। अभवत्। ततः। देवाः। अभवन्। परेति। असुराः। यः। भ्रातृव्यवानिति भ्रातृव्य—वान्। स्यात्। सः। दशरात्रेणेति दश—रात्रेण। यजेत। देवपुरा इति देव—पुराः। एव। परीति। ऊहते। तस्य। न। कुतः। चन। उपाव्याध इत्युप—आव्याधः। भवति। भवति। आत्मना। परेति। अस्य। भ्रातृव्यः। भवति। स्तोमः। स्तोमस्य। उपस्तिः। भवति। भ्रातृव्यम्। एव। उपस्तिम्। कुरुते। जामि। वै (४)। एतत्। कुर्वन्ति। यत्। ज्यायांसम्। स्तोमम्। उपेत्येत्युप—इत्य। कनीयांसम्। उपयन्तीत्युप—यन्ति। यत्। अग्निष्टोमसामानीत्यग्निष्टोम-सामानि। अवस्तात्। च। परस्तात्। च। भवन्ति। अजामित्वायेत्यजामि—त्वाय। त्रिवृदिति त्रि—वृत्। अग्नि-

ष्टोम इत्यग्नि–स्तोमः। अग्निष्टुदित्यग्नि–स्तुत्। आग्नेयीषु। भवति। तेजः। एव। अवेति। रुन्धे। पञ्चदश इति पञ्च–दशः। उक्थ्यः। ऐन्द्रीषु। इन्द्रियम्। एव। अवेति। रुन्धे। त्रिवृदिति त्रि–वृत्। अग्निष्टोम इत्यग्नि–स्तोमः। वैश्वदेवीष्विति वैश्व–देवीषु। पुष्टिम्। एव। अवेति। रुन्धे। सप्तदश इति सप्त–दशः। अग्निष्टोम इत्यग्नि–स्तोमः। प्राजापत्यास्विति प्राजा–पत्यासु। तीव्रसोम इति तीव्र–सोमः। अन्नाद्यस्येत्यन्न–अद्यस्य। अवरुद्ध्या इत्यव–रुद्ध्यै। अथो इति। प्रेति। एव। तेन। जायते (५)। एकविंश इत्येक–विंशः। उक्थ्यः। सौरीषु। प्रतिष्ठित्या इति प्रति–स्थित्यै। अथो इति। रुचम्। एव। आत्मन्। धत्ते। सप्तदश इति सप्त–दशः। अग्निष्टोम इत्यग्नि–स्तोमः। प्राजापत्यास्विति प्राजा–पत्यासु। उपहव्य इत्युप–हव्यः। उपहवमित्युप–हवम्। एव। गच्छति। त्रिणवाविति त्रि–नवौ। अग्निष्टोमावित्यग्नि–स्तोमौ। अभितः। ऐन्द्रीषु। विजित्या इति वि–जित्यै। त्रयस्त्रिंश इति त्रयः–त्रिंशः। उक्थ्यः। वैश्वदेवीष्विति वैश्व–देवीषु। प्रतिष्ठित्या इति प्रति–स्थित्यै। विश्वजिदिति विश्व–जित्। सर्वपृष्ठ

इति सर्व—पृष्ठः । अतिरात्र इत्यति—रात्रः । भवति ।
सर्वस्य । अभिजित्या इत्यभि—जित्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाके नवरात्रोऽभिहितः । अथ पञ्चमे दशरात्रोऽभिधीयते ॥
तमेतं विधित्सुरादौ तदङ्गभूतं होमं विधत्ते—

प्रजापतिरकामयत प्र जायेयेति स एतं दशहोतारम-
पश्यत्तमजुहोत्तेन दशरात्रमसृजत तेन दशरात्रेण प्राजा-
यत दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहुयाद्दश-
होत्रैव दशरात्रꣳ सृजते तेन दशरात्रेण प्र जायते, इति ।

प्रजाः सिसृक्षुः प्रजापतिरादौ तत्साधनभूतं दशरात्रक्रतुमुत्पादयितुं तस्यापि साधनभूतं दशहोत्राख्यं ‘ चित्तिः स्रुक् । चित्तमाज्यम् । ’ इत्यादिकं मन्त्रमारण्यकाण्डोक्तं निश्चित्य तेन मन्त्रेण हुत्वा क्रतुं च सृष्ट्वा प्रजा असृजत । तस्मिन्मन्त्रे चित्तिः स्रुगित्यारभ्य सामाध्वर्युरित्यन्तैर्वाक्यैर्होमनिष्पादकानां स्रुगादीनां दशानामभिधानादयं मन्त्रो दशहोता । यद्वा तन्मन्त्राभिमानी पुरुषो दशवारमाहूतः प्रत्यशृणोत् । तस्मादयं दशहोता । तथा च होतृब्राह्मणे समाम्नायते—‘आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै दशमꣳ हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूतꣳ सन्तम् । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । ’ इति । तमेतं मन्त्रं दशरात्रदीक्षार्थे जुहुयात् । तेन होमेन दशरात्रक्रतुं सृष्ट्वा तेन दशरात्रेण प्रजामुत्पादयति ॥

---

१ ख. ग. ङ. च. तस्मिन्म° ।

अथ दशसंख्यामुपजीव्य क्रमं प्रशंसति—

वैराजो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान्दशरात्रेण यजते विराजमेव गच्छति, इति।

दशसंख्याया विराट्संबन्धित्वाद्विराट्छन्दःसाध्यमन्नं प्राप्नोतीत्यर्थः ॥

प्रजापतिसृष्टत्वेन क्रतोस्तत्संबन्धमुपजीव्य प्रशंसति—

प्राजापत्यो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान्दशरात्रेण यजते प्रैव जायते, इति।

प्रजोत्पादनलक्षणं फलमभिधाय पापक्षयलक्षणं फलमभिधातुं विधत्ते[1]—

इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापतिमुपाधावत्तस्मा एतं दशरात्रं प्रायच्छत्तमाऽहरत्तेनायजत ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एवं विद्वान्दशरात्रेण यजते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति, इति।

पुरा कदाचिदिन्द्रोऽन्याभिर्देवताभिः समान एवाऽऽसीत्, न तु व्यावृत्तिं प्राप्तवान्। भो इन्द्र गच्छ गच्छेत्येवमेव सर्वे देवा व्यवहरन्ति, न तु कश्चिद्राजन्स्वामिन्निति व्यवहरति। ततः प्रजापतिमुपसेव्य तन्मुखाद्दशरात्रं क्रतुमवगत्य तदनुष्ठानेन व्यावृत्तिं प्राप्तवान्। एवमन्योऽप्येतदनुष्ठाय पाप्मना भ्रातृव्येण वियोगं गच्छति ॥

विधास्यमानेषु दशस्वहःसु त्रयाणामह्नां वृषभसंबन्धिककुत्साम्येनौन्नत्यं प्रदर्श्य प्रशंसति—

त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत्पञ्चदशः ककुदेकविंशः ककुत्त्रयस्त्रिंशो य एवं विद्वान्दशरात्रेण यजते त्रिककुदेव समानानां भवति यजमानः पञ्चदशो यजमान एकविंशो यजमानस्त्रयस्त्रिंशः पुर इतराः, इति।

---

[1] ख. घ. °भिधत्ते।

त्रीणि ककुत्सदृशान्युन्नतस्तोमयुक्तान्यहानि यस्य दशरात्रस्य सोऽयं त्रिककुत्। किं तदुन्नतमहस्त्रयमिति, तदुच्यते—यः पञ्चदश उक्थ्यो द्वितीयमहस्तदेकं ककुत्स्थानीयम्। प्रथमतृतीययोस्त्रिवृदग्निष्टोमयोरह्नोर्नीचस्तोमयुक्तत्वात्। यथा वृषसंबन्धिककुदः पुरोवर्ती गलभागः पश्चाद्वर्ती पृष्ठभागश्चेत्युभौ निम्नौ तद्वत्। तथैकविंश उक्थ्यः पञ्चममहः। तदेकं ककुत्स्थानीयं, चतुर्थषष्ठयोः सप्तदशोक्थ्यरूपयोरह्नोर्निम्नस्थानीयत्वात्। तथा त्रयस्त्रिंश उक्थ्योऽष्टममहः। तदप्येकं ककुत्स्थानीयं, त्रिणवाग्निष्टोमरूपयोः सप्तमनवमयोरह्नोर्निम्नस्थानीयत्वात्। एतं महिमानमभिज्ञायानुष्ठाने यजमानः समानानां मध्ये त्रिगुणेनौन्नत्येन प्रजापशुधनादिकृतेन युक्तो भवति। य एते पञ्चदशैकविंशत्रयस्त्रिंशास्तत्स्थानीयो यजमान इतरा अहस्थानीयाः प्रजा यजमानस्य पुरस्थानीया भवन्ति। यथा पुरां सर्वासां राजा स्वामी, एवमन्यासां प्रजानां यजमानः स्वामी भवतीत्यर्थः॥

पूर्वं दशरात्रस्यान्नप्राप्तिः पापव्यावृत्तिश्चेति फलद्वयं दर्शितम्। अथाभिचारबाधनिवृत्तिरूपं फलं दर्शयितुं विधत्ते—

अभिचर्यमाणो दशरात्रेण यजेत देवपुरा एव पर्यूहते तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुते, इति।

यमुद्दिश्य शत्रुरभिचारं करोति सोऽयमभिचर्यमाणः। स चाभिचारबाधपरिहाराय दशरात्रेण यजेत। तस्मिन्ननुष्ठिते सति देवानां यानि पुराणि बहुविधशूरभटभृत्यपरिपूर्णानि तानि सर्वाणि स्वरक्षार्थं परितः स्थापयति। यः शत्रुरभिचरति सोऽप्येनं न हिनस्ति, तस्य हिंसितुमक्षमत्वात्। न कुतोऽप्यभिचाराद्वाध एतस्य यजमानस्य संभवति॥

अभिचारबाधनिवृत्तिफलमुक्त्वा शत्रुजयरूपं फलमभिधातुं विधत्ते—

देवासुराः संयत्ता आसन्ते देवा एता देवपुरा अपश्यन्यद्दशरात्रस्ताः पर्यौहन्त तेषां न कुतश्चनोपाव्याधोऽभवत्ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्त्स्यात्स दशरात्रेण यजेत देवपुरा एव पर्यूहते तस्य न

कुतश्चनोपाव्याधो भवति भवत्यात्मना पराऽस्य भ्रातृव्यो भवति स्तोमः स्तोमस्योपस्तिर्भवति भ्रातृव्यमेवोपस्तिं कुरुते , इति ।

देवाश्चासुराश्च यदा युद्धोद्यतास्तदानीं देवा विजयोपायं विचार्य यो दशरात्रस्तद्रूपाणि देवपुराण्युपायत्वेन निश्चित्य परितस्तानि स्थापितवन्तः । तेषां वैरिणां[1] कुतोऽपि भ्रातृव्याभिबाधो न भवति । ततो देवा विजयं प्राप्ता असुराश्च पराजिताः । ततो भ्रातृव्यवान्यजमानोऽपि दशरात्रेण विजयी भवति । तदीयो भ्रातृव्यश्च पराभवति । किं चात्र ककुद्रूपस्य पञ्चदशस्तोमस्य समीपवर्ती त्रिवृदादिस्तोम उपस्तिः क्षीणो भवति । तेन भ्रातृव्यमेव क्षीणं करोति ॥

अथास्मिन्दशरात्रे कंचिद्विशेषं विधत्ते—

जामि वा एतत्कुर्वन्ति यज्ज्यायाꣳसꣳ स्तोममुपेत्य कनीयाꣳसमुपयन्ति यदग्निष्टोमसामान्यवस्ताच्च परस्ताच्च भवन्त्यजामित्वाय, इति ।

यथा लोके कश्चिद्राजामात्यादिर्महतीं संपदमनुभूय पश्चाद्दारिद्र्यमनुभवन्नत्यन्तमलसः क्लिष्टो भवति तथाऽत्रापि द्वितीयेऽह्नि ज्यायांसं पञ्चदशस्तोमं ककुद्रूपमनुष्ठाय ततस्तृतीयेऽह्नि कनीयांसं निम्नभागस्थानीयं त्रिवृत्स्तोममनुतिष्ठन्तीति यत्तदेतज्जामि कुर्वन्ति आलस्ययुक्तं कुर्वन्तीत्यर्थः । अत आलस्यपरिहाराय पञ्चदशोक्थ्यरूपाद्द्वितीयस्मादह्नोऽवस्तात्प्रथमेऽहन्युपरिष्टाच्च तृतीयेऽहन्यग्निष्टोमसामानि यज्ञायज्ञीयाख्यानि कुर्यात् । तेनाऽऽलस्यं परिहृतं भवति । एवमेकविंशोक्थ्यरूपात्पञ्चमादह्नः पूर्वोत्तरदिनयोः । त्रयस्त्रिंशोक्थ्यरूपादष्टमादह्नः पूर्वोत्तरदिनयोरप्यग्निष्टोमसंस्थाप्रयोजि(ज)कानि यज्ञायज्ञीयसामानि कुर्यात् । तेन सर्वत्राऽऽलस्यं परिहृतं भवति ।

अथास्य दशरात्रस्य प्रथममहर्विधत्ते—

त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति तेज एवाव रुन्धे, इति ।

---

1 क. घ. ङ. च. वैरिणः ।

अग्निविषयो यज्ञायज्ञीयसामसाध्योऽन्तिमस्तोत्रगतः स्तोमो यस्य सोऽयम-ग्निष्टोमः। तस्यैवावान्तरविशेषः कश्चिदग्निष्टुदित्युच्यते। यत्र सर्वेष्वपि स्तोत्रे-ष्वग्निरेव स्तूयते स च सर्वोऽपि त्रिवृत्स्तोमेनैव युक्तः। सर्वत्राग्नेरेव स्तुत्यत्वा-दाग्नेयीष्वृक्षु सोऽग्निष्टुद्भवति। तदिदं प्रथममहः। तेन तेजः प्राप्नोति॥

अथ द्वितीयमहर्विधत्ते—

पञ्चदश उक्थ्य ऐन्द्रीष्विन्द्रियमेवाव रुन्धे, इति।

सर्वासामृचामिन्द्रविषयत्वादिन्द्रियप्राप्तिः।

अथ तृतीयमहर्विधत्ते—

त्रिवृदग्निष्टोमो वैश्वदेवीषु पुष्टिमेवाव रुन्धे, इति।

सर्वासामृचां वैश्वदेवत्वेन पुष्टिप्राप्तिः।

अथ चतुर्थमहर्विधत्ते—

सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमोऽन्नाद्यस्या-वरुद्ध्या अथो प्रैव तेन जायते, इति।

तीव्रसोमो नाम कश्चिदुक्थ्यावान्तरविशेषः। यस्मिन्नाशीरर्थं गवां शतं दुहन्ति तमुक्थ्यमग्निष्टोमरूपतामापाद्यानुतिष्ठेत्। पञ्चदशसु स्तोत्रेष्वन्तिमस्तोत्रत्रये परित्यक्ते सति द्वादशस्तोत्रत्वेनाग्निष्टोमता संपद्यते। स्तोत्राणि च सर्वाणि प्राजापत्यास्वृक्षु प्रयोक्तव्यानि। तीव्रसोमत्वादन्नप्राप्तिर्ऋचां प्राजापत्यत्वा-त्प्रजोत्पत्तिश्च भवति।

अथ पञ्चममहर्विधत्ते—

एकविꣳश उक्थ्यः सौरीषु प्रति-ष्ठित्या अथो रुचमेवाऽऽत्मन्धत्ते, इति।

स्तोमस्यैकविंशत्वेन प्रतिष्ठाप्राप्तिः। ऋचां सौरीत्वाद्दीप्तिधारणम्।

अथ षष्ठमहर्विधत्ते—

सप्तदशोऽग्निष्टोमः प्राजापत्यासू-पहव्य उपहवमेव गच्छति, इति।

उपहव्यो नाम कश्चिदेकाहविशेषः। तदनुष्ठानेनात्रोपहवं सर्वेषामनुज्ञां पूजाविषयां प्राप्नोति।

---

१ च °दन्नाद्यप्रा°।

(एकादशरात्रकथनम्)

अथ सप्तमनवमे अहनी विधत्ते—

त्रिणवावग्निष्टोमावभित ऐन्द्रीषु विजित्यै, इति ।

वक्ष्यमाणस्य त्रयस्त्रिंशाख्यस्याह्नः पूर्वोत्तरदिनयोस्त्रिणवस्तोमयुक्तावग्निष्टोमौ कार्यौ । तत्र सर्वा अप्यृच ऐन्द्र्यस्तेन विजयो भवति ।

तयोरह्नोर्मध्यममष्टममहर्विधत्ते—

त्रयस्त्रिंश्श उक्थ्यो वैश्वदेवीषु प्रतिष्ठित्यै, इति ।

ऋचां सर्वासां वैश्वदेवत्वेन प्रतिष्ठासिद्धिः ।

अथ दशममहर्विधत्ते—

विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै, इति ॥

गतम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ।)

---

ऋतवो वै प्रजाकामाः प्रजां नाविन्दन्त तेऽकामयन्त प्रजाꣳ सृजेमहि प्रजामव रुन्धीमहि प्रजां विन्देमहि प्रजावन्तः स्यामेति त एतमेकादशरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै ते प्रजामवारुन्धत प्रजामविन्दन्त प्रजावन्तोऽभवन्त ऋतवोऽभवन्तदार्तवानामार्तवत्वमृतूनां वा एते पुत्रास्तस्मात् (१) आर्तवा उच्यन्ते य एवं विद्वाꣳसं एकादशरात्रमासते प्रजामेव सृजन्ते प्रजामव रुन्धते प्रजां विन्दन्ते प्रजावन्तो भवन्ति

( एकादशरात्रकथनम् )

ज्योतिरतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति चतुर्विꣳशो भवति चतुर्विꣳशत्यक्षरा गायत्री ( २ ) गायत्रं ब्रह्मवर्चसं गायत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति चतुश्चत्वारिꣳशो भवति चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप्त्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठन्त्यष्टा-चत्वारिꣳशो भवत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यामेव पशुषु प्रति तिष्ठन्त्ये-कादशरात्रो भवति पञ्च वा ऋतव आर्तवाः पञ्चर्तुष्वेवाऽऽर्तवेषु संवत्सरे प्रतिष्ठाय प्रजामव रुन्ध-तेऽतिरात्रावभितो भवतः प्रजायै परिगृहीत्यै (३) ॥

( एते पुत्रास्तस्माद्द्वापञ्चेकान्न पञ्चाशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

ऋतवः । वै । प्रजाकामा इति प्रजा—कामाः । प्रजामिति प्र—जाम् । न । अविन्दन्त । ते । अकामयन्त । प्रजामिति

प्र–जाम्। सृजेमहि। प्रजामिति प्र–जाम्। अवेति। रुन्धीमहि। प्रजामिति प्र–जाम्। विन्देमहि। प्रजावन्त इति प्रजा–वन्तः। स्याम। इति। ते। एतम्। एकादश-रात्रमित्येकादश–रात्रम्। अपश्यन्। तम्। एति। अह-रन्। तेन। अयजन्त। ततः। वै। ते। प्रजामिति प्र–जाम्। असृजन्त। प्रजामिति प्र–जाम्। अवेति। अरुन्धत। प्रजामिति प्र–जाम्। अविन्दन्त। प्रजावन्त इति प्रजा–वन्तः। अभवन्। ते। ऋतवः। अभवन्। तत्। आर्तवानाम्। आर्तवत्वमित्यार्तव–त्वम्। ऋतूनाम्। वै। एते। पुत्राः। तस्मात् (१)। आर्तवाः। उच्यन्ते। ये। एवम्। विद्वाꣳसः। एकादशरात्रमित्येकादश–रात्रम्। आसते। प्रजामिति प्र–जाम्। एव। सृजन्ते। प्रजामिति प्र–जाम्। अवेति। रुन्धते। प्रजामिति प्र–जाम्। विन्दन्ते। प्रजावन्त इति प्रजा–वन्तः। भवन्ति। ज्योतिः। अतिरात्र इत्यति–रात्रः। भवति। ज्योतिः। एव। पुर-स्तात्। दधते। सुवर्गस्येति सुवः–गस्य। लोकस्य। अनुख्यात्या इत्यनु–ख्यात्यै। पृष्ठ्यः। षडह इति षट्–अहः। भवति। षट्। वै। ऋतवः। षट्। पृष्ठानि। पृष्ठैः। एव। ऋतून्। अन्वारोहन्तीत्यनु–आरोहन्ति। ऋतुभिरित्यृतु–भिः। संवत्सरमिति सं–वत्सरम्। ते। संवत्सर

इति सं—वत्सरे । एव । प्रतीति । तिष्ठन्ति । चतुर्विंश इति चतुः—विंशः । भवति । चतुर्विंशत्यक्षरेति चतुर्विंशति—अक्षरा । गायत्री ( २ ) । गायत्रम् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । गायत्रियाम् । एव । ब्रह्मवर्चस इति ब्रह्म—वर्चसे । प्रतीति । तिष्ठन्ति । चतुश्चत्वारिंश इति चतुः—चत्वारिंशः । भवति । चतुश्चत्वारिंशदक्षरेति चतुश्चत्वारिंशत्—अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुप् । त्रिष्टुभि । एव । इन्द्रिये । प्रतीति । तिष्ठन्ति । अष्टाचत्वारिंश इत्यष्टा—चत्वारिंशः । भवति । अष्टाचत्वारिंशदक्षरेत्यष्टाचत्वारिंशत्—अक्षरा । जगती । जागताः । पशवः । जगत्याम् । एव । पशुषु । प्रतीति । तिष्ठन्ति । एकादशरात्र इत्येकादश—रात्रः । भवति । पञ्च । वै । ऋतवः । आर्तवाः । पञ्च । ऋतुषु । एव । आर्तवेषु । संवत्सर इति सं—वत्सरे । प्रतिष्ठायेति प्रति—स्थाय । प्रजामिति प्र—जाम् । अवेति । रुन्धते । अतिरात्रावित्यति—रात्रौ । अभितः । भवतः । प्रजाया इति प्र—जायै । परिगृहीत्या इति परि—गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

———

(अथ सप्तमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः।)

---

पञ्चमे दशरात्रोऽभिहितः। अथ षष्ठ एकादशरात्रोऽभिधीयते। तमेतं विधत्ते—

ऋतवो वै प्रजाकामाः प्रजां नाविन्दन्त तेऽकामयन्त प्रजाꣳ सृजेमहि प्रजामव रुन्धीमहि प्रजां विन्देमहि प्रजावन्तः स्यामेति त एतमेकादशरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै ते प्रजामसृजन्त प्रजामवारुन्धत प्रजामविन्दन्त प्रजावन्तोऽभवन्त ऋतवोऽभवन्तदार्तवानामार्तवत्वमृतूनां वा एते पुत्रास्तस्मादार्तवा उच्यन्ते य एवं विद्वाꣳस एकादशरात्रमासते प्रजामेव सृजन्ते प्रजामव रुन्धते प्रजां विन्दन्ते प्रजावन्तो भवन्ति, इति।

वसन्ताद्यृत्वभिमानिनो देवाः पुरा प्रजामिच्छन्तोऽपि नालभन्त। ते चतुर्विधां कामनामकुर्वत। प्रजां स्रष्टुं समर्थाः स्यामेत्येका कामना। ततोऽवरोद्धुं नियन्तुं समर्थाः स्यामेति द्वितीया कामना। तत उत्पादनेन प्रजां लभेमहीति तृतीया कामना। ततो बह्वीभिः प्रशस्ताभिश्च प्रजाभिर्युक्ता अवतिष्ठेमेति चतुर्थी कामना। तेषामृतूनामेकादशरात्रेण तत्सर्वं सिद्धम्। ततस्ते वसन्ताद्या ऋतवोऽभवन्। प्रजारूपां भूतिमैश्वर्यं प्राप्ताः। यस्मादेते सर्वे प्राणिन ऋतूनां पुत्रास्तस्मादार्तवा इत्युच्यन्ते। ऋतुवदन्येषामपि यजमानानामेतत्सर्वं सिध्यति। अस्य चैकादशरात्रस्य सत्रलक्षणभूतयाऽपि चोदनया विधानात्सत्रत्वं द्रष्टव्यम्। नह्यत्र साध्यानां षड्रात्र इव धर्मातिदेशार्थयमासिचोदना। तद्वदत्रातिदेश्यानां धर्मविशेषाणामश्रवणात्। तस्मादयमृतूनामेकादशरात्रः सत्रम्। इतोऽन्ये शाखान्तरविहिता एकादशरात्रा अहीनाः।

एतस्मिन्नृतूनामेकादशरात्रे प्रथममहर्विधत्ते—

ज्योतिरतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै, इति।

त्रि ज्योतिर्गौरायुरिति ज्योतिःशब्दाभिधेयो य एकाह उक्तस्तमेकाहम-

अतिरात्रसंस्थारूपं कुर्यात् । तथा सति प्रथममेव ज्योतिर्विधानात्स्वर्गं जिगमिषोर्यजमानस्य पुरस्तादेव प्रकाशः कृतो भवति । तच्च स्वर्गलोकप्रकाशनाय भवति ॥

अथ द्वितीयादिसप्तमान्तान्यहानि विधत्ते—

पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट्
पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं
ते संवत्सर एव प्रति तिष्ठन्ति, इति ।

द्वादशाहे द्वितीयदिनमारभ्य सप्तमान्तेषु दिनेषु रथंतरादिभिः षड्भिः पृष्ठैर्युक्तानि षडहानि विहितानि । तानि चास्माभिः साध्यानां षड्रात्रप्रसङ्गेनोदाहृतानि । तेषां संघः पृष्ठ्यः षडहः, सोऽत्र कर्तव्यः । तथा सति षट्संख्याद्वारेणर्तुप्राप्तिः । तद्द्वारा संवत्सरप्राप्तिः ॥

अथाष्टममहर्विधत्ते—

चतुर्विꣳशो भवति चतुर्विꣳशत्यक्षरा
गायत्री गायत्रं ब्रह्मवर्चसं गायत्रि-
यामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति, इति ।

चतुर्विंशस्तोमयुक्तो रथंतरसामा य उक्थ्यः सोऽयमत्राष्टममहः । तथा सति चतुर्विंशतिसंख्याद्वारा गायत्रीप्राप्तिः । तद्द्वारा च ब्रह्मवर्चसप्राप्तिः ॥

अथ नवममहर्विधत्ते—

चतुश्चत्वारिꣳशोभवति चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगि-
न्द्रियं त्रिष्टुप्त्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठन्ति, इति ।

चतुश्चत्वारिंशस्तोमयुक्तो बृहद्रथंतरसामा य उक्थ्यः सोऽयमत्र नवममहः । तदनुष्ठानेन संख्याद्वारा त्रिष्टुप्प्राप्तिः । तद्द्वारा चेन्द्रियप्राप्तिः ॥

अथ दशममहर्विधत्ते—

अष्टाचत्वारिꣳशो भवत्यष्टाचत्वारिꣳश-
दक्षरा जगती जागताः पशवो जग-
त्यामेव पशुषु प्रति तिष्ठन्ति , इति ।

अष्टाचत्वारिंशस्तोमयुक्तो बृहत्सामा य उक्थ्यः सोऽयमत्र दशममहः । तेन संख्याद्वारा जगतीं प्राप्य तद्द्वारा पशुषु प्रतितिष्ठन्ति । तान्येतानि त्रीण्य-

हानि सूत्रकारेण स्पष्टमुदाहृतानि—'ततस्त्रींश्छन्दोमानुक्थ्यानन्वहमुपयन्ति चतुर्विंशं चतुश्चत्वारिंशमष्टाचत्वारिंशमिति, रथंतरसाम्ना प्रथमो बृहद्रथंतरसामा द्वितीयो बृहत्सामा तृतीयः, इति। छन्दोभिर्गायत्रीत्रिष्टुब्जगतीभिरक्षरसंख्याद्वारा मीयन्ते परिच्छिद्यन्त इति चतुर्विंशादिस्तोमाश्छन्दोमाः। तत्र चतुर्विंशस्तोमस्य विष्टुतिः सामब्राह्मण एवमाम्नायते—'अष्टाभ्यो हिं करोति स तिसृभिः स चतसृभिः स एकया, अष्टाभ्यो हिं करोति स एकया स तिसृभिः स चतसृभिः, अष्टाभ्यो हिं करोति स चतसृभिः स एकया स तिसृभिः, पशवो वै छन्दोमा यदष्टाभ्यो हिं करोत्यष्टाशफाः पशवः' इति। स एकस्मिंस्तृचे प्रथमपर्याये प्रथमामृचं त्रिः पठेत्। द्वितीयां चतुः पठेत्। तृतीयां सकृत्पठेत्। द्वितीयपर्याये सकृत्त्रिश्चतुश्चेति क्रमः। तृतीयपर्याये चतुः सकृत्त्रिश्चेति क्रमः। चतुश्चत्वारिंशस्तोमस्य विष्टुतिरेवमाम्नायते—'पञ्चदशभ्यो हिं करोति स तिसृभिः स एकादशभिः स एकया, चतुर्दशभ्यो हिं करोति स एकया स तिसृभिः स दशभिः, पञ्चदशभ्यो हिं करोति स एकादशभिः स एकया स तिसृभिः' इति। अत्र प्रथमपर्याये त्रिरेकादशकृत्वः सकृदितिक्रमः। द्वितीयपर्याये सकृत्त्रिर्दशकृत्वः। तृतीयपर्याय एकादशकृत्वः सकृत्त्रिः। अष्टाचत्वारिंशस्तोमस्य विष्टुतिरेवमाम्नायते—'षोडशभ्यो हिं करोति स तिसृभिः स द्वादशभिः स एकया, षोडशभ्यो हिं करोति स एकया स तिसृभिः स द्वादशभिः, षोडशभ्यो हिं करोति स द्वादशभिः स एकया स तिसृभिः, अन्तो वा अष्टाचत्वारिंशः पशवश्छन्दोमाः' इति। अत्र प्रथमपर्याये त्रिर्द्वादशकृत्वः सकृत्। द्वितीयपर्याये सकृत्त्रिर्द्वादशकृत्वः। तृतीयपर्याये द्वादशकृत्वः सकृत्त्रिः। एवं त्रिविधैश्छन्दोमैरष्टमनवमदशमान्यहानि निष्पाद्यानि।

वक्ष्यमाणमेकादशमप्यहर्हृदि निधाय तेन सहितमेकादशरात्रं प्रशंसति—

**एकादशरात्रो भवति पञ्च वा ऋतव आर्तवाः पञ्चर्तुष्वेवाऽऽर्तवेषु संवत्सरे प्रतिष्ठाय प्रजामव रुन्धते**, इति।

अस्य क्रतोर्द्रष्टारो वसन्ताद्यृतुदेवताः(वाः) पञ्चसंख्याकास्तैर्देवैः संपादिताः पुष्पोद्गमादय ऋतुसंबन्धिनः स्वभावाः पञ्चसंख्याकाः। एवं मिलित्वा दश संपन्नाः। संवत्सर एकादशः। एतेन सर्वेष्वेकादशरात्रानुष्ठानेन प्रतिष्ठां प्राप्य पश्चात्प्रजां प्राप्नुवन्ति।

---

१ क. घ. ङ. च. एता। २ क. घ. ङ. च °रिंशाः प°।

अथैकादशमहर्विधत्ते—

अतिरात्रावभितो भवतः प्रजायै परिगृहीत्यै, इति ॥

एकोनत्रिंशस्तोमयुक्तो योऽयमतिरात्र एकाहविशेषः सोऽयमत्रैकादशमहः। ज्योतिरतिरात्रो भवतीत्युक्तेन प्रथमेनाह्ना सह निर्देशादतिरात्राविति द्विवचननिर्देशः। सत्रलिङ्गस्योभयतोऽतिरात्रत्वस्य ख्यापनाय प्रजासाधनस्य क्रतोरुभयतोऽतिरात्रत्वे सति फलभूतायाः प्रजाया उभयतो रक्षा परिगृहीता भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः )

---

ऐन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति यज्ञस्य वै क्लृप्तिमनु प्रजाः कल्पन्ते यज्ञस्याक्लृप्तिमनु न कल्पन्ते यथापूर्वमेव प्रजाः कल्पयति न ज्यायाꣳसं कनीयानति क्रामत्यैन्द्रवायवाग्रान्गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्याऽऽमयति प्राण ऐन्द्रवायवः प्राणेनैवैनꣳ समर्धयति मैत्रावरुणाग्रान्गृह्णीरन्येषां दीक्षितानां प्रमीयेत ( १ ) प्राणापानाभ्यां वा एते व्यृध्यन्ते येषां दीक्षितानां प्रमीयते प्राणापानौ मित्रावरुणौ प्राणापानावेव मुखतः परि हरन्त आश्विनाग्रान्गृह्णीताऽऽनुजावरोऽश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैतामश्विना-

वेतस्य देवता य आनुजावरस्तावेवैनमग्रं परि
णयतः शुक्राग्रान्गृह्णीत गतश्रीः प्रतिष्ठाकामोऽसौ वा
आदित्यः शुक्र एषोऽन्तोऽन्तं मनुष्यः ( २ ) श्रियै
गत्वा नि वर्ततेऽन्तादेवान्तमा रभते न ततः पापी-
यान्भवति मन्थ्यग्रान्गृह्णीताभिचरन्नार्तपात्रं वा एत-
द्यन्मन्थिपात्रं मृत्युनैवैनं ग्राहयति ताजगार्तिमार्छे-
त्याग्रयणाग्रान्गृह्णीत यस्य पिता पितामहः पुण्यः
स्यादथ तन्न प्राप्नुयाद्वाचा वा एष इन्द्रियेण व्यृध्य-
ते यस्य पिता पितामहः पुण्यः ( ३ ) भवत्यथ
तन्न प्राप्नोत्युर इवैतद्यज्ञस्य वागिव यदाग्रयणो
वाचैवैनमिन्द्रियेण समर्धयति न ततः पापीयान्भ-
वत्युक्थ्याग्रान्गृह्णीताभिचर्यमाणः सर्वेषां वा एतत्पा-
त्राणामिन्द्रियं यदुक्थ्यपात्रꣳ सर्वेणैवैनामिन्द्रिये-
णाति प्र युङ्क्ते सरस्वत्याभि नो नेषि वस्य इति पुरोरुचं
कुर्याद्वाग्वै ( ४ ) सरस्वती वाचैवैनमति प्र युङ्क्ते मा
त्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि
तेनैव मृत्योः क्षेत्राणि न गच्छति पूर्णान्ग्रहान्गृह्णी-
यादामयाविनः प्राणान्वा एतस्य शुगृच्छति यस्याऽऽ-
मयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्चत्युत
यदीतासुर्भवति जीवत्येव पूर्णान्ग्रहान्गृह्णीयाद्यर्हि

पर्जन्यो न वर्षेत्प्राणान्वा एतर्हि प्रजानाꣳ शुगृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजानाꣳ शुचो मुञ्चति ताजक्प्र वर्षति (५) ॥

(प्रमीयेत मनुष्यं ऋध्यते यस्य पिता पितामहः पुण्यो वाग्वा एव पूर्णान्ग्रहान्पञ्चविꣳशतिश्च) ॥ ७ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ।)

---

ऐन्द्रवायवाग्रानित्यैन्द्रवायव—अग्रान् । गृह्णीयात् । यः । कामयेत । यथापूर्वमिति यथा—पूर्वम् । प्रजा इति प्र—जाः । कल्पेरन् । इति । यज्ञस्य । वै । क्लृप्तिम् । अन्विति । प्रजा इति प्र—जाः । कल्पन्ते । यज्ञस्य । अक्लृप्तिम् । अन्विति । न । कल्पन्ते । यथापूर्वमिति यथा—पूर्वम् । एव । प्रजा इति प्र—जाः । कल्पयति । न । ज्यायाꣳसम् । कनीयान् । अतीति । क्रामति । ऐन्द्रवायवाग्रानित्यैन्द्रवायव—अग्रान् । गृह्णीयात् । आमयाविनः । प्राणेनेति प्र—अनेन । वै । एषः । वीति । ऋध्यते । यस्य । आमयति । प्राण इति प्र—अनः । ऐन्द्रवायव इत्यैन्द्र—वायवः । प्राणेनेति प्र—अनेन । एव । एनम् ।

समिति । अर्धयति । मैत्रावरुणाग्रानिति मैत्रावरुण-अग्रान् । गृह्णीरन् । येषाम् । दीक्षितानाम् । प्रमीयेतेति प्र-मीयेत ( १ ) । प्राणापानाभ्यामिति प्राण-अपानाभ्याम् । वै । एते । वीति । ऋध्यन्ते । येषाम् । दीक्षितानाम् । प्रमीयत इति प्र-मीयते । प्राणापानाविति प्राण-अपानौ । मित्रावरुणाविति मित्रा-वरुणौ । प्राणापानाविति प्राण-अपानौ । एव । मुखतः । परीति । हरन्ते । आश्विनाग्रानित्याश्विन-अग्रान् । गृह्णीत । आनुजावर इत्यानु-जावरः । अश्विनौ । वै । देवानाम् । आनुजावरावित्यानु-जावरौ । पश्चा । इव । अग्रम् । परीति । एताम् । अश्विनौ । एतस्य । देवता । यः । आनुजावर इत्यानु-जावरः । तौ । एव । एनम् । अग्रम् । परीति । नयतः । शुक्राग्रानिति शुक्र-अग्रान् । गृह्णीत । गतश्रीरिति गत-श्रीः । प्रतिष्ठाकाम इति प्रतिष्ठा-कामः । असौ । वै । आदित्यः । शुक्रः । एषः । अन्तः । अन्तम् । मनुष्यः ( २ ) । श्रियै । गत्वा । नीति । वर्तते । अन्तात् । एव । अन्तम् । एति । रभते । न । ततः । पापीयान् । भवति । मन्थ्यग्रानिति मन्थि-अग्रान् । गृह्णीत । अभिचरन्नित्यभि-चरन् । आर्तपात्रमित्यार्त-पात्रम् । वै । एतत् । यत् । मन्थिपात्रमिति मन्थि-पात्रम् ।

मृत्युना । एव । एनम् । ग्राहयति । ताजक् । आर्तिम् । एति । ऋच्छति । आग्रयणाग्रानित्याग्रयण–अग्रान् । गृह्णीत । यस्य । पिता । पितामहः । पुण्यः । स्यात् । अथ । तत् । न । प्राप्नुयादिति प्र–आप्नुयात् । वाचा । वै । एषः । इन्द्रियेण । वीति । ऋध्यते । यस्य । पिता । पितामहः । पुण्यः (३) । भवति । अथ । तत् । न । प्राप्नोतीति प्र–आप्नोति । उरः । इव । एतत् । यज्ञस्य । वाक् । इव । यत् । आग्रयणः । वाचा । एव । एनम् । इन्द्रियेण । समिति । अर्धयति । न । ततः । पापीयान् । भवति । उक्थ्याग्रानित्युक्थ्य–अग्रान् । गृह्णीत । अभि-चर्यमाण इत्यभि–चर्यमाणः । सर्वेषाम् । वै । एतत् । पात्राणाम् । इन्द्रियम् । यत् । उक्थ्यपात्रमित्युक्थ्य–पात्रम् । सर्वेण । एव । एनम् । इन्द्रियेण । अति । प्रेति । युङ्क्ते । सरस्वति । अभीति । नः । नेषि । वस्यः । इति । पुरोरुचमिति पुरः–रुचम् । कुर्यात् । वाक् । वै (४) । सरस्वती । वाचा । एव । एनम् । अति । प्रेति । युङ्क्ते । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म । इति । आह । मृत्योः । वै । क्षेत्राणि । अरणानि । तेन । एव । मृत्योः । क्षेत्राणि । न । गच्छति । पूर्णान् । ग्रहान् । गृह्णीयात् । आमयाविनः । प्राणानिति प्र-

अनान् । वै । एतस्य॑ । शुक् । ऋच्छति । यस्य॑ । आम-
यति । प्राणा इति॑ प्र—अनाः । ग्रहाः । प्राणानिति॑ प्र—
अनान् । एव । अस्य । शुचः । मुञ्चति । उत । यदि॑ ।
इतासुरितीत—असुः । भव॑ति । जीव॑ति । एव । पूर्णान् ।
ग्रहान् । गृह्णीयात् । यर्हि॑ । पर्जन्य॑ः । न । वर्षे॑त् । प्राणा-
निति॑ प्र—अनान् । वै । एतर्हि॑ । प्रजानामिति॑ प्र—जानाम् ।
शुक् । ऋच्छति । यर्हि॑ । पर्जन्य॑ः । न । वर्षति । प्राणा
इति॑ प्र—अनाः । ग्रहाः । प्राणानिति॑ प्र—अनान् । एव ।
प्रजानामिति॑ प्र—जानाम् । शुचः । मुञ्चति । ताजक् ।
प्रेति॑ । वर्षति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाक एकादशरात्रोऽभिहितः । अथ सप्तममारभ्य दशमान्तेषु चतुर्ष्वनुवाकेषु द्वादशरात्रोऽभिधीयते । तत्रास्मिन्सप्तमे काम्यग्रहानुष्ठानप्रकारा उच्यन्ते ।
तत्र प्रथममेकं प्रकारं विधत्ते —

ऐन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः
कल्पेरन्निति यज्ञस्य वै क्लृप्तिमनु प्रजाः कल्पन्ते
यज्ञस्याक्लृप्तिमनु न कल्पन्ते यथापूर्वमेव प्रजाः
कल्पयति न ज्यायाꣳसं कनीयानति क्रामति, इति ।

पूर्वे पितृपितामहादयो यादृश आचारे प्रवृत्तास्तादृश एवाऽऽचारे पुत्रपौत्रादीनां प्रजानां च प्रवृत्तिर्यथापूर्वत्वम्। एतत्कामयमानो द्विदेवत्यग्रहेष्वादावैन्द्रवायवग्रहं गृह्णीयात्। यद्यपि नित्यप्रयोगेऽपि तदग्रत्वमस्ति तथाऽपि काम्यसंयोगार्थं पुनर्विधानम्। यथाऽग्निहोत्रे दध्ना जुहोतीति सत्यपि नित्यविधौ दध्नेन्द्रियकामस्येति पुनर्विधानं तद्वत्। यज्ञस्य सम्यक्प्रवृत्त्या तत्फलभूतानां प्रजानां प्रवृत्तिः समीचीना भवति। यज्ञस्य विपर्यये प्रजानामपि विपर्ययो भवति। तस्मादैन्द्रवायवाग्रत्वे प्रजा यथापूर्वमेव प्रवर्तन्ते। न तु ज्यायांसं पितरं पितामहं वा कनीयान्कश्चिदप्यतिक्रामति।

उक्तमेव प्रकारं रोगनिवृत्त्यर्थं विधत्ते—

ऐन्द्रवायवाग्रान्गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्याऽऽमयति प्राण ऐन्द्रवायवः प्राणेनैवैनꣳ समर्धयति, इति।

यस्य पुरुषस्य रोगो भवति स प्राणेन वियुक्तो भवति, प्राणस्य निर्गन्तुमुद्युक्तत्वात्। ऐन्द्रवायवस्य प्राणरूपत्वं प्राण ऐन्द्रवायव इत्यादिश्रुतिबलादवगन्तव्यम्। वागपि हि प्राणविशेष एव। अत ऐन्द्रवायवस्य प्राथम्येन प्राणस्य समृद्धौ सत्यां रोगो निवर्तते।

अथ नैमित्तिकं कंचिद्ग्रहप्रकारं विधत्ते—

मैत्रावरुणाग्रान्गृह्णीरन्येषां दीक्षितानां प्रमीयेत प्राणापानाभ्यां वा एते व्यृध्यन्ते येषां दीक्षितानां प्रमीयते प्राणापानौ मित्रावरुणौ प्राणापानावेव मुखतः परि हरन्ते, इति।

सत्ररूपे द्वादशाहे दीक्षितानां मध्ये यदि कश्चिन्म्रियेत तदा तस्मिन्मरणं निमित्तीकृत्येतरे दीक्षिताः प्रथमं मैत्रावरुणं गृहीत्वा पश्चादैन्द्रवायवं प्रयुञ्जीरन्। सर्वैः सहानुष्ठातुमुपक्रान्तत्वादेकस्मिन्नपि मृते सत्यन्येषां प्राणापानौ शिथिलाविव भवतः। मित्रावरुणयोः प्राणापानाभिमानित्वात्तदीयग्रहस्य प्राथम्ये सत्यादित एव प्राणापानौ परितः समादधते।

अथापकर्षपरिहारार्थं प्रकारान्तरं विधत्ते—

आश्विनाग्रान्गृह्णीताऽऽनुजावरोऽश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैताम-

श्विनावेतस्य देवता य आनुजावर-
स्तावेवैनमग्रं परि णयतः, इति।

स्वयं सर्वेषामग्रजत्वेन पूज्यः सन्नप्यनुजवदवरो भूत्वा यः सर्वैस्तिरस्क्रियते सोऽयमानुजावरः। स चाऽऽश्विनं ग्रहं प्रथमं प्रयुज्य पश्चादैन्द्रवायवादीन्प्रयुञ्जीत। देवानां मध्येऽश्विनावानुजावरौ स्वयं देवत्वेन पूज्यौ सन्तावपि भिषक्त्वेनावरत्वमापन्नौ। अत एवान्यत्राऽऽम्नातम् ‘अपूतौ वा इमौ मनुष्यचरौ भिषजाविति’ इति। तथाविधावश्विनौ पश्चात्कालान्तरेऽग्रमिव पर्यैतां श्रैष्ठ्यमेव प्राप्तवन्तौ। एतदपि तत्रैवाऽऽम्नातम्—‘तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन्’ इति। एवं सति य आनुजावरोऽस्त्येतस्य समानस्वभावत्वादश्विनौ देवता। तदीयग्रहस्याग्रत्वे सत्यश्विनावेवैनं यजमानं श्रैष्ठ्यं प्रापयतः॥

अथ प्रतिष्ठार्थं प्रकारान्तरं विधत्ते—

शुक्राग्रान्गृह्णीत गतश्रीः प्रतिष्ठाकामोऽसौ
वा आदित्यः शुक्र एषोऽन्तोऽन्तं मनुष्यः
श्रियै गत्वा नि वर्ततेऽन्तादेवान्तमा
रभते न ततः पापीयान्भवति, इति।

यो नष्टश्रीकः सन्पुनः प्रतिष्ठां कामयते सोऽयं शुक्रमादौ गृह्णीयादिति। दीप्तिमत्त्वादसावादित्यः शुक्रः। एष एव प्रकाशानामन्तः काष्ठाऽन्तिमः। न ह्यादित्यादधिकः प्रकाशोऽस्ति। अतः शुक्राग्रत्वेन मनुष्यश्रिया अन्तं काष्ठां प्राप्य पूर्वस्माद्दारिद्र्यान्निवर्तते। प्रकाशपरमकाष्ठारूपादादित्यादेव संपत्परमकाष्ठां प्राप्नोति। तत ऊर्ध्वं कदाचिदपि दरिद्रो न भवति॥

अभिचारहेतुं प्रकारं विधत्ते—

मन्थ्यग्रान्गृह्णीताभिचरन्नार्तपात्रं वा एतद्यन्मान्थिपात्रं
मृत्युनैवैनं ग्राहयति ताजगार्तिमार्छति, इति।

अभिचरन्मान्थिनमादौ गृह्णीयात्। परस्याऽऽतत्त्वप्रापणादिदमार्तपात्रम्। अग्रत्वेन वैरिणं मृत्युगृहीतं करोति। स च वैरी तदानीमेव मृत्युं प्राप्नोति॥

स्वकीयपित्रादिसमानोत्कर्षप्राप्त्यर्थं प्रकारान्तरं विधत्ते—

आग्रयणाग्रान्गृह्णीत यस्य पिता पितामहः पुण्यः स्यादथ तन्न प्राप्नुयाद्वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यो भवत्यथ तन्न प्राप्नोत्युर इवैतद्यज्ञस्य वागिव यदाग्रयणो वाचैवैनमिन्द्रियेण समर्धयति न ततः पापीयान्भवति, इति ।

यस्य यजमानस्य पितृपितामहौ धनविद्यादिभिर्गुणैरुत्कृष्टौ, स्वयं तु तमुत्कर्षं यदि नाऽऽप्नोति, तादृश आग्रयणं प्रथमं गृह्णीयात् । पित्रादेरुत्कर्षे सति स्वयमुत्कर्षहीनः सभामध्ये वाक्पाण्डित्येनेतरव्यवहारविषयेन्द्रियसामर्थ्येन वियुक्तः, आग्रयणस्तु यज्ञस्योरःप्रदेशवत्सामर्थ्याधारो वागिन्द्रियवदुत्कर्षहेतुश्च । अतस्तदग्रत्वेनैनं यजमानं सदा पाण्डित्यरूपया वाचा व्यवहारान्तरसामर्थ्यरूपेणेन्द्रियेण च समृद्धं करोति । तत ऊर्ध्वं कदाचिदपि तदुभयहीनो न भवति ॥

परकीयाभिचारनिवृत्त्यर्थं प्रकारान्तरं विधत्ते—

उक्थ्याग्रान्गृह्णीताभिचर्यमाणः सर्वेषां वा एतत्पात्राणामिन्द्रियं यदुक्थ्यपात्रꣳ सर्वेणैवैनमिन्द्रियेणाति प्र युङ्क्ते, इति ।

यान्येतानि सोमपात्राणि सन्ति तेषां मध्ये यदुक्थ्यपात्रं तदिन्द्रियसामर्थ्योपेतम् । अतस्तस्याग्रत्वे सत्यभिचारकर्तारमेनं सर्वेणापि सामर्थ्येनातिक्रम्य स्वयमनुतिष्ठति ।

अत्र मन्त्रविशेषं विधत्ते—

सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्याद्वाग्वै सरस्वती वाचैवैनमति प्र युङ्क्ते, इति ।

सोमरसग्रहणात्पूर्वं पठितव्या पुरोरुक्तां च पुरोरुचमत्र सरस्वतीत्यादिकां पठेत् । मन्त्रोक्ता सरस्वती वाग्देवता । अतो वाचैवैनमभिचरितारमतिक्रम्यानुतिष्ठति । इयमृग्ब्राह्मणग्रन्थे द्वितीयकाण्ड उपहोमाख्ये प्रपाठक एवमाम्नाता—

'सरस्वत्यभि नो नेषि वस्यः। मा पस्फरीः पयसा मा न आधक् । जुषस्व नः सख्या वेश्या च । मा त्वत्क्षेत्राण्यरणानि गन्म । ' इति ॥
अस्यायमर्थः—हे सरस्वति नोऽस्मान्वस्यो वसिष्ठं प्राणधारणरूपं जीवनमभिनेष्याभिमुख्येन प्रापय । मा पस्फरीरस्मान्मा हिंसीः । मा न आधक्, अस्मान्मा धाक्षीः । अपि तु सख्या सख्येन वेश्या च प्रवेशनि(नी)यतया च नोऽस्मान्जुषस्वास्मासु प्रविश्य सख्यं कुर्वित्यर्थः । किंच त्वत्प्रसादादरणानि क्षेत्राणि अरमणीयानि स्थलानि मा गन्म मा प्राप्नुमेति ॥

तमिमं चतुर्थपादमनूद्य व्याचष्टे—

मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति, इति ।

तेन मन्त्रपाठेन मृत्युसंबन्धीन्यरणानि यानि स्थानानि तानि न प्राप्नोति न प्रमीयत इत्यर्थः ॥

अथ रोगपरिहाराय प्रकारान्तरं विधत्ते—

पूर्णान्ग्रहान्गृह्णीयादामयाविनः प्राणान्वा एतस्य शुगृच्छति यस्याऽऽमयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्चत्युत यदीतासुर्भवति जीवत्येव, इति ।

यान्यैन्द्रवायवादीनि पात्राणि तानि सोमरसेन पूर्णानि यथा भवन्ति तथा रोगनिवृत्त्यर्थं गृह्णीयात् । यस्य रोगो वर्तते तस्य प्राणाञ्शुक्शोक उपद्रवः प्राप्नोति । ततः पूर्णानां ग्रहाणां प्राणरूपत्वादस्य यजमानस्य प्राणान्पूर्णग्रहैः शोकान्मोचयति । तथा सति यद्यपि मुहूर्तमात्रं गतप्राणस्तथाऽपि पुनर्जीवत्येव ।

एतमेव प्रकारं पुनरपि वृष्ट्यर्थं विधत्ते—

पूर्णान्ग्रहान्गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्प्राणान्वा एतर्हि प्रजानाꣳ शुगृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजानाꣳ शुचो मुञ्चति ताजक्प्र वर्षति, इति ॥

यदा स्वकाले वृष्टिर्न भवेत्तदा वृष्ट्यर्थमैन्द्रवायवादिपात्राणि सोमरसेन

पूरणीयानि। यदा वृष्ट्यभावस्तदा प्रजानां प्राणा अन्नाभावाच्छोकेन प्राप्यन्ते। ग्रहपूरणेन शोको निवर्तते। तदानीमेव प्रकर्षेण वर्षणात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहस्तस्मात्प्रायणीयेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति त्रैष्टुभो वै शुक्रस्त्रैष्टुभं द्वितीयमहस्तस्माद्द्वितीयेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णाति जागतो वा आग्रयणो जागतं तृतीयमहस्तस्मात्तृतीयेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्येतद्वै ( १ ) यज्ञमापयच्छन्दाꣳस्याप्नोति यदाग्रयणः श्वो गृह्यते यत्रैव यज्ञमदृशन्ततं एवैनं पुनः प्र युङ्क्ते जगन्मुखो वै द्वितीयस्त्रिरात्रो जागत आग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते राथंतरो वा ऐन्द्रवायवो राथंतरं पञ्चममहस्तस्मात्पञ्चमेऽहन् ( २ ) ऐन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति बार्हतो वै शुक्रो बार्हतꣳ

---

१ ख. व्यथ्यन्ते ।

षष्ठमहस्तस्मात्षष्ठेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्येतद्वै द्वितीयं यज्ञमाप॒द्यच्छन्दाꣳस्याप्नोति यच्छुक्रः श्वो गृह्यते यत्रैव यज्ञमदृशन्तत एवैनं पुनः प्र युङ्क्ते त्रिष्टुङ्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभः (३) शुक्रो यत्सप्तमेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते वाग्वा आग्रयणो वागष्टममहस्तस्मादष्टमेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति प्राणो वा ऐन्द्रवायवः प्राणो नवममहस्तस्मान्नवमेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णात्येतत् (४) वै तृतीयं यज्ञमाप॒द्यच्छन्दाꣳस्याप्नोति यदैन्द्रवायवः श्वो गृह्यते यत्रैव यज्ञमदृशन्तत एवैनं पुनः प्र युङ्क्तेऽथो स्वमेव छन्दोऽनु पर्यावर्तन्ते पथो वा एतेऽध्यपथेन यन्ति येऽन्येनैन्द्रवायवात्प्रतिपद्यन्तेऽन्तः खलु वा एष यज्ञस्य यद्दशममहर्दशमेऽहन्नैन्द्रवायवो गृह्यते यज्ञस्य (५) एवान्तं गत्वा पथात्पन्थामपि यन्त्यथो यथा वहीयसा प्रतिसारं वहन्ति तादृगेव तच्छन्दाꣳस्यन्योऽन्यस्य लोकमभ्यध्यायन्तान्येतेनैव देवा व्यवाहयन्नैन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहस्तस्मि-

न्नाग्रयणो गृह्यते तस्मादाग्रयणस्याऽऽयतने नव-
मेऽहन्नैन्द्रवायवो गृह्यते शुक्रस्य वा एतदायतनं
यत्पञ्चमम् ( ६ ) अहन्तस्मिन्नैन्द्रवायवो गृह्यते
तस्मादैन्द्रवायवस्याऽऽयतने सप्तमेऽहञ्छुक्रो गृह्यत
आग्रयणस्य वा एतदायतनं यत्षष्ठमहस्तस्मिञ्छुक्रो
गृह्यते तस्माच्छुक्रस्याऽऽयतनेऽष्टमेऽहन्नाग्रयणो गृह्यते
छन्दाꣳस्येव तद्वि वाहयति प्र वस्यसो विवाहमाप्नोति
य एवं वेदाथो देवताभ्य एव यज्ञे संविदं दधाति
तस्मादिदमन्योऽन्यस्मै ददाति ( ७ ) ॥

( एतद्वै पञ्चमेऽहन्त्रैष्टुभं एतद्गृह्यते यज्ञस्य पञ्चममन्यस्मा एकं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

गायत्रः । वै । ऐन्द्रवायव इत्यैन्द्र—वायवः । गायत्रम् ।
प्रायणीयमिति प्र—अयनीयम् । अहः । तस्मात् ।
प्रायणीय इति प्र—अयनीये । अहन् । ऐन्द्रवायव
इत्यैन्द्र—वायवः । गृह्यते । स्वे । एव । एनम् । आयतन
इत्या—यतने । गृह्णाति । त्रैष्टुभः । वै । शुक्रः । त्रैष्टुभम् ।

द्वितीयम् । अहः । तस्मात् । द्वितीये । अहन् । शुक्रः ।
गृह्यते । स्वे । एव । एनम् । आयतन इत्या-यतने ।
गृह्णाति । जागतः । वै । आग्रयणः । जागतम् ।
तृतीयम् । अहः । तस्मात् । तृतीये । अहन् । आग्रयणः ।
गृह्यते । स्वे । एव । एनम् । आयतन इत्या-यतने ।
गृह्णाति । एतत् । वै ( १ ) । यज्ञम् । आपत् । यत् ।
छन्दांसि । आप्नोति । यत् । आग्रयणः । श्वः ।
गृह्यते । यत्र । एव । यज्ञम् । अदृशन् । ततः । एव ।
एनम् । पुनः । प्रेति । युङ्क्ते । जगन्मुख इति जगत्-
मुखः । वै । द्वितीयः । त्रिरात्र इति त्रि-रात्रः ।
जागतः । आग्रयणः । यत् । चतुर्थे । अहन् ।
आग्रयणः । गृह्यते । स्वे । एव । एनम् । आयतन
इत्या-यतने । गृह्णाति । अथो इति । स्वम् । एव ।
छन्दः । अन्विति । पर्यावर्तन्त इति परि-आवर्तन्ते ।
राथंतर इति राथं-तरः । वै । ऐन्द्रवायव इत्यैन्द्र-वायवः ।
राथंतरमिति राथं-तरम् । पञ्चमम् । अहः । तस्मात् । पञ्चमे ।
अहन् ( २ ) । ऐन्द्रवायव इत्यैन्द्र-वायवः । गृह्यते ।
स्वे । एव । एनम् । आयतन इत्या-यतने । गृह्णाति ।
बार्हतः । वै । शुक्रः । बार्हतम् । षष्ठम् । अहः ।
तस्मात् । षष्ठे । अहन् । शुक्रः । गृह्यते । स्वे । एव ।

एनम् । आयतन इत्या—यतने । गृह्णाति । एतत् । वै । द्वितीयम् । यज्ञम् । आपत् । यत् । छन्दाꣳसि । आप्नोति । यत् । शुक्रः । श्वः । गृह्यते । यत्र । एव । यज्ञम् । अदृशन् । ततः । एव । एनम् । पुनः । प्रेति । युङ्क्ते । त्रिष्टुङ्मुख इति त्रिष्टुक्—मुखः । वै । तृतीयः । त्रिरात्र इति त्रि—रात्रः । त्रैष्टुभः ( ३ ) । शुक्रः । यत् । सप्तमे । अहन् । शुक्रः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या—यतने । गृह्णाति । अथो इति । स्वम् । एव । छन्दः । अन्विति । पर्यावर्तन्त इति परि-आवर्तन्ते । वाक् । वै । आग्रयणः । वाक् । अष्टमम् । अहः । तस्मात् । अष्टमे । अहन् । आग्रयणः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या—यतने । गृह्णाति । प्राण इति प्र—अनः । वै । ऐन्द्रवायव इत्यैन्द्र—वायवः । प्राण इति प्र—अनः । नवमम् । अहः । तस्मात् । नवमे । अहन् । ऐन्द्रवायव इत्यैन्द्र—वायवः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या—यतने । गृह्णाति । एतत् ( ४ ) । वै । तृतीयम् । यज्ञम् । आपत् । यत् । छन्दाꣳसि । आप्नोति । यत् । ऐन्द्रवायव इत्यैन्द्र—वायवः । श्वः । गृह्यते । यत्र । एव । यज्ञम् । अदृशन् । ततः । एव । एनम् । पुनः । प्रेति । युङ्क्ते । अथो इति । स्वम् ।

एव । छन्दः । अन्विति । पर्यावर्तन्त इति परि–आवर्तन्ते ।
पथः । वै । एते । अधीति । अपथेन । यन्ति । ये । अन्येन ।
ऐन्द्रवायवादित्यैन्द्र–वायवात् । प्रतिपद्यन्त इति प्रति–पद्यन्ते ।
अन्तः । खलु । वै । एषः । यज्ञस्य । यत् । दशमम् । अहः ।
दशमे । अहन् । ऐन्द्रवायव इत्यैन्द्र–वायवः । गृह्यते ।
यज्ञस्य ( ५ ) । एव । अन्तम् । गत्वा । अपथात् ।
पन्थाम् । अपीति । यन्ति । अथो इति । यथा । वहीयसा ।
प्रतिसारमिति प्रति–सारम् । वहन्ति । तादृक् । एव । तत् ।
छन्दांश्सि । अन्यः । अन्यस्य । लोकम् । अभीति ।
अध्यायन् । तानि । एतेन । एव । देवाः । वीति । अवा-
हयन् । ऐन्द्रवायवस्येत्यैन्द्र–वायवस्य । वै । एतत् । आय-
तनमित्या–यतनम् । यत् । चतुर्थम् । अहः । तस्मिन् ।
आग्रयणः । गृह्यते । तस्मात् । आग्रयणस्य । आयतन
इत्या–यतने । नवमे । अहन् । ऐन्द्रवायव इत्यैन्द्र–वायवः ।
गृह्यते । शुक्रस्य । वै । एतत् । आयतनमित्या–यतनम् ।
यत् । पञ्चमम् ( ६ ) । अहः । तस्मिन् । ऐन्द्रवायव
इत्यैन्द्र–वायवः । गृह्यते । तस्मात् । ऐन्द्रवायवस्येत्यैन्द्र–
वायवस्य । आयतन इत्या–यतने । सप्तमे । अहन् । शुक्रः ।
गृह्यते । आग्रयणस्य । वै । एतत् । आयतनमित्या–यतनम् ।
यत् । षष्ठम् । अहः । तस्मिन् । शुक्रः । गृह्यते । तस्मात् ।

शुक्रस्य । आयतन इत्या—यतने । अष्टमे । अहन् । आग्रयणः । गृह्यते । छन्दांसि । एव । तत् । वीति । वाहयति । प्रेति । वस्यसः । विवाहमिति वि—वाहम् । आप्नोति । यः । एवम् । वेद । अथो इति । देवताभ्यः । एव । यज्ञे । संविदमिति सं—विदम् । दधाति । तस्मात् । इदम् । अन्यः । अन्यस्मै । ददाति (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ सप्तमकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ।)

---

सप्तमेऽनुवाके द्वादशाहगताः काम्यग्रहप्रकारा उक्ताः । स च द्वादशाहो द्विविधः— समूढो व्यूढश्च । तत्र समूढप्रकारः सूत्रकारेण दर्शितः—'व्यनीकां व्याख्यास्याम ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः । अथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रमथाऽऽग्रयणाग्रमेवं त्रिर्हिता त्रिव्यनीका परिवर्तते यद्यव्यूढः' इति । एवं समूढप्रकारमुक्त्वा व्यूढप्रकारोऽपि तेनैव दर्शितः 'व्यूढे त्वैन्द्रवायवाग्रौ प्रायणीयोदयनीयावथेतरेषां दशानामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रमथ द्वे आग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाऽऽग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे' इति । तत्रास्मिन्नष्टमेऽनुवाके व्यूढप्रकारोऽभिधीयते ।

तत्र प्रायणीयोदयनीयौ परित्यज्य यानीतराण्यहानि मध्यवर्तीनि दशसंख्याकानि तेषु प्रथमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते—

गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहस्तस्मात्प्रायणीयेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति, इति ।

(द्वादशाहग्रहकथनम्)

यानि मुख्यानि च्छन्दांसि गायत्रीत्रिष्टुब्जगतीरूपाणि तेषां मध्ये गायत्री प्रथमा । अग्रत्वेन चात्रैन्द्रवायवशुक्राग्रयणा निरूप्यन्ते । तेषां च मध्य ऐन्द्रवायवः प्राथम्येन प्रकृतावाम्नातः । ततः प्राथम्यसाम्यादैन्द्रवायवो गायत्रः । निरूपणीयानां दशानामह्नां मध्ये यत्प्राथमिकं प्रथममहस्तदपि प्राथम्यस्य साम्याद्गायत्रम् । एवं च सति नाराशंसीयानां दशानां मध्ये प्रथमेऽहन्यैन्द्रवायव आदौ ग्रहीतव्यः । ऐन्द्रवायवस्य गायत्रत्वसाम्यात् । एवं च सति स्वसंबन्धिन्येवाऽऽयतने प्रथमाहःस्वरूपस्थाने तमैन्द्रवायवं गृह्णाति ।

अथ दशस्वहःसु द्वितीयेऽहनि शुक्राग्रत्वं विधत्ते—

त्रैष्टुभो वै शुक्रस्त्रैष्टुभं द्वितीयमहस्तस्माद्द्वितीयेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णाति, इति ।

त्रिष्टुप्छन्दसः शुक्रस्य द्वितीयस्याह्नश्च पूर्वन्यायेन द्वितीयत्वसाम्यं योजयित्वा व्याख्येयम् ।

अथ तृतीयेऽहन्याग्रयणाग्रत्वं विधत्ते—

जागतो वा आग्रयणो जागतं तृतीयमहस्तस्मात्तृतीयेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति, इति ।

पूर्ववद्योजनीयम् ।

एतदेवाऽऽग्रयणाग्रत्वं प्रशंसति—

एतद्वै यज्ञमापद्यच्छन्दांस्याप्नोति यदाग्रयणः श्वो गृह्यते यत्रैव यज्ञमदृशन्तत एवैनं पुनः प्र युङ्क्ते, इति ।

यदाग्रयणाग्रत्वं छन्दांस्याप्नोति गायत्र्यादिच्छन्दोरूपाणि त्रीण्यहानि प्राप्नोति त्रयाणामह्नामनेनाऽऽग्रयणाग्रत्वेन समाप्तत्वादेतदेवाऽऽग्रयणाग्रत्वं यज्ञमापत्प्रथमत्र्यनीकारूपं त्रिरात्रं यज्ञं प्राप्नोति । त्रीण्यनीकान्यग्रत्वान्यैन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वरूपाणि यस्यां क्रियायां सा क्रिया त्र्यनीका । त्र्यनीकात्रिरात्रयज्ञोऽनेनाऽऽग्रयणाग्रत्वेन समाप्यते । किं चोत्तरस्मिंश्चतुर्थेऽहन्याग्रयण एवाऽऽदौ गृह्यते । यस्मादेवं तस्माद्यत्रैवाऽऽग्रयणाग्रत्वे यज्ञमदृशंस्त्रिरा-

१ ख. °कल्प्यन्ते ।

प्रसमाप्तिं दृष्टवन्तस्तत एवाऽऽग्रयणाग्रत्वादेनं यज्ञं पुनः प्रयुक्तवान्भवति। तस्मादिदं प्रशस्तम्।

अथ चतुर्थेऽहन्याग्रयणाग्रत्वमेव विधत्ते—

जगन्मुखो वै द्वितीयस्त्रिरात्रो जागत आग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते, इति।

समूढे द्वादशाहे त्र्यनीका त्रिरावृत्ता। तत्रैकाऽऽवृत्तिः प्रथमस्त्रिरात्रो द्वितीयाऽऽवृत्तिर्द्वितीयस्त्रिरात्रः। स च यद्यपि समूढे द्वादशाह ऐन्द्रवायवोपक्रमत्वादैन्द्रवायवस्य च गायत्रत्वाद्गायत्रीमुखो भवति, तथाऽप्यत्र जगन्मुखो जगत्युपक्रमः कर्तव्यः। आग्रयणाग्रश्च जागत इति पूर्वमेवोपपादितम्। तस्माच्चतुर्थेऽहन्याग्रयणाग्रत्वे गृहीते सति स्वकीय एव स्थाने तद्गृहीतं भवति। अपि चाऽऽग्रयणाग्रत्वं स्वकीयमेव जगतीछन्दोऽनुसृत्य पुनरावृत्तं भवति।

अथ पञ्चमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते—

राथंतरो वा ऐन्द्रवायवो राथंतरं पञ्चममहस्तस्मात्पञ्चमेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति, इति।

प्रकृतिरूपे ज्योतिष्टोमे यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्गृह्णीयादित्यैन्द्रवायवाग्रत्वं प्रति रथंतरसाम्नो निमित्तत्वश्रवणादैन्द्रवायवस्य राथंतरत्वम्। पञ्चमस्याह्नो रथंतरसंबन्धस्य शाखान्तरे प्रसिद्धत्वाद्राथंतरत्वम्। तस्मादैन्द्रवायवस्याह्नश्च राथंतरत्वसाम्यात्पञ्चमेऽहन्यैन्द्रवायवः प्रथमं गृह्यते। तथा सत्येनमैन्द्रवायवं स्वकीय एव स्थाने गृह्णाति।

अथ षष्ठेऽहनि शुक्राग्रत्वं विधत्ते—

बार्हतो वै शुक्रो बार्हतꣳ षष्ठमहस्तस्मात्षष्ठेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णाति, इति।

शुक्रग्रहस्य षष्ठस्याह्नश्च बृहत्सामसंबन्धः शाखान्तरे प्रसिद्धः। शिष्टं पूर्ववद्व्याख्येयम्॥

तदेतच्छुक्राग्रत्वं प्रशंसति—

एतद्वै द्वितीयं यज्ञमापयच्छन्दाꣳ-
स्याप्नोति यच्छुक्रः श्वो गृह्यते यत्रैव
यज्ञमदृशन्तत एवैनं पुनः प्र युङ्क्ते, इति ।

ऽयनीकाया द्वितीयावृत्तिरूपस्त्रिरात्रो द्वितीयो यज्ञः । शेषमाग्रयणवाक्य-वद्व्याख्येयम् ।

अथ सप्तमेऽहन्यपि शुक्राग्रत्वमेव विधत्ते—

त्रिष्टुङ्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभः
शुक्रो यत्सप्तमेऽहञ्छुक्रो गृह्यते
स्व एवैनमायतने गृह्णात्यथो स्वमे-
व छन्दोऽनु पर्यावर्तन्ते, इति ।

यद्यपि समूढे तृतीयस्य त्रिरात्रस्याऽऽद्येऽहन्यैन्द्रवायवाग्रत्वाद्गायत्रीमुख एवायं त्रिरात्रस्तथाऽप्यत्र त्रिष्टुब्मुखः कर्तव्यः । शुक्रश्च त्रैष्टुभ इति पूर्वमेवो-पपादितम् । तस्मात्सप्तमेऽहनि शुक्रः प्रथमो गृह्यते । शेषं पूर्ववद्व्याख्येयम् ।

अथाष्टमेऽहन्याग्रयणाग्रत्वं विधत्ते—

वाग्वा आग्रयणो वागष्टममहस्तस्मादष्टमेऽहन्नाग्रयणो
गृह्यते स्व एवैनमायतने गृह्णाति, इति ।

षष्ठकाण्ड आग्रयणग्रहब्राह्मणे वाग्वै देवेभ्योऽपाक्रामदित्युपक्रम्य साऽऽग्र-यणं प्रत्यागच्छदित्युक्तत्वादाग्रयणस्य वाग्रूपत्वमर्थवादान्तरे द्रष्टव्यम् । अतो वाग्रूपत्वसामान्यादष्टमेऽहन्याग्रयणः प्रथमं प्रयोक्तव्यः ।

अथ नवमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते—

प्राणो वा ऐन्द्रवायवः प्राणो नवममहस्तस्मान्नवमेऽह-
न्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति, इति ।

क्रतौ ग्रहब्राह्मणे वाग्वा एषा यदैन्द्रवायव इत्युक्तत्वाद्वागिन्द्रियस्य च वान्तरभेदत्वादैन्द्रवायवस्य प्राणत्वम् । नवमस्याह्नोऽपि प्राणत्वेन स्तुति-

रन्यत्र द्रष्टव्या । अतः प्राणत्वसाम्यान्नवमेऽहन्यैन्द्रवायवः प्रथमं ग्रही-तव्यः ।

तदेतदैन्द्रवायवाग्रत्वं प्रशंसति—

एतद्वै तृतीयं यज्ञमापद्यच्छदाꣳस्याप्नोति यदैन्द्र-वायवः श्वो गृह्यते यत्रैव यज्ञमदृशन्तत एवैनं पुनः प्र युङ्क्तेऽथो स्वमेव छन्दोऽनु पर्यावर्तन्ते, इति ।

त्र्यनीकायास्तृतीयाहत्तिरूपास्त्रिरात्रस्तृतीयो यज्ञः । शेषमाग्रयणवाक्यवद्व्या-ख्येयम् ।

अथ दशमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते—

पथो वा एतेऽध्यपथेन यन्ति येऽन्येनैन्द्रवायवा-त्प्रतिपद्यन्तेऽन्तः खलु वा एष यज्ञस्य यद्दशममहर्द-शमेऽहन्नैन्द्रवायवो गृह्यते यज्ञस्यैवान्तं गत्वा पथात्पन्थामपि यन्त्यथो यथा वहीयसा प्रतिसारं वहन्ति तादृगेव तत्, इति ।

द्वादशाहस्य प्रायणीयोदयनीययोर्मध्यवर्ती योऽयं दशरात्रस्तं दशरात्रं यजमाना ऐन्द्रवायवाग्रत्वादन्येन शुक्राग्रत्वादिना प्रतिपद्यन्ते प्रारभन्ते त एते यजमानाः पथः सकाशादुग्रा अधिकेनापथा कुमार्गेण गच्छन्ति । तस्मादैन्द्रवायवाग्रत्वेनैव दशरात्र उपक्रान्तव्यः । तथैव ह्यनुवाकादौ वर्णितम् । यदेतद्दशममहरस्ति स एष ऐन्द्रवायवाग्रतोपक्रान्तस्य दशरात्राख्यस्य यज्ञस्यान्तः खलु समाप्तिभूमिरेव । ततः प्रथमदिनवद्दशमदिनेऽप्यैन्द्रवायव एव प्रथमं ग्रहीतव्यः । तथा सति यज्ञस्य परिसमाप्तिपर्यन्तं कुमार्गं परित्यज्य सम्यङ्मार्गमेव प्राप्नुवन्ति । अपि च यथा लोके वहीयसा प्रौढेनारगाहिना बलीवर्दसमूहेन युक्ता वणिजः प्रतिसारं वहन्ति पार्श्वद्वयगतान्क्षुद्रमार्गान्परित्यज्य प्रसिद्ध एव राजमार्गे बलीवर्दैः पङ्क्त्याकारो यथा भवति तथा नयन्ति तद्वदत्राप्यैन्द्रवायवोपक्रमोपसंहारौ द्रष्टव्यौ ।

तमिममैन्द्रवायवाग्रत्वादिरूपं व्यूढप्रकारं लोकप्रसिद्धविवाहसाम्येन प्रशंसति—

छन्दा᳚ꣳस्यन्योऽन्यस्य लोकमभ्यध्याय-
न्तान्येतेनैव देवा व्यवाहयन्, इति ।

यथा लोके काश्यपगोत्रोत्पन्नाः पुरुषा विवाहार्थं भारद्वाजगोत्रोत्पन्नां कन्यकामभितो विचारयन्ति, भारद्वाजगोत्रोत्पन्नाश्चेतरां विचार्य तद्वदेव विवाहं कुर्वन्ति, एवमत्रापि च्छन्दोभिमानिनो देवाः स्वकीयानामैन्द्रवायवाग्रत्वादीनामन्योन्यस्य स्थानमभिध्याय तस्तानि सर्वाण्यैन्द्रवायवत्वादीन्येतेनैव पूर्वोक्तप्रकारेण विवाहयन्ति विवाहं कारयन्ति स्थानविपर्यासेन प्रापयन्तीत्यर्थः ।

तथैन्द्रवायवाग्रयणयोरन्योन्यस्थानविपर्यासं दर्शयति—

ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमह-
स्तस्मिन्नाग्रयणो गृह्यते तस्मादाग्रयणस्याऽऽ-
यतने नवमेऽहन्नैन्द्रवायवो गृह्यते, इति ।

समूढो हि द्वादशाहो व्यूढस्य प्रकृतिः । समूढे हि प्रायणीयोदयनीयदशमाहानि परित्यज्यावशिष्टेषु नवसु दिनेषु त्र्यनीका त्रिरावृत्ता । तत्र द्वितीयायास्त्र्यनीकाया मध्यवर्तिनो नवरात्रस्य चतुर्थेऽहन्युपक्रान्तव्यत्वात्तदहरैन्द्रवायवस्याऽऽयतनं, तस्मिन्नहनि पूर्वोक्तव्यूढप्रकारेण द्वितीय आग्रयणो गृहीतः । नवमं चाहः समूढ आग्रयणस्याऽऽयतनम् । तत्र व्यूढप्रकारेण द्वितीय ऐन्द्रवायवो गृहीतः । सोऽयमैन्द्रवायवाग्रयणयोः परस्परं विवाहः ।

अथ शुक्रैन्द्रवायवयोः परस्परं विवाहं दर्शयति—

शुक्रस्य वा एतदायतनं यत्पञ्चममहस्त-
स्मिन्नैन्द्रवायवो गृह्यते तस्मादैन्द्रवायव-
स्याऽऽयतने सप्तमेऽहञ्छुक्रो गृह्यते, इति ।

समूढगते नवरात्रे यत्पञ्चममहस्तदेतद्द्वितीयायास्त्र्यनीकाया मध्यवर्ति शुक्रस्याऽऽयतनम् । तस्मिन्नहनि व्यूढप्रकारेणैन्द्रवायवो गृहीतः । यत्तु सप्तममहस्तत्तृतीयायास्त्र्यनीकायाः प्रथमदिनत्वादैन्द्रवायवस्याऽऽयतनम् । तस्मिन्नहनि द्वितीयवारमावर्त्यमानः शुक्रो गृहीतः । सोऽयं शुक्रैन्द्रवायवयोर्विवाहः ।

अथ शुक्राग्रयणाग्रयोः परस्परं विवाहं दर्शयति—

आग्रयणस्य वा एतदायतनं यत्षष्ठमह-
स्तस्मिञ्छुक्रो गृह्यते तस्माच्छुक्रस्याऽऽय-
तनेऽष्टमेऽहन्नाग्रयणो गृह्यते, इति।

यदेतत्षष्ठमहस्तदेतद्द्वितीयायास्त्र्यनीकाया अन्तिमत्वादाग्रयणस्याऽऽयतनं, तस्मिन्नहनि व्यूढप्रकारेणाऽऽवर्त्यमानः प्रथमः शुक्रो गृहीतः। यत्त्वष्टममहस्तदेतत्तृतीयायास्त्र्यनीकाया मध्यवर्तित्वाच्छुक्रस्याऽऽयतनं, तस्मिन्नहनि व्यूढप्रकारेणाऽऽग्रयणो गृहीतः। सोऽयं शुक्राग्रयणयोर्विवाहः।

एतद्वेदनं प्रशंसति—

छन्दा॑स्येव तद्वि वाहयति प्र
वस्यसो विवाहमाप्नोति य एवं वेदाथो
देवताभ्य एव यज्ञे संविदं दधाति
तस्मादिदमन्योऽन्यस्मै ददाति, इति।

यः पुमानेवमैन्द्रवायवाग्रत्वादीनां विवाहं जानाति स तेन वेदनेन च्छन्दोदेवतानामेव विवाहं कृतवान्भवति। स्वयं च धनिकतमात्कुलाद्विवाहं प्राप्नोति। अपि च यज्ञानुष्ठानकाले देवताविषयमभिज्ञानं दधाति धारयति। यस्मादेवं छन्दसां विवाहः प्रवृत्तस्तस्माल्लोकेऽपीदं कन्यकारूपमपत्यमन्यः पिताऽन्यस्मै जामात्रे ददाति।

अथ मीमांसा—

दशमाध्यायस्य पञ्चमपादे त्रयोविंशाधिकरणे चिन्तितम्—

त्र्यनीकायामैन्द्रवायवशुक्राग्रानुवादता।
परिसंख्या वाऽर्थवादो वा विधिर्वा न हि त्रयम्॥
वैयर्थ्येन त्रिदोषत्वाल्लक्षणापत्तितस्तथा।
विधिराग्रयणाग्रत्व इवानैमित्तिको हि सः॥

अस्ति द्वादशाहे त्र्यनीका। ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमाहः। अथैतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथाऽऽग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाऽऽग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाऽऽग्रयणाग्रमिति। तत्र द्वादशाहगतेषु द्वितीयतृतीयचतुर्थेषु त्रिष्वहःसु

क्रमेणैन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानि विहितानि । तेष्वाद्यं रथंतरनिमित्तम् । द्वितीयं बृहन्निमित्तम् । एतच्च प्रकृतौ व्यवस्थितम् । तदुभयमत्र चोदकेन प्राप्तम् । तत्र चतुर्धा संशयः—अनुवादो वा परिसंख्या वाऽर्थवादो वा विधिर्वेति । तत्र प्राप्तत्वादनुवाद इति चेत् । न, वैयर्थ्यापत्तेः । तर्हि गुणान्तरपरिसंख्याऽस्त्विति चेत् । न, दोषत्रयापत्तेः । चतुर्थेऽहन्यप्राप्तस्याऽऽग्रयणाग्रत्वस्य विधित्सितस्य प्रशंसार्थोऽयमर्थवाद इति चेन्न । लक्षणावृत्तिप्रसङ्गात् । तस्मादाग्रयणाग्रत्वे यथा विधिस्तथेतरयोरपि द्रष्टव्यः । न च प्राप्तत्वादविधिरिति वाच्यम् । तस्य विधेर्नैमित्तिकत्वाभ्युपगमात् । रथंतरादिनिमित्तकयोरेव हि चोदकेन प्राप्तिः । प्रयोजनं तु द्वादशाहविकृतिषु यत्र क्वापि रथंतरादिनिमित्तत्वाभावेऽप्यैन्द्रवायवाग्रत्वसिद्धिः ।

तत्रैवान्यच्चिन्तितम्—

व्यूढोऽपि प्रकृतिः किं वा विकृतिः स्याद्धि पृष्ठवत् ।
विधिसाम्यादादिमोऽन्त्यो लिङ्गात्कामे विधेरपि ॥

द्विविधो हि द्वादशाहः—समूढो व्यूढश्च । तत्र समूढः पूर्वमुदाहृतः । अथ व्यूढ उदाह्रियते—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ । अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रमथ द्वे आग्रयणाग्रे । अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाऽऽग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे इति । तत्र समूढस्य तावत्प्रकृतित्वमविवादम् । तद्वद्व्यूढोऽपि किं प्रकृतिः किं वा विकृतिरिति संशये प्रकृतिरिति प्राप्तम् । कुतः । विधिसाम्यात् । यथा समूढप्रकारः क्रत्वर्थो विहितस्तथा व्यूढप्रकारोऽपि । न चात्र कश्चिद्विशेषोऽस्ति, येन तयोः प्रकृतिविकृतिभावो निश्चीयेत । न च प्रकारद्वयस्य प्रकृतित्वमदृष्टचरम् । रथंतरबृहत्पृष्ठयोर्ज्योतिष्टोमप्रकारयोस्तद्दर्शनादिति पूर्वः पक्षः । व्यूढः समूढस्य विकृतिः । कुतः । लिङ्गदर्शनात् । 'ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः' इति व्यूढे श्रूयते । एतच्च विकृतित्वे सति भवति नान्यथा । तथा हि—व्यूढे प्रायणीयोदयनीयव्यतिरिक्तेषु दशस्वहःसु यच्चतुर्थं तदाग्रयणाग्रत्वादैन्द्रवायवस्याऽऽयतनम् । समूढे तु तदहर्नवानामह्नां मध्ये द्वितीयत्रिकादित्वादैन्द्रवायवाग्रम् । तच्च व्यूढस्य विकृतितायां चोदकेन प्राप्यमाणं विधित्सिताग्रयणाग्रत्वस्तुतयेऽनूद्यत इति युक्तम् । किं च यः कामयेत बहु स्यां प्रजायेयेति कामाय व्यूढो विधीयते । तथा च सति समूढवत्क्रत्वर्थे विध्यभावाद्रथंतर-

१ ख. 'त्कामवि° ।

बृहत्पृष्ठवैषम्येण विकलितप्रकृतित्वं नास्ति। ततः समूढस्य द्वादशाहस्य विकृतिः। अहर्गणेष्वनयोरन्यतरस्यातिदेशः पूर्वपक्षिणः प्रयोजनम् । समूढस्यैवातिदेशः सिद्धान्तः ।

तत्रैवान्यच्चिन्तितम्—

व्यूढे भक्षादिमन्त्राणामर्थानां च व्यतिक्रमः ।
मन्त्राणामेव वाऽऽद्यः स्यादविशेषेण कीर्तनात् ॥
छन्दसां व्यत्ययः प्रोक्तो नार्थानां तेन मन्त्रगाः ।
गायत्र्याद्या विपर्यास्या अर्थेषूक्तिः प्रशस्तये ॥

व्यूढे द्वादशाहे भक्षपवमानतदुभयम*न्त्रपरिधिकपालानि चोदकप्राप्तानि । तत्र भक्षमन्त्रेषु सवनत्रयगतेषु गायत्रीछन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दस इति पदत्रयं श्रुतम् । तथा पवमानत्रयविषयेष्वन्वारोहमन्त्रेषु गायत्रीछन्दास्त्रिष्टुप्छन्दा जगतीछन्दा इति श्रुतम् । तथा परिधिस्तावकेऽर्थवादे पठ्यते—'गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तरः' इति । तथा कपालविषयं वाक्यं पठ्यते—'अष्टाकपालः प्रातःसवनीय एकादशकपालो माध्यंदिनीयो द्वादशकपालस्तृती(स्तार्ती)यसवनिकः' इति । अत्राष्टत्वादिभिस्त्रिभिः संख्याभिर्गायत्र्यादिच्छन्दांसि तत्तत्पादाक्षरस्मृतिद्वारेणोपस्थाप्यन्ते । एवं स्थिते सति व्यूढप्रकरणे छन्दोव्यतिक्रमः पठ्यते—'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन्, गायत्री त्रिष्टुभस्त्रिष्टुब्जगत्या जगती गायत्र्याः' इति । तत्र संशयः—सोऽयं छन्दोव्यतिक्रमो भक्षपवमानपरिधिकपालरूपाणामर्थानामुभयविधमन्त्रगतच्छन्दोवाचिशब्दानां च कर्तव्यः, किं वा तेषां शब्दानामेवेति । तत्र मन्त्रगतानामेवेति विशेषाश्रवणात्सर्वत्र व्यतिक्रम इत्याद्यः पक्षः । तेन गायत्रीशब्दनिर्दिष्टः प्रातःसवनीयो भक्षस्त्रिष्टुप्शब्दितस्य माध्यंदिनीयस्य भक्षस्य स्थाने स च तृतीयसवनीयस्य स्थाने, सोऽपि प्रातःसवनीयस्य स्थाने । तथा बहिष्पवमानो माध्यंदिनपवमाने, माध्यंदिनपवमानस्तृतीयसवने । आर्भवपवमानः प्रातःसवने । तथा मध्यमः स्थविष्ठः परिधिर्दक्षिणतः, अणीयान्द्राघीयानुत्तरतः, अणिष्ठो ह्रसिष्ठो मध्यतः । तथाऽष्टाकपालो माध्यंदिने सवने

* न्यायमालायां मन्त्रेतिपदं न विद्यते ।

१ ख. च. °कृतिषु अ° । २ क. घ. ङ. °यत्रच्छ° । ३ क. घ. ङ. °यत्रच्छ° । ४ क. ङ. °यत्रश° । ५ ख. च. °ने । माध्यंदिनीयो जागतस्य स्थाने, जागतो गायत्रस्य प्रातःसवनिकस्य स्थाने । त° ।

( द्वादशरात्रकथनम् )

एकादशकपालस्तृतीयसवने, द्वादशकपालः प्रातःसवने । सोऽयमर्थव्यतिक्रमः । मन्त्रद्रयशब्देष्वप्येवं योजनीयमिति प्राप्ते ब्रूमः-छन्दांसीति वाक्येऽर्थानां व्यतिक्रमो नोक्तः । अतो मन्त्रगतगायत्र्यादिशब्दानामेव व्यतिक्रमः । यस्त्वर्थेषु गायत्र्यादिशब्दप्रयोगः स प्रशंसार्थः । भक्षाद्यर्थानां मुख्यच्छन्दस्त्वाभावादिति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ सप्तमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ।

---

प्रजापतिरकामयत प्र जायेयेति स एतं द्वादशरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स प्राजायत यः कामयेत प्र जायेयेति स द्वादशरात्रेण यजेत प्रैव जायते ब्रह्मवादिनो वदन्त्यग्निष्टोमप्रायणा यज्ञा अथ कस्मादतिरात्रः पूर्वः प्र युज्यत इति चक्षुषी वा एते यज्ञस्य यदतिरात्रौ कनीनिके अग्निष्टोमौ यत् ( १ ) अग्निष्टोमं पूर्वं प्रयुञ्जीरन्बहिर्धा कनीनिके दध्युस्तस्मादतिरात्रः पूर्वः प्र युज्यते चक्षुषी एव यज्ञे धित्वा मध्यतः कनीनिके प्रति दधति यो वै गायत्रीं ज्योतिःपक्षां वेद ज्योतिषा भासा सुवर्गं लोकमेति यावग्निष्टोमौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मैषा वै गायत्री ज्योतिःपक्षा य

एवं वेद ज्योतिषा भासा सुवर्गं लोकम् ( २ ) एति प्रजापतिर्वा एष द्वादशधा विहितो यद्द्वादशरात्रो यावतिरात्रौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मा प्रजापतिर्वावैष सन्त्सद्ध वै सत्रेण स्पृणोति प्राणा वै सत्प्राणानेव स्पृणोति सर्वासां वा एते प्रजानां प्राणैरासते ये सत्रमासते तस्मात्पृच्छन्ति किमेते सत्रिण इति प्रियः प्रजानामुत्थितो भवति य एवं वेद ( ३ ) ॥

( अग्निष्टोमौ यत्सुवर्गं लोकं प्रियः प्रजानां पञ्च च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । अकामयत । प्रेति । जायेय । इति । सः । एतम् । द्वादशरात्रमिति द्वादश—रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । प्रेति । अजायत । यः । कामयेत । प्रेति । जायेय । इति । सः । द्वादशरात्रेणेति द्वादश—रात्रेण । यजेत । प्रेति । एव । जायते । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । अग्निष्टोमप्रायणा इत्यग्नि-

ष्टोम-प्रायणाः। यज्ञाः। अथ। कस्मात्। अतिरात्र इत्यति-रात्रः। पूर्वः। प्रेति। युज्यते। इति। चक्षुषी इति। वै। एते इति। यज्ञस्य। यत्। अतिरात्रावित्यति-रात्रौ। कनीनिके इति। अग्निष्टोमावित्यग्नि-स्तोमौ। यत् (१)। अग्निष्टोममित्यग्नि-स्तोमम्। पूर्वम्। प्रयुञ्जीरन्निति प्र-युञ्जीरन्। बहिर्धेति बहिः-धा। कनीनिके इति। दध्युः। तस्मात्। अतिरात्र इत्यति-रात्रः। पूर्वः। प्रेति। युज्यते। चक्षुषी इति। एव। यज्ञे। धित्वा। मध्यतः। कनीनिके इति। प्रतीति। दधाति। यः। वै। गायत्रीम्। ज्योतिःपक्षामिति ज्योतिः-पक्षाम्। वेद। ज्योतिषा। भासा। सुवर्गमिति सुवः-गम्। लोकम्। एति। यौ। अग्निष्टोमावित्यग्नि-स्तोमौ। तौ। पक्षौ। ये। अन्तरे। अष्टौ। उक्थ्याः। सः। आत्मा। एषा। वै। गायत्री। ज्योतिःपक्षेति ज्योतिः-पक्षा। यः। एवम्। वेद। ज्योतिषा। भासा। सुवर्गमिति सुवः-गम्। लोकम् (२)। एति। प्रजापतिरिति प्रजा-पतिः। वै। एषः। द्वादशधेति द्वादश-धा। विहित इति वि-हितः। यत्। द्वादशरात्र इति द्वादश-रात्रः। यौ। अतिरात्रावित्यति-रात्रौ। तौ। पक्षौ। ये। अन्तरे। अष्टौ। उक्थ्याः। सः। आत्मा। प्रजापतिरिति प्रजा-पतिः। वाव। एषः।

सन् । सत् । ह । वै । सत्रेण । स्पृणोति । प्राणा इति प्र—अनाः । वै । सत् । प्राणानिति प्र—अनान् । एव । स्पृणोति । सर्वासाम् । वै । एते । प्रजानामिति प्र—जानाम् । प्राणैरिति प्र—अनैः । आसते । ये । सत्रम् । आसते । तस्मात् । पृच्छन्ति । किम् । एते । सत्रिणः । इति । प्रियः प्रजानामिति प्र—जानाम् । उत्थित इत्युत्—स्थितः । भवति । यः । एवम् । वेद ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

अष्टमेऽनुवाके द्वादशाहस्य व्यूढप्रकारो निरूपितः । अथ नवमे द्वादशाहस्यान्ये विशेषा उच्यन्ते ।

तत्राऽऽदौ द्वादशाहं विधत्ते—

प्रजापतिरकामयत प्र जायेयेति स एतं द्वादशरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स प्राजायत यः कामयेत प्र जायेयेति स द्वादशरात्रेण यजेत प्रैव जायते, इति ।

अथ प्रश्नोत्तरमुखेन(ण) प्रथममहर्विधत्ते—

ब्रह्मवादिनो वदन्त्यग्निष्टोमप्रायणा यज्ञा अथ कस्मादतिरात्रः पूर्वः प्र युज्यत इति चक्षुषी वा एते यज्ञस्य यदतिरात्रौ कनीनिके अग्निष्टोमौ यदग्निष्टोमं

पूर्वं प्रयुञ्जीरन्बहिर्धा कनीनिके दध्युस्तस्मादति-
रात्रः पूर्वः प्र युज्यते चक्षुषी एव यज्ञे
धित्वा मध्यतः कनीनिके प्रति दधाति, इति ।

अग्निष्टोमः प्रायणं प्रथमभावी[1] येषां सोमयागानां तेऽग्निष्टोमप्रायणाः । अत एवास्य काण्डस्याऽऽद्यानुवाकेऽभिहितम्—'तस्मादाहुर्ज्येष्ठयज्ञ इति' इति । एवं सति तमग्निष्टोमं परित्यज्य द्वादशाहस्य प्रथमेऽह्नि कस्मात्कारणादतिरात्रः प्रयुज्यत इति ब्रह्मवादिनां प्रश्नः । तत्राभिज्ञा उत्तरमेवमाहुः—पुरुषस्थानीयस्य द्वादशाहयज्ञस्य चक्षुर्गोलकस्थानीयावतिरात्रौ । कनीनिकास्थानीयावग्निष्टोमौ । कृष्णमण्डलस्य मध्ये यदवान्तरं पृथङ्मण्डलमतिकृष्णं तद्दर्शनशक्तिस्थानं, सेयं कनीनिकेत्युच्यते । एवं सति यदि यजमानाः प्रथममग्निष्टोमं प्रयुञ्जीरंस्तदानीमाधारभूतं गोलकं विना बहिरेवाऽऽकाशप्रदेशे कनीनिके स्थापयेयुः । तस्मात्कारणादतिरात्र एव प्रथमेऽह्नि प्रयोक्तव्यः । तथा सति पुरुषरूपे[2] द्वादशाहयज्ञे गोलकद्वयं प्रथमं स्थापयित्वा तन्मध्ये कनीनिकाद्वयं स्थापयन्ति ।

तदेवं प्रथममहर्विधायानन्तरभावीनि दशाहानि पक्षिरूपं परिकल्प्य वेधते—

यो वै गायत्रीं ज्योतिःपक्षां वेद ज्योतिषा भासा
सुवर्गं लोकमेति यावग्निष्टोमौ तौ पक्षौ येऽन्तरेऽष्टा-
वुक्थ्याः स आत्मैषा वै गायत्री ज्योतिःपक्षा य एवं
वेद ज्योतिषा भासा सुवर्गं लोकमेति, इति ।

अष्टाक्षरपादां गायत्रीमष्टसंख्योपेतमुक्थ्यरूपमहरष्टकं पक्षिरूपत्वं[3] परिकल्प्य तद्रूपा[4] गायत्रीत्युच्यते । ज्योतीरूपौ पक्षौ यस्या गायत्र्याः सा ज्योतिःपक्षा । तादृशीं यो यजमानो वेद स यजमानः पक्षरूपं ज्योतिरेव स्वर्गमार्गप्रदर्शनाय भासकं दीपकं कृत्वा तेनानुष्ठितज्योतिराख्येन प्रकाशेन स्वर्गं प्राप्नोति । कौ तौ पक्षौ किं तस्याः पक्षिरूपाया गायत्र्याः स्वरूपमिति तदुभयमुच्यते—द्वादशाहस्य प्रायणीयोदयनीयाख्ये प्रथमोत्तमे अहनी विहाय मध्यवर्तिनो दशरात्रस्याऽऽद्यन्तयोरह्नोरनुष्ठेयौ यावग्निष्टोमौ तौ पक्षस्थानीयौ ।

---

1 ख. च. °भावि ये° । 2 ख. घ. ङ. च. पुरुष° । 3 ख. °पत्वेन प° । 4 क. घ. ङ. च. °पाद्य° ।

ये च तयोरग्निष्टोमयोरभ्यन्तरेष्वष्टसंख्याकेष्वहःस्वनुष्ठेया अष्टावुक्थ्याः सोऽ-यमुक्थ्यसंघः पक्षिरूपाया गायत्र्या आत्मा शरीरम्। एतादृशानि दशा[हानि] कुर्यादित्यर्थः। एषा वा इत्यादिः प्रतिपादितस्यार्थस्योपसंहारः।

सोऽयं द्वादशरात्रो द्विविधः—सत्ररूपोऽहीनरूपश्च। तत्र सत्ररूपं तावद्वि-धातुं प्रस्तौति—

प्रजापतिर्वा एष द्वादशधा विहितो यद्द्वादशरात्रो यावतिरात्रौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मा प्रजापतिर्वावैष सन्त्सद्ध वै सत्रेण स्पृणोति प्राणा वै सत्प्राणानेव स्पृणोति, इति।

योऽयं द्वादशरात्रोऽस्ति सोऽयं द्वादशभिः प्रकारैर्विभक्तः प्रजापतिरेव। तस्य च प्रजापतेः पक्षिरूपत्वं परिकल्प्यते। पूर्वं पक्षत्वेन निरूपितयोरग्निष्टोमयोः समीपवर्तिनौ प्रथमद्वादशयोरह्नोरनुष्ठेयौ प्रायणीयोदयनीयाख्यौ यावतिरात्रौ तावपि पक्षाग्रस्थानीयत्वात्पक्षावेव। अग्निष्टोमसहितयोरतिरात्रयोः पक्षयो-र्मध्ये येऽष्टावुक्थ्याः सोऽयमुक्थ्यसंघः पक्षिरूपस्य प्रजापतेः शरीरम्। एष एवं-विधो द्वादशरात्रो यथोक्तकल्पनया द्वादशविधः। प्रजापतिरेव स्वकीयेन सत्ररू-पप्रयोगेण सद्ध स्पृणोति सच्छब्दवाच्यं यदस्ति तत्प्रीणयत्येव। किं तद्वाच्य-मिति तदुच्यते—प्रजानां प्राणा एव सच्छब्दवाच्याः। जन्मान्तरेऽप्यनपायेन सद्भावात्। अतः सच्छब्दवाच्यान्प्राणानेव प्रीणयति।

अथ प्रस्तुतं सत्ररूपं विधत्ते—

सर्वासां वा एते प्रजानां प्राणैरासते ये सत्रमासते तस्मात्पृच्छन्ति किमेते सत्रिण इति, इति।

ये यजमाना द्वादशाहरूपं सत्रमासतेऽनुतिष्ठन्ति। आसिधातुः सत्र-विषयेऽनुष्ठानमुपलक्षयति। ते यजमानाः सर्वासां प्रजानां प्राणैरेव निमित्तभू-तैरनुतिष्ठन्ति। एतदनुष्ठानेनैव जगन्निर्वाहहेतुना प्राणाः प्रीता भवन्तीत्यर्थः। यस्मात्सत्रानुष्ठानं प्राणानां प्रीतिहेतुस्तस्मात्सर्वे जना अनुष्ठातॄन्दृष्ट्वा किमेते सत्रिण इत्येवमादरेण साश्चर्याः पृच्छन्ति। अतः प्रशस्तमिदं सत्रमनुष्ठेयमि-त्यर्थः।

अथ वेदनं प्रशंसति—

प्रियः प्रजानामुत्थितो भवति य एवं वेद, इति॥

सत्रस्य वेदिता सर्वासां प्रजानां प्रियो भूत्वा जगत्युत्कृष्टोऽवतिष्ठते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ।)

---

न वा एषोऽन्यतोवैश्वानरः सुवर्गाय लोकाय प्राभवदूर्ध्वो ह वा एष आतत आसीत्ते देवा एतं वैश्वानरं पर्यौहन्त्सुवर्गस्य लोकस्य प्रभूत्या ऋतवो वा एतेन प्रजापतिमयाजयन्तेष्वार्ध्नोदधि तदृध्नोति ह वा ऋत्विक्षु य एवं विद्वान्द्वादशाहेन यजते तेऽस्मिन्नैच्छन्त स रसमहं वसन्ताय प्रायच्छत् (१) यवं ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ हेमन्तशिशिराभ्यां तेनेन्द्रं प्रजापतिरयाजयत्ततो वा इन्द्र इन्द्रोऽभवत्तस्मादाहुरानुजावरस्य यज्ञ इति स ह्येतेनाग्रेऽयजतैष ह वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति पुरुषकुणपमश्वकुणपं गौर्वा अन्नं येन पात्रेणान्नं बिभ्रति यत्तन्न निर्णेनिजति ततोऽधि (२) मलं जायत एक एव यजेतैको हि प्रजापतिरार्ध्नोद्द्वादश रात्रीर्दीक्षितः स्याद्द्वादश

मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्वा-
वैष एष ह त्वै जायते यस्तपसोऽधि जायते चतुर्धा
वा एतास्तिस्रस्तिस्रो रात्रयो यद्वादशोपसदो याः
प्रथमा यज्ञं ताभिः सं भरति या द्वितीया यज्ञं
ताभिरा रभते ( ३ ) यास्तृतीयाः पात्राणि ताभि-
र्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरतः
शुन्धते यो वा अस्य पशुमत्ति मा᳚सः सोऽत्ति यः
पुरोडाशं मस्तिष्क᳚ स यः परिवापं पुरीष᳚ स य
आज्यं मज्जान᳚ स यः सोम᳚ स्वेद᳚ सोऽपि ह
वा अस्य शीर्षण्या निष्पदः प्रति गृह्णाति यो
द्वादशाहे प्रतिगृह्णाति तस्माद्द्वादशाहेन न याज्यं
पाप्मनो व्यावृत्त्यै ( ४ ) ॥

( अयंच्छदधि रभते द्वादशाहेन चत्वारि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

न । वै । एषः । अन्यतोवैश्वानर इत्यन्यतः—वैश्वानरः ।
सुवर्गायेति सुवः—गाय । लोकाय । प्रेति । अभवत् ।
ऊर्ध्वः । ह । वै । एषः । आतत इत्या—ततः । आसीत् ।

ते। देवाः। एतम्। वैश्वानरं। परीति। औहन्। सुवर्गस्येति सुवः-गस्य। लोकस्य। प्रभूत्या इति प्र-भूत्यै। ऋतवः। वै। एतेन। प्रजापतिमिति प्रजा-पतिम्। अयाजयन्। तेषु। आर्ध्नोत्। अधीति। तत्। ऋध्नोति। ह। वै। ऋत्विक्षु। यः। एवम्। विद्वान्। द्वादशाहेनेति द्वादश-अहेन। यजते। ते। अस्मिन्। ऐच्छन्त। सः। रसम्। अह। वसन्ताय। प्रेति। अयच्छत् (१)। यवम्। ग्रीष्माय। ओषधीः। वर्षाभ्यः। व्रीहीन्। शरदे। माषतिलाविति माष-तिलौ। हेमन्तशिशिराभ्यामिति हेमन्त-शिशिराभ्याम्। तेन। इन्द्रम्। प्रजापतिरिति प्रजा-पतिः। अयाजयत्। ततः। वै। इन्द्रः। इन्द्रः। अभवत्। तस्मात्। आहुः। आनुजावरस्येत्यानु-जावरस्य। यज्ञः। इति। सः। हि। एतेन। अग्रे। अयजत। एषः। ह। वै। कुणपम्। अत्ति। यः। सत्रे। प्रतिगृह्णातीति प्रति-गृह्णाति। पुरुषकुणपमिति पुरुष-कुणपम्। अश्वकुणपमित्यश्व-कुणपम्। गौः। वै। अन्नम्। येन। पात्रेण। अन्नम्। बिभर्ति। यत्। तत्। न। निर्णेनिजतीति निः-नेनिजति। ततः। अधीति (२)। मलम्। जायते। एकः। एव। यजेत। एकः।

हि। प्रजापतिरिति प्रजा—पतिः। आर्ध्नोत्। द्वादश। रात्रीः। दीक्षितः। स्यात्। द्वादश। मासाः। संवत्सर इति सं—वत्सरः। संवत्सर इति सं—वत्सरः। प्रजापतिरिति प्रजा—पतिः। प्रजापतिरिति प्रजा—पतिः। वाव। एषः। एषः। ह। तु। वै। जायते। यः। तपसः। अधीति। जायते। चतुर्धेति चतुः—धा। वै। एताः। तिस्रस्तिस्र इति तिस्रः—तिस्रः। रात्रयः। यत्। द्वादश। उपसद इत्युप—सदः। याः। प्रथमाः। यज्ञम्। ताभिः। समिति। भरति। याः। द्वितीयाः। यज्ञम्। ताभिः। एति। रभते (३)। याः। तृतीयाः। पात्राणि। ताभिः। निरिति। नेनिक्ते। याः। चतुर्थीः। अपीति। ताभिः। आत्मानम्। अन्तरतः। शुन्धते। यः। वै। अस्य। पशुम्। अत्ति। मांसम्। सः। अत्ति। यः। पुरोडाशम्। मस्तिष्कम्। सः। यः। परिवापमिति परि—वापम्। पुरीषम्। सः। यः। आज्यम्। मज्जानम्। सः। यः। सोमम्। स्वेदम्। सः। अपीति। ह। वै। अस्य। शीर्षण्याः। निष्पद इति निः—पदः। प्रतीति। गृह्णाति। यः। द्वादशाह इति द्वादश—अहे। प्रतिगृह्णातीति प्रति—

गृह्णाति । तस्मात् । द्वादशाहेनेति द्वादश-अहेन । न । याज्यम् । पाप्मनः । व्यावृत्त्या इति वि-आवृत्त्यै (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ सप्तमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ।)

---

नवमेऽनुवाके द्वादशाहगतान्येकादशाहानि विहितानि । अथ दशमे द्वादशमहर्विधत्ते—

न वा एषोऽन्यतोवैश्वानरः सुवर्गाय लोकाय प्राभवदूर्ध्वो ह वा एष आतत आसीत्ते देवा एतं वैश्वानरं पर्यौहन्त्सुवर्गस्य लोकस्य प्रभूत्यै, इति ।

वैश्वानराख्येनाग्निना दृष्टत्वादतिरात्रो वैश्वानरः । अन्यत एकस्मिन्नेव भागे वैश्वानरशब्दवाच्योऽतिरात्रो यस्य द्वादशाहस्य सोऽयमन्यतोवैश्वानरः । आदावेवातिरात्रयुक्तो न त्ववसान इत्यर्थः । एतादृश एष द्वादशाहः स्वर्गलोकं संपादयितुं न समर्थः । कुतो न समर्थ इति तदुच्यते —एष द्वादशाह ऊर्ध्वाभिमुखोऽतिविस्तृत आसीत् । तस्यावसाननियामकाभावात् । अतोऽयमपरिमितः सन्स्वर्गस्य प्रभुर्नाऽऽसीत् । तदानीं देवा एतं वैश्वानरशब्दवाच्यमतिरात्रं पर्यौहन्परितोऽवसानस्थाने नियामकत्वेन स्थापितवन्तः । अतोऽतिरात्रेण नियमितत्वादेतावानयं द्वादशाह इति तत्परिमाणस्य पर्यवसितत्वात्स्वर्गलोकं संपादयितुमयं प्रभुर्भवति । तस्मादुपरिष्टादतिरात्रः कर्तव्य इति तात्पर्यम् ।

अथैतस्य द्वादशाहस्याहीनरूपतां विधत्ते—

ऋतवो वा एतेन प्रजापतिमयाजयन्तेष्वार्ध्नोदधि तदृध्नोति ह वा ऋत्विक्षु य एवं विद्वान्द्वादशाहेन यजते, इति ।

पुरा कदाचिद्वसन्ताद्यृतवो देवा ऋत्विजो भूत्वा प्रजापतिं यजमानमेतेन द्वादशाहेनायाजयन् । तेन द्वादशाहेन स प्रजापतिस्तेष्वृतुषु मध्येऽधिकां

समृद्धिं प्राप्नोत् । तद्वदन्योऽप्यृत्विक्षु मध्ये द्वादशाहयागेन समृद्धिं प्राप्नोति। पूर्वत्र यजमानबहुत्वादासिचोदनया विधानाच्च द्वादशाहस्य सत्रत्वम् । इह तु यजमानैकत्वाद्यजतिचोदनया विधानाच्चाहीनत्वमिति विशेषः ।

तमिमं द्वादशाहं प्रशंसितुं पूर्वोक्तामेव प्रजापतेः समृद्धिं प्रपञ्चयति—

तेऽस्मिन्नैच्छन्त स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ हेमन्तशिशिराभ्याम्, इति ।

ते वसन्ताद्या ऋतवोऽस्मिन्समृद्धे प्रजापतौ भागमैच्छन् । स च प्रजापतिर्वसन्ताय रसमह सर्वमपि भोग्यवस्तुगतं सारं दत्तवान् । वसन्तकाले हि भोगातिशयः प्रसिद्धः । तथा यवादीन्धान्यविशेषान्ग्रीष्मादिभ्यः प्रायच्छत् । ते हि तत्तत्काले प्रभूता भवन्ति ।

एवमुत्कर्षहेतुत्वेन द्वादशाहः प्रशस्तः । अथापकर्षनिवारकत्वेन द्वादशाहं प्रशंसति—

तेनेन्द्रं प्रजापतिरयाजयत्ततो वा इन्द्र इन्द्रोऽभवत्तस्मादाहुरानुजावरस्य यज्ञ इति स ह्येतेनाग्रेऽयजत, इति ।

इन्द्र उत्तमत्वेनाग्रजभ्रातृवत्पूज्योऽपि सन्पुरा कदाजिदनुजवदवरः सन्देवैस्तिरस्क्रियमाणो भूत्वा तत्परिहारोपायं वेदितुं प्रजापतिमुपसेवितवानित्येतावदत्र बहिरेव द्रष्टव्यम् । अत एवान्यत्राऽऽम्नातम् ‘ इन्द्रो वै देवानामानुजावर आसीत्स प्रजापतिमुपाधावत् ’ इति । स च प्रजापतिस्तेन द्वादशाहेनेन्द्रमयाजयत् । ततो द्वादशाहप्रभावादयमिन्द्रस्तदानीमिन्द्रोऽभवत्स्वकीयपरमैश्वर्यलक्षणमिन्द्रत्वं प्राप्तवान् । तस्माद्याज्ञिका आनुजावरस्य यज्ञ इति द्वादशाहमाचक्षते । यस्मादिन्द्र आनुजावरो भूत्वा तन्निवृत्तये प्रथममेतेन द्वादशाहेनायजत तस्मादानुजावरयज्ञत्वमस्योपपन्नम् ।

इदानीं सत्ररूपे द्वादशाहप्रयोगे दक्षिणानिषेधं निन्दयोन्नयति—

एष ह वै कुणपमात्ति यः सत्रे प्रतिगृह्णाति पुरुषकुणपमश्वकुणपं गौर्वा अन्नं येन पात्रेणान्नं बिभ्रति यत्तन्न निर्णेनिजाति ततोऽधि मलं जायते, इति।

सत्रे हि ये यजमानास्त ऋत्विज इत्येवं यजमानत्वव्यवहारवदृत्विक्त्व-व्यवहारोऽप्यस्ति । अत एव शाखान्तरे 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादावध्वर्युब्रह्मादिशब्दैर्व्यवह्रियन्ते । एवं सति ऋत्विक्त्वबुद्ध्या यागान्तरवदत्र यो दक्षिणां प्रतिगृह्णाति स प्रतिग्रहीता शवभक्षणेन यः प्रत्यवायस्तं प्राप्नोति । नात्र पञ्चनखशवो विवक्षितः, किंतु पुरुषाश्वादिशवः । किंचानेन यदन्नं भक्ष्यते तद्गौरेव भवति गोमांसभक्षणसमः प्रत्यवायो भवतीत्यर्थः । किंचैनं प्रतिग्रहीतारमुद्दिश्य यस्मिन्कांस्यपात्रे भाण्डे वाऽन्नं धारयन्ति तत्पात्रं यदि शास्त्रोक्तमार्गेण शोधितं न भवेत्ततः शोध-नाभावात्तद्युक्तगृहेऽधिकं मलं जायते, तेन पात्रेण व्यवहर्तॄणामधिकः प्रत्यवायो भवतीत्यर्थः ।

एवं दक्षिणानिषेधेन सत्रप्रयोगं दृढीकृत्य यजमानैक्येनाहीनप्रयोगमपि दृढी करोति—

एक एव यजेतैको हि प्रजापतिरार्ध्नोत्, इति ।

प्रजापतेरेकस्यैव समृद्धिरभूत्, न तु याजकानामृत्विजाम् । तस्मादेकस्य कर्तृत्वात्फलभाक्त्वाच्चाहीनत्वं सिद्धम् ।

अथ दीक्षाविशेषं विधत्ते—

द्वादश रात्रीर्दीक्षितः स्याद्द्वादश मासाः संव-त्सरः संवत्सरः प्रजापतिः प्रजापतिर्वावैष एष ह त्वै जायते यस्तपसोऽधि जायते, इति ।

द्वादशसंख्योपेतानां मासानां संवत्सररूपत्वात्संवत्सरस्य च प्रजापति-रूपत्वेन प्रजापतिरूपत्वादेष यजमानो द्वादशदीक्षायोगात्प्रजापतिरेव भवति । किंच यत्पूर्वं मातापितृभ्यां जननं तन्न मुख्यम् । किंतु यो यजमानो दीक्षारू-पात्तपसोऽधिजायत एष एव हि जायते मुख्यजन्मवानित्यर्थः ।

अथोपसद्विशेषं विधत्ते—

चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो यद्द्वादशोपसदो याः प्रथमा यज्ञं ताभिः सं भरति या द्वितीया यज्ञं ताभिरा रभते यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरतः शुन्धते, इति ।

अत्रानुष्ठेया द्वादशदिनसाध्या उपसदो याः सन्ति तास्तिस्रास्तिस्र एकैकराशिरूपेण चतुर्धा विभज्यन्ते। तत्र प्रथमराशिगताभिस्तिसृभिर्यज्ञसाधनसंपादनं भवति। द्वितीयराशिगताभिस्तिसृभिर्यज्ञमुपक्रमते। तृतीयराशिगताभिस्तिसृभिर्यज्ञपात्राणि शोधयति। चतुर्थराशिगताभिस्तिसृभिः स्वात्मनोऽन्तः शुद्धिं करोति।

पुनरपि सत्रे दक्षिणाप्रतिग्रहलोभातिशयेन प्रसक्तिं निन्दति—

यो वा अस्य पशुमत्ति मा॑ꣳसꣳ सोऽत्ति यः पुरोडाशं मस्तिष्कꣳ स यः परिवापं पुरीषꣳ स य आज्यं मज्जानꣳ स यः सोमꣳ स्वेदꣳ सोऽपि ह वा अस्य शीर्षण्या निष्पदः प्रति गृह्णाति यो द्वादशाहे प्रतिगृह्णाति तस्माद्द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्यै, इति॥

यः पुमान्द्वादशाहसत्रे दक्षिणां प्रतिगृह्णाति सोऽयं यदा स्वयं सोमयागं करोति तदा तदीययागे योऽन्य ऋत्विग्भूत्वा तस्य प्रतिग्रहीतुः संबन्धिनमग्नीषोमीयादिपशुहविःशेषमत्ति स ऋत्विक्पुरुषादिमांसभक्षणसमं प्रत्यवायं प्राप्नुयात्। यस्तदीययागे पुरोडाशशेषमत्ति स मस्तिष्कं पुरुषादिशिरोगतं मांसं भक्षितवान्भवति। यः परिवापं लाजरूपहविःशेषमत्ति स पुरीषमेव भक्षितवान्भवति। यस्तदीययाग आज्येडाभागं भक्षयति स मज्जानं भक्षितवान्भवति। यस्तदीययागे सोमशेषं भक्षयति स स्वेदं भक्षितवान्भवति। किं च स प्रतिग्रहीता स्वयमप्यस्य द्वादशाहकर्तुः शीर्षण्याः शिरस्युत्पन्ना निष्पदो द्वारैर्निर्गच्छन्तीर्मलिनजातीः प्रतिगृह्णाति। अथ वैतद्वाक्यं सर्वमहीनद्वादशाहविषयं व्याख्येयम्। तदानीं यो वा अस्य पशुमित्यादेरयमर्थः—यः कश्चिदृत्विग्भूत्वाऽहीनरूपद्वादशाहे पशुहविःशेषमत्ति सोऽयमस्य यजमानस्यैव मांसमत्ति। एवमुत्तरत्रापि योज्यम्। यस्मादहीनद्वादशाहे दक्षिणाप्रतिग्रहो निषिद्धस्तस्मात्कारणादृत्विग्भूत्वा द्वादशाहेन यजमानं न याजयेत्। तदेतदयाजनं पाप्मनो व्यावृत्त्यै संपद्यते। याजने तु शास्त्रोक्तं प्रायश्चित्तं कर्तव्यम्। सत्राहीनयोरेतावान्विशेषः—सत्रे तु स्वयम(स्या)पि यजमानत्वात्प्रतिग्रह एव नास्ति। अहीने तु विद्यमानस्य प्रतिग्रहस्य दुष्टत्वात्प्रतिगृह्य प्रायश्चित्तं कर्तव्यमिति।

अत्र मीमांसा ॥

( द्वादशरात्रकथनम् )

दशमाध्यायस्य षष्ठपादे षोडशाधिकरणे चिन्तितम्—

अहीनसत्रयोर्लक्ष्मभिदा[1] नास्त्यस्ति वा न हि।
आवृत्तिसाम्यादाद्यः स्यादिज्यासिभ्यां तयोर्भिदा॥

अस्ति द्वादशाहस्याहीनत्वं सत्रत्वं च। तत्रैतच्चिन्त्यते[2]—किमहीनसत्रयोर्लक्षणभेदो नास्त्युतास्तीति। तत्र नास्तीति तावत्प्राप्तम्। कुतः, ज्योतिष्टोमावृत्तिरूपस्य समानत्वात्। यथा द्विरात्रादीनामेकादशरात्रान्तानामहीनानामावृत्तौ ज्योतिष्टोमस्वरूपं तथा त्रयोदशरात्रादीनां सत्राणामिति प्राप्ते ब्रूमः—आसीरन्नुपेयुरिति चोदनाद्वयं यजमानबहुत्वं च सत्रलक्षणं, यजतिचोदना यजमानबहुत्वचोदनाभावश्चाहीनलक्षणम्[3]। वैदिकप्रयोगेषु तयोरव्यभिचारादिति राद्धान्तः।

तत्रैवान्यच्चिन्तितम्—

सत्रमेकः करोत्याहो बहवः प्रकृताविव।
एकः कुर्यादिहाऽऽसीरन्नित्युक्त्या बहवो मताः॥

द्वादशाहादिसत्रस्य ज्योतिष्टोमः प्रकृतिः। तत्र कर्त्रैक्याच्चोदकेन सत्रेऽपि कर्त्रैक्ये प्राप्ते प्रत्यक्षवचनाद्बहवोऽभ्युपेयाः।

तत्रैवान्यच्चिन्तितम्—

ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत चोदकात्।
अन्ये यष्टार एव स्युः प्रत्यक्षवचनादिभिः॥

अत्र सत्रे किं यजमानेभ्यो व्यतिरिक्ता ऋत्विजः कर्तव्याः किं वा यजमाना एवर्त्विजः। ज्योतिष्टोमो यजमानादन्येषामृत्विक्त्वादत्राप्यन्ये स्युरिति प्राप्ते ब्रूमः—ये यजमानास्त ऋत्विज इति प्रत्यक्षवचनाददक्षिणानि सत्राणीत्याहुरिति दक्षिणाराहित्यश्रवणादध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारमित्यादिना ब्रह्मोद्गात्रादिसमाख्यासंयोगदीक्षासंयोगयोरार्त्विज्ययाजमानद्योतकयोः प्रतिभानाच्च यजमाना एवर्त्विजः।

तत्रैव द्वितीयपादे दशमाधिकरणे चिन्तितम्—

ऋत्विजां वरणं सत्रे कार्यं नो वाऽत्र सोमवत्।
कार्यं मैवं स्वकर्मत्वात्क्रयार्था प्रकृतौ वृतिः॥

अग्निर्होतेत्यादिमन्त्रैः[4] सोमे वरणमृत्विजामाम्नातम्। सोमवत्सत्रेऽपि तत्कार्यम्। अन्यथा वरणरहितानामृत्विक्त्वाभावात्सत्रं न सिध्येत्। अत एव तत्स-

---

1 ख. च. °क्ष्मभेदो ना°। 2 ख. च. °त्रैवं चिन्त्य°। 3 ख. च. °त्वनियमाभा°। 4 क. ख. °ग्निर्होते°।

द्धये सत्रप्रकरणे ये यजमानास्त ऋत्विज इति स्वतः प्रवृत्तानपि यजमानाननूद्य वरणसाध्यमृत्विक्त्वं तेष्वाधातव्यमिति विदधाति । तस्मादृत्विग्वरणं सत्रे कार्यम् । मैवम् । सत्रं ह्यनुष्ठातॄणां सर्वेषां स्वकर्म । न हि स्वकर्मणि क्रयार्थं वरणमपेक्ष्यते । क्रयार्थं हि प्रकृतौ वरणम् । दानमेव क्रयार्थं वरणं त्वदृष्टार्थमिति चेन्न । वरणस्य भविष्यद्दानसूचनेनोत्साहजननार्थत्वात् । अन्यथा वरणकाले कच्चित्कल्याण्यो दक्षिणा इत्यृत्विजां प्रश्नः कथं संगच्छेत । न च ऋत्विक्त्वासिद्धिः शङ्कनीया । तत्र वक्तव्यमृत्विक्त्वं नाम किं कर्मकरत्वमुत यागकर्तृत्वमिति । आद्ये कर्मकराणां स्वामिस्वाभावेन ये यजमानास्त ऋत्विज इति वचनं विरुध्येत । द्वितीये तु स्वत एव यागं कर्तुं प्रवृत्तत्वाद्वरणमन्तरेणाप्यृत्विक्त्वं सिध्यति । ईदृशमेवाऽऽर्त्विज्यं वचनेन विधीयते । तस्माद्दानवद्वरणं सत्रे लुप्यते ।

तत्रैवान्यच्चिन्तितम्—

क्रयः कार्यो न वा सत्रे निषेधात्क्रीतिकल्पनम् ।
नित्यानुवादेनाकॢप्तेर्न क्रयो वरणं यथा ॥

सत्कारपुरःसरमग्निर्होतेत्यादिमन्त्रेण प्रार्थना वरणम् । तच्च वरणं चिकीर्षुर्यजमानो वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात् । तेभ्यः सोमं प्राहेत्यापस्तम्बवचनात् । सोमाभिधानप्रकारस्तत्र कल्पे दर्शितः—'ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथंतरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये । तत्र मे त्वमुद्गाता भव' इति । तत्र देयदक्षिणाद्रव्यनिश्चयेन ब्राह्मणाः स्वकीयाः कर्मविशेषे नियोक्तुं योग्या भवन्ति । सोऽयं क्रयः । स च प्रकृताविव सत्रे कार्यः । न च दक्षिणादानस्य निराकृतत्वेन देयद्रव्यानिश्चये लुप्ते सति तत्साध्यः क्रयोऽपि लुप्येतेति शङ्कनीयम् । निषेधमुपजीव्य क्रयानुष्ठानस्य कल्पयितुं शक्यत्वात् । तथाहि—'न ह्यत्र गौर्दीयते । न वासो न हिरण्यम्' इति सत्रे गवादिदानं निषिध्यते । स च निषेधोऽ[2]सत्यां प्रसक्तौ[3] न संभवति । ततः सोमे देयद्रव्याणां सत्रे दानप्रसक्तिरभ्युपेया । सोमे च देयद्रव्याण्येवं श्रूयन्ते—'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति । तत्र गोवासोहिरण्यादीनां विशेषतो निषेधेन द्रव्यान्तराणां चोदकप्राप्तानामभ्यनुज्ञा प्रतीयते । ततो देयद्रव्यसद्भावात्क्रयः कर्तव्य इति पूर्वः पक्षः । 'न ह्यत्र

---

१ ख. च. णराद्दितानामृ° । २ क. ख. 'षेधः स° । ३ क. ख. °क्तौ सं° ।

गौर्दीयते ' इत्यनेन निषेधो न विधीयते, किं तु पूर्वोक्तेन निर्णयेन प्राप्त एव दानाभावोऽनूद्यते । ' अदक्षिणानि सत्राणीत्याहुर्न ह्यत्र गौर्दीयते ' इति श्रुतौ परोक्त्युपन्यासस्य प्रसिद्धिवाचकहिशब्दस्य [ च ] प्राप्तिगमकत्वात् । तस्मा- न्नित्यानुवादस्य कल्पकत्वाभावाद्वरणवत्तदविनाभूतः क्रयोऽपि न कर्तव्यः ।

तत्रैवान्यच्चिन्तितम्—

आत्रेयदानर्तुयाज्यावृत्ती सत्रेषु नाऽऽचरेत् ।
कुर्याद्वाऽऽनतिलोपान्नो धर्मार्थं क्रियतां द्वयम् ॥

प्रकृतौ हिरण्यमात्रेयाय ददातीति श्रुतम् । ऋतुयाज्यावरणं चास्ति । तदुभयं सत्रेषु न कर्तव्यम् । द्वारभूताया आनतेर्लुप्तत्वात् । यद्यप्यात्रेयः कर्म- करेभ्यो बहिर्भूतस्तथाऽपि तद्दानेन यजमानस्यौदार्यं पश्यन्तो धनकामा ऋत्विज आनता भवन्ति । वरणस्य चाऽऽनत्यर्थत्वमृत्विग्वरणे प्रारम्भकालीने प्रसिद्धम् । तस्मादानत्यर्थमुभयं नाऽऽचरेदिति पूर्वः पक्षः । प्रथमवरणेनैवाऽऽ- नतिसिद्धेः कालान्तरे वरणमदृष्टार्थम् । धनकामानामपि कर्मकराणां प्रारम्भ- काले स्वयमङ्गीकृताया भृतेरधिकं धनं न लभ्यत इत्यात्रेयदानदर्शनं नाऽऽनति- रम् । तस्माददृष्टार्थमुभयं कर्तव्यम् ।

षष्ठाध्यायस्य षष्ठपादे तृतीयाधिकरणे चिन्तितम्—

सत्रं वर्णत्रयस्योत विप्रस्यैवाविशेषतः ।
त्रयस्य मैवं स्वामित्वं विप्राणामृत्विजां यतः ॥

ऋद्धिकामाः सत्रमासीरन्नित्यत्र विप्रा इति विशेषो न श्रूयते । तस्माद्वर्ण- त्रयस्य सत्राधिकार इति चेन्मैवम् । विप्राणामेवाऽऽर्त्विज्यमिति द्वादशे वक्ष्यते । ऋत्विक्कार्ये यजमानाः सत्रे समाम्नाताः—' ये यजमानास्त ऋत्विजः ' इति । तस्माद्विप्राणामेव सत्रम् ।

तत्रैवान्यच्चिन्तितम्—

भिन्नप्रयाजादिकल्पा अपि सत्रेऽधिकारिणः ।
तुल्यकल्पा एव वाऽऽद्यो वसिष्ठादिविधानतः ॥
नाराशंसाद्यङ्गतायां स्वामित्वोद्देशपूर्वकम् ।
नाराशंसविधौ संनिकर्षात्साद्गुण्यतोऽन्तिमः ॥

१ क. ध. च. तः । नरा । २ क. घ. मृ नरा ।

प्रयाजेषु पुरुषभेदेनानुष्ठानप्रकारो भिद्यते— राजन्यवसिष्ठादीनां[1] न(ना)राशंसो द्वितीयः प्रयाजः। तनूनपादन्येषाम्। तत्र वासिष्ठात्रिवध्र्यश्वशुनककण्वकश्यपसंकृतिगोत्रोत्पन्ना ये न(ना)राशंसप्रयाजवन्तः, येचान्ये तनूनपात्प्रयाजकाः, त एते भिन्नकल्पा अपि मिलित्वा सप्तदशावराः सत्रेऽधिकारिणः स्युः। कुतः, न(ना)राशंसमुद्दिश्य तदङ्गत्वेन वसिष्ठादिविधानात्। तथा सति सत्रिणां मध्ये केषांचिद्वसिष्ठादिगोत्रजत्वेऽपि तदङ्गत्वं सिध्यतीति प्राप्ते ब्रूमः—वासिष्ठादीन्यजमानानुद्दिश्य न(ना)राशंसो विधीयते। तथा सति विधायकपदगतस्य धात्वर्थस्य विधेयत्वात्संनिकर्षः। वसिष्ठादिविधौ तु पदान्तरोपात्तत्वाद्विप्रकर्षः। अतो वसिष्ठाद्युद्देशेन[2] नाराशंसविधौ न(ना)राशंसानुष्ठाने वसिष्ठादीनां साद्गुण्यमितरेषां तु वैगुण्यं, तनूनपादनुष्ठाने तु वैपरीत्यम्। सर्वथा भिन्नकल्पानां सर्वेषां साद्गुण्यं न सिध्यति। अतः साद्गुण्याय तुल्यकल्पा एवाधिकारिणः।

तत्रैवान्यच्चिन्तितम्—

> विप्रस्य सत्रं सर्वस्य वासिष्ठस्यैव वा भवेत्।
> वैश्वामित्रस्यैव वाऽऽद्य ऋद्धीच्छुत्वेन मध्यमः॥
> ब्रह्मत्वाय ह्यवासिष्ठो ब्रह्मा वा स्तोमभागतः।
> वैश्वामित्रसमानानामेव होतृत्वसिद्धये॥

ऋद्धिकामस्य सत्रं विहितम्। ब्राह्मणाश्च सर्वे ऋद्धिं वाञ्छन्ति। तस्माद्विप्रस्य सर्वस्य सत्राधिकार इत्याद्यः पक्षः। वासिष्ठो ब्रह्मा भवतीति वचनादवासिष्ठस्य ब्रह्मत्वासंभवाद्ब्रह्मत्वाय वासिष्ठस्याधिकारो वाच्यः। तथा सति भिन्नकल्पत्ववारणाय तत्तुल्यकल्पा एवाधिक्रियन्त इति द्वितीयः पक्षः। वासिष्ठो ब्रह्मेति वाक्यान्न वासिष्ठस्य ब्रह्मता। रश्मिरसि क्षयाय त्वेत्यादयो मन्त्राः[3] स्तोमभागास्तानधीयानः स्वयमवासिष्ठोऽपि ब्रह्मतामर्हतीति स्तोमभागप्रशंसारूपेऽर्थवादे वासिष्ठो ब्रह्मेति पठितत्वात्। तस्माद्वैश्वामित्रो होतेति विहितस्य होतृत्वसिद्धये वैश्वामित्रस्य तत्समानकल्पानां चाधिकारो नान्येषाम्।

तत्रैवान्यच्चिन्तितम्—

> अनाधातुश्च तत्किं वाऽऽधातुरेवाग्रिमो यतः।
> एकस्याग्निषु तत्सिद्धिर्न स्वाग्निष्वात्मनेपदात्॥

---

१ क. घ. ङ. °ष्ठानां। २ ख. घ. च. 'न नरा'। ३ क. °न्त्राः सोमगताः स्तो°।

तत्सत्रमग्न्याधानरहितस्यापि संभवति । कुतः, सत्रिणां मध्ये कस्यचिदाहिताग्नित्वे तदीयेष्वग्निषु तेन सह मर्त्यैरनाहिताग्निभिरपि तस्य सत्रस्य साधयितुं शक्यत्वादिति चेन्मैवम् । आदधीतेत्यात्मनेपदमाधानफलस्य कर्तृगामितां दर्शयति । तत्फलं चाग्नीनां कर्मयोग्यता । ततो येऽनाहिताग्नयो न तेऽधिकारिणः । यश्चाऽऽहिताग्निस्तस्यैव कर्मयोग्यता नान्यस्य । किं च सोमविकृतीनामिष्टिपूर्वकत्वं निर्णीतम् । इष्टिश्चाऽऽधानपूर्विका । तस्मादाधातुरेव सत्राधिकारः ।

तत्रैवान्यच्चिन्तितम्—

> जुह्वादयो यस्य कस्य कार्याः साधारणा उत ।
> अविरोधादग्निमोऽन्त्यो मृतदाहे विरोधतः ॥

सत्रिणां मध्ये यस्य कस्यचित्संबन्धिभिर्जुह्वादिपात्रैः सत्रं प्रयोक्तव्यम् । कुतः, अविरोधात् । अन्यदीयेष्वग्निष्वात्मनेपदं यथा विरुध्यते नैवमत्र विरोधः कश्चिदुपलभ्यत इति प्राप्ते ब्रूमः-यस्य जुह्वादयः स चेत्सत्रमध्ये म्रियते तदा मृतेन सह जुह्वादयो दह्यन्ते । ‘ आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दक्षिणहस्ते जुहूमासादयति ’ इत्यादिवचनैस्तदवगमात् । पात्रदाहे चावशिष्टः सत्रप्रयोगो विगुणः स्यात् । तस्मात्साधारणा भिन्ना एव जुह्वादयः सत्रे संपादनीयाः ।

एकादशाध्यायस्य चतुर्थपादे पञ्चमाधिकरणे चिन्तितम्—

> द्वादशाहे सदीक्षोपसदहःसु दिनानि किम् ।
> शतत्रयं द्वादश वा षट्त्रिंशद्वाऽग्रिमो यतः ॥
> एकैककर्मणोऽह्नोऽस्य ज्योतिष्टोमविकारता ।
> एकैकं तदनुष्ठातुं दिनानां पञ्चविंशतिः ॥
> अह्नां द्वादशताश्रुत्या मध्यपक्षस्तदाऽपि किम् ।
> कार्या द्वादश सार्धस्काश्चतुष्काणामुत त्रिकम् ॥
> एकैकस्यैव यागस्य विकृतित्वादिहाऽऽदिमः ।
> अमुख्यकालाङ्गबाधाच्चतुष्कं(ष्कं)भिद्यते त्रिधा ॥
> दीक्षा उपसदः सुत्याः प्रत्येकं द्वादश स्मृताः ।
> ततः साङ्गस्य मुख्यस्य षट्त्रिंशद्दिवसा मताः ॥

---

[1] ख. घ. ङ. च. °धृत्तेर° । [2] ख. च. °हाति य° । [3] च. °दहे दिनमानकम् । [4] ख. च. °शनं दि° [5] क. घ. ङ. च. °स्तथाऽपि । [6] ख. ङ. च. °यस्काश्च° । [7] क. घ. ङ. भिद्यता । [8] घ. ङ. °मताः । [9] ख. च. °ताः । साङ्गस्य द्वादशाहस्य प° ।

द्वादशाहस्यैकैकमहः पृथक्कर्म । तस्मिंश्च सदीक्षस्य सोपसत्कस्य ससुत्यस्य ज्योतिष्टोमस्य विध्यन्तोऽतिदिष्टः । अतिदिष्टानां दीक्षाणामुपसदां च प्राकृतसंख्याबाधनाय पृथग्द्वादशत्वं श्रुतम् । ततो दीक्षोपसदर्थं चतुर्विंशतिर्दिनानि सुत्यार्थमेकं दिनमिति पञ्चविंशतिः । ईदृशस्य कर्मविशेषस्याह्नां द्वादशभिरावृत्तिभिः शतत्रयं स्यादित्याद्यः पक्षः । तथा सत्यह्नां द्वादशत्वं श्रूयमाणं बाध्येत । तस्माद्द्वादशैव दिवसा इति मध्यमः पक्षः । [1]तदाऽपि दीक्षोपसद्भ्यामङ्गाभ्यामुपेतस्यैकैकस्याह्नः साङ्गज्योतिष्टोमविकारत्वात्तत्सर्वं सद्य एव कर्तव्यमित्येकः पक्षः । प्रकृतौ दीक्षोपसदोर्मुख्यकालात्प्रागेवानुष्ठितत्वादिहापि [2]तदैवानुष्ठानं प्राप्तम् । तच्च मुख्यकाले तदनुष्ठाने बाध्येत । तस्मादङ्गद्वयस्य प्रधानस्य च द्वादश दिनानि विभज्यानुष्ठानमिति पक्षान्तरम् । द्वादशाहस्य द्वादश दीक्षा द्वादशोप[3]सद इत्यङ्गयो[4]र्मुख्ये च पृ(ख्ययत्पृ)थग्द्वादशत्वश्रुत्या षट्त्रिंशदिति राद्धान्तः ।

नवमाध्यायस्य प्रथमपादे नवमाधिकरणे चिन्तितम्—

[5]पत्नीसंयाजसंस्था किं सर्वेष्वन्त्येतरेषु वा ।
अविशेषादादिमोऽन्त्योऽसंस्थितत्वोक्तिलिङ्गतः ॥

द्वादशाहे श्रूयते ‘पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते’ इति । तत्र द्वादशसंख्येषु सर्वेष्वप्यहःसु पत्नीसंयाजान्तं कर्मानुष्ठाया[6]वशिष्टं पिष्टलेपादिकं कार्यम् । कुतः, एतावत्सु पत्नीसंयाजैः समाप्तिर्नेतरेष्विति विशेषनियामकाभावादिति चेन्मैवम् । असंस्थितत्ववाक्योक्तलिङ्गेन प्रागुत्तमादह्नो यानीतराण्यहानि तेषु पत्नीसंयाजान्तत्वं व्यवतिष्ठते । तथाहि—पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इत्यस्य विधेः शेष एवमाम्नायते—‘न बर्हिरनुप्रहरति असंस्थितो तर्हि यज्ञः’ इति । तत्र पत्नीसंयाजैः सर्वेषामह्नां समाप्तावसंस्थितत्वं व्याहन्येत । तस्मात्संतिष्ठन्त इति शब्दो न समाप्तिवचनः, किं तर्हि सत्येव तदहःसंबन्धिकर्तव्यशेषे व्यापारोपरममात्रं ब्रूते । अयं च कर्तव्यशेषश्चरमेऽहन्यनुष्ठातव्यः । तथा सति द्वादशानामह्नां विहितः सहप्रयोगोऽनुगृहीतो भवति । तथा हि द्वादशाहेन यजेतेति सहप्रयोगो विहितः । अत एव दीक्षोपसदादि

[1] ख. तत्रापि । घ. ङ. च. तथाऽपि । [2] ख. तथैवा' । [3] ख च. 'सदो द्वादश मु' । [4] च. 'मुख्यस्य च । [5] क. घ. ङ. 'संस्थत्वं सं' । [6] ख. च. 'ष्टं हारियोजनादिकं कार्य'

तन्त्रेणानुष्ठीयते । तत्र प्रथममहः पत्नीसंयाजान्तमनुष्ठाय पिष्टलेपादिकं बर्हिष्प्रहरणान्तं कर्तव्यत्वेनावस्थाप्य द्वितीयमहः प्रक्रमते । एवमुत्तरत्रापि । तत्र सर्वत्रावशिष्टं कर्तव्यमुत्तमेऽहन्यनुष्ठातव्यम् । तथा सत्युपक्रमैक्यवदुपसंहारस्याप्येकत्वाद्विहितः सहप्रयोगः सिध्यति । एकैकस्याह्नः पत्नीसंयाजैः समाप्तौ भिन्नाः प्रयोगाः प्रसज्येरन् । यत्तु दशमस्याह्नो मानमग्रहेण समापनं तद्वाचनिकम् । तस्मादुत्तमव्यतिरिक्तानामेवाह्नां पत्नीसंयाजानन्तरं व्यापारोपरमः ।

षष्ठाध्यायस्य द्वितीयपादे प्रथमाधिकरणे चिन्तितम्—

> सत्रे फलांशः प्रत्येकं सर्वं वाऽऽद्यः समूहके ।
> कर्तृत्वादन्त्य एकैकस्यापि तत्त्वाद्बहुत्वतः ॥

इदमाम्नायते—'ऋद्धिकामाः सत्रमासीरन्' इति । तत्र सत्रे बहूनां समुदायस्य कर्तृत्वमवगतम् । सप्तदशावराः सत्रमासीरन्निति श्रवणात् । कर्तृत्वेन समुदायस्यैव फलित्वात्पुरुषाणां प्रत्येकं फलांश एव न तु सर्वं फलमेकैकस्येति चेन्मैवम् । एकैकस्यापि समुदायान्तःपातिनः कर्तृत्वसद्भावात् । अन्यथा समुदायस्यैकत्वेन सत्रमासीरन्निति श्रुतं कर्तृबहुत्वं नोपपद्येत । तस्मादेकैकस्य कर्तुः सर्वफलसद्भावात्सर्वफलकामिनामेवात्राधिकारो नत्वंशफलकामिनाम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ।)

---

एक॑स्मै॒ स्वाहा॑ द्वाभ्या॒ꣳ॒ स्वाहा॑ त्रि॒भ्यः स्वाहा॑ च॒तुर्भ्य॒ः स्वाहा॑ प॒ञ्चभ्य॒ः स्वाहा॑ ष॒ड्भ्यः स्वाहा॑ स॒प्तभ्य॒ः स्वाहा॒ऽष्टाभ्य॒ः स्वाहा॑ न॒वभ्य॒ः स्वाहा॑ द॒शभ्य॒ः स्वाहैका॑दश॒भ्यः स्वाहा॑ द्वाद॒शभ्य॒ः स्वाहा॑ त्रयोद॒शभ्य॒ः स्वाहा॑ चतु॒र्द॒शभ्य॒ः स्वाहा॑ प॒ञ्चद॒शभ्य॒ः

---

१ ख. च. हारियोजनादिकं । २ घ. ङ. °शका° ।

स्वाहा षोडशभ्यः स्वाहा सप्तदशभ्यः स्वाहाऽष्टादशभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( नवचत्वारिꣳशते स्वाहैकान्नैकविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

एकस्मै । स्वाहा । द्वाभ्याम् । स्वाहा । त्रिभ्य इति त्रि—भ्यः । स्वाहा । चतुर्भ्य इति चतुः—भ्यः । स्वाहा । पञ्चभ्य इति पञ्च—भ्यः । स्वाहा । षड्भ्य इति षट्—भ्यः । स्वाहा । सप्तभ्य इति सप्त—भ्यः । स्वाहा । अष्टाभ्यः । स्वाहा । नवभ्य इति नव—भ्यः । स्वाहा । दशभ्य इति दश—भ्यः । स्वाहा । एकादशभ्य इत्येकादश—भ्यः । स्वाहा । द्वादशभ्य इति द्वादश—भ्यः । स्वाहा । त्रयोदशभ्य इति त्रयोदश—भ्यः । स्वाहा । चतुर्दशभ्य इति चतुर्दश—भ्यः ।

स्वाहा । पञ्चदशभ्य इति पञ्चदश-भ्यः । स्वाहा । षोडशभ्य इति षोडश-भ्यः । स्वाहा । सप्तदशभ्य इति सप्तदश-भ्यः । स्वाहा । अष्टादशभ्य इत्यष्टादश-भ्यः । स्वाहा । एकात् । न । विꣳशत्यै । स्वाहा । नवविꣳशत्या इति नव-विꣳशत्यै । स्वाहा । एकात् । न । चत्वारिꣳ-शते । स्वाहा । नवचत्वारिꣳशत इति नव-चत्वारिꣳशते । स्वाहा । एकात् । न । षष्ट्यै । स्वाहा । नवषष्ट्या इति नव-षष्ट्यै । स्वाहा । एकात् । न । अशीत्यै । स्वाहा । नवा-शीत्या इति नव-अशीत्यै । स्वाहा । एकात् । न । शताय । स्वाहा । शताय । स्वाहा । द्वाभ्याम् । शताभ्याम् । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः ) ।

---

दशमेऽनुवाके द्वादशाहस्यान्तिममहर्दीक्षाविशेषश्चोक्तः । अत्र शिष्टेषु दश-स्वनुवाकेष्वश्वमेधगता मन्त्रा उच्यन्ते ।

कल्पः–' संस्थितेऽहन्यभित आहवनीयं षट्त्रिंशतमाश्वत्थानुपतल्पान्विमि-न्वन्त्यस्तमित आदित्ये षट्त्रिंशतमध्वर्यव उपतल्पानाधिरुह्य खादिरैः स्रुवैः सर्वा रात्रिमन्नहोमाञ्जुहत्याज्यं मधुतण्डुलान्पृथुकाल्लाँजान्करम्भान्धानाः सक्तू-

---

१ ख °तल्प्यान्वि° । २ ख. °तल्प्यान°।

न्मसूस्यानि प्रियङ्गुतण्डुलानित्येकस्मै स्वाहेत्येतेषामनुवाकानामयुज आज्येन युजोऽन्नेनाऽऽज्येनान्ततः ' इति ।

तत्राऽऽदौ युजामयुजां च मिश्रितानां संघमाह—

एकस्मै स्वाहा द्वाभ्याᳪं स्वाहा त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहा षड्भ्यः स्वाहा सप्तभ्यः स्वाहाऽष्टाभ्यः स्वाहा नवभ्यः स्वाहा दशभ्यः स्वाहैकादशभ्यः स्वाहा द्वादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा चतुर्दशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा षोडशभ्यः स्वाहा सप्तदशभ्यः स्वाहाऽष्टादशभ्यः स्वाहैकान्न विᳪंशत्यै स्वाहा नवविᳪंशत्यै स्वाहैकान्न चत्वारिᳪंशते स्वाहा नवचत्वारिᳪंशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा द्वाभ्याᳪं शताभ्याᳪं स्वाहा सर्वस्मै स्वाहा, इति ॥

अत्र त्वेकशब्देन सर्वात्मकः प्रजापतिरुच्यते । अत एव ब्राह्मणे सम्म्नास्यते—' एकस्मै स्वाहेत्याह । प्रजापतिर्वा एकः । तमेवाऽऽप्नोति ' इति । अत्र च सर्वात्मकत्वाद्ये ये द्वित्वादिसंख्याविशिष्टाः पदार्थास्ते सर्वेऽपि प्रजापतिरूपा तस्मात्प्रजापतिरूपानेतान्सर्वान्पदार्थानुद्दिश्येदं स्वाहुतमस्त्वित्येवं यथाम्नात्रिंशदाहुतीर्जुहुयात् । अनुक्तपदार्थसंग्रहार्थं सर्वशब्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

अथ सप्तमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ।

---

एकस्मै स्वाहा त्रिभ्यः स्वाहा पञ्चभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा

त्रयोदशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा सप्तदशभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( एकस्मै पञ्चाशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः । )

---

एकस्मै । स्वाहा । त्रिभ्य इति त्रि-भ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । स्वाहा । नवभ्य इति नव-भ्यः । स्वाहा । एकादशभ्य इत्येकादश-भ्यः । स्वाहा । त्रयोदशभ्य इति त्रयोदश-भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश-भ्यः । स्वाहा । सप्तदशभ्य इति सप्तदश-भ्यः । स्वाहा । एकात् । न । विꣳशत्यै । स्वाहा । नवविꣳशत्या इति नव-विꣳशत्यै । स्वाहा । एकात् । न । चत्वारिꣳशते । स्वाहा । नवचत्वारिꣳशत इति नव-चत्वारिꣳशते । स्वाहा । एकात् । न । षष्ट्यै । स्वाहा । नवषष्ट्या इति नव-षष्ट्यै । स्वाहा ।

एकात् । न । अशीत्यै । स्वाहा । नवाशीत्या इति नव-अशीत्यै । स्वाहा । एकात् । न । शताय । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः । )

---

अथायुजामेकाधिकानां संघमाह—

एकस्मै स्वाहा त्रिभ्यः स्वाहा पञ्चभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा सप्तदशभ्यः स्वाहैकान्न विंशत्यै स्वाहा नवविंशत्यै स्वाहैकान्न चत्वारिंशते स्वाहा नवचत्वारिंशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा, इति ॥

एतैरयुक्संख्यैर्मन्त्रैर्विंशत्याहुतीर्जुहुयात् । न चात्र पूर्वानुवाकेन सह पुनरुक्तिः शङ्कनीया । यथावचनमनुष्ठेयत्वात् । अथवाऽनन्तेषु प्रजापत्यवयवेषु यथामति विषयभेदः कल्पनीयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः)

द्वाभ्या॑ꣳ स्वाहा॑ चतुर्भ्यः॑ स्वाहा॑ षड्भ्यः स्वाहा॑ऽष्टाभ्यः स्वाहा॑ दशभ्यः॑ स्वाहा॑ द्वादशभ्यः॑ स्वाहा॑ चतुर्दशभ्यः॑ स्वाहा॑ षोडशभ्यः॑ स्वाहा॑ऽष्टादशभ्यः॑ स्वाहा॑ विꣳशत्यै॑ स्वाहा॑ऽष्टानवत्यै॑ स्वाहा॑ शताय स्वाहा॑ सर्व॑स्मै स्वाहा॑ (१) ॥

(द्वाभ्यामष्टानवत्यै षड्विꣳशतिः ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

(अथ सप्तमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ।)

द्वाभ्या॑म् । स्वाहा॑ । चतुर्भ्य॒ इति॑ च॒तुः-भ्यः॑ । स्वाहा॑ । षड्भ्य इति॑ षट्-भ्यः॑ । स्वाहा॑ । अ॒ष्टाभ्यः॑ । स्वाहा॑ । दशभ्य॒ इति॑ द॒श-भ्यः॑ । स्वाहा॑ । द्वादशभ्य॒ इति॑ द्वाद॒श-भ्यः॑ । स्वाहा॑ । चतुर्दशभ्य॒ इति॑ चतुर्द॒श-भ्यः॑ । स्वाहा॑ । षोडशभ्य॒ इति॑ षोड॒श-भ्यः॑ । स्वाहा॑ । अ॒ष्टादशभ्य॒ इत्य॒ष्टाद॒श-भ्यः॑ । स्वाहा॑ । वि॒ꣳश॒त्यै॑ । स्वाहा॑ । अ॒ष्टान॑वत्या॒ इत्य॒ष्टा-न॒व॒त्यै॑ । स्वाहा॑ । श॒ताय॑ । स्वाहा॑ । सर्व॑स्मै । स्वाहा॑ (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

(अथ सप्तमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः)।

---

अथ द्विसंख्यामारभ्य युग्मसंख्यानां संघमाह—

द्वाभ्याꣳ स्वाहा चतुर्भ्यः स्वाहा षड्भ्यः स्वाहाऽष्टाभ्यः स्वाहा दशभ्यः स्वाहा द्वादशभ्यः स्वाहा चतुर्दशभ्यः स्वाहा षोडशभ्यः स्वाहाऽष्टादशभ्यः स्वाहा विꣳशत्यै स्वाहाऽष्टानवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा, इति॥

तैरेतैर्मन्त्रैस्त्रयोदशाऽऽज्याहुतीर्जुहुयात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः।)

---

त्रिभ्यः स्वाहा पञ्चभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा सप्तदशभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा (१)॥

(त्रिभ्योऽष्टाचत्वारिꣳशत्।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

(अथ सप्तमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः)

---

त्रिभ्य इति त्रि-भ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । स्वाहा । नवभ्य इति नव-भ्यः । स्वाहा । एकादशभ्य इत्येकादश-भ्यः । स्वाहा । त्रयोदशभ्य इति त्रयोदश-भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश-भ्यः । स्वाहा । सप्तदशभ्य इति सप्तदश-भ्यः । स्वाहा । एकात् । न । विꣳशत्यै । स्वाहा । नवविꣳशत्या इति नव-विꣳशत्यै । स्वाहा । एकात् । न । चत्वारिꣳशते । स्वाहा । नवचत्वारिꣳशत इति नव-चत्वारिꣳशते । स्वाहा । एकात् । न । षष्ट्यै । स्वाहा । नवषष्ट्या इति नव-षष्ट्यै । स्वाहा । एकात् । न । अशीत्यै । स्वाहा । नवाशीत्या इति नव-अशीत्यै । स्वाहा । एकात् । न । शताय । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

(अथ सप्तमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाकः।)

---

अथ त्रिसंख्यामारभ्य विषमसंख्यानां संघमाह—

त्रिभ्यः स्वाहा पञ्चभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा त्रयोदशभ्यः

स्वाहा पञ्चदशाभ्यः स्वाहा सप्तदशाभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा, इति ॥

तैरेतैर्मन्त्रैरेकोनविंशतिसंख्याका आहुतीर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके
चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके पञ्चदशोऽनुवाकः । )

---

चतुर्भ्यः स्वाहाऽष्टाभ्यः स्वाहा द्वादशभ्यः स्वाहा षोडशभ्यः स्वाहा विꣳशत्यै स्वाहा षण्णवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( चतुर्भ्यः षण्णवत्यै षोडश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
द्वितीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके पञ्चदशोऽनुवाकः । )

---

चतुर्भ्य इति चतुः—भ्यः । स्वाहा । अष्टाभ्यः । स्वाहा । द्वादशभ्य इति द्वादश—भ्यः । स्वाहा । षोडशभ्य

इति षोडश-भ्यः । स्वाहा । विंशत्यै । स्वाहा । षण्णवत्या इति षट्-नवत्यै । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके पञ्चदशोऽनुवाकः । )

---

अथ चतुःसंख्यामारभ्य चतुरुत्तराणां सप्तसंख्यानां संघमाह—

चतुर्भ्यः स्वाहाऽष्टाभ्यः स्वाहा द्वादशभ्यः स्वाहा षोडशभ्यः स्वाहा विंशत्यै स्वाहा षण्णवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा, इति ॥

एतैर्मन्त्रैरष्टावाहुतीर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके षोडशोऽनुवाकः । )

---

पञ्चभ्यः स्वाहा दशभ्यः स्वाहा पञ्चदशाभ्यः स्वाहा विंशत्यै स्वाहा पञ्चनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( पञ्चभ्यः पञ्चनवत्यै चतुर्दश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके षोडशोऽनुवाकः । )

पञ्चभ्य इति पञ्च—भ्यः । स्वाहा । दशभ्य इति दश—भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश—भ्यः । स्वाहा । विंशत्यै । स्वाहा । पञ्चनवत्या इति पञ्च—नवत्यै । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ सप्तमकाण्डे द्वितीयप्रपाठके षोडशोऽनुवाकः । )

अथ पञ्चसंख्यामारभ्य पञ्चोत्तराणां समविषमसंख्यानां संघमाह—

पञ्चभ्यः स्वाहा दशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा विंशत्यै स्वाहा पञ्चनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा, इति ॥

एतैर्मन्त्रैः सप्ताऽऽहुतीर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ सप्तमाष्टके द्वितीयप्रपाठके सप्तदशोऽनुवाकः । )

दशभ्यः स्वाहा विंशत्यै स्वाहा त्रिंशते स्वाहा चत्वारिंशते स्वाहा पञ्चाशते स्वाहा

षष्ट्यै स्वाहा सप्तत्यै स्वाहाऽशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( दशभ्यो द्वाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके सप्तदशोऽनुवाकः । )

---

दशभ्य इति दश-भ्यः । स्वाहा । विंशत्यै । स्वाहा । त्रिंशते । स्वाहा । चत्वारिंशते । स्वाहा । पञ्चाशते । स्वाहा । षष्ट्यै । स्वाहा । सप्तत्यै । स्वाहा । अशीत्यै । स्वाहा । नवत्यै । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके सप्तदशोऽनुवाकः ) ।

---

अथ दशसंख्यामारभ्य दशोत्तराणां संघं दर्शयति—

दशभ्यः स्वाहा विंशत्यै स्वाहा त्रिंशते स्वाहा चत्वारिंशते स्वाहा पञ्चाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहाऽशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा, इति ॥

एतैर्मन्त्रैरेकादशाऽऽहुतीर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके
सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः । )

---

विꣳशत्यै स्वाहा चत्वारिꣳशते स्वाहा षष्ट्यै स्वाहाऽशीत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( विꣳशत्यै द्वादंश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः । )

---

विꣳशत्यै । स्वाहा । चत्वारिꣳशते । स्वाहा । षष्ट्यै । स्वाहा । अशीत्यै । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः । )

---

अथ विंशतिसंख्यामारभ्य विंशत्युत्तराणां संख्यानां संघमाह—

विꣳशत्यै स्वाहा चत्वारिꣳशते
स्वाहा षष्ट्यै स्वाहाऽशीत्यै स्वाहा
शताय स्वाहा सर्वस्मै स्वाहा, इति ॥
एतैर्मन्त्रैः षडाहुतीर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठक एकोनविंशोऽनुवाकः ।)

---

पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा त्रिभ्यः शतेभ्यः स्वाहा चतुर्भ्यः शतेभ्यः स्वाहा पञ्चभ्यः शतेभ्यः स्वाहा षड्भ्यः शतेभ्यः स्वाहा सप्तभ्यः शतेभ्यः स्वाहाऽष्टाभ्यः शतेभ्यः स्वाहा नवभ्यः शतेभ्यः स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा (१) ॥

(पञ्चाशते द्वात्रिꣳशत् ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

(अथ सप्तमाष्टके द्वितीयप्रपाठक एकोनविंशोऽनुवाकः ।)

---

पञ्चाशते । स्वाहा । शताय । स्वाहा । द्वाभ्याम् । शताभ्याम् । स्वाहा । त्रिभ्य इति त्रि-भ्यः । शतेभ्यः ।

स्वाहा । चतुर्भ्य इति चतुः-भ्यः । शतेभ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । शतेभ्यः । स्वाहा । षड्भ्य इति षट्-भ्यः । शतेभ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । शतेभ्यः । स्वाहा । अष्टाभ्यः । शतेभ्यः । स्वाहा । नवभ्य इति नव-भ्यः । शतेभ्यः । स्वाहा । सहस्राय । स्वाहा । सर्वस्मै । स्वाहा । (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

(अथ सप्तमकाण्डे द्वितीयप्रपाठक एकोनविंशोऽनुवाकः)

---

अथ पञ्चाशत्संख्यामारभ्य पञ्चाशदुत्तराणां शतोत्तराणां च संघं दर्शयति—

पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा त्रिभ्यः शतेभ्यः स्वाहा चतुर्भ्यः शतेभ्यः स्वाहा पञ्चभ्यः शतेभ्यः स्वाहा षड्भ्यः शतेभ्यः स्वाहा सप्तभ्यः शतेभ्यः स्वाहाऽष्टाभ्यः शतेभ्यः स्वाहा नवभ्यः शतेभ्यः स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा, इति॥

एतैर्मन्त्रैर्द्वादशाऽऽहुतीर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

अथ सप्तमाष्टके द्वितीयप्रपाठके विंशोऽनुवाकः ।

---

शताय स्वाहा सहस्राय स्वाहाऽयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहाऽर्बुदाय स्वाहा न्यर्बुदाय स्वाहा समुद्राय स्वाहा मध्याय स्वाहाऽन्ताय स्वाहा परार्धाय स्वाहोषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( शतायाष्टात्रिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

साध्याः षड्रात्रं कुसुरुबिन्दः सप्तरात्रं बृहस्पतिरष्टरात्रं प्रजापतिः क्षुधं नवरात्रं प्रजापतिर्दशहोतारमृतवं ऐन्द्रवायवाग्रान्गायत्रो वै प्रजापतिः स द्वादशरात्रं न वा एकस्मा एकस्मै द्वाभ्यां त्रिभ्यश्चतुर्भ्यः पञ्चभ्यो दशभ्यो विंशत्यै पञ्चाशते शताय त्रिंशतिः ॥ २० ॥

साध्या अस्मा इमे लोका गायत्रं वै तृतीयमेकस्मै पञ्चाशत् ॥ ५० ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ सप्तमाष्टके द्वितीयप्रपाठके विंशोऽनुवाकः )

---

शताय । स्वाहा । सहस्राय । स्वाहा । अयुताय । स्वाहा । नियुतायेति नि—युताय । स्वाहा । प्रयुतायेति प्र—युताय । स्वाहा । अर्बुदाय । स्वाहा । न्यर्बुदायेति नि—अर्बुदाय । स्वाहा । समुद्राय । स्वाहा । मध्याय । स्वाहा । अन्ताय । स्वाहा । परार्धायेति परा—अर्धाय । स्वाहा । उषसे । स्वाहा । व्युष्ट्या इति वि—उष्ट्यै । स्वाहा । उदेष्यत इत्युत्—एष्यते । स्वाहा । उद्यत इत्युत्—यते । स्वाहा । उदितायेत्युत्—इताय । स्वाहा । सुवर्गायेति सुवः—गाय । स्वाहा । लोकाय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ सप्तमकाण्डे द्वितीयप्रपाठके विंशोऽनुवाकः । )

---

अथ शतसंख्यामारभ्योत्तरोत्तरदशगुणवृद्धियुक्तानां संख्यानां संग्रहा-

शताय स्वाहा सहस्राय स्वाहाऽयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहाऽर्बुदाय स्वाहा न्यर्बुदाय स्वाहा समुद्राय स्वाहा मध्याय स्वाहाऽन्ताय स्वाहा परार्धाय स्वाहोषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा, इति ॥

अत्र समुद्रादिशब्दाः सर्वे शतसहस्रादिशब्दवदुत्तरोत्तरदशगुणसंख्यावाचिन एव। परार्धप्रमाण आयुष्यार्धस्याऽऽवृत्तानां मानुषसंवत्सराणामवविभुता चरमसंख्या। न ह्यतोऽधिका काचित्संख्या क्वचिद्विद्यते। परार्धस्य द्वैगुण्ये तु परार्धद्वयमित्येव व्यवहरन्ति। तस्मात्संख्यावृद्धिविश्रान्तिस्थानमुक्त्वा।

कल्पः—'एतानन्नुवाकान्पुनः पुनरभ्यासं रात्रिशेषं हुत्वोषसे स्वाहेत्युषसि व्युच्छन्त्यै स्वाहेति व्युच्छन्त्यां व्युष्ट्यै स्वाहेति व्युष्टायामुदेष्यते स्वाहेत्युपोदयमुद्यते स्वाहेत्युद्यति उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते हुत्वा' इति। अत्र व्युच्छन्त्यै स्वाहेति शाखान्तरमन्त्रः। इतरे स्वशाखीया एव। अत्र ब्राह्मणो राज्यवसाने सति तदीया उषःकालादयोऽत्र विवक्षिताः। यद्वा मनुष्यप्रसिद्धाः। एवं सत्युषःशब्देन प्रभातोपक्रम उक्तः। व्युष्टिशब्देन सम्यक्प्रभातदशोक्ता। उदेष्यच्छब्देन सूर्योदयात्प्राचीनसमीपदशा। उद्यच्छब्देनोदयकालीनदशा। उदितशब्देनोदयादूर्ध्वभाविनी दशा। स्वर्गशब्देन द्युलोको विवक्षितः। लोकशब्देन प्रकाशयुक्तो भूतादिः। अत्रानुक्तसर्वविशेषसंग्रहार्थं सर्वस्मै स्वाहेत्यन्ते समाम्नातम्।

अत्र प्रपाठकस्य विनियोगसंग्रहः—

> षड्रात्रः स्याद्वितीयाद्ये द्वितीये सप्तरात्रकः।
> अष्टरात्रस्तृतीये स्याच्चतुर्थे नवरात्रकः ॥ १ ॥
> दशरात्रः पञ्चमेऽथ स्यादेकादशरात्रकः।
> षष्ठे काम्यग्रहाः सप्तमे समूढोऽष्टमे श्रुतः ॥ २ ॥

द्वादशाहगतानि स्युरहान्येकादशानि तु ।
नवमे दशमे तस्य शेषः सर्व उदीरितः ॥ १ ॥
अथाश्वमेधशेषाः स्युर्मन्त्राः सर्वाग्निहोमगाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके
विंशोऽनुवाकः ॥ २० ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
सप्तमकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ सप्तमाष्टके तृतीयः प्रपाठकः )

---

तत्र प्रथमोऽनुवाकः

---

हरिः ॐ ।

प्रजवं वा एतेन यन्ति यद्दशममहः पापा-
वहीयं वा एतेन भवन्ति यद्दशममहर्यो
वै प्रजवं यतामपथेन प्रतिपद्यते यः स्थाणुꣳ हन्ति
यो भ्रेषं न्येति स हीयते स यो वै दशमेऽहन्नवि-
वाक्य उपहन्यते स हीयते तस्मै य उपहताय
व्याह तमेवान्वारभ्य समश्नुतेऽथ यो व्याह सः (१)

हीयते तस्माद्दशमेऽहन्नविवाक्य उपहताय न व्युच्य-मथो खल्वाहुर्यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोक-मायन्यज्ञस्य व्यृद्धेनासुरान्पराऽभावयन्निति यत्खलु वै यज्ञस्य समृद्धं तद्यजमानस्य यद्व्यृद्धं तद्भ्रातृ-व्यस्य स यो वै दशमेऽहन्नविवाक्य उपहन्यते स एवार्तिं रेचयति ते ये बाह्या दशीकवः (२) स्युस्ते वि ब्रूयुर्यदि तत्र न विन्देयुरन्तः सदसाद्व्युच्यं यदि तत्र न विन्देयुर्गृहपतिना व्युच्यं तद्व्युच्यमेवाथ वा एतत्सर्पराज्ञिया ऋग्भिः स्तुवन्तीयं वै सर्पतो राज्ञी यद्वा अस्यां किं चार्चन्ति यदानृचुस्तेनेयꣳ सर्पराज्ञी ते यदेव किं च वाचाऽऽनृचुर्यदतोऽध्यर्चि-तारः (३) तदुभयमाप्त्वाऽवरुध्योत्तिष्ठामेति ताभि-र्मनसा स्तुवते न वा इमामश्वरथो नाश्वतरीरथः सद्यः पर्याप्तुमर्हति मनो वा इमाꣳ सद्यः पर्याप्तुम-र्हति मनः परिभवितुमथ ब्रह्म वदन्ति परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूꣳष्य-थैतस्यैवान्तो नास्ति यद्ब्रह्म तत्प्रतिगृणत आ चक्षीत स प्रतिगरः (४) ॥

( व्याह स दशीकवोऽर्चितारः स एकं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ सप्तमाष्टके तृतीयः प्रपाठकः । )

---

( तत्र प्रथमाऽनुवाकः । )

हरिः ॐ ।

प्रजवमिति प्र—जवम् । वै । एतेन । यन्ति । यत् । दशमम् । अहः । पापावहीयमिति पाप—अवहीयम् । वै । एतेन । भवन्ति । यत् । दशमम् । अहः । यः । वै । प्रजवमिति प्र—जवम् । यताम् । अपथेन । प्रतिपद्यत इति प्रति—पद्यते । यः । स्थाणुम् । हन्ति । यः । भ्रेषम् । न्येतीति नि—एति । सः । हीयते । सः । यः । वै । दशमे । अहन् । अविवाक्य इत्यवि—वाक्ये । उपहन्यत इत्युप—हन्यते । सः । हीयते । तस्मै । यः । उपहतायेत्युप—हताय । व्याहेति वि—आह । तम् । एव । अन्वारभ्येत्यनु—आरभ्य । समिति । अश्नुते । अथ । यः । व्याहेति वि—आह । सः ( १ ) । हीयते । तस्मात् । दशमे । अहन् । अविवाक्य इत्यवि—वाक्ये । उपहतायेत्युप—हताय । न । व्युच्यमिति वि—उच्यम् । अथो इति । खलु । आहुः । यज्ञस्य । वै । समृद्धेनेति सम्—ऋद्धेन । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । यज्ञस्य । व्यृद्धेनेति वि—ऋद्धेन । असुरान् । परेति । अभावयन् । इति । यत् । खलु ।

वै। यज्ञस्यं। समृद्धमिति सम्–ऋद्धम्। तत्। यजमानस्य। यत्। व्यृद्धमिति वि–ऋद्धम्। तत्। भ्रातृव्यस्य। सः। यः। वै। दशमे। अहन्। अविवाक्य इत्यवि–वाक्ये। उपहन्यत इत्युप–हन्यते। सः। एव। अतीति। रेचयति। ते। ये। बाह्याः। दृशीकर्वः (२)। स्युः। ते। वीति। ब्रूयुः। यदि। तत्रं। न। विन्देयुः। अन्तःसदसादित्यन्तः–सदसात्। व्युच्यमिति वि–उच्यम्। यदि। तत्रं। न। विन्देयुः। गृहपतिनेति गृह–पतिना। व्युच्यमिति वि–उच्यम्। तत्। व्युच्यमिति वि–उच्यम्। एव। अथ। वै। एतत्। सर्पराज्ञिया इति सर्प–राज्ञियाः। ऋग्भिरित्यृक्–भिः। स्तुवन्ति। इयम्। वै। सर्पतः। राज्ञी। यत्। वै। अस्याम्। किम्। च। अर्चन्ति। यत्। आनृचुः। तेन। इयम्। सर्पराज्ञीति सर्प–राज्ञी। ते। यत्। एव। किम्। च। वाचा। आनृचुः। यत्। अतोधि। अर्चितारः (३)। तत्। उभयम्। आप्त्वा। अवरुध्येत्यव–रुध्य। उदिति। तिष्ठाम। इति। ताभिः। मनसा। स्तुवते। न। वै। इमाम्। अश्वरथ इत्यश्व–रथः। न। अश्वतरीरथ इत्यश्वतरी–रथः। सद्यः। पर्याप्तुमिति परि–आप्तुम्। अर्हति। मनः। वै। इमाम्। सद्यः। पर्याप्तुमिति परि–आप्तुम्। अर्हति। मनः। परिभवितु–

मिति परि—भवितुम् । अथ । ब्रह्म । वदन्ति । परिमिता इति परि—मिताः । वै । ऋचः । परिमितानीति परि—मितानि । सामानि । परिमितानीति परि—मितानि । यजूंषि । अथ । एतस्य । एव । अन्तः । न । अस्ति । यत् । ब्रह्म । तत् । प्रतिगृणत इति प्रति—गृणते । एति । चक्षीत । सः । प्रतिगर इति प्रति—गरः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ सप्तमकाण्डे तृतीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
षड्रात्राद्या द्वादशाहपर्यन्ता वर्णिताः क्रमात् ।
द्वितीयेऽथ तृतीयेऽस्मिन्सत्रजातमुदीर्यते ॥

तत्र प्रथमेनानुवाकेन पूर्वोक्तद्वादशाहशेषत्वेन दशमेऽह्नि कियानपि विशेषोऽभिधीयते ।

प्रथमं तावत्प्रमादाद्विस्मृतस्य कस्यचिदङ्गस्य स्मारणायान्येन वच[:] प्रतिषेधति—

प्रजवं वा एतेन यन्ति यद्दशममहः पापावहीयं वा एतेन भवन्ति यद्दशममहर्यो वै प्रजवं यतामपथेन प्रतिपद्यते यः स्थाणुꣳ हन्ति यो भ्रेषं न्येति स हीयते स यो वै दशमेऽहन्नविवाक्य उपहन्यते स हीयते तस्मै य उपहताय व्याह तमेवान्वारभ्य

**समश्नुतेऽथ यो व्याह स हीयते तस्माद्दश-
मेऽहन्नविवाक्य उपहताय न व्युच्यम्,** इति।

यदिदं दशममहरस्ति एतेन प्रजवं यन्ति अत्रानुष्ठेयाङ्गबाहुल्यात्तस्मिन्ने-
वाह्नि कृत्स्नसमाप्तये प्रकृष्टो जवो वेगो यथा भवति तथैवानुतिष्ठन्ति। इयता
प्रयासेनैतदनुष्ठाने कारणमुच्यते—यद्दशममहरस्त्येतेन पापावहीयं भवन्ति पाप-
स्यावहीयं हानिः पापक्षयमेतेनाह्ना भवन्ति प्राप्नुवन्ति। तस्मात्प्रयासं सोढ्वाऽ-
पि त्वरया तदहरनुष्ठेयम्। त्वयाऽनुष्ठातुः स्खलने लौकिको दृष्टान्त उच्यते—
चोरव्याघ्रादिभयाकुलमहारण्ये प्रजवं यतां प्रकर्षेण वेगो यथा भवति तथा
गच्छतां पुरुषाणां मध्ये यः कोऽपि मन्दबुद्धिः पुरुषः पण्डितंमन्यः सन्सर्वेषां
पुरतस्त्वरया गच्छन्बुद्ध्यपराधाद्राजमार्गं परित्यज्य केनाप्यमार्गेण गच्छति।
पश्चान्यः पुरुषः सहसा गच्छन्पुरोवर्तिनं स्थाणुमदृष्ट्वा पादेन तं स्थाणुं हन्ति।
योऽप्यन्यः पुरुषः कण्टकादिना रोगेण वा पीडितः सन्श्लेषं न्येति गन्तुमशक्तो
गमनभ्रंशं नितरां प्राप्नोति, स त्रिविधोऽपि पुरुषो हीयते रक्षाहेतोः सहाय-
भूताद्गच्छतो जनसंघाद्धीनो भवति। यथाऽयं त्रिविधः पुरुषो हीनस्तथा
दशमेऽह्न्यपि विस्मृताङ्गानुष्ठानः पुरुष ऋत्विक्संघाताद्धीयते। सोऽयं दार्ष्टा-
न्तिक इहाभिधीयते। स यो वा एतेषां मध्ये यः कोऽप्यृत्विग्दशमेऽह्न्युप-
हन्यतेऽस्मिन्नहन्यङ्गानुष्ठानविस्मृतिलक्षणमुपघातं प्राप्नोति। सोऽयमृत्वि-
क्सम्यगनुष्ठातृभ्य ऋत्विग्भ्यो हीनो भवति। अविवाक्य इत्यनेन दशममहर्वि-
शेष्यते। अन्येषु यागेषु यत्प्रमादादेकेन विस्मृतमङ्गं तदन्येन स्मारयितुं वक्तव्यं
भवति। विकल्पं च तद्वाक्यं वक्तव्यं चेति विवाक्यं, न विद्यते विवाक्य-
मस्मिन्नहनि तदहरविवाक्यम्, एकेन विस्मृतमङ्गं जानताऽप्यन्येनास्मिन्नहनि
वक्तव्यमित्यर्थः। एवं सत्युपहताय स्खलितानुष्ठानाय तस्मा ऋत्विजे
योऽन्यः कश्चिदृत्विग्व्याह विस्मृतं त्वयेदमिति ब्रूते तमेव वक्तारमन्वारभ्याव-
लम्ब्य स्खलितानुष्ठानः स ऋत्विक्समश्नुते सम्यगनुतिष्ठति। अथानन्तरं
योऽन्यो व्याह विकल्पं ब्रूते सोऽयं विवेचनेनापराधेन सम्यगनुष्ठातृभ्य ऋत्वि-
ग्भ्यो हीयते। तस्मात्कारणादविवाक्येऽस्मिन्दशमेऽह्न्युपहताय स्खलितानु-
ष्ठानाय न व्युच्यं विकल्पमङ्गं न वक्तव्यम्।

पक्षान्तरमाह—

अथो खल्वायुर्यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमा-
यन्यज्ञस्य व्यृद्धेनासुरान्पराऽभावयन्निति यत्खलु वै
यज्ञस्य समृद्धं तद्यजमानस्य यद्व्यृद्धं तद्भ्रातृव्यस्य
स यो वै दशमेऽहन्नविवाक्य उपहन्यते स एवाति
रेचयति ते ये बाह्या दृशीकवः स्युस्ते विब्रूयुः, इति ।

अभिज्ञास्त्वेवमाहुः—यज्ञस्य यत्संपूर्णमनुष्ठानं तेन देवाः स्वर्गं गताः । यज्ञस्य यदनुष्ठानं विकलं तेनासुरान्पराभावयन्पराभवं प्रापितवन्तः । संपूर्णफलं यजमानगामि विकलं तु भ्रातृव्यगामि । एवं सति दशमेऽहनि यो यजमान उपहन्यते स्खलितानुष्ठानो भवति स एव यजमानोऽतिरेचयति शास्त्रीयमनुष्ठानमतिलङ्घयति । तथा सत्यनुष्ठानस्य विकलत्वेन न्यूनफलत्वात्तत्फलं भ्रातृव्यगामि स्यात् । अतस्तत्परिहाराय विरुद्धं वक्तव्यमेव । तदाऽस्यृत्विजो वक्तुः पूर्वोक्तरीत्या प्रत्यवायो भविष्यतीति तत्परिहाराय यज्ञाङ्गभूतेभ्य ऋत्विग्भ्यो बहिर्भूता यज्ञं द्रष्टुमागता ये केचित्पुरुषाः सन्ति तेऽत्र विकलमङ्गं ब्रूयुः । एवं सत्यृत्विजः प्रत्यवायो न भविष्यति, विकलमङ्गं च समाहितं भवति ।

अथ पक्षान्तरमाह—

यदि तत्र न विन्देयुरन्तः सदसाद्व्युच्यम्, इति ।

तत्र तेषु द्रष्टुमागतेषु पुरुषेषु स्खलितप्रयोगाभिज्ञानृत्विग्यजमाना यदि न लभेरंस्तदानीमन्तःसदसात्सदसो यज्ञभूमेरन्तर्मध्ये वर्तमानैरेवर्त्विग्भिस्तद्विकलमङ्गं वक्तव्यम् ।

पुनरपि पक्षान्तरमाह—

यदि तत्र न विन्देयुर्गृहपतिना व्युच्यम्, इति ।

तत्र तेष्वृत्विक्षु वैकल्याभिज्ञान्पुरुषान्यदि न लभेरंस्तदानीं यजमानेन तद्विकलाङ्गं वक्तव्यम् ।

सर्वेषां पक्षाणां तात्पर्यं निगमयति—

तद्व्युच्यमेव, इति ।

किंबहुना द्रष्टुमागतैः पुरुषैर्वा तत्रत्यैर्ऋत्विग्भिर्वा यजमानेन वा सर्वथाऽपि तद्विकलमङ्गं वक्तव्यमेव । एवं तर्हि विकलस्यावश्यवक्तव्यत्वादविवाक्यत्वविशेषणमयुक्तमिति चेन्नैवम् । अन्यथा योजयितुं शक्यत्वात् । विवाक्यं विक

लाङ्गवचनं यथा प्रसक्तं न भवति तथा सावधानैरनुष्ठेयत्वादिदमहरावि-वाक्यम् । इतरेष्वहःसु कथंचिद्वैकल्येऽप्यनायासेन समाधातुं शक्यम् । अत्र तु समाधानं दुःशकमित्यवश्यमप्रमत्तैर्भवितव्यमित्यर्थः ।

अस्मिन्नहनि मानसग्रहकाले स्तोत्रविशेषं विधत्ते—

अथ वा एतत्सर्पराज्ञिया ऋग्भिः स्तुवन्तीयं वै सर्पतो राज्ञी यद्वा अस्यां किं चार्चन्ति यदानृचुस्तेनेयꣳ सर्पराज्ञी ते यदेव किं च वाचाऽऽनृचुर्यदतोऽध्यर्चितारस्तदुभयमाप्त्वाऽवरुध्योत्तिष्ठामेति , इति ।

अथ वा अनन्तरमेव मानसग्रहकाल इत्यर्थः । एतदेतस्मिन्नहनि सर्पराज्ञियाः सर्पस्वामिन्या भूमेः संबन्धिनीभिर्ऋग्भिर्भूमेः स्तुतिं कुर्युः । का सा सर्पराज्ञी कथं वा तस्याः सर्पराज्ञीत्वमिति तदुभयमुच्यते—इयमेव भूमिः सर्पतः संचारं कुर्वतः सर्वस्य प्राणिनो राज्ञी । एतेन का सेत्यस्योत्तरं संपन्नम् । अथ कथं सर्पराज्ञीत्वमित्यस्योत्तरमुच्यते-प्राणिनां मध्ये परस्परोपकार्योपकारित्वस्य सद्भावात्केचिदर्चकाः [अर्चनीयाश्च] । तत्र यत्किंचित्प्राणिजातमन्ये पुरुषा अर्चन्ति, यदानृचुर्येऽपि पुरुषा अर्चयितारः, तदुभयमप्यर्चनीयार्चयितृप्राणि-स्वरूपमस्यां पृथिव्यामेव वर्तते । तस्मात्सर्वतोऽर्चनादिव्यवहारं कुर्वतः प्राणि-जातस्याऽऽधार इति भूमिरियं सर्पराज्ञीत्युच्यते । तस्याः सर्पराज्ञियाः संब-न्धिन्य ऋचो भूमिर्भूम्नेत्यादयः । एते च मन्त्राः प्रथमकाण्डे पुनराधानप्रकरणे समाम्नाताः । ताश्च तत्रत्ये ब्राह्मण एतन्नाम्ना व्यवहृताः—‘ सर्पराज्ञिया ऋग्भि-र्गार्हपत्यमादधाति ’ इति । तस्माद्भूमिर्भूम्नेत्यादिभिरत्र स्तुतिं कुर्युः । स्तोतॄ-णामत्र कोऽभिप्राय इति सोऽयमुच्यते—यदेव किंचित्प्राणिजातमन्ये पुरुषा अस्यां भूमौ वाचा पूजितवन्तः, ये चास्या भूमेरुपर्यर्चितारस्तदुभयस्वरूपमपि स्तोतारो वयं प्राप्य तच्च स्वाधीनं कृत्वा पश्चादुत्तिष्ठामेत्येवमेताभिर्ऋग्भिः स्तोतॄणामयमभिप्रायः ।

स्तोत्रान्तरेभ्यः कंचिद्विशेषं विधत्ते—

ताभिर्मनसा स्तुवते न वा इमामश्वरथो नाश्वतरी-रथः सद्यः पर्याप्तुमर्हति मनो वा इमाꣳ सद्यः पर्याप्तुमर्हति मनः परिभवितुम् , इति ।

---

१ ख. घ. च ’ र्येर्चयिता’ ।

इतरैः स्तोत्रैर्वाचिकी स्तुतिः क्रियते। ताभिस्तु सर्पराज्ञीभिरत्र मानसग्रहस्य प्रवर्तमानत्वान्मनसा स्तुतिं कुर्युः। तत्रायं हेतुरुच्यते—बलवद्भिरश्वैर्युक्तो रथोऽश्वरथः। अश्वतर्यस्तु संकीर्णजातयोऽत्यन्तबलयुक्तास्ताभिर्युक्तोऽश्वतरीरथः। तयोरन्यतरोऽप्येकस्मिन्नेव दिने भूमिमिमां कृत्स्नां व्याप्तुं नार्हति। मनस्त्वेकस्मिन्नेव क्षणे सर्वां भूमिं व्याप्तुमर्हति। अनिष्टं च सर्वं तिरस्कर्तुमर्हति। तस्माद्भूमिविषयाभिर्ऋग्भिर्मनसैव स्तोतव्यम्।

यदुक्तं सूत्रकारेण—' होता चतुर्होतॄन्व्याचष्टे ' इति, तदिदं विधत्ते—

अथ ब्रह्म वदन्ति परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूꣳष्यथैतस्यैवान्तो नास्ति यद्ब्रह्म तत्प्रतिगृणत आ चक्षीत स प्रतिगरः, इति ॥

पूर्वोक्ताभिर्ऋग्भिः शंसनकाले यत्र यत्राध्वर्युः प्रतिगरं प्रयुङ्क्ते तत्र तत्र प्रतिगरकाले होता ब्रह्मशब्दाभिधेयं चतुर्होतृमन्त्रं ब्रूयात्। ' ब्रह्म वै चतुर्होतारः ' इति श्रुत्यन्तरात्तस्य मन्त्रस्य ब्रह्मत्वम्। ' पृथिवी होता। द्यौरध्वर्युः। ' इत्यादिक आरण्यकाण्डाम्नातश्चतुर्होतृमन्त्रः। एतेन सर्वेऽपि होतृमन्त्रा उपलक्षिताः। अत एव सर्वेषां होतृमन्त्राणां पृथक्प्रतिगरं सूत्रकारो दर्शयति—' ओमिति दशहोतुः प्रतिगरस्तथेति चतुर्होतुरोमिति पञ्चहोतुस्तथेति षड्ढोतुररात्स्म होतरिति सप्तहोतुः ' इति। शंसितुः प्रोत्साहजननं प्रतिगरः। तत्प्रतिगरविषयत्वेनारण्यकाण्डोक्ताः सर्वे दशहोत्रादिमन्त्रा होत्रा वक्तव्याः। तत्सर्वमत्र सगृंह्य ब्रह्मवदन्तीत्यनेन वाक्येन विधीयते। मन्त्रान्तरपरित्यागेन ब्रह्मण एव वदने हेतुरुच्यते—य ऋग्रूपामन्त्रास्ते परिमिताः क्वचित्क्वचिदेव प्रायोज्यत्वात्। एवं यजुषां साम्नां च परिमितत्वम्। यत्तु ब्रह्मशब्दाभिधेयं होतृमन्त्रजातमेतस्यैवान्तः परिमितत्वं नास्ति बहुषु प्रदेशेषु प्रयोक्तव्यत्वात्। तस्माद्ब्रह्मशब्दाभिधेयं होतृमन्त्रजातं प्रतिगृणते प्रतिगरार्थमुद्युक्तायाध्वर्यवे होता ब्रूयात्। सोऽयं होतृमन्त्रसंघः प्रतिगीर्यत इति प्रतिगरः, अध्वर्युकर्तृकायाः प्रतिगरणक्रियायाः कर्मभूत इत्यर्थः।

अत्र मीमांसा।

दशमाध्यायस्य षष्ठपादे त्रयोदशाधिकरणे चिन्तितम्—

मानसं किमहर्भिन्नमङ्गं वा दशमेऽहनि।
भिन्नं स्तुत्यादिनाऽङ्गं तद्विसर्गोक्त्यादिभिर्भवेत् ॥

(अहीनद्वादशाहकथनम्)

द्वादशाहे मानसग्रहणं श्रूयते—'अनया त्वा पृथिव्या पात्रेण समुद्रꣳ रसया प्रजापतये जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति' इति। अयमर्थः—पृथिवी पात्रं समुद्रः सोमस्तद्रसः प्रजापतिर्देवता। एवं विशिष्टस्य ग्रहस्य ग्रहणे मनः साधनम्। तदिदं मानसमिति। एतच्च द्वादशभ्योऽहोभ्यो भिन्न-महस्त्रयोदशेऽहनि कर्तव्यो यागविशेषः। कुतः, स्तुत्यादिभ्यः। मानसेन द्वादशाहस्य स्तुतिरेवमाम्नायते—'द्वादशाहस्य हृतरसानि च्छन्दांसि तानि मानसेनाऽऽप्याययन्ति' इति। स्तुतिसाधनं च मानसं स्तोतव्याद्भिन्नं भवितुं युक्तम्। तथा व्यपदेशभेदोऽपि श्रूयते—'वाग्वै द्वादशाहो मनो मानसम्' इति। एवमाद्युपपत्तिभिर्भिन्नमहरिति प्राप्ते ब्रूमः—दशमस्याह्नोऽङ्गं तत्स्याद्विसर्गोक्त्यादिभ्यः। 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति विसर्गोक्तिः। इयं च दशमाहाङ्गत्वं गमयति। अहरन्तरत्वे द्वादशाहसमार-म्भ्या च विरुध्यते। अङ्गभूतेनापि मानसेन स्तुतिव्यपदेशभेदादिकमुपपद्यते। तस्मादङ्गम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः।)

---

ब्रह्मवादिनो वदन्ति किं द्वादशाहस्य प्रथमेना-ह्नर्त्विजां यजमानो वृङ्क्त इति तेज इन्द्रियमिति किं द्वितीयेनेति प्राणानन्नाद्यमिति किं तृतीयेनेति त्रीनिमाँल्लोकानिति किं चतुर्थेनेति चतुष्पदः पशूनिति किं पञ्चमेनेति पञ्चाक्षरां पङ्क्तिमिति किꣳ षष्ठेनेति षड्ऋतूनिति किꣳ सप्तमेनेति सप्तपदाꣳ शक्वरीमिति (१) किमष्टमेनेत्यष्टाक्षरां गायत्रीमिति किं नवमेनेति त्रिवृतꣳ स्तोममिति किं

दशमेनेति दशाक्षरां विराजमिति किमेकादशेनेत्ये-
कादशाक्षरां त्रिष्टुभमिति किं द्वादशेनेति द्वादशाक्षरां
जगतीमित्येतावद्वा अस्ति यावदेतद्यावदेवास्ति
तदेषां वृङ्क्ते ( २ ) ॥

( शक्करीमित्येकचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । किम् ।
द्वादशाहस्येति द्वादश—अहस्य । प्रथमेन । अह्ना ।
ऋत्विजाम् । यजमानः । वृङ्क्ते । इति । तेजः । इन्द्रियम् ।
इति । किम् । द्वितीयेन । इति । प्राणानिति प्र—अनान् ।
अन्नाद्यमित्यन्न—अद्यम् । इति । किम् । तृतीयेन । इति ।
त्रीन् । इमान् । लोकान् । इति । किम् । चतुर्थेन । इति ।
चतुष्पद इति चतुः—पदः । पशून् । इति । किम् । पञ्च-
मेन । इति । पञ्चाक्षरामिति पञ्च—अक्षराम् । पङ्क्तिम् । इति ।
किम् । षष्ठेन । इति । षट् । ऋतून् । इति । किम् । सप्त-
मेन । इति । सप्तपदामिति सप्त—पदाम् । शक्करीम् ।
इति ( १ ) । किम् । अष्टमेन । इति । अष्टाक्षरामि-

त्यष्टा—अक्षराम् । गायत्रीम् । इति । किम् । नवमेन ।
इति । त्रिवृतमिति त्रि—वृतम् । स्तोमम् । इति । किम् ।
दशमेन । इति । दशाक्षरामिति दश—अक्षराम् । विराज-
मिति वि—राजम् । इति । किम् । एकादशेन । इति ।
एकादशाक्षरामित्येकादश—अक्षराम् । त्रिष्टुभम् । इति ।
किम् । द्वादशेन । इति । द्वादशाक्षरामिति द्वादश—अक्षराम् ।
जगतीम् । इति । एतावत् । वै । अस्ति । यावत् ।
एतत् । यावत् । एव । अस्ति । तत् । एषाम् ।
वृङ्क्ते ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ) ।

---

प्रथमेऽनुवाके द्वादशाहगतमविवाक्यमहः प्रपञ्चितम् । अथ द्वितीये प्रश्नो-
त्तराभ्यामहीनद्वादशाह आर्त्विज्यनिन्दामुखेन तद्याजिनं यजमानं प्रशंसति—

ब्रह्मवादिनो वदन्ति किं द्वादशाहस्य प्रथमेनाह्न-
र्त्विजां यजमानो वृङ्क्त इति तेज इन्द्रियमिति किं
द्वितीयेनेति प्राणानन्नाद्यमिति किं तृतीयेनेति त्रीनि-
माँल्लोकानिति किं चतुर्थेनेति चतुष्पदः पशूनिति किं
पञ्चमेनेति पञ्चाक्षरां पङ्क्तिमिति किꣳ षष्ठेनेति षडृत-
तूनिति किꣳ सप्तमेनेति सप्तपदाꣳ शक्करीमिति किम-
ष्टमेनेत्यष्टाक्षरां गायत्रीमिति किं नवमेनेति त्रिवृतꣳ

स्तोममिति किं दशमेनेति दशाक्षरां विराजमिति किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभमिति किं द्वादशेनेति द्वादशाक्षरां जगतीमित्येतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते, इति ॥

अहीनस्य द्वादशाहस्यानुष्ठाता यजमान ऋत्विजां संबन्धि यच्छ्रेयोऽस्ति तत्सर्वं तैर्वर्जितं यथा भवति तथा स्वयं सर्वमादत्त इत्येतमर्थं(*सिद्धवत्कृत्य केनाहर्विशेषेण कं फलविशेषमादत्त इत्येवं) ब्रह्मवादिनः पप्रच्छुः। तत्राभिज्ञः कश्चित्तेजआदिकं क्रमेणाऽऽदत्त इत्युत्तरं ब्रूते। पञ्चाक्षरपादान्वितं यत्पाङ्क्तच्छन्दस्तेन साध्यं फलं वृङ्क्ते। एवं तत्र तत्र यथायोगमुन्नेयम्। एतैरुक्तैर्द्वादशभिर्वाक्यैर्यावदेतच्छ्रेय उक्तमेतावदेवर्त्विजां विद्यमानं श्रेयः। अतो यावदेषामस्ति तत्सर्वं यजमान आदत्ते।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः।)

---

एष वा आप्तो द्वादशाहो यत्त्रयोदशरात्रः समानꣳ ह्येतदहर्यत्प्रायणीयश्चोदयनीयश्च त्र्यतिरात्रो भवति त्रय इमे लोका एषां लोकानामाप्त्यै प्राणो वै प्रथमोऽतिरात्रो व्यानो द्वितीयोऽपानस्तृतीयः प्राणापानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति सर्वमायुर्यन्ति य एवं विद्वाꣳसस्त्रयोदशरात्रमासते तदाहुर्वाग्वा एषा वितता (१) यद्द्वादशाहस्तां

---

* धनुश्चिह्नान्तर्गतं ख. पुस्तक एव।

वि च्छिन्द्युर्यन्मध्येऽतिरात्रं कुर्युरुपदासुका गृहपते-र्वाक्स्यादुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति संततामेव वाचमव रुन्धतेऽनुपदासुका गृहपतेर्वाग्भवति पशवो वै छन्दोमा अन्नं महाव्रतं यदुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति पशुषु चैवान्नाद्ये च प्रति तिष्ठन्ति ( २ ) ॥

( वितता त्रिचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

एषः । वै । आप्तः । द्वादशाह इति द्वादश–अहः । यत् । त्रयोदशरात्र इति त्रयोदश–रात्रः । समानम् । हि । एतत् । अहः । यत् । प्रायणीय इति प्र–अयनीयः । च । उदयनीय इत्युत्–अयनीयः । च । त्र्यतिरात्र इति त्रि–अतिरात्रः । भवति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । आप्त्यै । प्राण इति प्र–अनः । वै । प्रथमः । अतिरात्र इत्यति–रात्रः । व्यान इति वि–अनः । द्वितीयः । अपान इत्यप–अनः । तृतीयः । प्राणा-

पानोदानेष्विति प्राणापान—उदानेषुं । एव । अन्नाद्य इत्यंन्न—अद्यें । प्रतीति । तिष्ठन्ति । सर्वम् । आयुः । यन्ति । ये । एवम् । विद्वाꣳसः । त्रयोदशरात्रमिति त्रयो-दश—रात्रम् । आसते । तत् । आहुः । वाक् । वै । एषा । वितंतेति वि—तता ( १ ) । यत् । द्वादशाह इति द्वादश—अहः । ताम् । वीति । छिन्द्युः । यत् । मध्ये । अतिरात्र-मित्यंति—रात्रम् । कुर्युः । उपदासुकेत्युंप—दासुका । गृह-पतेरिति गृह—पतेः । वाक् । स्यात् । उपरिष्टात् । छन्दो-मानामिति छन्दः—मानाम् । महाव्रतमिति महा—व्रतम् । कुर्वन्ति । संततामिति सं—तताम् । एव । वाचम् । अवेति । रुन्धते । अनुपदासुकेत्यनुप—दासुका । गृहपतेरिति गृह—पतेः । वाक् । भवति । पशवः । वै । छन्दोमा इति छन्दः—माः । अन्नम् । महाव्रतमिति महा—व्रतम् । यत् । उपरिष्टात् । छन्दोमानामिति छन्दः—मानाम् । महाव्रतमिति महा—व्रतम् । कुर्वन्ति । पशुषु । च । एव । अन्नाद्य इत्यंन्न—अद्यें । च । प्रतीति । तिष्ठन्ति ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीये द्वादशाहयाजिनः प्रसंशाऽभिहिता । अथ तृतीये त्रयोदशरात्रोऽभिधीयते—

एष वा आप्तो द्वादशाहो यत्त्रयोदशरात्रः समान॑ᳲ ह्येतदहर्यत्प्रायणीयश्चोदयनीयश्च, इति ।

योऽयं त्रयोदशरात्रो विधास्यमान एष एव संपूर्णो द्वादशाहः । पूर्वस्माद्द्वादशाहादेकदिनाधिक्येन फलाधिक्यां[1]दिनाधिक्ये सति केन साम्येन द्वादशाहत्वमिति चेत् । तदुच्यते—प्रायणीय उदयनीयश्चेत्युभयं द्वादशाहे यादृशं तादृशमेवात्रापीति द्विविधस्याह्नः समानत्वाद्द्वादशाहत्वोपचारः ।

अथ विशेषं विधत्ते—

त्र्यतिरात्रो भवति त्रय इमे लोका एषां लोकानामाप्त्यै, इति ।

द्वादशाहे प्रायणीयोदयनीयौ द्वावेवातिरात्रौ । अत्र तु मध्येऽपि कश्चिदतिरात्रः । तेन लोकत्रयप्राप्तिः । अत्राहःक्लृप्तिं सूत्रकारो दर्शयति—' अतिरात्रः पृष्ठ्यः षडहः सर्वस्तोमोऽतिरात्रश्चत्वारश्छन्दोमा अतिरात्रः ' इति । यद्यपि चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्यास्त्रय एव च्छन्दोमा विद्यमानास्तथाऽप्यन्ताल्लोपो वृद्धिर्वेति न्यायेनाष्टाचत्वारिंशस्याऽऽवृत्त्या चतुःसंख्या पूरणीया ।

अथ त्रयोदशरात्रं विधत्ते—

प्राणो वै प्रथमोऽतिरात्रो व्यानो द्वितीयोऽपानस्तृतीयः प्राणापानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति सर्वमायुर्यन्ति य एवं विद्वाᳲसस्त्रयोदशरात्रमासते, इति ।

व्यानेनोदानादीनामप्युपलक्षितत्वादुदानेनोपसंहारो न विरुद्धः ।

योऽयं मध्यमोऽतिरात्रस्तस्य च्छन्दोमानामधस्तात्सूत्रकारः शाखान्तरानुसारेण स्थानं निर्दिदेश तदिदं दूषयित्वा छन्दोमानामुपरि स्थानं विधत्ते—

तदाहुर्वाग्वा एषा वितता यद्द्वादशाहस्तां विच्छिन्द्युर्यन्मध्येऽतिरात्रं कुर्युरुपदासुका गृहपतेर्वा-

---

[1] क. घ. ङ. °क्यादिना° ।

क्स्यादुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति संततामेव वाचमव रुन्धतेऽनुपदासुका गृहपतेर्वाग्भवति, इति ।

योऽयं द्वादशाहोऽस्ति सोऽयं विस्तीर्णवाक्स्वरूपः । तत्रत्येष्वहःसु विद्यमानानां स्तोत्रशस्त्राणामविच्छेदस्य प्रकृतिभूते तस्मिन्द्वादशाहे क्रृप्तत्वात् । एवं च सति षडहस्य च्छन्दोमानां च मध्ये यदि कश्चिदन्यः सर्वस्तोमोऽतिरात्रोऽनुष्ठीयेत तदानीं द्वादशाहगतां क्रृप्तां संततां वाचमनुष्ठातारो विच्छिन्द्युः। तथा सति यजमानस्य वागुपक्षयशीला स्यात् । अतस्तत्परिहाराय च्छन्दोमानामुपरि यदविवाक्यमहर्द्वादशाहगतं तदेवाहः सर्वस्तोमातिरात्ररूपं कुर्यात् । तस्मिंश्च महाव्रतधर्मातिदेशाभिप्रायेण महाव्रतशब्दप्रयोगः । एवमुपरिष्टादनुष्ठाने सति संततामेव वाचं प्राप्नोति । न तु यजमानस्य वागुपक्षीयते ।

तदेवोपरिष्टादनुष्ठानं प्रकारान्तरेण प्रशंसति—

पशवो वै छन्दोमा अन्नं महाव्रतं यदुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति पशुषु चैवान्नाये च प्रति तिष्ठन्ति, इति ॥

सत्सु प्रथमं पशुषु पश्चाद्घृतक्षीरादिरूपमन्नाद्यं युक्तम् । तस्मादन्नरूपस्य महाव्रतधर्मकस्यातिरात्रस्योपरिष्टादेवानुष्ठानं न्याय्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ।)

---

आदित्या अकामयन्तोभयोर्लोकयोर्ऋध्नुयामेति त एतं चतुर्दशरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै त उभयोर्लोकयोरार्ध्नुवन्नस्मिꣳश्चामुष्मिꣳश्च य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋ-

ध्रुवन्त्यस्मिꣳश्चामुष्मिꣳश्च चतुर्दशरात्रो भवति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्यै यत्पराचीनानि पृष्ठानि (१) भवन्त्यमुमेव तैर्लोकमभि जयन्ति यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकमभि जयन्ति त्रयस्त्रिꣳशौ मध्यतः स्तोमौ भवतः साम्राज्यमेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानां भवन्त्यतिरात्रा-वभितो भवतः परिगृहीत्यै (२) ॥

(पृष्ठानि चतुस्त्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः।)

---

आदित्याः । अकामयन्त । उभयोः । लोकयोः । ऋध्नुयाम । इति । ते । एतम् । चतुर्दशरात्रमिति चतुर्दश-रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अय-जन्त । ततः । वै । ते । उभयोः । लोकयोः । आर्ध्नुवन् । अस्मिन् । च । अमुष्मिन् । च । ये । एवम् । विद्वाꣳसः । चतुर्दशरात्रमिति चतुर्दश-रात्रम् । आसते । उभयोः । एव । लोकयोः । ऋध्नुवन्ति । अस्मिन् । च । अमुष्मिन् ।

च । चतुर्दशरात्र इति चतुर्दश-रात्रः । भवति । सप्त । ग्राम्याः । ओषधयः । सप्त । आरण्याः । उभयीषाम् । अवरुद्ध्या इत्यव-रुद्ध्यै । यत् । पराचीनानि । पृष्ठानि (१) । भवन्ति । अमुम् । एव । तैः । लोकम् । अभीति । जयन्ति । यत् । प्रतीचीनानि । पृष्ठानि । भवन्ति । इमम् । एव । तैः । लोकम् । अभीति । जयन्ति । त्रयस्त्रिꣳशाविति त्रयः-त्रिꣳशौ । मध्यतः । स्तोमौ । भवतः । साम्राज्यमिति साम्-राज्यम् । एव । गच्छन्ति । अधिराजावित्यधि-राजौ । भवतः । अधि-राजा इत्यधि-राजाः । एव । समानानाम् । भवन्ति । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । परिगृहीत्या इति परि-गृहीत्यै (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः )

---

तृतीयेऽनुवाके त्रयोदशरात्रोऽभिहितः । अथ चतुर्थे चतुर्दशरात्रोऽभि ।

तमेतं विधत्ते—

आदित्या अकामयन्तोभयोर्लोकयोर्ऋध्नुयामेति त एतं चतुर्दशरात्रमपश्यन्तमाऽहरन्तेनाय-

जन्त ततो वै त उभयोर्लोकयोरार्ध्नुवन्नस्मिꣳ-श्चामुष्मिꣳश्च य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च, इति।

तत्राह्नां संख्यां प्रशंसति—

चतुर्दशरात्रो भवति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्यै, इति।

ग्राम्याश्चाऽऽरण्याश्चासकृद्व्याख्याताः।

प्रायणीयोदयनीययोर्मध्यवर्तीनि द्वादशसंख्याकान्यहानि विधत्ते—

यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोक-मभि जयन्ति यत्प्रतीचीनानि पृष्ठानि भव-न्तीममेव तैर्लोकमभि जयन्ति, इति।

रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यैः पृष्ठस्तोत्रैरुक्तान्यहानि पृष्ठा-नीत्युच्यन्ते। तेषामुक्तोऽनुक्रमः पराचीनत्वं, विपरीतक्रमः प्रतीचीनत्वम्। तेन द्वैविध्येन लोकद्वयप्राप्तिः।

एतमेवाऽऽरोहावरोहप्रकारं पुनः प्रशंसति—

त्रयस्त्रिꣳशौ मध्यतः स्तोमौ भवतः साम्राज्यमेव गच्छन्त्यधिराजौ भवतोऽ-धिराजा एव समानानां भवन्ति, इति।

त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इत्येष स्तोमानां षट्स्वि-ऽऽरोहक्रमः। त्रयस्त्रिंशस्त्रिणव एकविंशः सप्तदशः पञ्चदशस्त्रिवृदित्ययमव-रोहक्रमः। एवं च सत्येषु द्वादशस्वहःसु मध्ये षष्ठसप्तमयोरह्नोर्नैरन्तर्येण त्रयस्त्रिंशस्तोमौ संपद्येते। तेन च यजमानाः साम्राज्यं गच्छन्ति। किंचैता-वेषां स्तोमानामधिराजावर्वाचीनानां तत्रान्तर्भावात्। अतो यजमानाः समानानामन्येषामधिराजा भवन्ति।

अथ प्रायणीयोदयनीयात्रहर्विशेषौ विधत्ते—

अतिरात्रावभितो भवतः परिगृहीत्यै, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

प्रजापतिः सुवर्गं लोकमैत्तं देवा अन्वायन्ता-
नादित्याश्च पशवश्चान्वायन्ते देवा अब्रुवन्यान्पशू-
नुपाजीविष्म त इमेऽन्वाग्मन्निति तेभ्यं एतं चतुर्दश-
रात्रं प्रत्यौहन्त आदित्याः पृष्ठैः सुवर्गं लोकमाऽ-
रोहन्त्र्यहाभ्यामस्मिँल्लोके पशून्प्रत्यौहन्पृष्ठैरादित्या
अमुष्मिँल्लोक आर्ध्नुवन्त्र्यहाभ्यामस्मिन् ( १ )
लोके पशवो य एवं विद्वाꣳसश्चतुर्दशरात्रमासत
उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठै-
रेवामुष्मिँल्लोक ऋध्नुवन्ति त्र्यहाभ्यामस्मिँल्लोके
ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्त-
रिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति यद-
न्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि
भवन्ति सविवधत्वाय ( २ ) ओजो वै वीर्यं पृष्ठा-
न्योज एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां
यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो

अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्ङ्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति चतुर्दशै-तास्तासां या दश दशाक्षरा विराडन्नं विराड्वि-राजैवान्नाद्यमव रुन्धते याश्चतस्रश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्त्यतिरात्रावभितो भवतः परिगृहीत्यै ( ३ ) ॥

( आञ्जसायनी प्रत्यङ्ङ्यहाभ्यामस्मिन्त्संविवश्चत्वाय प्रतिष्ठित्या एकान्नत्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

प्रजापतिरिति प्रजा-पतिः । सुवर्गमिति सुवः-गम् । लोकम् । एत् । तम् । देवाः । अन्विति । आयन् । तान् । आदित्याः । च । पशवः । च । अन्विति । आयन् । ते । देवाः । अब्रुवन् । यान् । पशून् । उपाजीविष्मेत्युप-अजीविष्म । ते । इमे । अन्वागमन्नित्यनु-आगमन् । इति ।

तेभ्यः । एतम् । चतुर्दशरात्रमिति चतुर्दश-रात्रम् । प्रतीति । औहन् । ते । आदित्याः । पृष्ठैः । सुवर्गमिति सुवः-गम् । लोकम् । एति । अरोहन् । त्र्यहाभ्यामिति त्रि-अहाभ्याम् । अस्मिन् । लोके । पशून् । प्रतीति । औहन् । पृष्ठैः । आदित्याः । अमुष्मिन् । लोके । आर्ध्नुवन् । त्र्यहाभ्यामिति त्रि-अहाभ्याम् । अस्मिन् ( १ ) । लोके । पशवः । ये । एवम् । विद्वाꣳसः । चतुर्दशरात्रमिति चतुर्दश-रात्रम् । आसते । उभयोः । एव । लोकयोः । ऋध्नुवन्ति । अस्मिन् । च । अमुष्मिन् । च । पृष्ठैः । एव । अमुष्मिन् । लोके । ऋध्नुवन्ति । त्र्यहाभ्यामिति त्रि-अहाभ्याम् । अस्मिन् । लोके । ज्योतिः । गौः । आयुः । इति । त्र्यह इति त्रि-अहः । भवति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि-आरोहन्ति । यत् । अन्यतः । पृष्ठानि । स्युः । विविवधमिति वि-विवधम् । स्यात् । मध्ये । पृष्ठानि । भवन्ति । सविवधत्वायेति सविवध-त्वाय ( २ ) । ओजः । वै । वीर्यम् । पृष्ठानि । ओजः । एव । वीर्यम् । मध्यतः । दधते । बृहद्रथंतराभ्यामिति बृहत्-रथंतराभ्याम् । यन्ति । इयम् । वाव । रथंतरमिति रथं-तरम् । असौ ।

बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः ।
एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य ।
अञ्जसायनी इत्यञ्जसा—अयनी । स्रुती इति । ताभ्याम् ।
एव । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । पराञ्चः ।
वै । एते । सुवर्गमिति सुवः—गम् । लोकम् । अभ्यारोह-
न्तीत्यभि—आरोहन्ति । ये । पराचीनानि । पृष्ठानि । उप-
यन्तीत्युप—यन्ति । प्रत्यङ् । त्र्यह इति त्रि—अहः ।
भवति । प्रत्यवरूढ्या इति प्रति—अवरूढ्यै । अथो इति ।
प्रतिष्ठित्या इति प्रति—स्थित्यै । उभयोः । लोकयोः ।
ऋद्ध्वा । उदिति । तिष्ठन्ति । चतुर्दशेति चतुः—दश ।
एताः । तासाम् । याः । दश । दशाक्षरेति दश—अक्षरा ।
विराडिति वि—राट् । अन्नम् । विराडिति वि—राट् ।
विराजेति वि—राजा । एव । अन्नाद्यमित्यन्न—अद्यम् ।
अवेति । रुन्धते । याः । चतस्रः । चतस्रः । दिशः ।
दिक्षु । एव । प्रतीति । तिष्ठन्ति । अतिरात्रावित्यति—
रात्रौ । अभितः । भवतः । परिगृहीत्या इति परि—
गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ सप्तमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाक एकश्चतुर्दशरात्रोऽभिहितः । अथ पञ्चमेऽन्यश्चतुर्दशरात्रोऽभिधीयते ।

तमेव विधातुं प्रस्तौति—

प्रजापतिः सुवर्गं लोकमैत्तं देवा अन्वायन्ताना-
दित्याश्च पशवश्चान्वायन्ते देवा अब्रुवन्यान्पशूनु-
पाजीविष्म त इमेऽन्वाग्मन्निति तेभ्य एतं चतुर्दश-
रात्रं प्रत्यौहन्त आदित्याः पृष्ठैः सुवर्गं लोकमाऽरो-
हन्त्र्यहाभ्यामस्मिँल्लोके पशून्प्रत्यौहन्पृष्ठैरादित्या अमु-
ष्मिँल्लोक आर्ध्नुवन्त्र्यहाभ्यामस्मिँल्लोके पशवः, इति ।

यदा प्रजापतिः स्वर्गं गतस्तदा प्रजापतिमनु सर्वेऽपि देवा गताः । तान्देवाननु पश्चादादित्याः पशवश्च गताः । तानादित्यान्पशूनुभयविधान्दृष्ट्वा ते देवाः परस्परमिदमब्रुवन्—यान्पशूनुपेत्य मनुष्यैः सहिताः सर्वे वयमजीविष्म ते पशवः सर्वेऽप्यस्माकं पृष्ठत एव समागताः । आगतानामादित्यानां पशूनां च मध्य आदित्याः स्वर्गमारोहन्तु, पशवः प्रतिनिवृत्य भूमौ गच्छन्तु, तत्र क उपाय इति विचार्यैतं चतुर्दशरात्रं प्रत्यावृत्तिगुणयुक्तमनुष्ठितवन्तः । तत्रेयमहःक्लृप्तिः—आदावेकोऽतिरात्रः । ततो ज्योतिर्गौरायुरित्यारोहरूपस्त्रिरात्रः । ततः पृष्ठ्यः षडहः । तत आयुर्गौर्ज्योतिरित्यवरोहरूपस्त्रिरात्रः । ततोऽतिरात्र इति । तस्मिन्ननुष्ठिते सति पृष्ठशब्दाभिधेयैः षड्भिरहोभिरादित्याः स्वर्गमारोहन् । प्रत्यावृत्तियुक्ताभ्यां त्र्यहाभ्यां देवाः पशूनस्मिँल्लोके प्रतिनिवर्तितवन्तः । तत्राऽऽदित्याः पृष्ठैः स्वर्गं प्राप्य तत्र समृद्धिं गताः । पशवस्तु त्र्यहाभ्यामस्मिँल्लोके समृद्धिं गताः ।

तदिदानीं विधत्ते—

य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव
लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवामु-
ष्मिँल्लोक ऋध्नुवन्ति त्र्यहाभ्यामस्मिँल्लोके, इति ।

अथाऽऽरोहरूपं प्रथमं त्र्यहं विधत्ते—

ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति, इति।

ज्योतिष्टोमगोष्टोमायुष्टोमरूपा अहर्विशेषा मिलित्वा त्र्यहः। तेन च त्रित्वसाम्याल्लोकत्रयप्राप्तिर्भवति।

अथ षडहगतान्यहानि विधत्ते—

यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते, इति।

विवधशब्देनोभयतः शिक्योपेतः क्षीराज्यादिवाही काष्ठविशेष उच्यते। तस्य चोभयतो भारः समानः। एवं सत्यत्रायं पृष्ठ्यः षडह आदावन्ते वा एकस्मिन्पार्श्वे भवेत्तदा भारद्वयसाम्याभावाद्विविवधलक्षणमिदं कर्म स्यात्। अतो विवधसदृशत्वाय पृष्ठाख्यान्यहानि मध्ये कर्तव्यानि। किंचैतानि पृष्ठानि शरीरबलस्येन्द्रियसामर्थ्यस्य च हेतुत्वात्तद्रूपाणि। तस्मात्तेषां मध्येऽनुष्ठाने सत्योजो वीर्यं च मध्ये धृतं भवति।

अथ तेष्वहःसु चोदकप्राप्तानि वैरूपवैराजादिसामान्यपवादितुं विधत्ते—

बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति, इति।

प्रथमतृतीयपञ्चमेष्वहःसु रथंतरसाम्ना पृष्ठस्तोत्रं निष्पादनीयम्। द्वितीयचतुर्थषष्ठेष्वहःसु बृहत्साम्नेति विवेकः। अवशिष्टं वाक्यम् 'साध्या वै देवाः सुवर्गकामाः' इत्यस्मिन्ननुवाके व्याख्यातम्।

अथ प्रत्यवरोहरूपं त्र्यहं विधत्ते—

पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति, इति।

ये यजमाना अनुक्रमगतानि पृष्ठाख्यान्यहान्यनुतिष्ठन्त्येते यजमानाः प्रत्यावृत्तिरहिताः स्वर्गमारोहन्ति। अतः स्वर्गात्प्रत्यवरोहाय प्रत्यावृत्त आयुर्गौर्ज्योति-

रित्येवंविधस्त्र्यहः कर्तव्यः । अपि चायं त्र्यहोऽस्मिँल्लोके प्रतिष्ठायै संपद्यते तस्मादुभयोरपि लोकयोः समृद्धिं प्राप्योत्कर्षेण तिष्ठन्ति ।

अहर्गतां संख्यां प्रशंसति—

चतुर्दशैतास्तासां या दश दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते याश्चतस्र- श्चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठन्ति, इति ।

चतुर्दशरात्रक्रतुगता या रात्रय एताश्चतुर्दशसंख्याकास्तासां मध्ये या रात्रयो दशसंख्याकास्ताभिः संख्यासाम्याद्विराड्द्वाराऽन्नप्राप्तिः । यास्तूपरिष्टाच्चतस्रो रात्रयस्ताभिः संख्यासाम्याच्चतुर्दिक्षु प्रतितिष्ठन्ति ।

अथ प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतः परिगृहीत्यै, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय- तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमग- च्छत्स प्रजापतिमुपाधावत्तस्मा एतं पञ्चदशरात्रं प्रायच्छत्तमाऽहरत्तेनायजत ततो वै सोऽन्याभि- र्देवताभिर्व्यावृतमगच्छद्य एवं विद्वाꣳसः पञ्चदश- रात्रमासते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छन्ति ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योति- रन्तरिक्षम् ( १ ) गौरसावायुरेष्वेव लोकेषु प्रति

तिष्ठन्त्यसत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमै- रोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति पञ्चदशरात्रो भवति पञ्चदशो वज्रो वज्रमेव भ्रातृव्येभ्यः प्र हरन्त्य- तिरात्रावभितो भवत इन्द्रियस्य परिगृहीत्यै ( २ ) ॥

( अन्तरिक्षमिन्द्रियस्यैकं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

इन्द्रः । वै । सदृङ्ङिति स-दृङ् । देवताभिः । आसीत् । सः । न । व्यावृतमिति वि-आवृतम् । अगच्छत् । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । पञ्चदशरात्रमिति पञ्चदश-रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अन्याभिः । देवताभिः । व्यावृतमिति वि-आवृतम् । अगच्छत् । ये । एवम् । विद्वाꣳसः । पञ्चदशरात्रमिति पञ्चदश-रात्रम् । आसते । व्यावृतमिति वि-आवृतम् । एव । पाप्मना । भ्रातृव्येण । गच्छन्ति । ज्योतिः । गौः ।

आयुः । इति । त्र्यह इति त्रि-अहः । भवति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् (१) । गौः । असौ । आयुः । एषु । एव । लोकेषु । प्रतीति । तिष्ठन्ति । असत्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः-मम् । यत् । छन्दोमा इति छन्दः-माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः-मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः-माः । ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । पञ्चदशरात्र इति पञ्चदश-रात्रः । भवति । पञ्चदश इति पञ्च-दशः । वज्रः । वज्रम् । एव । भ्रातृव्येभ्यः । प्रेति । हरन्ति । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । इन्द्रियस्य । परिगृहीत्या इति परि-गृहीत्यै (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

(अथ सप्तमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ।)

---

पञ्चमे द्वितीयश्चतुर्दशरात्रोऽभिहितः । अथ षष्ठे पञ्चदशरात्रोऽभिधीयते तमेतं विधत्ते—

इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापतिमुपाधावत्तस्मा एतं पञ्चदशरात्रं प्रायच्छ-

त्तमाऽहरत्तेनायजत ततो वै सोऽन्याभिर्देवताभिर्व्या-
वृतमगच्छद्य एवं विद्वाꣳसः पञ्चदशरात्रमासते
व्यावृतमेव पाप्मना भ्रातृव्येण गच्छन्ति, इति।

देवस्वामित्वार्होऽपीन्द्रः स्वामित्वमलभमानोऽन्याभिर्देवताभिः समान एवाऽऽसीन्न तु व्यावृत्तिं प्राप्तवान्। ततः प्रजापतिं गत्वा प्रजापत्युपदेशात्पञ्चदशरात्रमनुष्ठाय व्यावृत्तिं प्राप्नोत्। तद्वदन्येऽपि तमनुष्ठाय पाप्मना भ्रातृव्येण च व्यावृत्ता भवन्ति।

तत्रैकं त्र्यहं विधत्ते—

ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्त-
रिक्षं गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठन्ति, इति।

अथ चतुरश्छन्दोमान्पृष्ठ्यं षडहं च विधत्ते—

असत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति
तेन सत्रं देवता एव पृष्ठैरव रुन्धते
पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा
ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, इति।

नात्र च्छन्दोमरहितस्य सत्रत्वनिषेधे तात्पर्यं, किंतु च्छन्दोमवतः प्रशंसायां तात्पर्यम्। अत एतस्य च्छन्दोमवत्त्वे सति प्रशस्तं सत्रं भवति। किंच पृष्ठसंज्ञकैरहोभिर्देवताः प्राप्नुवन्ति। छन्दोमैश्चतुर्भिः पशून्प्राप्नुवन्ति। किंच पृष्ठानां षण्णामह्नामोजोवीर्यरूपत्वाच्छन्दोमानां चतुर्णामह्नां पशुरूपत्वाच्च तदनुष्ठानेनोभे( भय )ओजआदिषु प्रतितिष्ठन्ति। तस्मात्पृष्ठ्यः षडहश्चत्वारश्छन्दोमा इत्येतानि दशाहान्यनुष्ठेयानीत्यर्थः।

अथ क्रतुगतामहः संख्या प्रशंसति—

पञ्चदशरात्रो भवति पञ्चदशो वज्रो
वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति, इति।

पञ्चदशस्तोमस्य हिंसाहेतुत्वाद्वज्रत्वम्। तद्धेतुत्वं च होतृब्राह्मणे समाम्नातम् 'तं पञ्चदशः स्तोमो मध्यत उदतृणत्' इति। एतत्संख्यासाम्येन पञ्चदशरात्रस्यापि वज्ररूपत्वात्तदनुष्ठातारो भ्रातृव्येभ्यो वज्रं प्रहरन्त्येव।

अथ प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवत इन्द्रियस्य परिगृहीत्यै, इति ॥

अस्य क्रतोरिन्द्रेणानुष्ठितत्वादत्रेन्द्रियपरिग्रहः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

इन्द्रो॒ वै शि॑थि॒ल इ॑वाप्रतिष्ठि॒त आ॑सी॒त्सोऽसु॑रेभ्यो॒ऽबिभे॒त्स प्र॒जाप॑तिमु॒पाधा॑व॒त्तस्मा॑ ए॒तं प॑ञ्चदशरा॒त्रं व॒ज्रं प्राय॑च्छ॒त्तेनासु॑रा॒न्परा॑भा॒व्य वि॒जित्य॒ श्रिय॑मगच्छदग्नि॒ष्टुता॑ पा॒प्मानं॒ निर॑दहत पञ्चदशरा॒त्रेणौजो॒ बल॑मिन्द्रि॒यं वी॒र्य॑मा॒त्मन्न॑धत्त॒ य ए॒वं वि॒द्वाꣳसः॑ पञ्चदशरा॒त्रमास॑ते॒ भ्रातृ॑व्याने॒व परा॑भा॒व्य वि॒जित्य॒ श्रियं॑ गच्छन्त्यग्नि॒ष्टुता॑ पा॒प्मानं॑ निः ( १ ) द॑ह॒न्ते प॑ञ्चदशरा॒त्रेणौजो॒ बल॑मिन्द्रि॒यं वी॒र्य॑मा॒त्मन्द॑धत ए॒ता ए॒व प॑श॒व्याः॑ पञ्च॑दश॒ वा अ॑र्धमा॒सस्य॒ रात्र॑योऽर्धमास॒शः सं॑वत्स॒र आ॑प्यते सं॑वत्स॒रं प॒शवोऽनु॒ प्र जा॑यन्ते॒ तस्मा॑त्पश॒व्या ए॒ता ए॒व सु॑व॒र्ग्याः॑ पञ्च॑दश॒ वा अ॑र्धमा॒सस्य॒ रात्र॑योऽर्धमास॒शः सं॑वत्स॒र आ॑प्यते सं॑वत्स॒रः सु॑व॒र्गो

लोकस्तस्मात्सुवर्ग्यो ज्योतिर्गौरायुरिति त्र्यहो भव-
तीयं वाव ज्योतिरन्तरिक्षम् (२) गौरसावायुरिमा-
नेव लोकानभ्यारोहन्ति यदन्यतः पृष्ठानि स्युर्विवि-
वधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो
वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते
बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्या-
मेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्या-
ञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकम् (३)
यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये
पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति
प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋ-
द्ध्वोत्तिष्ठन्ति पञ्चदशैतास्तासां या दश दशाक्षरा
विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते याः पञ्च
पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्यतिरात्रावभितो
भवत इन्द्रियस्य वीर्यस्य प्रजायै पशूनां
परिगृहीत्यै (४) ॥

(गच्छन्त्यभिष्टुतां पाप्मानं निरन्तरिक्षं लोकं
प्रजायै द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ सप्तमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

इन्द्रः । वै । शिथिलः । इव । अप्रतिष्ठित इत्यप्रति-स्थितः । आसीत् । सः । असुरेभ्यः । अबिभेत् । सः । प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावत् । तस्मै । एतम् । पञ्चदशरात्रमिति पञ्चदश—रात्रम् । वज्रम् । प्रेति । अयच्छत् । तेन । असुरान् । पराभाव्येति परा—भाव्य । विजित्येति वि—जित्य । श्रियम् । अगच्छत् । अग्निष्टुतेत्यग्नि—स्तुता । पाप्मानम् । निरिति । अदहत । पञ्चदश-रात्रेणेति पञ्चदश—रात्रेण । ओजः । बलम् । इन्द्रियम् । वीर्यम् । आत्मन् । अधत्त । ये । एवम् । विद्वाꣳसः । पञ्च-दशरात्रमिति पञ्चदश—रात्रम् । आसते । भ्रातृव्यान् । एव । पराभाव्येति परा—भाव्य । विजित्येति वि—जित्य । श्रियम् । गच्छन्ति । अग्निष्टुतेत्यग्नि—स्तुता । पाप्मानम् । निरिति ( १ )। दहन्ते । पञ्चदशरात्रेणेति पञ्चदश-रात्रेण । ओजः । बलम् । इन्द्रियम् । वीर्यम् । आत्मन् । दधते । एताः । एव । पशव्याः । पञ्चदशेति पञ्च—दश । वै । अर्धमासस्येत्यर्ध—मासस्य । रात्रयः । अर्धमासश इत्यर्धमास—शः । संवत्सर इति सं—वत्सरः । आप्यते । संवत्सरमिति सं—वत्सरम् । पशवः । अनु । प्रेति । जायन्ते ।

तस्मात्। पशव्याः। एताः। एव। सुवर्ग्या इति सुवः-ग्याः। पञ्चदशेति पञ्च-दश। वै। अर्धमासस्येत्यर्ध-मासस्य। रात्रयः। अर्धमासश इत्यर्धमास-शः। संवत्सर इति सं-वत्सरः। आप्यते। संवत्सर इति सं-वत्सरः। सुवर्ग इति सुवः-गः। लोकः। तस्मात्। सुवर्ग्या इति सुवः-ग्याः। ज्योतिः। गौः। आयुः। इति। त्र्यह इति त्रि-अहः। भवति। इयम्। वाव। ज्योतिः। अन्तरिक्षम् (२)। गौः। असौ। आयुः। इमान्। एव। लोकान्। अभ्यारोहन्तीत्यभि-आरोहन्ति। यत्। अन्यतः। पृष्ठानि। स्युः। विविवधमिति वि-विवधम्। स्यात्। मध्ये। पृष्ठानि। भवन्ति। सविवधत्वायेति सविवध-त्वाय। ओजः। वै। वीर्यम्। पृष्ठानि। ओजः। एव। वीर्यम्। मध्यतः। दधते। बृहद्रथंतराभ्यामिति बृहत्-रथंतराभ्याम्। यन्ति। इयम्। वाव। रथंतरमिति रथं-तरम्। असौ। बृहत्। आभ्याम्। एव। यन्ति। अथो इति। अनयोः। एव। प्रतीति। तिष्ठन्ति। एते इति। वै। यज्ञस्य। अञ्जसायनी इत्यञ्जसा-अयनी। स्रुती इति ताभ्याम्। एव। सुवर्गमिति सुवः-गम्। लोकम् (३)। यन्ति। पराञ्चः। वै। एते। सुवर्गमिति सुवः-गम्। लोकम्। अभ्यारोहन्तीत्यभि-आरोहन्ति। ये। पराची-

नानि । पृष्ठानि । उपयन्तीत्युप-यन्ति । प्रत्यङ् । त्र्यह इति त्रि-अहः । भवति । प्रत्यवरूढ्या इति प्रति-अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्रति-स्थित्यै । उभयोः । लोकयोः । ऋद्ध्वा । उदिति । तिष्ठन्ति । पञ्चदशेति पञ्च-दश । एताः । तासाम् । याः । दश । दशाक्षरेति दश-अक्षरा । विराडिति वि-राट् । अन्नम् । विराडिति वि-राट् । विराजेति वि-राजा । एव । अन्नाद्यमित्यन्न-अद्यम् । अवेति । रुन्धते । याः । पञ्च । पञ्च । दिशः । दिक्षु । एव । प्रतीति । तिष्ठन्ति । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । इन्द्रियस्य । वीर्यस्य । प्रजाया इति प्र-जायै । पशूनाम् । परिगृहीत्या इति परि-गृहीत्यै ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाके प्रथमः पञ्चदशरात्रोऽभिहितः । अथ सप्तमे द्वितीयः पञ्चदशरात्रोऽभिधीयते ।

तमेतं विधत्ते—

इन्द्रो वै शिथिल इवाप्रतिष्ठित आसीत्सोऽसुरेभ्योऽबिभेत्स प्रजापतिमुपाधावत्तस्मा एतं पञ्चदशरात्रं

वज्रं प्रायच्छत्तेनासुरान्पराभाव्य विजित्य श्रियमगच्छदग्निष्टुता पाप्मानं निरदहत पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन्नधत्त, इति ।

इन्द्रः कदाचिच्छिथिलो योद्धुमसमर्थः सेनारहित एकाकी दरिद्र इवैकत्रावस्थातुमसुरोपद्रवरहितं स्थानमलभमान आसीत् । सोऽसुरेभ्यो भीतः सन्प्रजापत्युपदेशाद्वज्रसमानं वक्ष्यमाणं पञ्चदशरात्रक्रतुमनुष्ठाय तेन तानसुरान्पराभूतान्कृत्वा स्वयं विजित्य श्रियमाप्नोत् । तस्मिन्क्रतौ यदिदमग्निष्टुदाख्यं द्वितीयमहस्तेन स्वशैथिल्यहेतुं पाप्मानं निर्दग्धवान् । अवशिष्टेन पञ्चदशरात्रक्रतुभागेन बलहेतुमोजोरूपं सप्तमधातुं शारीरं बलमिन्द्रियपाटवं युद्धे विजयोत्साहं च स्वस्मिन्संपादितवान् ।

वेदनं प्रशंसति—

य एवं विद्वाꣳसः पञ्चदशरात्रमासते भ्रातृव्यानेव पराभाव्य विजित्य श्रियं गच्छन्त्यग्निष्टुता पाप्मानं निर्दहन्ते पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन्दधत, इति ।

इन्द्रवदन्येऽपि यजमानाः फलं प्राप्नुवन्ति ।

एतस्मिन्क्रतौ विद्यमानाः पञ्चदशसंख्याका रात्रीः प्रशंसति—

एता एव पशव्याः पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरं पशवोऽनु प्र जायन्ते तस्मात्पशव्याः, इति ।

अस्मिन्क्रतौ या रात्रय एताः पशुभ्यो हितास्तत्प्राप्तिहेतुत्वात् । कथमिति तदुच्यते—एकस्यार्धमासस्य पञ्चदश रात्रयः सन्ति । स चार्धमासः क्रमेण वर्तमानः संवत्सरत्वमापद्यते । पशवश्च संवत्सरमात्रं गर्भे स्थित्वा प्रजायन्ते । तस्मात्ता रात्रयः संख्याद्वारा पशुहेतुभूताः ।

पुनरपि प्रकारान्तरेण प्रशंसति—

एता एव सुवर्ग्याः पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरः सुवर्गो लोकस्तस्मात्सुवर्ग्याः, इति ।

पूर्वोक्तरीत्या संख्याद्वारा संवत्सरसंपत्तौ सत्यां स संवत्सरो वसन्तकालीनज्योतिष्टोमानुष्ठानद्वारा स्वर्गप्राप्तिहेतुः । तस्मादेता रात्रयः स्वर्गाय हिताः ।

अथाहर्विशेषा विधातव्याः । तत्राग्निष्टुदाख्यमेकमहः स्तुत्यैवोन्नीतविधिकमितिद्रष्टव्यम् । अग्निष्टुता पाप्मानं निरदहतेति स्तुतिः पूर्वमुदाहृता। अत ऊर्ध्वं त्र्यहं विधत्ते—

ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

अथ पृष्ठ्यषडहगतान्यहानि विधत्ते—

यदन्यतः पृष्ठानि स्युर्विविवधः स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति, इति ।

एतदपि पूर्ववद्व्याख्येयम् ।

आरोहरूपस्त्र्यहः पूर्वं विहितः । इदानीमवरोहरूपं त्र्यहं विधत्ते—

पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति, इति ।

एतदपि पूर्ववद्व्याख्येयम् ।

अथ क्रतुगतां रात्रिसंख्यां प्रशंसति—

पञ्चदशैतास्तासां या दश दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते याः पञ्च पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्ति, इति ।

---

१ ख. निर्दहन्त इति । २ ख. घ. ङ. च. तत ।

(सप्तदशरात्रकथनम्)
ऊर्ध्वया सह दिशां पञ्चत्वम् । अन्यत्पूर्ववद्व्याख्येयम् ।
प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवत इन्द्रियस्य वीर्यस्य प्रजायै पशूनां परिगृहीत्यै, इति ॥

इन्द्रेणानुष्ठितत्वादिन्द्रियहेतुत्वं, वज्ररूपत्वाच्च वीर्यहेतुत्वं, पशव्यत्वस्य च पूर्वमुक्तत्वात्तस्य चोपलक्षणत्वात्प्रजापशुहेतुत्वम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः)

---

प्रजापतिरकामयतान्नादः स्यामिति स एतꣳ सप्तदशरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै सोऽन्नादोऽभवद्य एवं विद्वाꣳसः सप्तदशरात्रमासतेऽन्नादा एव भवन्ति पञ्चाहो भवति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धतेऽसत्रं वा एतत् (१) यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति सप्तदशरात्रो भवति सप्तदशः

प्रजापतिः प्रजापतेराप्त्यै अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै ( २ ) ॥

( एतत्सप्तत्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ सप्तमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ।

---

प्रजापतिरिति प्रजा—पतिः । अकामयत । अन्नाद इत्यन्न—अदः । स्याम् । इति । सः । एतम् । सप्तदशरात्रमिति सप्तदश—रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अन्नाद इत्यन्न—अदः । अभवत् । ये । एवम् । विद्वांसः । सप्तदशरात्रमिति सप्तदश—रात्रम् । आसते । अन्नादा इत्यन्न—अदाः । एव । भवन्ति । पञ्चाह इति पञ्च—अहः । भवति । पञ्च । वै । ऋतवः । संवत्सर इति सं—वत्सरः । ऋतुषु । एव । संवत्सर इति सं—वत्सरे । प्रतीति । तिष्ठन्ति । अथो इति । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धते । असत्रम् । वै । एतत् ( १ ) । यत् । अछन्दोममित्यछन्दः—मम् । यत् । छन्दोमा इति छन्दः—माः । भवन्ति । तेन । सत्रम् ।

देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः-मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः-माः । ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । सप्तदशरात्र इति सप्त-दश-रात्रः । भवति । सप्तदश इति सप्त-दशः । प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-पतेः । आप्त्यै । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न-अद्यस्य । परिगृहीत्या इति परि-गृहीत्यै ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमे द्वितीयः पञ्चदशरात्रोऽभिहितः । अथाष्टमे सप्तदशरात्रोऽभिधीयते । तमेतं विधत्ते—

प्रजापतिरकामयतान्नादः स्यामिति स एतꣳ सप्तदशरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै सोऽन्नादोऽभवद्य एवं विद्वाꣳसः सप्तदशरात्रमासतेऽन्नादा एव भवन्ति, इति ।

अथैतदीयेष्वहःसु ज्योतिर्गौरायुरित्येवंविधमह्नां पञ्चकं विधत्ते—

पञ्चाहो भवति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते, इति ।

द्विरावृत्ते त्र्यहे द्वितीयज्योतिर्वर्जितोऽवशिष्टः पञ्चाहः। हेमन्तशिशिरयोरैकी-भावादृतूनां पञ्चत्वम्।

अथ पृष्ठ्यं षडहं चतुरश्छन्दोमांश्च विधत्ते—

असत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छदोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, इति।

पूर्ववद्व्याख्येयम्।

ऋतुगतां रात्रिसंख्यां प्रशंसति—

सप्तदशरात्रो भवति सप्तदशः प्रजापतिः प्रजापतेराप्त्यै, इति।

आश्रावयेत्यादिसप्तदशाक्षरात्मकत्वात्प्रजापतेः सप्तदशत्वम्।

प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै, इति॥

अन्नाद्यस्य फलत्वं विधिवाक्ये स्पष्टम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठकेऽ-ष्टमोऽनुवाकः॥ ८॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः। )

---

सा विराड्विक्रम्याऽतिष्ठद्ब्रह्मणा देवेष्वन्नेनासुरेषु ते देवा अकामयन्तोभयꣳ सं वृञ्जीमहि ब्रह्म चान्नं चेति त एता विꣳशतिꣳ रात्रीरपश्यन्ततो वै त उभयꣳ समवृञ्जत ब्रह्म चान्नं च ब्रह्मवर्चसिनोऽन्नादा अभवन्य एवं विद्वाꣳस एता आसत उभयमेव सं वृञ्जते ब्रह्म चान्नं च (१) ब्रह्मवर्चसिनोऽन्नादा

भवन्ति द्वे वा एते विराजौ तयोरेव नाना प्रति तिष्ठन्ति विꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या यावानेव पुरुषस्तमाप्त्वोत्तिष्ठन्ति ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं ( २ ) लोकमभ्यारोहन्ति यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्‌त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्त्यतिरात्रावभितो भवतो ब्रह्मवर्चसस्यान्नाद्यस्य परिगृहीत्यै ( ३ ) ॥

( वृञ्जते ब्रह्म चान्नं च सुवर्गमेते सुवर्गं त्रयोविꣳशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ सप्तमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

सा । विराडिति वि–राट् । विक्रम्येति वि–क्रम्य । अतिष्ठत् । ब्रह्मणा । देवेषु । अन्नेन । असुरेषु । ते । देवाः । अकामयन्त । उभयम् । समिति । वृञ्जीमहि । ब्रह्म । च । अन्नम् । च । इति । ते । एताः । विंशतिम् । रात्रीः । अपश्यन् । ततः । वै । ते । उभयम् । समिति । अवृञ्जत । ब्रह्म । च । अन्नम् । च । ब्रह्मवर्चसिन इति ब्रह्म–वर्चसिनः । अन्नादा इत्यन्न–अदाः । अभवन् । ये । एवम् । विद्वांसः । एताः । आसते । उभयम् । एव । समिति । वृञ्जते । ब्रह्म । च । अन्नम् । च (१) । ब्रह्मवर्चसिन इति ब्रह्म–वर्चसिनः । अन्नादा इत्यन्न–अदाः । भवन्ति । द्वे इति । वै । एते इति । विराजाविति वि–राजौ । तयोः । एव । नाना । प्रतीति । तिष्ठन्ति । विंशः । वै । पुरुषः । दश । हस्त्याः । अङ्गुलयः । दश । पद्याः । यावान् । एव । पुरुषः । तम् । आप्त्वा । उदिति । तिष्ठन्ति । ज्योतिः । गौः । आयुः । इति । त्र्यहा इति त्रि–अहाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि–आरोहन्ति । अभि-

पूर्वमित्यभि–पूर्वम् । त्र्यहा इति त्रि–अहाः । भवन्ति । अभिपूर्वमित्यभि–पूर्वम् । एव । सुवर्गमिति सुवः–गम् । (२) । लोकम् । अभ्यारोहन्तीत्यभि–आरोहन्ति । यत् । अन्यतः । पृष्ठानि । स्युः । विविवधमिति वि–विवधम् । स्यात् । मध्ये । पृष्ठानि । भवन्ति । सविवध-त्वायेति सविवध–त्वाय । ओजः । वै । वीर्यम् । पृष्ठानि । ओजः । एव । वीर्यम् । मध्यतः । दधते । बृहद्रथंत-राभ्यामिति बृहत्–रथंतराभ्याम् । यन्ति । इयम् । वाव । रथंतरमिति रथं–तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्ज-सा–अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः–गम् । लोकम् । यन्ति । पराञ्चः । वै । एते । सुवर्गमिति सुवः–गम् । लोकम् । अभ्यारोहन्तीत्यभि–आरोहन्ति । ये । पराचीनानि । पृष्ठानि । उपयन्तीत्युप–यन्ति । प्रत्यङ् । त्र्यह इति त्रि–अहः । भवति । प्रत्यवरूढ्या इति प्रति–अवरूढ्यै । अथो इति । प्रति-ष्ठित्या इति प्रति–स्थित्यै । उभयोः । लोकयोः । ऋद्ध्वा । उदिति । तिष्ठन्ति । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म–वर्चसस्य ।

अन्नाद्यस्येत्यन्न-अद्यस्य । परिगृहीत्या इति परि-गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः । )

---

अष्टमे सप्तदशरात्रोऽभिहितः । अथ नवमे विंशतिरात्रोऽभिधीयते । तमेतं विधत्ते—

सा विराड्विक्रम्यातिष्ठद्ब्रह्मणा देवेष्वन्नेनासुरेषु ते देवा अकामयन्तोभयꣳ सं वृञ्जीमहि ब्रह्म चान्नं चेति त एता विꣳशतिꣳ रात्रीरपश्यन्ततो वै त उभयꣳ समवृञ्जत ब्रह्म चान्नं च ब्रह्मवर्चसिनोऽन्नादा अभवन्य एवं विद्वाꣳस एता आसत उभयमेव सं वृञ्जते ब्रह्म चान्नं च ब्रह्मवर्चसिनोऽन्नादा भवन्ति, इति ।

दशरात्राभिमानिनी काचिद्विराड्देवता रूपद्वयेन विभज्यातिष्ठत्—देवेषु ब्रह्मवर्चसरूपेणासुरेषु चान्नरूपेण । तदानीं देवा असुरेभ्योऽन्नमपनीय तदेतदुभयं वयमेव लभेमहीत्यकामयन्त । ततस्तत्साधनत्वेन वक्ष्यमाणा विंशतिसंख्याका रात्रीर्निश्चित्य तदनुष्ठानेनासुरेभ्यस्तदपनीय स्वयमेवाधिकेन ब्रह्मवर्चसेनान्नेन च संपन्ना अभवन् । एवमन्येऽपि तदनुष्ठानेन तत्फलं प्राप्नुवन्ति पूर्वत्राहःसंघप्राधान्येन सप्तदशरात्रपञ्चदशरात्रादीनामेकवचनेन निर्देशः।अत्र तु क्रत्ववयवभूतरात्रिप्राधान्येन बहुवचननिर्देशः ।

क्रतुगतां विंशतिरात्रिसंख्यां प्रशंसति—

द्वे वा एते विराजौ तयोरेव नाना प्रति तिष्ठन्ति विꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या यावानेव पुरुषस्तमाप्त्वोत्तिष्ठन्ति, इति ।

दशसंख्यया विभज्यमाने द्वे एते विराजौ संपद्येते । तयोश्च ब्रह्मवर्चसान्नसाधनभूतयोः पृथगेव प्रतितिष्ठन्ति, एकैकं फलमितरनिरपेक्षत्वेनैव संपूर्णं लभत इत्यर्थः । अथ वा विद्वत्सभायामुपयुक्तं ब्रह्मवर्चसम् । धनिकसभायामुपयुक्ताऽन्नसमृद्धिः । एवं नानाविधा प्रतिष्ठा । किंच पुरुषस्य हस्तपादगताङ्गुलिसंख्यासाम्याद्यावान्गुणसंघः पुरुषे संभावितस्तं सर्वं प्राप्नोति ।

अथात्र नवाहानि विधत्ते—

ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति, इति ।

यथा प्रथमत्र्यहो ज्योतिरादिक एवं द्वितीयतृतीयावपि ज्योतिरादिकौ । तत्र कश्चिदप्यायुरादिकोऽस्ति । एवं सत्यनुक्रमेणैव स्वर्गमभ्यारोहन्ति ।

एतेषां त्र्यहाणां वक्ष्यमाणत्र्यहस्य च मध्ये पृष्ठ्यं विधत्ते—

यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति, इति ।

पूर्वोक्तेषु त्र्यहेषु योऽयमन्त्यस्त्र्यहो यश्च भावी त्र्यहस्तयोरुभयोर्मध्यवर्तित्वान विवधसाम्यम् । अन्यत्पूर्ववद्व्याख्येयम् ।

अथ प्रत्यवरोहरूपं त्र्यहं विधत्ते—

पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो

भवति प्रत्यवरूढ्या अथो प्रति-
ष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतो ब्रह्मवर्चस-
स्यान्नाद्यस्य परिगृहीत्यै, इति ॥

फलद्वयं विधिवाक्य एव विस्पष्टम् ।

अत्र मीमांसा ।

चतुर्थाध्यायस्य तृतीयपादेऽष्टमाधिकरणे चिन्तितम्—

स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहाग्रिमः ।
पूर्ववत्स्यात्प्रतिष्ठाऽत्र श्रुता तेनाश्रुतादरम् ॥

सत्रकाण्डे श्रूयते—'प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्ति' इति, 'ब्रह्मवर्च-सिनोऽन्नादा भवन्ति' इति, 'य एता उपयन्ति' इति च । द्वादशाहादूर्ध्वभाविनस्त्रयोदश चतुर्दश रात्रादयः सर्वे सत्रविशेषाः । त्रयोदशसंख्याका रात्रयो यस्मिन्सत्रविशेषे सोऽयं त्रयोदशरात्र इति समुदायप्राधान्येनैकवचनान्ततया प्रायेण निर्देशो भवति । क्वचित्तु समुदायिनां रात्रिविशेषाणां प्राधान्यमभ्युपेत्यैक एव सत्रविशेषो बहुवचनान्तेन रात्रिशब्देनाऽऽम्नायते । तद्यथा—'त एता विंशतिꣳ रात्रीरपश्यन्' इति । तादृशे रात्रिसत्रे विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीय इति प्राप्ते ब्रूमः—अस्य रात्रिसत्रविधेस्तावदर्थवादे प्रतिष्ठा श्रुता । सा चास्मिन्वाक्येऽत्यन्तश्रुतात्स्वर्गात्प्रत्यासन्ना । तस्मात्प्रतिष्ठाकामो रात्रिसत्रं कुर्यादित्येवं प्रतिष्ठैव फलत्वेन कल्पनीया ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

१ क. 'वरसा प्रति' । २ क. घ. ङ. 'ता नेहाश्रुताहरम्' । ३ ख. 'णां प्रत्येकं प्रा' । ४ 'विधेः स्तावकेऽर्थे' ।

(एकविंशतिरात्रकथनम्)

(अथ सप्तमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ।)

असावा॑दि॒त्यो᳚ऽस्मिँल्लो॒क आ॑सी॒त्तं दे॒वाः पृ॒ष्ठैः परि॑गृह्य सु॒वर्गं॑ लो॒कम॑गमय॒न्परै॑र॒वस्ता॒त्पर्य॑गृह्णन्दि॒वाकी॒र्त्ये॑न सु॒वर्गे लो॒के प्रत्य॑स्थापय॒न्परैः॑ प॒रस्ता॒त्पर्य॑गृह्ण॒न्पृ॒ष्ठैरु॒पावा॑रोह॒न्त्स वा अ॒सावा॑दि॒त्यो᳚ऽमुष्मिँ॑ल्लो॒के परै॑रु॒भय॒तः परि॑गृहीतो॒ यत्पृ॒ष्ठानि॒ भव॑न्ति सु॒वर्ग॒मेव तैर्लो॒कं यज॑माना य॒न्ति परै॑र॒वस्ता॒त्परि॑गृह्णन्ति दि॒वाकी॒र्त्ये॑न (१) सु॒वर्गे लो॒के प्रति॑तिष्ठ॒न्ति परैः॑ प॒रस्ता॒त्परि॑ गृह्णन्ति पृ॒ष्ठैरु॒पाव॑रोह॒न्ति यत्परे॑ प॒रस्ता॒न्न स्युः परा॑ञ्चः सु॒वर्गा॑ल्लो॒कान्निष्प॑द्ये॒रन्य॒दव॒स्ता॒न्नः स्युः प्र॒जा निर्द॑हेयुर॒भितो॑ दि॒वाकी॒र्त्यं॑ परः॑सामानो भवन्ति सु॒वर्ग ए॒वैना॑ल्लो॒क उ॒भय॒तः परि॑ गृह्ण॒न्ति यज॑माना॒ वै दि॒वाकी॒र्त्य॑ꣳ संव॒त्सरः परः॑सामा॒नो᳚ऽभितो॑ दि॒वाकी॒र्त्यं॑ परः॑सा॒मानो भवन्ति संव॒त्सर ए॒वोभय॒तः (२) प्रति॑तिष्ठन्ति पृ॒ष्ठं वै दि॒वाकी॒र्त्यं॑ पा॒र्श्वे परः॑सामा॒नो᳚ऽभितो॑ दि॒वाकी॒र्त्यं॑ परः॑सामानो भव॒न्ति त॒स्माद॒भितः॑ पृ॒ष्ठं पा॒र्श्वे भूयि॑ष्ठा॒ ग्रहा॑ गृह्य॒न्ते भूयि॑ष्ठꣳ शस्यते य॒ज्ञस्यै॒व तन्म॑ध्य॒तो ग्र॒न्थिं ग्र॑थ्न॒न्त्यवि॑स्रꣳसाय स॒प्त गृ॑ह्यन्ते स॒प्त वै शी॒र्ष॒ण्याः प्रा॒णाः प्रा॒णाने॒व यज॑-

मानेषु दधति यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति यदिमं लोकं न ( ३ ) प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन्यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मिन्नेव लोके प्रति तिष्ठन्त्यनुन्मादायेन्द्रो वा अप्रतिष्ठित आसीत्स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाऽहरत्तेनायजत ततो वै स प्रत्यतिष्ठद्ये बहुयाजिनोऽप्रतिष्ठिताः(४) स्युस्त एकविꣳशतिरात्रमासीरन्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यसावादित्यो न व्यरोचत स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाऽहरत्तेनायजत ततो वै सोऽरोचत य एवं विद्वाꣳस एकविꣳशतिरात्रमासते रोचन्त एवैकविꣳशतिरात्रो भवति रुग्वा एकविꣳशो रुचमेव गच्छन्त्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशोऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ( ५ ) ।

[ गृह्णन्ति दिवाकीर्त्यमेनवोभयतो नाप्रतिष्ठिता आसत एकविꣳशतिश्च ]

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

(एकविंशतिरात्रकथनम्)

(अथ सप्तमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ।)

---

असौ । आदित्यः । अस्मिन् । लोके । आसीत् । तम् । देवाः । पृष्ठैः । परिगृह्येति परि-गृह्य । सुवर्गमिति सुवः-गम् । लोकम् । अगमयन् । परैः । अवस्तात् । परीति । अगृह्णन् । दिवाकीर्त्येनेति दिवा-कीर्त्येन । सुवर्ग इति सुवः-गे । लोके । प्रतीति । अस्थापयन् । परैः । परस्तात् । परीति । अगृह्णन् । पृष्ठैः । उपावारोहन्नित्युप-अवारोहन् । सः । वै । असौ । आदित्यः । अमुष्मिन् । लोके । परैः । उभयतः । परिगृहीत इति परि-गृहीतः । यत् । पृष्ठानि । भवन्ति । सुवर्गमिति सुवः-गम् । एव । तैः । लोकम् । यजमानाः । यन्ति । परैः । अवस्तात् । परीति । गृह्णन्ति । दिवाकीर्त्येनेति दिवा-कीर्त्येन (१) । सुवर्ग इति सुवः-गे । लोके । प्रतीति । तिष्ठन्ति । परैः । परस्तात् । परीति । गृह्णन्ति । पृष्ठैः । उपावरोहन्तीत्युप-अवरोहन्ति । यत् । परे । परस्तात् । न । स्युः । पराञ्चः । सुवर्गादिति सुवः-गात् । लोकात् । निरिति । पद्येरन् । यत् । अवस्तात् । न । स्युः । प्रजा इति प्र-जाः । निरिति । दहेयुः । अभितः । दिवाकीर्त्यमिति दिवा-कीर्त्यम् । परःसामान इति परः-

सामानः । भवन्ति । सुवर्ग इति सुवः—गे । एव । एनान् । लोके । उभयतः । परीति । गृह्णन्ति । यजमानाः । वै । दिवाकीर्त्यमिति दिवा—कीर्त्यम् । संवत्सर इति सं—वत्सरः । परःसामान इति परः—सामानः । अभितः । दिवाकीर्त्यमिति दिवा—कीर्त्यम् । परःसामान इति परः—सामानः । भवन्ति । संवत्सर इति सं—वत्सरे । एव । उभयतः (२) । प्रतीति । तिष्ठन्ति । पृष्ठम् । वै । दिवाकीर्त्यमिति दिवा—कीर्त्यम् । पार्श्वे इति । परः सामान इति परः—सामानः । अभितः । दिवाकीर्त्यमिति दिवा—कीर्त्यम् । परःसामान इति परः—सामानः । भवन्ति । तस्मात् । अभितः । पृष्ठम् । पार्श्वे इति । भूयिष्ठाः । ग्रहाः । गृह्यन्ते । भूयिष्ठम् । शस्यते यज्ञस्य । एव । तत् । मध्यतः । ग्रन्थिम् । ग्रथ्नन्ति । अविस्रꣳसायेत्यवि—स्रꣳसाय । सप्त । गृह्यन्ते । सप्त । वै । शीर्षण्याः प्राणा इति प्र—अनाः । प्राणानिति प्र—अनान् । एव । यजमानेषु । दधति । यत् । पराचीनानि । पृष्ठानि । भवन्ति । अमुम् । एव । तैः । लोकम् । अभ्यारोहन्तीत्यभि—आरोहन्ति । यत् । इमम् । लोकम् । न (३) । प्रत्यवरोहेयुरिति प्रति—अवरोहेयुः । उदिति । वा । मादयेयुः । यजमानाः । प्रेति । वा । मीयेरन् । यत् । प्रतीचीनानि । पृष्ठानि ।

भवन्ति । इमम् । एव । तैः । लोकम् । प्रत्यवरोहन्तीति । प्रति-अवरोहन्ति । अथो इति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठन्ति । अनुत्मादायेत्यनुत्-मादाय । इन्द्रः । वै । अप्रतिष्ठित इत्यप्रति-स्थितः । आसीत् । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । एकविꣳशतिरात्रमित्येकविꣳशति-रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । प्रतीति । अतिष्ठत् । ये । बहुयाजिन इति बहु-याजिनः । अप्रतिष्ठिता इत्यप्रति-स्थिताः ( ४ )। स्युः । ते । एकविꣳशतिरात्रमित्येकविꣳशति-रात्रम् । आसीरन् । द्वादश । मासाः । पञ्च । ऋतवः । त्रयः । इमे । लोकाः । असौ । आदित्यः । एकविꣳश इत्येक-विꣳशः । एतावन्तः । वै । देवलोका इति देव-लोकाः । तेषु । एव । यथापूर्वमिति यथा-पूर्वम् । प्रतीति । तिष्ठन्ति । असौ । आदित्यः । न । वीति । अरोचत । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । एकविꣳशतिरात्रमित्येकविꣳशति-रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अरोचत । ये । एवम् । विद्वाꣳसः । एकविꣳशतिरात्रमित्येकविꣳशति-रात्रम् । आसते । रोचन्ते ।

एव । एकविꣳशतिरात्र इत्येकविꣳशति–रात्रः । भवति । रुक् । वै । एकविꣳश इत्येक–विꣳशः । रुचम् । एव । गच्छन्ति । अथो इति । प्रतिष्ठामिति प्रति–स्थाम् । एव । प्रतिष्ठेति प्रति–स्था । हि । एकविꣳश इत्येक–विꣳशः । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म–वर्चसस्य । परिगृहीत्या इति परि–गृहीत्यै ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः । )

---

नवमेऽनुवाके विंशतिरात्रोऽभिहितः । अथ दशम एकविंशतिरात्रोऽभिधीयते । तत्र तावदियमहःक्लृप्तिः–आदावतिरात्रः । ततः पृष्ठ्यः षडहः । ततः स्वरसामानस्त्रयोऽहर्विशेषाः । ततो दिवाकीर्त्यमेकमहः । पुनरपि त्रयः स्वरसामानः । पुनरपि पृष्ठ्यः षडहः । ततोऽतिरात्रः, इति ।

तमिमं विधातुं प्रस्तौति—

असावादित्योऽस्मिँल्लोक आसीत्तं देवाः पृष्ठैः परिगृह्य सुवर्गं लोकमगमयन्परैरवस्तात्पर्यगृह्णन्दिवाकीर्त्येन सुवर्गे लोके प्रत्यस्थापयन्परैः परस्तात्पर्यगृह्णन्पृष्ठैरुपावारोहन्त्स वा असावादित्योऽमुष्मिँल्लोके परैरुभयतः परिगृहीतः, इति ।

असौ स्वर्गे दृश्यमान आदित्यः पुरा भूलोक एव तिष्ठति स्म । तमादित्यं देवाः परिगृह्य पृष्ठाख्यैः षड्भिरहोभिः स्वर्गं प्रापितवन्तः । तत्र च परशब्दे-

१ क. घ. ङ. च. अय ।

स्वरसामशब्देन च तत्र तत्र व्यवह्रियमाणैस्त्रिभिरहोभिरवस्तात्पर्यगृह्णन्, आदित्यो यथाऽधस्तान्नाऽऽगच्छति तथा व्यवधानं कृतवन्तः । परशब्दाभिधेयं किंचित्साम, तेन साम्ना निष्पाद्यमाना अहर्विशेषाः परा इत्युच्यन्ते । तथा दिवैव कीर्तनीयं किंचित्साम, तेन च निष्पाद्यमहरपि दिवाकीर्त्यमित्युच्यते । तेन चाह्ना तमादित्यं स्वर्गे प्रतिष्ठापितवन्तः । पुनरप्यनुष्ठीयमानैः परशब्दाभिधेयैरहोभिः परस्तादादित्यं पर्यगृह्णन् , यथा तत ऊर्ध्वमादित्यो न गच्छति तथा प्रतिबन्धं कृतवन्तः । एवं कृत्वा पुनरनुष्ठीयमानैः पृष्ठाख्यैः षड्भिरहोभिः स्वर्गादुपावारोहन् । सोऽसौ दिवि दृश्यमान आदित्यः स्वर्गे लोके पराख्यैरहोभिरुभयतो नियमितत्वान्नोर्ध्वं गच्छति नाप्यधस्तादागच्छति ।

तान्येतान्यहानि विधत्ते—

> यत्पृष्ठानि भवन्ति सुवर्गमेव तैर्लोकं यज-
> माना यन्ति परैरवस्तात्परिगृह्णन्ति दिवाकी-
> र्त्येन सुवर्गे लोके प्रति तिष्ठन्ति परैः
> परस्तात्परि गृह्णन्ति पृष्ठैरुपावरोहन्ति, इति ।

आदित्यवाक्यवद्यजमानवाक्यं व्याख्येयम् ।

दिवाकीर्त्यस्योभयतोऽनुष्ठेयान्पराख्यानहर्विशेषान्व्यतिरेकमुखेन(ण) प्रशंसति—

> यत्परे परस्तान्न स्युः पराञ्चः सुवर्गाल्लोका-
> न्निष्पद्येरन्यदवस्तान्न स्युः प्रजा निर्दहे-
> युरभितो दिवाकीर्त्यं परःसामानो भवन्ति
> सुवर्ग एवैनाँल्लोक उभयतः परि गृह्णन्ति, इति ।

यद्युपरितनाः पराख्या अहर्विशेषा न स्युस्तदानीं स्वर्गं गता यजमानास्ततोऽप्यूर्ध्वं गमनस्य निवारकाभावात्स्वर्गादूर्ध्वं निर्गच्छेयुः । यदि चाधस्तनाः पराख्या नानुष्ठीयेरंस्तदानीं व्यवधायकाभावादादित्यात्मकाः सर्वे यजमाना भूमिवर्तिनः प्रजाः सर्वा निमिषेण दहेयुः । तस्माद्दिवाकीर्त्यस्य पुरस्ताच्चोपरिष्टाच्च परः सामानोऽनुष्ठेयाः । ते चैनान्यजमानान्स्वर्गमिवाधस्तादुपरिष्टाच्च परिगृह्य स्थापयन्ति ।

प्रकारान्तरेण दिवाकीर्त्यं परः सामाख्यान्यहानि प्रशंसति—

यजमाना वै दिवाकीर्त्यꣳ संवत्सरः परःसामानोऽ-
भितो दिवाकीर्त्यं परःसामानो भवन्ति
संवत्सर एवोभयतः प्रति तिष्ठन्ति, इति।

दिवाकीर्त्यस्य यजमानस्थानीयत्वात्परः साम्नां च संवत्सरस्थानीयत्वादु-भयतस्तदनुष्ठाने यजमाना अधस्ताच्चोपरिष्टाच्च संवत्सरदेवतायामेव प्रति-तिष्ठन्ति।

पुनरपि प्रकारान्तरेण प्रशंसति—

पृष्ठं वै दिवाकीर्त्यं पार्श्वे परःसामानोऽभितो दिवा-
कीर्त्यं परःसामानो भवन्ति तस्मादभितः पृष्ठं पार्श्वे
भूयिष्ठा ग्रहा गृह्यन्ते भूयिष्ठꣳ शस्यते यज्ञ-
स्यैव तन्मध्यतो ग्रन्थिं ग्रथ्नन्त्यविस्रꣳसाय, इति।

यथा लोके पुरुषस्य पृष्ठभागो मध्यवर्ती पार्श्वभागावुभयतो वर्तिनावेव-मत्रापि दिवाकीर्त्यं पृष्ठस्थानीयं परःसामानस्तूभयपार्श्वस्थानीयाः। किं चैत-स्मिन्दिवाकीर्त्ये परःसामानु चातिग्राह्या ग्रहा अपि भूयिष्ठा गृह्यन्ते। तथा हि दिवाकीर्त्यं परःसामानश्च गवामयन उत्पन्नाः। तत्र हि चोदकप्राप्तेभ्योऽति-ग्राह्येभ्योऽधिकास्त्रयोऽतिग्राह्यास्तृतीयकाण्डोक्ता अद्भ्यस्त्वौषधीभ्य इत्यादि-मन्त्रसाध्या विहिताः सन्ति। तद्विकृतित्वादत्रापि तेऽधिका ग्रहा गृह्यन्ते। अत एव शस्त्रमप्यधिकं शस्यते। तत्तेनाधिकानुष्ठानेन यज्ञस्यैकविंशतिरात्ररूपस्य ग्रन्थिं ग्रथ्नन्ति दृढबन्धनं कुर्वन्ति। तच्च यज्ञस्य विस्रंसनपरिहाराय भवति।

पुनरपि दिवाकीर्त्ये विशेषं दर्शयति—

सप्त गृह्यन्ते सप्त वै शीर्षण्याः प्राणाः
प्राणानेव यजमानेषु दधाति, इति।

दिवाकीर्त्यात्प्रतीचीनेषु दिनेष्वेकैकस्मिन्नेकैकोऽतिग्राह्य इत्यनुक्रमेण त्रयो गृह्यन्ते। उत्तरेषु दिनेषु त एवावरोहक्रमेण गृह्यन्ते। त एते षडपि दिवाकी-

१ क. घ. ङ. च °र्नायाँ। किं°। २ ख. °सामयुना अति°।

त्र्यदिने तथैव गृह्यन्ते । तेषां मध्ये सौर्य उदु त्यं जातवेदसमिति मन्त्रसाध्यः सप्तमो गृह्यन्ते । तदेवं तस्मिन्दिने सप्ताधिका ग्रहाः । ते च, संख्यायामूर्ध्वगत-सप्तच्छिद्रवर्तिप्राणसमाः। अतस्तदनुष्ठानेन यजमानेषु प्राणान्स्थापयन्ति। तदेवं दिवाकीर्त्यमहः प्रशस्तम् । यद्वा भूयिष्ठा ग्रहा इत्यादि गवामयनगतानामत्र-त्यानां चाह्नां प्रकृतिविकृतिभावद्योतनाय तल्लिङ्गं दर्शयितुं विधिरेवास्तु ।

अथावरोहरूपं पृष्ठ्यषडहं विधत्ते—

यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्या-रोहन्ति यदिमं लोकं न प्रत्यवरोहेयुरुद्वा माद्येयुर्यज-मानाः प्र वा मीयेरन्यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मि-न्नेव लोके प्रति तिष्ठन्त्यनुन्मादाय, इति ।

दिवाकीर्त्यसदृशेभ्यः परःसामभ्यः पूर्वमनुष्ठितानि पराचीनान्यारोहरूपाणि यानि पृष्ठ्यसामान्यहानि सन्ति तैर्यजमानाः स्वर्गं लोकमारोहन्त्येव। अत ऊर्ध्व-मिमं लोकं प्रति यद्यवरोहसाधनानि कानिचिदहानि नानुतिष्ठेयुस्तदानीं ते यजमाना एतं लोकव्यवहारक्रमं विस्मृत्योन्मत्ता मृता वा भवेयुः । तस्मात्प्र-तीचीनान्यवरोहरूपाणि पृष्ठ्याख्यान्यहान्यनुष्ठेयानि । तैरहोभिरिमं लोकं प्रत्य-वरोहन्ति। अपि चास्मिँल्लोके प्रतिष्ठिता अनुन्मत्ताश्च भवन्ति ।

पूर्वं सुवर्गमेव तैर्लोकं यजमाना यन्तीत्यादिना क्रत्ववयवानामहर्विशेषाणां फलोपन्यासमुखेन स्वर्गार्थमयं क्रतुर्विहितः । अथ प्रतिष्ठार्थमिमं क्रतुं विधत्ते—

इन्द्रो वा अप्रतिष्ठित आसीत्स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततो वै स प्रत्यतिष्ठद्ये बहुयाजिनोऽप्रतिष्ठिताः स्युस्त एकविꣳशतिरात्रमासीरन्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्ति, इति ।

पुरा यथेन्द्रः प्रजापत्युपदेशादिमं क्रतुमनुष्ठाय प्रत्यतिष्ठत् , एवं बहुयागान्कृ-त्वाऽप्यप्रतिष्ठिता यजमाना एतं क्रतुमनुष्ठायाहर्गतैकविंशतिसंख्यासाम्याद्द्वाद-

ग्मासाभिमानिदेवस्थानेषु पञ्चस्वृत्वभिमानिदेवस्थानेषु त्रिषु पृथिव्यादिलोकेष्वेकस्मिन्नादित्यलोके च तेष्वेकविंशतिस्थानेषु यथापूर्वं प्रतितिष्ठन्ति तल्लोकवासिनः सर्वे प्राणिनो यथाप्रतिष्ठितास्तद्वत्प्रतितिष्ठन्तीत्यर्थः ।

एवं प्रतिष्ठार्थं क्रतुं विधाय फलान्तरार्थं पुनर्विधत्ते—

असावादित्यो न व्यरोचत स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाऽहरत्तेनायजत ततो वै सोऽरोचत य एवं विद्वाꣳस एकविꣳशतिरात्रमासते रोचन्त एवैकविꣳशतिरात्रो भवति रुग्वा एकविꣳशो रुचमेव गच्छन्त्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशः, इति ।

पुरा कदाचिदादित्यः स्वर्भान्वाख्येनासुरेण तमसा विद्धोऽन्येन वा मेघहिमादिना निरन्तरमावृतः सन्विशेषेण नादीप्यत । ततः प्रजापत्युपदेशादेतं क्रतुमनुष्ठायादीप्यत । तद्वदन्येऽपि यजमानाः पूर्वं विद्याधनादिभिर्मनुष्येष्वप्रकाशमाना एतं क्रतुमनुष्ठाय पश्चात्प्रकाशन्ते । किंचात्राह्नामेकविंशतिसंख्यासद्भावात्तेनैकविंशतिस्तोमेन ऋद्धिप्रकाशहेतुत्वाद्ब्रह्मवर्चसं परिगृहीतम् । स च त्रिवृदाद्यपेक्षया प्रौढत्वाद्दीप्यमान इव । अतस्तत्साम्यादेतदनुष्ठायिनोऽपि प्रकाशं प्राप्नुवन्ति, एकविंशतिस्तोमस्येतरप्रतिष्ठाधारत्वात् ।

अथ प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै, इति ॥

अस्य विद्यादिप्रकाशहेतुत्वाद्ब्रह्मवर्चसमत्र परिगृहीतं भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

———

( अथ सप्तमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

अर्वाङ्ग्यज्ञः सं क्रामत्वमुष्मादधि मामभि । ऋषीणां यः पुरोहितः । निर्देवं निर्वीरं कृत्वा विष्कन्धं तस्मिन्हीयतां योऽस्मान्द्वेष्टि । शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि । यज्ञ यज्ञस्य यत्तेजस्तेन सं क्राममामभि । ब्राह्मणानृत्विजो देवान्यज्ञस्य तपसा ते सवाहमा हुवे । इष्टेन पक्वमुप ( १ ) ते हुवे सवाहम् । सं ते वृञ्जे सुकृतꣳ सं प्रजां पशून् । प्रैषान्त्सामिधेनीराघारावाज्यभागावाश्रुतं प्रत्याश्रुतमा शृणामि ते । प्रयाजानूयाजान्त्स्विष्टकृतमिडामाशिष आ वृञ्जे सुवः । अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः । याज्यानुवाक्याभ्यामुप ते हुवे सवाहं यज्ञमा ददे ते वषट्कृतम् । स्तुतꣳ शस्त्रं प्रतिगरं ग्रहमिडामाशिषः ( २ ) आ वृञ्जे सुवः । पत्नीसंयाजानुप ते हुवे सवाहꣳ समिष्टयजुरा ददे तव । पशून्त्सुतं पुरोडाशान्त्सवनान्योत यज्ञम् । देवान्त्सेन्द्रानुप ते हुवे सवाहमग्निमुखान्त्सोमवतो ये च विश्वे ( ३ ) ॥

( उप ग्रहमिडामाशिषो द्वात्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( अथ सप्तमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

अर्वाङ् । यज्ञः । समिति । कामतु । अमुष्मात् । अधीति । माम् । अभि । ऋषीणाम् । यः । पुरोहित इति पुरः–हितः । निर्देवमिति निः–देवम् । निर्वीरमिति निः–वीरम् । कृत्वा । विष्कन्धमिति वि–स्कन्धम् । तस्मिन् । हीयताम् । यः । अस्मान् । द्वेष्टि । शरीरं । यज्ञशमलमिति यज्ञ–शमलम् । कुसीदम् । तस्मिन् । सीदतु । यः । अस्मान् । द्वेष्टि । यज्ञ । यज्ञस्य । यत् । तेजः । तेन । समिति । काम । माम् । अभि । ब्राह्मणान् । ऋत्विजः । देवान् । यज्ञस्य । तपसा । ते । सव । अहम् । एति । हुवे । इष्टेन । पक्कम् । उपेति ( १ ) । ते । हुवे । सव । अहम् । समिति । ते । वृञ्जे । सुकृतमिति सु–कृतम् । समिति । प्रजामिति प्र–जाम् । पशून् । प्रैषानिति प्र–एषान् । सामिधेनीरिति साम्–इधनीः । आघारावित्या–घारौ । आज्यभागावित्याज्य–भागौ । आश्रुतमित्या–श्रुतम् । प्रत्याश्रुतमिति प्रति–आश्रुतम् । एति । शृणामि । ते । प्रयाजानूयाजानिति प्रयाज–अनूयाजान् । स्विष्टकृतमिति स्विष्ट–कृतम् । इडाम् । आशिष इत्या–शिषः । एति । वृञ्जे । सुवः । अग्निना । इन्द्रेण । सोमेन । सरस्वत्या ।

विष्णुना । देवताभिः । याज्यानुवाक्याभ्यामिति याज्या-अनुवाक्याभ्याम् । उपेति । ते । हुवे । सव । अहम् । यज्ञम् । एति । ददे । ते । वषट्कृतमिति वषट्-कृतम् । स्तुतम् । शस्त्रम् । प्रतिगरमिति प्रति-गरम् । ग्रहम् । इडाम् । आशिष इत्या-शिषः ( २ )। एति । वृञ्जे । सुवः । पत्नीसंयाजानिति पत्नी-संयाजान् । उपेति । ते । हुवे । सव । अहम् । समिष्टयजुरिति समिष्ट-यजुः । एति। ददे । तव । पशून् । सुतम् । पुरोडाशान् । सवनानि । एति । उत । यज्ञम् । देवान् । सेन्द्रानिति स-इन्द्रान् । उपेति । ते । हुवे । सव । अहम् । अग्निमुखानित्यग्नि-मुखान् । सोमवत इति सोम-वतः । ये । च । विश्वे ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

दशमेऽनुवाक एकविंशतिरात्रोऽभिहितः । अथावशिष्टेष्वनुवाकेष्वश्वमेधगता मन्त्रा उच्यन्ते । तत्रास्मिन्ननुवाक आप्त्याख्यानामष्टाहुतीनां मन्त्रा उच्यन्ते । अत एव ब्राह्मणे विनियोगः पठ्यते-'अर्वाङ्यज्ञः संक्रामत्वित्याप्तीर्जुहोति' इति ।

तत्र प्रथमामाह—

अर्वाङ्न्यज्ञः सं क्रामत्वमुष्मादधि
मामभि। ऋषीणां यः पुरोहितः, इति।

योऽश्वमेधाख्यो यज्ञः स ऋषीणां ज्ञानवतां पूर्वसिद्धानां यजमानानां पुरोहितः सर्वार्थसाधनभावेन पुरस्तादवस्थापितः। स यज्ञोऽमुष्मान्मद्व्यतिरिक्ताद्देवदत्तादेर्यजमानादपक्रम्य मामभि मामुद्दिश्यार्वाङ्भिमुखः सन्नधिसंक्रामतु आधिक्येनाऽऽदरातिशयेन सम्यगागच्छतु।

अथ द्वितीयामाह—

निर्देवं निर्वीरं कृत्वा विष्कन्धं तस्मिन्ही-
यतां योऽस्मान्द्वेष्टि। शरीरं यज्ञशमलं
कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि, इति।

यः पुरुषोऽस्मान्द्वेष्टि तस्य शरीरं निर्देवादिविशेषणविशिष्टं कृत्वा तस्मिन्द्वेषिणि पुरुषे हीयतां हीनत्वेनावस्थाप्यताम्। कीदृशं शरीरम्, निर्देवं निर्गता यज्ञाङ्गभूता देवा यस्मात्तन्निर्देवं देवताभक्तिरहितमित्यर्थः। निर्गत वीराः पुत्रा भृत्याश्च यस्मात्तन्निर्वीरम्। विरूपाः स्कन्धाद्यवयवा यस्य तद्विष्कन्धम्। किं च योऽस्मान्द्वेष्टि तस्मिन्द्वेषिणि पुरुषे यज्ञशमलं यज्ञानुष्ठानमलिनं कदाचिदप्यनुष्ठानरहितमित्यर्थः। तादृशं यत्कुसीदं निरन्तरं धनवृद्ध्याद्यर्जनेन यज्जीवनं तत्सीदतु द्वेषी पुमान्यज्ञे विमुखः केवलो वणिग्भूत्वा यथाकथंचित्तिष्ठत्वित्यर्थः।

अथ तृतीयामाह—

यज्ञ यज्ञस्य यत्तेजस्तेन सं क्राम मामभि। ब्राह्मणानृ-
त्विजो देवान्यज्ञस्य तपसा ते सवाहमा हुवे, इति।

हेऽश्वमेधाख्य यज्ञ सम्यगनुष्ठितस्य यज्ञस्य तव यत्तेजः फलं तेन फलेन सह मामभि संक्रामाभिमुखो भूत्वा मां प्रविश। सूयतेऽभिषिच्यतेऽत्रेत्यभिषेकयुक्तो यज्ञः सवः। हे सव सम्यगनुष्ठितस्य यज्ञस्य ते तव तपसा सामर्थ्येनानुग्रहरूपेणानुगृहीतोऽहं ब्राह्मणान्सदस्यानृत्विजोऽध्वर्युप्रभृतीन्देवान्यष्टव्यानाहुव इहकर्मण्याह्वयामि।

अथ चतुर्थीमाह—

इष्टेन पक्वमुप ते हुवे सवाहम्। सं ते
वृञ्जे सुकृतꣳ सं प्रजां पशून्। इति।

हे सव यज्ञ त इष्टेन त्वदीयेन यजनेनाहं पक्वमन्नमुपहुवे समीप आह्वयामि। ते तवानुग्रहात्सुकृतं संवृञ्जे सम्यगावर्जितं कुर्वे पुण्यं संपादयामीत्यर्थः। तथा प्रजां पशून्संपादयामि।

अथ पञ्चमीमाह—

प्रैषान्त्सामिधेनीराघारावाज्यभागावाश्रुतं प्रत्या-
श्रुतमा शृणामि ते। प्रयाजानूयाजान्स्वि-
ष्टकृतमिडामाशिष आ वृञ्जे सुवः। इति।

प्रैषादीनि यज्ञाङ्गानि प्रसिद्धानि, तानि सर्वाणि तद्वत्तिसिद्ध्यर्थमाशृणामि सर्वतः शास्त्रमुखाच्छ्रुत्वा संपादयामि। तथा प्रयाजादीनि यज्ञाङ्गानि सुवः फलरूपं स्वर्गं चाऽऽवृञ्जे सर्वतः संपादयामि।

अथ षष्ठीमाह—

अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना
देवताभिः। याज्यानुवाक्याभ्यामुप ते हुवे
सवाहं यज्ञमा ददे ते वषट्कृतम्। इति।

हे सव यज्ञाग्न्यादयो ये देवा उक्ता याश्चानुक्ता अन्याः सर्वा देवताः, ये च तद्देवताविषये याज्यानुवाक्ये, तैः सर्वैः सहितोऽहं ते त्वत्तिसिद्ध्यर्थमुपहुवे समीप एवाध्वर्युप्रभृतीननुग्रातृनाह्वयामि। तथा ते त्वत्तिसिद्ध्यर्थं वषट्कृतं वषट्कारसहितं यज्ञं कृत्स्नप्रयोगमाददे स्वी करोमि।

अथ सप्तमीमाह—

स्तुतꣳ शस्त्रं प्रतिगरं ग्रहमिडामाशिष आ
वृञ्जे सुवः। पत्नीसंयाजानुप ते
हुवे सवाहꣳ समिष्टयजुरा ददे तव, इति।

स्तोत्रशस्त्रादीनि यज्ञाङ्गानि सुवः फलरूपं स्वर्गं चाऽऽवृञ्जे सर्वतः संपा

दयामि । स्वर्गस्य प्राधान्यात्पुनरभिधानम् । हे सव त्वत्सिद्ध्यर्थं पत्नीसंयाजानुद्दिश्योपह्वे ऋत्विजः समीपमाह्वयामि । तथा तव त्वत्सिद्ध्यर्थं समिष्टयजुः स्वी करोमि ।

अथाष्टमीमाह—

पशून्त्सुतं पुरोडाशान्त्सवनान्योत यज्ञम् ।
देवान्त्सेन्द्रानुप ते हुवे सवाहमग्निमुखान्त्सोमवतो ये च विश्वे । इति ॥

येऽग्नीषोमीयादयः पशवः, यश्चाभिषुतः सोमो ये च सवनीयपुरोडाशा यानि च प्रातःसवनादीनि, यश्च तैर्निष्पाद्यः कृत्स्नो यज्ञस्तान्सर्वानावृञ्ज इत्यनुवर्तते। हे सव ते त्वत्सिद्ध्यर्थमहं देवानुपह्वे समीप आह्वयामि। किंदृशान्देवान्, इन्द्रेण सह वर्तन्त इति सेन्द्रान् । अग्निर्मुखं येषां तेऽग्निमुखास्तान् । सोमो येषामस्ति ते सोमवन्तस्तान् । अपि च येऽन्ये विश्वे देवास्तान्सर्वानप्युपह्वे ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

भूतं भव्यं भविष्यद्वषट्त्स्वाहा नम ऋक्साम यजुर्वषट्त्स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्त्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्त्स्वाहा नमोऽग्निर्वायुः सूर्यो वषट्त्स्वाहा नमः प्राणो व्यानोऽपानो वषट्त्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्त्स्वाहा

नमः पिता पुत्रः पौत्रो वषट्कत्स्वाहा नमो भूर्भुवः

सुवर्वषट्कत्स्वाहा नमः ( १ ) ॥

( भुवश्चत्वारिं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

भूतम् । भव्यम् । भविष्यत् । वषट् । स्वाहा । नमः ।
ऋक् । साम । यजुः । वषट् । स्वाहा । नमः । गायत्री ।
त्रिष्टुप् । जगती । वषट् । स्वाहा । नमः । पृथिवी ।
अन्तरिक्षम् । द्यौः । वषट् । स्वाहा । नमः । अग्निः ।
वायुः । सूर्यः । वषट् । स्वाहा । नमः । प्राण इति प्र-
अनः । व्यान इति वि-अनः । अपान इत्यप-अनः ।
वषट् । स्वाहा । नमः । अन्नम् । कृषिः । वृष्टिः ।
वषट् । स्वाहा । नमः । पिता । पुत्रः । पौत्रः । वषट्
स्वाहा । नमः । भूः । भुवः । सुवः । वषट् । स्वाहा ।
नमः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ सप्तमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ।)

---

एकादश आप्त्याख्या मन्त्रा उक्ताः । अथ द्वादशे पर्याप्त्याख्या मन्त्रा उच्यन्ते ।

तथा च ब्राह्मणे विनियोगः श्रूयते—'भूतं भव्यं भविष्यदिति पर्याप्तीर्जुहोति' इति ।

तत्र प्रथममन्त्रमाह—

भूतं भव्यं भविष्यद्वषट्स्वाहा नमः, इति ।

वषट्कारादीनि त्रीणि ब्रह्मणो नामानि । एभिश्च सत्यत्वमाख्यायते । तथा सति कालत्रयवर्तीनि सत्यानीति वाक्यार्थो भवति । आदरार्थमेकार्थवाचिनां वषडादीनां त्रयाणां प्रयोगः । एतेभ्यः स्वाहेति शेषः । एवमुत्तरेष्वपि योजनीयम् ।

तानेतानुत्तरान्मन्त्रानाह—

ऋक्साम यजुर्वषट्स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमोऽग्निर्वायुः सूर्यो वषट्स्वाहा नमः प्राणो व्यानोऽपानो वषट्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः पिता पुत्रः पौत्रो वषट्स्वाहा नमो भूर्भुवः सुवर्वषट्स्वाहा नमः, इति ॥

वेदच्छन्दोलोकदेवप्राणान्नपितृव्याहृतिविषया एतेऽष्टौ मन्त्राः पूर्वेण मन्त्रेण सहैतैर्मन्त्रैर्नवभिः पर्याप्त्याख्या आहुतयो होतव्याः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः।)

---

आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान्। आपो देवीर्यज्ञिया माऽऽ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत्। आ मे ग्रहो भवत्वा पुरोरुक्स्तुतशस्त्रे माऽऽविशतां समीची। आदित्या रुद्रा वसवो मे सदस्याः सहस्रस्य मा भूमा मा प्र हासीत्। आ माऽग्निष्टोमो विशतूक्थ्यश्चातिरात्रो माऽऽविशत्वापिशर्वरः। तिरोअह्निया मा सुहुता आ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत् (१)॥

(अग्निष्टोमो विशत्वष्टादश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः।)

---

एति। मे। गृहाः। भवन्तु। एति। प्रजेति प्र—जा। मे। एति। मा। यज्ञः। विशतु। वीर्यावानिति वीर्य—वान्। आपः। देवीः। यज्ञियाः। मा। एति। विशन्तु। सहस्रस्य। मा। भूमा। मा। प्रेति। हासीत्। एति।

मे । गृहाः । भवन्तु । एति । पुरोरुगिति पुरः—रुक् । स्तुत-शस्त्रे इति स्तुत—शस्त्रे । मा । एति । विशताम् । समीची इति । आदित्याः । रुद्राः । वसवः । मे । सदस्याः । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् । एति । मा । अग्निष्टोम इत्यग्नि—स्तोमः । विशतु । उक्थ्यः । च । अतिरात्र इत्यति—रात्रः । मा । एति । विशतु । आपिशर्वर इत्यापि—शर्वरः । तिरोअह्निया इति तिरः—अह्नियाः । मा । सुहुता इति सु—हुताः । एति । विशन्तु । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

---

पर्याप्तिनामका मन्त्रा द्वादशेऽभिहिताः । अथाऽऽभूनामका होममन्त्रास्त्रयोदशेऽभिधीयन्ते । तथाच ब्राह्मणे विनियोगः—'आ मे गृहा भवन्त्वित्याभूर्जुहोति' इति ।

तत्र प्रथममाह—

आमे गृहा भवन्त्वा प्रजा म आ मा यज्ञो
विशतु वीर्यावान् । आपो देवीर्यज्ञिया माऽऽ-
विशन्तु सहस्रस्य मा भूमा मा प्र हासीत् । इति ।

मे मदर्थं गृहाः समीचीना आभवन्तु सर्वतः संपद्यन्ताम् । तथा प्रजा पुत्रादिरूपाऽपि मे मदर्थमाभवतु । तथा वीर्यावान्फलोपेतो यज्ञश्च मामाविशतु

तथा यज्ञिया यज्ञार्हा आपो देवीर्जलदेवता मामाविशन्तु । सहस्रस्य भूमा सहस्रसंख्याकस्य धनस्य बाहुल्यं मां कदाचिदपि मा प्रहासीन्मा परित्यजतु ।

अथ द्वितीयमाह—

आ मे ग्रहो भवत्वा पुरोरुक्स्तुतशस्त्रे माऽऽविशता समीची । आदित्या रुद्रा वसवो मे सदस्याः सहस्रस्य मा भूमा मा प्र हासीत् । इति ।

मे मदर्थं ग्रहोऽप्यैन्द्रवायवादिकः स आभवतु सर्वतः संपद्यताम् । तथा पुरोरुग्ग्रहं ग्रहीतुं पुरतः पठ्यमानो मन्त्रोऽप्याभवतु । तथा स्तोत्रशस्त्रे अपि समीची अनुकूले मामाविशताम् । तथाऽऽदित्याद्या देवाः सदस्या ब्राह्मणाश्च मामाविशन्तु । सहस्रस्येत्यादि पूर्ववत् ।

अथ तृतीयमाह—

आ माऽग्निष्टोमो विशतूक्थ्यश्चातिरात्रो माऽऽविशत्वापिशर्वरः । तिरोअह्निया मा सुहुता आ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत् । इति ॥

सोमयागेषु प्रथमसंस्थारूपो योऽयमग्निष्टोमः स मामाविशतु । यश्च द्वितीयसंस्थारूप उक्थः सोऽयं मामाविशतु । यश्चतुर्थसंस्थारूपोऽतिरात्रः सोऽपि मामाविशतु । कीदृशोऽतिरात्रः, अपिशर्वरः, अपि गतानि प्राप्तानि शर्वर्यां पठितव्यानि स्तोत्राणि यस्यासावापिशर्वरः । तथा तिरो अह्निया अह्न[ह]स्तिरस्कृत्य रात्रौ प्रयोक्तव्या अतिरात्रगताः सोमविशेषाः । ते च सुष्ठु हुताः सन्तो मामाविशन्तु । सहस्रस्येत्यादि पूर्ववत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

———

(अथ सप्तमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः।)

---

अग्निना तपोऽन्वभवद्वाचा ब्रह्म मणिना रूपाणीन्द्रेण देवान्वातेन प्राणान्त्सूर्येण द्यां चन्द्रमसा नक्षत्राणि यमेन पितॄन्राज्ञा मनुष्यान्फलेन नादेयानजगरेण सर्पान्व्याघ्रेणाऽऽरण्यान्पशूञ्छ्येनेन पतत्रिणो वृष्णाऽश्वानृषभेण गा बस्तेनाजा वृष्णिनाऽवीर्व्रीहिणाऽन्नानि यवेनौषधीर्न्यग्रोधेन वनस्पतीनुदुम्बरेणोर्जं गायत्रिया छन्दाꣳसि त्रिवृता स्तोमान्ब्राह्मणेन वाचम् (१) ॥

(ब्राह्मणेनैकं च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः)

---

अग्निना। तपः। अन्विति। अभवत्। वाचा। ब्रह्म। मणिना। रूपाणि। इन्द्रेण। देवान्। वातेन। प्राणानिति प्र—अनान्। सूर्येण। द्याम्। चन्द्रमसा। नक्षत्राणि। यमेन। पितॄन्। राज्ञा। मनुष्यान्। फलेन। नादेयान्। अजगरेण। सर्पान्। व्याघ्रेण। आरण्यान्। पशून्।

श्येनेन॑ । प॒त॒त्रिण॑: । वृष्णा॑ । अश्वा॑न् । ऋ॒ष॒भेण॑ । गाः ।
ब॒स्तेन॑ । अ॒जाः । वृ॒ष्णिना॑ । अवी॑: । व्री॒हिणा॑ । अन्ना॑नि ।
यवे॑न । ओष॑धीः । न्य॒ग्रोधे॑न । वन॒स्पती॑न् । उ॒दु॒म्बरे॑ण ।
ऊर्ज॑म् । गा॒य॒त्रिया॑ । छन्दा॑ꣳसि । त्रि॒वृतेति॑ त्रि–वृता॑ ।
स्तोमा॑न् । ब्रा॒ह्म॒णेन॑ । वाच॑म् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः । )

---

आभूनामका मन्त्रास्त्रयोदशेऽभिहिताः । अथानुभूनामकाश्चतुर्दशेऽभिधीयन्ते तथा च ब्राह्मणे विनियोगः-'अग्निना तपोऽन्वभवदित्यनुभूर्जुहोति' इति ।
पाठस्तु—

अग्निना तपोऽन्वभवद्वाचा ब्रह्म मणिना रूपाणीन्द्रेण देवान्वातेन प्राणान्त्सूर्येण द्यां चन्द्रमसा नक्षत्राणि यमेन पितॄन्राज्ञा मनुष्यान्फलेन नादेयानजगरेण सर्पान्व्याघ्रेणाऽऽरण्यान्पशूञ्छ्येनेन पतत्रिणो वृष्णाश्वानृषभेण गा बस्तेनाजा वृष्णिनाऽवीर्व्रीहिणाऽन्नानि यवेनौषधीर्न्यग्रोधेन वनस्पतीनुदुम्बरेणोर्जं गायत्रिया छन्दाꣳसि त्रिवृता स्तोमान्ब्राह्मणेन वाचम्, इति ॥

अयं यजमानोऽग्निना तपोऽन्वभवदग्निरूपो भूत्वा तत्सामर्थ्येन सर्वं तपो व्याप्नोति । एवमुत्तरेष्वपि त्रयोविंशतिमन्त्रेषु व्याख्येयम् । तृतीयान्तैस्तत्तदात्म·

कन्त्वं यजमानस्येत्युच्यते। द्वितीयान्तैर्व्याप्यं वस्तु। अन्वभवदिति सर्वत्रानुषज्यते। ब्रह्म मन्त्रजातम्। रूपाणि प्रतिबिम्बात्मकानि। फलेन वृक्षगतेन पक्केन। नादेयान्नदीवत्संपूर्णात्रसान्। मण्डूकादीनामिव मनुष्याणां निगरणे समर्थः प्रौढः सर्पोऽजगरः। वृषा प्रौढोऽश्वः। वाचं वेदात्मिकाम्। स्पष्टमन्यत्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके पञ्चदशोऽनुवाकः ।)

---

स्वाहाऽऽधिमाधीताय स्वाहा स्वाहाऽऽधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहाऽदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहा सर्वस्मै स्वाहा (१) ॥

(पुरुरूपाय स्वाहा दश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके पञ्चदशोऽनुवाकः)

---

स्वाहा। आधिमित्या–धिम्। आधीतायेत्या–धीताय। स्वाहा। स्वाहा। आधीतमित्या–धीतम्। मनसे। स्वाहा। स्वाहा। मनः। प्रजापतय इति प्रजा–पतये। स्वाहा। काय। स्वाहा। कस्मै। स्वाहा। कतमस्मै। स्वाहा। अदित्यै। स्वाहा। अदित्यै। मह्यै। स्वाहा। अदित्यै। सुमृडीकाया इति सु–मृडीकायै। स्वाहा। सरस्वत्यै। स्वाहा। सरस्वत्यै। बृहत्यै। स्वाहा। सरस्वत्यै। पावकायै। स्वाहा। पूष्णे। स्वाहा। पूष्णे। प्रपथ्यायेति प्र–पथ्याय। स्वाहा। पूष्णे। नरन्धिषाय। स्वाहा। त्वष्ट्रे। स्वाहा। त्वष्ट्रे। तुरीपाय। स्वाहा। त्वष्ट्रे। पुरुरूपायेति पुरु–रूपाय। स्वाहा। विष्णवे। स्वाहा। विष्णवे। निखुर्यपायेति निखुर्य–पाय। स्वाहा। विष्णवे। निभूयपायेति निभूय–पाय। स्वाहा। सर्वस्मै। स्वाहा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके पञ्चदशोऽनुवाकः॥ १५॥

---

(अथ सप्तमकाण्डे तृतीयप्रपाठके पञ्चदशोऽनुवाकः।)

---

अनुभूनामका मन्त्राश्चतुर्दशेऽभिहिताः। अथ पञ्चदशे वैश्वदेवाख्या आहुतेमन्त्रा उच्यन्ते।

कल्पः–'आकूत्यै प्रयुजेऽग्नये स्वाहेति चत्वार्यौद्ग्रहणानि जुहोति स्वाहाऽऽधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि, सोऽयं दीक्षाहुतिकालो विवृद्धः सप्ताहमन्वहमौद्ग्रहणैर्वैश्वदेवैश्चोत्तरोत्तरैः प्रचरति षड्ढुतमेऽहन्यौद्ग्रहणानि जुहोति सर्वस्मै स्वाहेति पूर्णाहुतिमुत्तमाम्, इति ।

तत्रौद्ग्रहणमन्त्राः प्रथमकाण्डे समाम्नाताः । वैश्वदेवमन्त्रा इहाऽऽम्नायन्ते ।

तेषु प्रथमदिनमन्त्रानाह—

स्वाहाऽऽधिमाधीताय स्वाहा स्वाहाऽऽधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा, इति ।

एते च मन्त्रा उभयतः स्वाहाकाराः । तत्रान्तिमस्वाहाकारो हविष्प्रदाने वर्तते । प्रथमस्तु स्वाहाकारो निपाता अनेकार्था इति न्यायेनोचितार्थे योजनीयः । आ समन्ताद्धीयते स्थाप्यते मन्त्रप्रयनुष्ठाननिर्णयोऽस्यां बुद्धावित्याधिर्बुद्धिस्तां बुद्धिं स्वाहा संपादयामीत्यत्रोचितार्थः । अधीताय तस्यां बुद्धौ स्थापिताय मन्त्राभिमानिने देवाय स्वाहुतमिदमस्तु । तथाऽऽधीतं बुद्धौ संगृहीतं स्वाहा विस्मरणमन्तरेण धारयामि । मनसे तद्धारणसमर्थायान्तःकरणाय स्वाहुतमिदमस्तु । तथा मनस्तथाविधमन्तःकरणं स्वाहा संपादितवानस्मि । प्रजापतये तस्य मनसः प्रेरकाय स्वाहुतमिदमस्तु ।

अथ द्वितीयदिनमन्त्रानाह—

काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा, इति ।

प्रथममन्त्रगतः कशब्दः प्रजापतिवाचकः । को ह वै नाम प्रजापतिरिति श्रुत्यन्तरात् । द्वितीयमन्त्रगतस्तु कशब्दः सर्वनामत्वात्प्रशस्तवाची । तेन चाविज्ञानं लक्ष्यते । ईदृशोऽयमिति केनापि ज्ञातुमशक्य इत्यर्थः । कतमशब्दो बहूनां मध्ये निर्धारणप्रश्ने वर्तते । तेन च सर्वेषु देवेषु मध्ये शास्त्रविवरणनिर्धारणीयस्वरूप इत्युक्तं भवति ।

अथ तृतीयदिनगतान्मन्त्रानाह—

अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा, इति ।

अदितिर्भूमिः । मही विस्तीर्णा । सुमृडीका सुखप्रदा ।

---

१ क. घ. ङ. च. 'वानीति । सोऽ' । २ ख. 'विचारेण नि' ।

अथ चतुर्थदिनगतान्मन्त्रानाह—

सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा
सरस्वत्यै पावकायै स्वाहा, इति ।

पावकायै शोधयित्र्यै ।

अथ पञ्चमदिनगतान्मन्त्रानाह—

पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा
पूष्णे नरन्धिषाय स्वाहा, इति ।

प्रकृष्टाय श्रौतस्मार्तमार्गाय हितः प्रपथ्यः । नराणां धारयिता नरंधिषः ।

अथ षष्ठदिनगतान्मन्त्रानाह—

त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा
त्वष्ट्रे पुरुरूपाय स्वाहा, इति ।

तूर्णं प्राप्तस्तुरीपः । बहुमूर्तिविशेषैर्युक्तः पुरुरूपः ।

अथ सप्तमदिनगतान्मन्त्रानाह—

विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा
विष्णवे निभूयपाय स्वाहा, इति ।

नितरां खुरं पापरोगादिबाधमर्हन्तीति निखुर्याः । तेषां पाता निखुर्यपः ।
विशेषैश्वर्यादिराहित्येन न्यग्भावयोग्या निभूयास्तेषां पाता निभूयपः ।

अथ पूर्णाहुतिमन्त्रमाह—

सर्वस्मै स्वाहा, इति ॥

सर्वप्रकारपालकाय स्वाहुतमित्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके
पञ्चदशोऽनुवाकः ॥ १५ ॥

---

(अथ सप्तमाष्टके तृतीयप्रपाठके षोडशोऽनुवाकः ।

---

दद्भ्यः स्वाहा हनूभ्याꣳ स्वाहोष्ठाभ्याꣳ स्वाहा
मुखाय स्वाहा नासिकाभ्याꣳ स्वाहाऽक्षीभ्याꣳ स्वाहा

कर्णाभ्याᳪं स्वाहा पार इक्षवोऽवार्येभ्यः पक्ष्मभ्यः स्वाहाऽवार इक्षवः पार्येभ्यः पक्ष्मभ्यः स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याᳪं स्वाहा ललाटाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यः स्वाहा वहाय स्वाहा ग्रीवाभ्यः स्वाहा स्कन्धेभ्यः स्वाहा कीकसाभ्यः स्वाहा पृष्टीभ्यः स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याᳪं स्वाहा ( १ ) अᳪंसाभ्याᳪं स्वाहा दोषभ्याᳪं स्वाहा बाहुभ्याᳪं स्वाहा जङ्घाभ्याᳪं स्वाहा श्रोणीभ्याᳪं स्वाहोरुभ्याᳪं स्वाहाऽष्ठीवद्भ्याᳪं स्वाहा जङ्घाभ्याᳪं स्वाहा भसदे स्वाहा शिखण्डेभ्यः स्वाहा वालधानाय स्वाहाऽण्डाभ्याᳪं स्वाहा शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा पद्भ्यः स्वाहा शफेभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा लोहिताय स्वाहा माᳪंसाय स्वाहा स्नावभ्यः स्वाहाऽस्थभ्यः स्वाहा मज्जभ्यः स्वाहाऽङ्गेभ्यः स्वाहाऽऽत्मने स्वाहा सर्वस्मै स्वाहा ( २ ) ॥

[ पार्श्वाभ्याᳪं स्वाहा मज्जभ्यः स्वाहा षट्च ]

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

———

(अथ सप्तमाष्टके तृतीयप्रपाठके षोडशोऽनुवाकः ।)

---

दद्भ्य इति दत्–भ्यः । स्वाहा । हनूभ्यामिति हनू–भ्याम् । स्वाहा । ओष्ठाभ्याम् । स्वाहा । मुखाय । स्वाहा । नासिकाभ्याम् । स्वाहा । अक्षीभ्याम् । स्वाहा । कर्णाभ्याम् । स्वाहा । पारे । इक्षवः । अवार्येभ्यः । पक्ष्मभ्य इति पक्ष्म–भ्यः । स्वाहा । अवारे । इक्षवः । पार्येभ्यः । पक्ष्मभ्य इति पक्ष्म–भ्यः । स्वाहा । शीर्ष्णे । स्वाहा । भ्रूभ्याम् । स्वाहा । ललाटाय । स्वाहा । मूर्ध्ने । स्वाहा । मस्तिष्काय । स्वाहा । केशेभ्यः । स्वाहा । वहाय । स्वाहा । ग्रीवाभ्यः । स्वाहा । स्कन्धेभ्यः । स्वाहा । कीकसाभ्यः । स्वाहा । पृष्टीभ्य इति पृष्टि–भ्यः । स्वाहा । पाजस्याय । स्वाहा । पार्श्वाभ्याम् । स्वाहा ( १ ) । अꣳसाभ्याम् । स्वाहा । दोषभ्यामिति दोष–भ्याम् । स्वाहा । बाहुभ्यामिति बाहु–भ्याम् । स्वाहा । जङ्घाभ्याम् । स्वाहा । श्रोणीभ्यामिति श्रोणि–भ्याम् । स्वाहा । ऊरुभ्यामित्यूरु–भ्याम् । स्वाहा । अष्ठीवद्भ्यामित्यष्ठीवत्–भ्याम् । स्वाहा । जङ्घाभ्याम् । स्वाहा । भसदे । स्वाहा । शिखण्डेभ्यः । स्वाहा । वालधानायेति वाल–धानाय । स्वाहा । आण्डाभ्याम् । स्वाहा । शेपाय । स्वाहा ।

रेतसे । स्वाहा । प्रजाभ्य इति प्र-जाभ्यः । स्वाहा । प्रजननायेति प्र-जननाय । स्वाहा । पद्भ्य इति पत्-भ्यः । स्वाहा । शफेभ्यः । स्वाहा । लोमभ्य इति लोम-भ्यः । स्वाहा । त्वचे । स्वाहा । लोहिताय । स्वाहा । मा॒ꣳसाय । स्वाहा । स्नावभ्य इति स्नाव-भ्यः । स्वाहा । अस्थभ्य इत्यस्थ-भ्यः । स्वाहा । मज्जभ्य इति मज्ज-भ्यः । स्वाहा । अङ्गेभ्यः । स्वाहा । आत्मने । स्वाहा । सर्वस्मै । स्वाहा ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके षोडशोऽनुवाकः । )

---

पञ्चदशे वैश्वदेवाहुतिमन्त्रा उक्ताः । षोडशे पश्वङ्गहोममन्त्रा उच्यन्ते तथा च ब्राह्मणम्—'दद्भ्यः स्वाहा हनूभ्याꣳ स्वाहेत्यङ्गहोमाञ्जुहोति' इति पाठस्तु—

दद्भ्यः स्वाहा हनूभ्याꣳ स्वाहोष्ठाभ्याꣳ स्वाहा मुखाय स्वाहा नासिकाभ्याꣳ स्वाहाऽक्षीभ्याꣳ स्वाहाः कर्णाभ्याꣳ स्वाहा पार इक्षवोऽवार्येभ्यः पक्ष्मभ्यः स्वाहाऽवार इक्षवः पार्येभ्यः पक्ष्मभ्यः स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याꣳ स्वाहा ललाटाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यः स्वाहा वहाय स्वाहा ग्रीवाभ्यः स्वाहा स्कन्धेभ्यः स्वाहा कीक-

साभ्यः स्वाहा पृष्टीभ्यः स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याꣳ स्वाहाऽꣳसाभ्याꣳ स्वाहा दोषभ्याꣳ स्वाहा बाहुभ्याꣳ स्वाहा जङ्घाभ्याꣳ स्वाहा श्रोणीभ्याꣳ स्वाहोरुभ्याꣳ स्वाहाऽष्ठीवद्भ्याꣳ स्वाहा जङ्घाभ्याꣳ स्वाहा भसदे स्वाहा शिखण्डेभ्यः स्वाहा वालधानाय स्वाहाऽऽण्डाभ्याꣳ स्वाहा शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा पद्भ्यः स्वाहा शफेभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा लोहिताय स्वाहा माꣳसाय स्वाहा स्नावभ्यः स्वाहाऽस्थभ्यः स्वाहा मज्जभ्यः स्वाहाऽङ्गेभ्यः स्वाहाऽऽत्मने स्वाहा सर्वस्मै स्वाहा, इति ॥

अत्र दन्तहन्वादयोऽश्वस्यावयवाः प्रसिद्धाः । इक्षवोऽक्षिरोमाणि । ते च पार उपरिभागे वर्तन्ते । कस्मात्पार इति तदुच्यते—अवार्येभ्यः पक्ष्मभ्योऽधोभागवर्तिभ्यो रोमभ्य उपरि वर्तन्ते । एतादृशा ये सन्ति तेभ्यः स्वाहेति योजनीयम् । एवं पार्येभ्यः पक्ष्मभ्योऽवारेऽधोभागे ये केचिदिक्षवो वर्तन्ते । अत्र शिरःशब्देन ललाटादधोभागो विवक्षितः । मूर्धशब्देन चोपरिभागः । तत्रत्यं मांसं मस्तिष्कम् । वहशब्देन रथयुगस्य वाहकः प्रदेश उच्यते । ग्रीवाशब्देन गलगता नाड्यः । स्कन्धशब्देन गलस्योपरिभागावयवाः । कीकसाशब्देन पृष्ठास्थिगता गुलिकाः । पृष्टिशब्देनोभयपार्श्वगता अस्थिविशेषाः । पाजो बलं तत्स्थानं हृदयं पाजस्यम् । दोःशब्देन बाहुशब्देन च पूर्वपदयोरुत्तराधरभागावुच्येते । जङ्घाशब्देन मध्यभागः । श्रोण्यादिशब्दैश्चतुर्भिः पृष्ठगतयोः पादयोश्चत्वार ऊर्ध्वाधोभागा उच्यन्ते । भसच्छब्देनापानप्रदेशः । शिखण्डा ऊर्ध्वकेशाः । वालधानं पुच्छदण्डः । प्रजननमुत्पादनसामर्थ्यम् । अङ्गान्यनुक्तावयवाः । आत्मा तत्रत्यो जीवः । सर्वं कृत्स्नशरीरम् । एतैः पञ्चाशन्मन्त्रैरङ्गहोमान्कुर्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ सप्तमाष्टके तृतीयप्रपाठके सप्तदशोऽनुवाकः । )

आञ्ज्येताय स्वाहाऽञ्जिसक्थाय स्वाहा शितिपदे स्वाहा शितिककुदे स्वाहा शितिरन्ध्राय स्वाहा शितिपृष्ठाय स्वाहा शित्यंसाय स्वाहा पुष्पकर्णाय स्वाहा शित्योष्ठाय स्वाहा शितिभ्रवे स्वाहा शितिभसदे स्वाहा श्वेतानूकाशाय स्वाहाऽञ्जये स्वाहा ललामाय स्वाहाऽसितज्ञवे स्वाहा कृष्णैताय स्वाहा रोहितैताय स्वाहाऽरुणैताय स्वाहेदृशाय स्वाहा कीदृशाय स्वाहा तादृशाय स्वाहा सदृशाय स्वाहा विसदृशाय स्वाहा सुसदृशाय स्वाहा रूपाय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( रूपाय स्वाहा द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

( अथ सप्तमाष्टके तृतीयप्रपाठके सप्तदशोऽनुवाकः । )

अञ्ज्येतायेत्यञ्जि—एताय । स्वाहा । अञ्जिसक्थायेत्यञ्जि—सक्थाय । स्वाहा । शितिपद इति शिति—पदे । स्वाहा । शितिककुद इति शिति—ककुदे । स्वाहा । शितिरन्ध्रायेति शिति—रन्ध्राय । स्वाहा । शितिपृष्ठायेति

शिति-पृष्ठाय । स्वाहा । शित्यंश्सायेति शिति-अंश्साय । स्वाहा । पुष्पकर्णायेति पुष्प-कर्णाय । स्वाहा । शित्योष्ठायेति शिति-ओष्ठाय । स्वाहा । शितिभ्रव इति शिति-भ्रवे । स्वाहा । शितिभसद इति शिति-भसदे । स्वाहा । श्वेतानूकाशायेति श्वेत-अनूकाशाय । स्वाहा । अञ्जये । स्वाहा । ललामाय । स्वाहा । असितज्ञव इत्यसित-ज्ञवे । स्वाहा । कृष्णैतायेति कृष्ण-एताय । स्वाहा । रोहितैतायेति रोहित-एताय । स्वाहा । अरुणैतायेत्यरुण-एताय । स्वाहा । ईदृशाय । स्वाहा । कीदृशाय । स्वाहा । तादृशाय । स्वाहा । सदृशाय । स्वाहा । विसदृशायेति वि-सदृशाय । स्वाहा । सुसदृशायेति सु-सदृशाय । स्वाहा । रूपाय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठके सप्तदशोऽनुवाकः । )

---

षोडशेऽनुवाकेऽङ्गहोममन्त्रा उक्ताः । अथ सप्तदशाष्टादशयो रूपहोममन्त्रा उच्यन्ते । तथाच ब्राह्मणम्—‘ अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति ’ इति ।

तत्रैकानुवाकगतानाह—

अञ्ज्येताय स्वाहाऽञ्जिसक्थाय स्वाहा शितिपदे स्वाहा शितिककुदे स्वाहा शितिरन्ध्राय स्वाहा शितिपृष्ठाय स्वाहा शित्य॑ꣳसाय स्वाहा पुष्पकर्णाय स्वाहा शित्योष्ठाय स्वाहा शितिभ्रवे स्वाहा शितिभसदे स्वाहा श्वेतानूकाशाय स्वाहाऽञ्जये स्वाहा ललामाय स्वाहाऽसितज्ञवे स्वाहा कृष्णैताय स्वाहा रोहितैताय स्वाहाऽरुणैताय स्वाहेदृशाय स्वाहा कीदृशाय स्वाहा तादृशाय स्वाहा सदृशाय स्वाहा विसदृशाय स्वाहा सुसदृशाय स्वाहा रूपाय स्वाहा सर्वस्मै स्वाहा, इति॥

अञ्जिः शुक्लः। एतः सांध्यो वर्णः। अञ्जिश्चासावेतश्चेत्यञ्ज्येतः। मिश्रवर्ण इत्यर्थः। अञ्जिसक्थः श्वेतारुणः। शितिः श्वेतस्तादृशपादयुक्तः शितिपात्। ककुदादयोऽपि श्वेता यस्येति योज्यम्। रन्ध्राणि कर्णादिच्छिद्राणि। पुष्पाकारलक्षणं कर्णयोर्यस्यासौ पुष्पकर्णः। श्वेताभ्यां भ्रूभ्यां युक्तः शितिभ्रुः। श्वेतेनापानेन युक्तः शितिभसत्। अनूकाशश्चक्षुष्प्रदेशः। अञ्जिः श्वेतकृत्स्नशरीरः। ललाटश्वैत्ययुक्तो ललामः। कृष्णजानुयुक्तोऽसितज्ञुः। कृष्णमिश्रसांध्यवर्णयुक्तः कृष्णैतः। जपाकुसुमवदत्यन्तरागयुक्तः संध्यावर्णो लोहितैतः। ईषदारुण्ययुक्तः संध्यावर्णोऽरुणैतः। इदमिति स्पष्टत्वेनावभासमानाकार ईदृशः। किमित्यनिश्चितत्वेनावभासमानः कीदृशः। दूरस्थदृष्टान्तेनोपमीयमानस्तादृशः। समीपस्थदृष्टान्तेनोपमीयमानः सदृशः। उपमारहितो विसदृशः। सुखेनोपमातुं शक्यः सुसदृशः। आकारसामान्यं रूपम्। अनुक्तसंग्रहार्थः सर्वशब्दः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके सप्तदशोऽनुवाकः॥ १७॥

———

( अथ सप्तमाष्टके तृतीयप्रपाठकेऽष्टादशोऽनुवाकः । )

---

कृष्णाय स्वाहा श्वेताय स्वाहा पिशङ्गाय स्वाहा सारङ्गाय स्वाहाऽरुणाय स्वाहा गौराय स्वाहा बभ्रवे स्वाहा नकुलाय स्वाहा रोहिताय स्वाहा शोणाय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा पाकलाय स्वाहा सुरूपाय स्वाहाऽनुरूपाय स्वाहा विरूपाय स्वाहा सरूपाय स्वाहा प्रतिरूपाय स्वाहा शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा पृश्निसक्थाय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( कृष्णाय षट्चत्वारिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठकेऽष्टादशोऽनुवाकः । )

---

कृष्णाय । स्वाहा । श्वेताय । स्वाहा । पिशङ्गाय । स्वाहा । सारङ्गाय । स्वाहा । अरुणाय । स्वाहा । गौराय । स्वाहा । बभ्रवे । स्वाहा । नकुलाय । स्वाहा । रोहिताय । स्वाहा । शोणाय । स्वाहा । श्यावाय । स्वाहा । श्यामाय । स्वाहा । पाकलाय । स्वाहा । सुरूपायेति सु-रूपाय । स्वाहा । अनुरूपायेत्यनु-रूपाय । स्वाहा ।

विरूपायेति वि—रूपाय । स्वाहा । सरूपायेति स—रूपाय । स्वाहा । प्रतिरूपायेति प्रति—रूपाय । स्वाहा । शबलाय । स्वाहा । कमलाय । स्वाहा । पृश्नये । स्वाहा । पृश्निसक्थायेति पृश्नि—सक्थाय । स्वाहा । सर्वस्मै । स्वाहा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठकेऽष्टादशोऽनुवाकः । )

---

सप्तदशेऽश्वावयवरूपमन्त्रा उक्ताः । अष्टादशे त्ववयविरूपमन्त्रा उच्यन्ते । विनियोगस्तु पूर्वमेवोदाहृतः ।

पाठस्तु—

कृष्णाय स्वाहा श्वेताय स्वाहा पिशङ्गाय स्वाहा
सारङ्गाय स्वाहाऽरुणाय स्वाहा गौराय स्वाहा
बभ्रवे स्वाहा नकुलाय स्वाहा रोहिताय स्वाहा
शोणाय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा
पाकलाय स्वाहा सुरूपाय स्वाहाऽनुरूपाय स्वाहा
विरूपाय स्वाहा सरूपाय स्वाहा प्रतिरूपाय स्वाहा
शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा
पृश्निसक्थाय स्वाहा सर्वस्मै स्वाहा, इति ॥

कृत्स्नेऽपि शरीरे कार्ष्ण्ययुक्तः कृष्णः । एवं श्वेतादयः । पिशङ्गो गोरोचनवर्णः । सारङ्गश्चातकवर्णः । ईषद्रक्तोऽरुणः । गौरोऽत्यन्तश्वेतः । बभ्रुः कपिलः नकुलो नकुलवर्णः । रोहितोऽत्यन्तरक्तः । शोणः पीतलोहितः । श्याव पीतकृष्णवर्णः । श्यामो नीलः । अत्यन्तकृष्णः पाकलः । शोभनरूपः सुरूपः अनुकूलरूपोऽनुरूपः । विविधरूपो विरूपः । समानरूपः सरूपः, नात्यन्तं

सुरूपो नात्यन्तं कुरूप इत्यर्थः । प्रतिकूलरूपः प्रतिरूपः । मिश्रवर्णः शबलः । कमलवर्णः कमलः । चित्रवर्णः पृश्निः । तथाविधाभ्यां सक्थिभ्यामुपेतः पृश्निसक्थः । अनुक्तसंग्रहार्थः सर्वशब्दः । पूर्वानुवाकोक्तैः षड्विंशतिमन्त्रैरेतदनुवाकोक्तैस्त्रयोविंशतिमन्त्रैश्चेत्येवमेकोनपञ्चाशन्मन्त्रैरश्वरूपाणि जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठक एकोनविंशोऽनुवाकः । )

---

ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा काण्डेभ्यः स्वाहा वल्शेभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहाऽगृहीतेभ्यः स्वाहाऽवपन्नेभ्यः स्वाहा शयानेभ्यः स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( ओषधीभ्यश्चतुर्विंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठक एकोनविंशोऽनुवाकः । )

---

ओषधीभ्य इत्योषधि-भ्यः । स्वाहा । मूलेभ्यः । स्वाहा । तूलेभ्यः । स्वाहा । काण्डेभ्यः । स्वाहा । वल्शेभ्यः । स्वाहा । पुष्पेभ्यः । स्वाहा । फलेभ्यः । स्वाहा । गृहीतेभ्यः । स्वाहा । अगृहीतेभ्यः । स्वाहा । अवपन्नेभ्य

इत्यर्व—पन्नेभ्यः । स्वाहा । शयानेभ्यः । स्वाहा । सर्वस्मै ।
स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
तृतीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमकाण्डे तृतीयप्रपाठक एकोनविंशोऽनुवाकः । )

---

अवयविरूपमन्त्रा अष्टादशे प्रोक्ताः । अथौषधिमन्त्रा एकोनविंशेऽभिधीयन्ते
तथा च ब्राह्मणम्—‘ ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमाञ्जु
होति ’ इति ।

पाठस्तु—

ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः
स्वाहा काण्डेभ्यः स्वाहा वल्शेभ्यः स्वाहा
पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः
स्वाहाऽगृहीतेभ्यः स्वाहाऽवपन्नेभ्यः स्वाहा
शयानेभ्यः स्वाहा सर्वस्मै स्वाहा, इति ॥

तूलान्यग्राणि काण्डानि दण्डसदृशा भागाः । वल्शानि द्वैधीभावसंधयः
गृहीतानि प्राणिभिरुपयुक्तानि । अगृहीतानि प्राणिभिरनुपयुक्तानि । अवप
न्नानि स्तम्बेभ्यो वियुज्य भूमौ पतितानि । शयानानि स्तम्बैः सह भूमौ पति
तानि । अनुक्तसंग्रहार्थः सर्वशब्दः । एतैर्द्वादशभिर्मन्त्रैरोषधिहोमाञ्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठक
एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके तृतीयप्रपाठके विंशोऽनुवाकः । )

---

वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः
स्वाहा स्कन्धोभ्यः स्वाहा शाखाभ्यः स्वाहा पर्णेभ्यः

स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहाऽगृहीतेभ्यः स्वाहाऽवपन्नेभ्यः स्वाहा शयानेभ्यः स्वाहा शिष्टाय स्वाहाऽतिशिष्टाय स्वाहा परिशिष्टाय स्वाहा सꣳशिष्टाय स्वाहोच्छिष्टाय स्वाहा रिक्ताय स्वाहाऽरिक्ताय स्वाहा प्ररिक्ताय स्वाहा सꣳरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा (१)॥

(वनस्पतिभ्यः षट्चत्वारिꣳशत्। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयप्रपाठके विंशोऽनुवाकः॥ २०॥

---

प्रजवं ब्रह्मवादिनः किमेण वा अग्न आदित्या उभयोः प्रजापतिरन्नाद्यमिन्द्रो वै सदृङ्ङिन्द्रो वै शिथिलः प्रजापतिरकामयतान्नादः सा विराडसावादित्योऽर्वाङ्भूतमा मेऽग्निना तपः स्वाहाऽऽधिं दद्भ्योऽञ्जेनाय कृष्णायौषधीभ्यो वनस्पतिभ्यो विꣳशतिः॥ २०॥

प्रजवं प्रजापतिरिदंछन्दोमं ते हुवे सत्राहमोषधीभ्यो द्विचत्वारिꣳशत॥ ४२॥

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके तृतीयः प्रपाठकः॥ ३॥

(अथ सप्तमाष्टके तृतीयप्रपाठके विंशोऽनुवाकः।)

---

वनस्पतिभ्य इति वनस्पति-भ्यः। स्वाहा। मूलेभ्यः। स्वाहा। तूलेभ्यः। स्वाहा। स्कन्धोभ्य इति स्कन्धः-भ्यः।

स्वाहा । शाखाभ्यः । स्वाहा । पर्णेभ्यः । स्वाहा । पुष्पेभ्यः । स्वाहा । फलेभ्यः । स्वाहा । गृहीतेभ्यः । स्वाहा । अगृहीतेभ्यः । स्वाहा । अवपन्नेभ्य इत्यव—पन्नेभ्यः । स्वाहा । शयानेभ्यः । स्वाहा । शिष्टाय । स्वाहा । अतिशिष्टायेत्यति—शिष्टाय । स्वाहा । परिशिष्टायेति परि—शिष्टाय । स्वाहा । सꣳशिष्टायेति सं—शिष्टाय । स्वाहा । उच्छिष्टायेत्युत्—शिष्टाय । स्वाहा । रिक्ताय । स्वाहा । अरिक्ताय । स्वाहा । प्ररिक्तायेति प्र—रिक्ताय । स्वाहा । सꣳरिक्तायेति सं—रिक्ताय । स्वाहा । उद्रिक्तायेत्युत्—रिक्ताय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

( अथ सप्तमकाण्डे तृतीयप्रपाठके विंशोऽनुवाकः । )

---

ओषधिहोममन्त्रा एकोनविंशेऽभिहिताः । वृक्षमन्त्रा विंशेऽभिधीयन्ते । तथा च ब्राह्मणम्—‘ वनस्पतिभ्यः स्वाहेति वनस्पति होमाञ्जुहोति ’ इति ।

पाठस्तु—

वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा स्कन्धोभ्यः स्वाहा शाखाभ्यः स्वाहा

पर्णेभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहाऽगृहीतेभ्यः स्वाहाऽवपन्नेभ्यः स्वाहा शयानेभ्यः स्वाहा शिष्टाय स्वाहाऽतिशिष्टाय स्वाहा परिशिष्टाय स्वाहा सꣳशिष्टाय स्वाहोच्छिष्टाय स्वाहा रिक्ताय स्वाहाऽरिक्ताय स्वाहा प्ररिक्ताय स्वाहा सꣳरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा, इति ॥

स्कधांसि द्वैधीभावसंधयः। एकस्मिन्कर्मणीदानीमुपयुक्तादन्यः कालान्तर उपयोक्ष्यमाणः शिष्टः। कालान्तरेऽपि तत्कर्मोपयुक्तादन्योऽतिशिष्टः। कर्मान्तरेष्वप्युपयुक्तादन्यः परिशिष्टः। लोकव्यवहारेऽप्युपयुक्तादन्यः संशिष्टः। उपयुज्य त्यक्त उच्छिष्टः। इदानीं पूर्वैः फलैर्वर्जितो रिक्तः। तद्युक्तस्त्वरिक्तः। सर्वदा तद्वर्जितः प्ररिक्तः। पर्णैरपि वर्जितः संरिक्तः। सर्वैः सर्वदा समृद्ध उद्रिक्तः। अनुक्तसंग्रहार्थः सर्वशब्दः। एतैस्त्रयोविंशतिमन्त्रैर्वनस्पतिहोमाञ्जुहुयात्।

अत्रास्य प्रपाठकस्य विनियोगसंग्रहः—

अविवाक्यं तृतीयाद्ये द्वितीये ऋतुसंस्तवः।
यस्त्रयोदशरात्रोऽसौ तृतीयेऽथ चतुर्थके ॥ १ ॥
स्याच्चतुर्दशरात्रोऽथ पञ्चमेऽन्यश्च तादृशः।
षष्ठसप्तमयोः स्यातां द्वौ पञ्चदशरात्रकौ ॥ २ ॥
यः सप्तदशरात्रोऽयमष्टमे नवमे पुनः।
भवेद्विंशतिरात्रोऽथ दशमे समुदीरितः ॥ ३ ॥
एकविंशतिरात्रोऽथ मन्त्राः सर्वेऽश्वमेधगाः।
अर्वाङित्याप्तिमन्त्रा भूतं पर्याप्तयो नव ॥ ४ ॥
आभूमन्त्रास्त्रयो ह्या मे ह्यनुभूमन्त्रकाः पुनः।
चतुर्विंशतिसंख्याः स्युरग्निनेत्येवमादयः ॥ ५ ॥
दीक्षाहोमार्थमन्त्रास्तु स्वाहा द्वाविंशतिर्मताः।
दद्भ्योऽङ्गमन्त्राः पञ्चाशदज्ञि षड्विंशतिस्तथा ॥ ६ ॥

---

१ ख. च. सर्वेषु।

कृष्णा त्रयोविंशतिः स्युर्मिलित्वा रूपमन्त्रकाः ।
द्वादशौषधिमन्त्राः स्युस्त्रयोविंशतिरीरिताः ॥ ७ ॥
वनस्पतिभ्यो वृक्षाख्यमन्त्रा उक्ताः प्रपाठके ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके विंशाऽनुवाकः ॥ २० ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ सप्तमाष्टके चतुर्थः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

बृहस्पतिरकामयत श्रन्मे देवा दधीरन्गच्छेयं पुरोधामिति स एतं चतुर्विꣳशतिरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै तस्मै श्रद्देवा अदधतागच्छत्पुरोधां य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते श्रदेभ्यो मनुष्या दधते गच्छन्ति पुरोधां ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुः ( १ ) इमानेव लोकानभ्यारोहन्त्य-

भिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्या-
रोहन्त्यसत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति
तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमै-
रोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव
वीर्ये पशुषु प्रति तिष्ठन्ति बृहद्रथंतराभ्यां यन्तीयं
वाव रथंतरमसौ बृहदाभ्यामेव (२) यन्त्यथो
अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी
स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति चतुर्विंशति-
रात्रो भवति चतुर्विंशतिरर्धमासाः संवत्सरः
संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके
प्रति तिष्ठन्त्यथो चतुर्विंशत्यक्षरा गायत्री गायत्री
ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धतेऽतिरात्रा-
वभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै (३) ॥

(अन्तरिक्षं गौरमावायुराभ्यामेव पञ्चचत्वारिंशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ सप्तमाष्टके चतुर्थः प्रपाठकः ।)

---

तत्र प्रथमोऽनुवाकः ।

---

हरिः ॐ ।

बृहस्पतिः । अकामयत । श्रत् । मे । देवाः । दधीरन् । गच्छेयम् । पुरोधामिति पुरः—धाम् । इति । सः । एतम् । चतुर्विंशतिरात्रमिति चतुर्विंशति—रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । तस्मै । श्रत् । देवाः । अदधत । अगच्छत् । पुरोधामिति पुरः—धाम् । ये । एवम् । विद्वांसः । चतुर्विंशतिरात्रमिति चतुर्विंशति—रात्रम् । आसते । श्रत् । एभ्यः । मनुष्याः । दधते । गच्छन्ति । पुरोधामिति पुरः—धाम् । ज्योतिः । गौः । आयुः । इति । त्र्यहा इति त्रि—अहाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । ( १ ) । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि—आरोहन्ति । अभिपूर्वमित्यभि—पूर्वम् । त्र्यहा इति त्रि—अहाः । भवन्ति । अभिपूर्वमित्यभि—पूर्वम् । एव । सुवर्गमिति सुवः—गम् । लोकम् । अभ्यारोहन्तीत्यभि—आरोहन्ति । असत्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः—मम् । यत् । छन्दोमा इति छन्दः—माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः—मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः—माः ।

ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । बृहद्रथंतराभ्यामिति बृहत्-रथंतराभ्याम् । यन्ति । इयम् । वाव । रथंतरमिति रथं-तरम् । असौ । बृहत् । आभ्याम् । एव ( २ ) । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्जसा-अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः-गम् । लोकम् । यन्ति । चतुर्विंशतिरात्र इति चतुर्विंशति-रात्रः । भवति । चतुर्विंशतिरिति चतुः-विंशतिः । अर्धमासा इत्यर्ध-मासाः । संवत्सर इति सं-वत्सरः । संवत्सर इति सं-वत्सरः । सुवर्ग इति सुवः-गः । लोकः । संवत्सर इति सं-वत्सरे । एव । सुवर्ग इति सुवः-गे । लोके । प्रतीति । तिष्ठन्ति । अथो इति । चतुर्विंशत्यक्षरेति चतुर्विंशति-अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । अवेति । रुन्धते । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म-वर्चसस्य । परिगृहीत्या इति परि-गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ सप्तमकाण्डे चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
एकविंशतिरात्रान्तं सत्रमुक्तं तृतीयके ।
चतुर्विंशतिरात्रादि चतुर्थेऽथ प्रवक्ष्यते ॥

द्वौ चतुर्विंशतिरात्रौ तयोराद्यं प्रथमेऽनुवाके विधत्ते—

बृहस्पतिरकामयत श्रन्मे देवा दधीरन्गच्छेयं पुरोधामिति स एतं चतुर्विꣳशतिरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै तस्मै श्रद्देवा अदधतागच्छत्पुरोधां य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते श्रदेभ्यो मनुष्या दधते गच्छन्ति पुरोधाम्, इति ।

पुरा कदाचिद्बृहस्पतिर्देवैरिन्द्रादिभिर्विश्वसनीयः सन्मनस्येवमकामय एते देवा मे मदर्थं श्रद्धीरन्नयं बृहस्पतिरस्मभ्यं हित इति विश्वासं धारय ततोऽहं पुरोधां पौरोहित्यमाचार्यत्वरूपां मुख्यत्वं वा गच्छेयमिति । ततस् पायं विचार्य शास्त्रमुखेन(ण) चतुर्विंशतिरात्रं निश्चित्य तमनुष्ठाय देवैर्वि नीयः सन्पुरोधां प्राप्तवान् । एवमन्येऽपि यजमाना एतदनुष्ठानेन मनुष्यैर्वि सनीयाः सन्तः पुरोधां प्राप्नुवन्ति ।

तत्र कानिचिदहानि विधत्ते—

ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति, इति ।

अत्र चत्वारस्त्र्यहा विज्ञेयाः । तावता विवक्षितसंख्यायाः पूरणात् ।
तत्र चतुर्णां त्र्यहानामानुपूर्व्यं विधत्ते—

अभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति, इति ।

इतो निर्गतानामानुपूर्व्येणैव स्वर्गलोकारोहणम् ।

(प्रथमचतुर्विंशतिरात्रकथनम्)

अथ पृष्ठ्यः षडहश्चत्वारश्छन्दोमा इत्येवं द्वादशाहगतानि दशाहानि विधत्ते—

असत्त्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमै-रोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयो-रेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

अथैतत्क्रतुगतामहःसंख्यां प्रशंसति—

चतुर्विंशतिरात्रो भवति चतुर्विंशति-रर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मव-र्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धते, इति ।

संख्यासाम्यादर्धमासद्वारा संवत्सरं प्राप्य तत्कालीनकर्मानुष्ठानद्वारा स्वर्गे प्रतितिष्ठन्ति । तथा गायत्रीद्वारा ब्रह्मवर्चसं प्राप्नुवन्ति ।

अथ प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै, इति ॥

गायत्रीद्वारा ब्रह्मवर्चसप्राप्तेरुक्तत्वात्तत्परिग्रहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

यथा वै मनुष्या एवं देवा अग्र आसन्तेऽकामयन्तावर्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदं गच्छेमेति त एतं चतुर्विꣳशतिरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै तेऽवर्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदमगच्छन्य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासतेऽवर्तिमेव पाप्मानमपहत्य श्रियं गच्छन्ति श्रीर्हि मनुष्यस्य (१) दैवी सꣳसज्ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यः षडहो भवति षड्वा ऋतवः संवत्सरस्तं मासा अर्धमासा ऋतवः प्रविश्य दैवीꣳ सꣳसदमगच्छन्य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते संवत्सरमेव प्रविश्य वस्यसीꣳ सꣳसदं गच्छन्ति त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिꣳशाः परस्तात्त्रयस्त्रिꣳशैरेवोभयतोऽवर्तिं पाप्मानमपहत्य दैवीꣳ सꣳसदं मध्यतः (२) गच्छन्ति पृष्ठानि हि दैवी सꣳसज्जामि वा एतत्कुर्वन्ति यत्त्रयस्त्रयस्त्रिꣳशा अन्वञ्चो मध्येऽनिरुक्तो भवति तेनाजाम्यूर्ध्वानि पृष्ठानि भवन्त्यूर्ध्वाश्छन्दोमा उभाभ्याꣳ रूपाभ्याꣳ

सुवर्गं लोकं यन्त्यसंत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवः ( ३ ) छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिꣳशाः परस्तान्मध्ये पृष्ठान्युरो वै त्रयस्त्रिꣳशा आत्मा पृष्ठान्यात्मन एव तद्यजमानाः शर्म नह्यन्तेऽनार्त्यै बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव ( ४ ) सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्षडहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति त्रिवृतोऽधि त्रिवृतमुप यन्ति स्तोमानाꣳ संपत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवत्ययं वाव स क्षयोऽस्मादेव तेन क्षयान्न यन्ति चतुर्विꣳशतिरात्रो भवति चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विꣳशत्यक्षरा गायत्री गायत्री

ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धतेऽतिरात्रा-
वभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ( ५ ) ॥

( मनुष्यस्य मध्यतः पशवस्ताभ्यामेव संवत्सरश्चतुर्विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः )

---

यथा । वै । मनुष्याः । एवम् । देवाः । अग्रे ।
आसन् । ते । अकामयन्त । अवर्तिम् । पाप्मानम् ।
मृत्युम् । अपहत्येत्यप–हत्य । दैवीम् । सꣳसदमिति
सं–सदम् । गच्छेम । इति । ते । एतम् । चतुर्विꣳशति-
रात्रमिति चतुर्विꣳशति–रात्रम् । अपश्यन् । तम् । एति ।
अहरन् । तेन । अयजन्त । ततः । वै । ते । अवर्तिम् ।
पाप्मानम् । मृत्युम् । अपहत्येत्यप–हत्य । दैवीम् ।
सꣳसदमिति सं–सदम् । अगच्छन् । ये । एवम् ।
विद्वाꣳसः । चतुर्विꣳशतिरात्रमिति चतुर्विꣳशति–रात्रम् ।
आसते । अवर्तिम् । एव । पाप्मानम् । अपहत्येत्यप–
हत्य । श्रियम् । गच्छन्ति । श्रीः । हि । मनुष्यस्य
( १ ) । दैवी । सꣳसदिति सं–सत् । ज्योतिः । अति-

रात्र इत्यति—रात्रः । भवति । सुवर्गस्येति सुवः—गस्य ।
लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै । पृष्ठ्यः । षडह
इति षट्—अहः । भवति । षट् । वै । ऋतवः । संवत्सर
इति सं—वत्सरः । तम् । मासाः । अर्धमासा इत्यर्ध—
मासाः । ऋतवः । प्रविश्येति प्र—विश्य । दैवीम् । सꣳस-
दमिति सं—सदम् । अगच्छन् । ये । एवम् । विद्वाꣳसः ।
चतुर्विꣳशतिरात्रमिति चतुर्विꣳशति—रात्रम् । आसते ।
संवत्सरमिति सं—वत्सरम् । एव । प्रविश्येति प्र—विश्य ।
वस्यसीम् । सꣳसदमिति सं—सदम् । गच्छन्ति । त्रयः ।
त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । अवस्तात् । भवन्ति ।
त्रयः । त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । परस्तात् ।
त्रयस्त्रिꣳशैरिति त्रयः—त्रिꣳशैः । एव । उभयतः ।
अर्वतिम् । पाप्मानम् । अपहत्येत्यप—हत्य । दैवीम् ।
सꣳसदमिति सं—सदम् । मध्यतः (२) । गच्छन्ति ।
पृष्ठानि । हि । दैवी । सꣳसदिति सं—सत् । जामि । वै ।
एतत् । कुर्वन्ति । यत् । त्रयः । त्रयस्त्रिꣳशा इति त्रयः—
त्रिꣳशाः । अन्वञ्चः । मध्ये । अनिरुक्त इत्यनिः—उक्तः ।
भवति । तेन । अजामि । ऊर्ध्वानि । पृष्ठानि । भवन्ति ।
ऊर्ध्वाः । छन्दोमा इति छन्दः—माः । उभाभ्याम् । रूपा-
भ्याम् । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । असत्रम् ।

वै । एतत् । यत् । अछन्दोममित्यछन्दः—मम् । यत् । छन्दोमा इति छन्दः—माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः—मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः ( ३ ) । छन्दोमा इति छन्दः—माः । ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । त्रयः । त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । अवस्तात् । भवन्ति । त्रयः । त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । परस्तात् । मध्ये । पृष्ठानि । उरः । वै । त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । आत्मा । पृष्ठानि । आत्मन् । एव । तत् । यजमानाः । शर्म । नह्यन्ते । अनार्त्यै । बृहद्रथंतराभ्यामिति बृहत्—रथंतराभ्याम् । यन्ति । इयम् । वाव । रथंतरमिति रथं—तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्जसा—अयनी । स्रुती इति । ताभ्याम् । एव ( ४ ) । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । पराञ्चः । वै । एते । सुवर्गमिति सुवः—गम् । लोकम् । अभ्यारोहन्तीत्यभि—आरोहन्ति । ये । पराचीनानि । पृष्ठानि । उपयन्तीत्युप—यन्ति । प्रत्यङ् । षडह इति षट्—अहः ।

भवति । प्रत्यवरूढ्या इति प्रति–अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्रति–स्थित्यै । उभयोः । लोकयोः । ऋद्ध्वा । उदिति । तिष्ठन्ति । त्रिवृत इति त्रि–वृतः । अधीति । त्रिवृतमिति त्रि–वृतम् । उपेति । यन्ति । स्तोमानाम् । संपत्त्या इति सं–पत्त्यै । प्रभवायेति प्र–भवाय । ज्योतिः । अग्निष्टोम इत्यग्नि–स्तोमः । भवति । अयम् । वाव । सः । क्षयः । अस्मात् । एव । तेन । क्षयात् । न । यन्ति । चतुर्विंशतिरात्र इति चतुर्विंशति–रात्रः । भवति । चतुर्विंशतिरिति चतुः–विंशतिः । अर्धमासा इत्यर्ध–मासाः । संवत्सर इति सं–वत्सरः । संवत्सर इति सं–वत्सरः । सुवर्ग इति सुवः–गः । लोकः । संवत्सर इति सं–वत्सरे । एव । सुवर्ग इति सुवः–गे । लोके । प्रतीति । तिष्ठन्ति । अथो इति । चतुर्विंशत्यक्षरेति चतुर्विंशति–अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । अवेति । रुन्धते । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म–वर्चसस्य । परिगृहीत्या इति परि–गृहीत्यै (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

———

( अथ सप्तमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमेऽनुवाके कश्चिच्चतुर्विंशतिरात्रोऽभिहितः । अथ द्वितीयेऽन्यश्चतुर्विंशतिरात्रोऽभिधीयते ।

तमेतं विधत्ते—

यथा वै मनुष्या एवं देवा अग्र आसन्तेऽकामयन्तावर्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदं गच्छेमेति त एतं चतुर्विꣳशतिरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै तेऽवर्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदमगच्छन्य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासतेऽवर्तिमेव पाप्मानमपहत्य श्रियं गच्छन्ति श्रीर्हि मनुष्यस्य दैवी सꣳसत्, इति ।

यथा मनुष्या दारिद्र्यहेतुभूतपापयुक्ता एवं देवा अपि पूर्वमासन् । ते देवाः कदाचिदेवमकामयन्त । वर्तिर्वृत्तिर्जीवनोपायो धनसंपत् । तदभावोऽवर्तिः । तत्र हेतुः पाप्मा दारिद्र्यहेतुर्जन्मान्तरकृतः पापविशेषः । स क्लेशहेतुत्वान्मृत्युः । तमेतादृशमवर्तिं पाप्मानं मृत्युं केनापि सुकृतानुष्ठानेन त्य देवसंबन्धिनीं संपत्तिं प्राप्नुयामेति विचार्य चतुर्विंशतिरात्रं तदुपायं श्रु मुखान्निश्चित्य तदनुष्ठानेन तत्फलं प्राप्ताः । एवं मनुष्या अपि तदनुष्ठा दारिद्र्यहेतुपापनिवृत्तिद्वारा देवसंबन्धिनीं संसदं प्राप्नुवन्ति । देवाः सम्यक् दन्ति सुखेनावतिष्ठन्ते यस्यां श्रियां सा श्रीरेव दैवी संसत् । मनुष्या श्रियमेव देवसभां मन्यन्ते ।

तत्र प्रथममहर्विधत्ते—

ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै, इति ।

ज्योतिष्टोमविशेषो योऽयमतिरात्रः स एव प्रथममहस्तेन ज्योतिषा प्रकाश्यते ।

अनन्तरभावीनि षडहानि विधत्ते—

पृष्ठ्यः षडहो भवति षड्वा ऋतवः संवत्सरस्तं मासा अर्धमासा ऋतवः प्रविश्य देवीꣳ सꣳसदमगच्छन्न्य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते संवत्सरमेव प्रविश्य वस्यसीꣳ सꣳसदं गच्छन्ति, इति।

षड्विधैः पृष्ठस्तोत्रैर्निष्पाद्यः पृष्ठ्यः षडहः स्तोत्रानुग्रेयः। षट्संख्याका ऋतवस्ते च संभूय संवत्सरो भवन्ति। तं च संवत्सरं द्वादश मासाश्चतुर्विंशतिरर्धमासाः षडृतवश्चावयवत्वेन प्रविश्यातिशयेन धनसमृद्धां सभां प्राप्नुवन्ति। मनुष्या अपि तथैव पृष्ठ्यषडहयुक्तेन चतुर्विंशतिरात्रेण फलं प्राप्नुवन्ति।

अथान्यान्यपि षडहानि विधत्ते—

त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिꣳशाः परस्तात्त्रयस्त्रिꣳशैरेवोभयतोऽवर्तिं पाप्मानमपहत्य देवीꣳ सꣳसदं मध्यतो गच्छन्ति पृष्ठानि हि देवी सꣳसत्, इति।

अत्रेयमहःक्लृप्तिः सूत्रकारेण दर्शिता—‘संसदा चतुर्विंशतिरात्रेण स्वर्गे लोके सीदन्त्यतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रिवृद्वा पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशं [निरुक्तं] त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहर्निरुक्तं त्रयस्त्रिंशमनिरुक्तं पृष्ठ्यस्तोमः षडहः प्रत्यङ्त्रिवृदहरानिरुक्तं ज्योतिष्टोमो वैश्वानरोऽतिरात्रः’ इति। यदिदमतिरात्ररूपं प्रथममहः सूत्रेऽभिहितं तज्ज्योतिरतिरात्रो भवतीति वाक्येनाऽऽम्नातम्। यत्त्वारम्भणीयरूपं द्वितीयमहस्तच्छाखान्तरगतम्। तृतीयमहरारभ्याष्टमान्तः परारूपः पृष्ठ्यः षडहः। तत्र षष्ठमहस्त्रयस्त्रिंशरूपम्। यश्चाऽऽ(चाऽऽ)दित आरभ्य गणनायामष्टममहः। ततो नवममहरनिरुक्तं त्रयस्त्रिंशं, स्पष्टलिङ्गैर्मन्त्रैर्गानं निरुक्तं, तद्विपरीतमनिरुक्तम्। ततो दशममहर्निरुक्तं त्रयस्त्रिंशम्। त एतेऽष्टमनवमदशमा अहर्विशेषास्त्रयोऽवस्तादधोभागे वर्तमानास्त्रयस्त्रिंशाः। तत एकादशद्वादशत्रयोदशचतुर्दशाख्यान्यहानि त्रिणवैकविंशद्वयत्रिणवरूपाणि मध्य-

वर्तीनि पृष्ठानीत्युच्यन्ते । ततः पञ्चदशषोडशसप्तदशा अहर्विशेषास्त्रिसं- ख्याकाः परस्तादूर्ध्वभागे वर्तमानास्त्रय स्त्रिगाः । तेषु त्रिषु मध्यम(म!) निरुक्तं त्रयस्त्रिंशम् । तस्मादुपरितनं त्रयस्त्रिंशस्तोमयुक्तमनिरुक्तम् । सप्तदश- संख्यापूरकं दिनमारभ्य द्वात्रिंशद्दिनपर्यन्तमावृत्तः पृष्ठ्यः षडहः । अत एवायं प्रत्यङ्ङिति निर्दिश्यते । तत ऊर्ध्वमुपान्तिममहस्त्रिवृदनिरुक्तं ज्योतिरग्नि- ष्टोमरूपम् । तत ऊर्ध्वमतिरात्रोऽन्तिमः । एवं स्थिते सत्येकादशादिचतुर्- शान्तान्मध्यवर्तिनोऽह्नश्चाधस्तादुपरिष्टाच्च ये त्रिसंख्याकास्त्रयस्त्रिंशास्तै- रुभयतोऽवस्थितैर्द्वारिस्थैर्हेतुं पाप्मानमपहत्य दैवीं सभां मध्यवर्तिनीं गच्छन्ति। यानि मध्यवर्तीनि चत्वारि पृष्ठारुयान्यहान्येतान्येवात्र दैवी संसदित्युच्यते। तस्मादुभयतस्त्रयस्त्रिंशयुक्तान्यहानि कुर्यादिति विध्युन्नयः ।

अथाधोवर्तिषु त्रिषु त्रयस्त्रिंशेषु यो मध्यमो यश्चोर्ध्ववर्तिषु त्रिषु मध्यम- स्तस्योभयविधस्य मध्यमस्यानिरुक्तं विधत्ते—

**जामि वा एतत्कुर्वन्ति यत्त्रयस्त्रयस्त्रिंशा अन्वञ्चो मध्येऽनिरुक्तो भवति तेनाजामि, इति ।**

यद्यनुक्रमवर्तिनः सर्वेऽपि त्रयस्त्रिंशा एकविधाः स्युस्तदानीमनुष्ठातार आलस्यं कुर्वन्ति । तस्मान्मध्ये वर्तमानमहर्विशेषमनिरुक्तत्वेन तस्मान्निरुक्ता- द्विलक्षणं कुर्युः । तेन वैलक्षण्येनाऽऽलस्यं परिहृतं भवेत् ।

उभयतोऽवस्थितानां त्रयस्त्रिंशानां मध्यवर्तिषु चतुर्ष्वहःसु कंचिद्विशेषं विधत्ते—

**ऊर्ध्वानि पृष्ठानि भवन्त्यूर्ध्वाश्छन्दोमा उभा- भ्याᳪ रूपाभ्याᳪ सुवर्गं लोकं यन्ति, इति ।**

रथंतरबृहदाद्यनुक्रमगतानि पृष्ठस्तोत्राणि निष्पादनीयानि । तथा चतुर्विं- शचतुश्चत्वारिंशाद्यनुक्रमगताश्छन्दोमा निष्पादनीयाः । यद्यपि त्रिणवैकविंश- द्व्यत्रिणवस्तोमैस्तान्यहानि निष्पाद्यानीति शाखान्तरानुसारेण सूत्रेऽभिहितं, तथाऽप्यत्र वचनबलात्पवमानादिषु केषुचित्स्तोत्रेषु चतुर्विंशादयश्छन्दोमा अनुक्रमेण प्रयोक्तव्याः । एवं सत्युभाभ्यां पृष्ठ्यच्छन्दोमरूपाभ्यां स्वर्गं प्राप्नुवन्ति ।

---

१ ख. 'सप्तनि' । २ ख. ङ. च. 'न्त आव' ।

तमेतं पृष्ठच्छन्दोमविधिं प्रशंसति—

असत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

तान्येतानि मध्यवर्तीनि पृष्ठान्युभयतोऽवस्थितांस्त्रयस्त्रिंशांश्च प्रकारान्तरेण प्रशंसति—

त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिꣳशाः परस्तान्मध्ये पृष्ठान्युरो वै त्रयस्त्रिꣳशा आत्मा पृष्ठान्यात्मन एव तद्यजमानाः शर्म नह्यन्तेऽनार्त्यै, इति ।

य एतेऽधोवर्तिनस्त्रयस्त्रिंशा ये चोपरिवर्तिनस्ते सर्वेऽपि पुरुषशरीरस्योरःप्रदेशस्थानीयाः । यानि तु मध्यवर्तीनि पृष्ठानि तानि जीवात्मस्थानीयानि । ततस्तेनोभयविधानुष्ठानेन यजमानाः स्वार्थं शर्म नह्यन्ते सुखं बध्नन्ति संपादयन्तीत्यर्थः । तच्चानार्त्यै दुःखविनाशाय भवति ।

उक्तेषु पृष्ठस्तोत्रेषु पर्यायेण सामद्वयमेव विधत्ते—

बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्षडहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

अथोपान्त्यं त्रयोविंशमहर्विधत्ते—

त्रिवृतोऽधि त्रिवृतमुप यन्ति स्तोमानाꣳ संपत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवत्ययं वाव स क्षयोऽस्मादेव तेन क्षयान्न यन्ति, इति।

आवृत्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशादिस्त्रिवृदन्तः। तथा सति द्वाविंशे दिने त्रिवृत्स्तोमः प्राप्नोति। तस्मात्त्रिवृत्स्तोमयुक्तादह्नोऽप्यध्यूर्ध्वं त्रयोविंशादिने त्रिवृतमेवानुतिष्ठेयुः। तथा सति त्रिवृत्स्तोमस्य सातत्यादेषां स्तोमानां संपत्तिर्भवति। सा च संपत्तिर्यजमानस्य पुत्रादिप्रभवाय संपद्यते। स च त्रिवृत्स्तोमयुक्ताहर्विशेषो ज्योतिष्टोमः कार्यः, सप्तसंस्थारूपेऽग्निष्टोमे प्रथमसंस्थारूपं कुर्यादित्यर्थः। अयमेव मनुष्यलोकः सोऽग्निष्टोमरूपः क्षयो निवासार्थो गृहविशेषः। तेनाग्निष्टोमानुष्ठानेनास्माद्भूलोकवर्तिनः क्षयाद्गृहान्नयन्ति न विनश्यन्तीत्यर्थः।

अथ ऋतुगतामहःसंख्यां प्रशंसति—

चतुर्विꣳशतिरात्रो भवति चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धते, इति।

पूर्ववद्व्याख्येयम्।

अथोदयनीयमहर्विधत्ते—

अतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै, इति॥

पूर्वं विहितेन ज्योतिरतिरात्रो भवतीत्यनेन प्रायणीयेन सह निर्देष्टुं द्विवचनम्। वर्णसंख्याया गायत्रीसाम्याद्ब्रह्मवर्चसफलत्वेन तत्परिग्रहः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ।)

---

ऋुक्षा वा इयमलोमकाऽऽसीत्साऽकामयतौषधीभिर्वनस्पतिभिः प्र जायेयेति सैतास्त्रिꣳशतꣳ रात्रीरपश्यत्ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन्प्रैव जायन्ते प्रजया पशुभिरियं वा अक्षुध्यत्सैतां विराजमपश्यत्तामात्मन्धित्वाऽन्नाद्यमवारुन्धौषधीः (१) वनस्पतीन्प्रजां पशून्तेनावर्धत सा जेमानं महिमानमगच्छद्य एवं विद्वाꣳस एता आसते विराजमेवाऽऽत्मन्धित्वाऽन्नाद्यमव रुन्धते वर्धन्ते प्रजया पशुभिर्जेमानं महिमानं गच्छन्ति ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव (२) प्रति तिष्ठन्ति त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुप यन्ति यज्ञस्य संतत्या अथो प्रजापतिर्वै त्रयस्त्रिꣳशः प्रजापतिमेवाऽऽरभन्ते प्रतिष्ठित्यै त्रिणवो भवति विजित्या एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते त्रिवृदग्निष्टुद्भवति पाप्मानमेव तेन निर्दहन्तेऽथो तेजो

वै त्रिवृत्तेज एवाऽऽत्मन्दधते पञ्चदश इन्द्रस्तोमो भवतीन्द्रियमेवाव (३) रुन्धते सप्तदशो भवत्य-न्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते चतु-र्विꣳशो भवति चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान्विषूवन्तो भवन्ति य एवं विद्वाꣳस एता आसते चतुर्विꣳशात्पृष्ठान्युप यन्ति संवत्सर एव प्रतिष्ठाय (४) देवता अभ्या-रोहन्ति त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुप यन्ति त्रयस्त्रिꣳ-शद्वै देवता देवतास्वेव प्रति तिष्ठन्ति त्रिणवो भव-तीमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति द्वावेकविꣳशौ भवतः प्रतिष्ठित्या अथो रुचमे-वाऽऽत्मन्दधते बहवः षोडशिनो भवन्ति तस्माद्ब-हवः प्रजासु वृषाणो यदेते स्तोमा व्यतिषक्ता भवन्ति तस्मादियमोषधीभिर्वनस्पतिभिर्व्यतिषक्ता (५) व्यतिषज्यन्ते प्रजया पशुभिर्य एवं विद्वाꣳस एता आसतेऽक्रूप्ता वा एते सुवर्गं लोकं यन्त्युच्चावचाह्नि स्तोमानुपयन्ति यदेत ऊर्ध्वाः क्लृप्ताः स्तोमा भवन्ति क्लृप्ता एव सुवर्गं लोकं यन्त्युभयोरेभ्यो लोकयोः

कल्पेते त्रिंशदेतास्त्रिंशदक्षरा विराडन्नं विराड्-
विराजैवान्नाद्यमव रुन्धतेऽतिरात्राव॒भितो भवतोऽन्ना-
द्यस्य परिगृहीत्यै (६) ॥

(ओषधीः संवत्सर एवावं प्रतिष्ठाय व्यतिंपक्तैकान्न पंञ्चाशच्च)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ।)

ऋक्षा । वै । इयम् । अलोमका । आसीत् । सा ।
अकामयत । ओषधीभिरित्योषधि-भिः । वनस्पतिभिरिति
वनस्पति-भिः । प्रेति । जायेय । इति । सा । एताः ।
त्रिंशतम् । रात्रीः । अपश्यत् । ततः । वै । इयम् । ओष-
धीभिरित्योषधि-भिः । वनस्पतिभिरिति वनस्पति-भिः ।
प्रेति । अजायत । ये । प्रजाकामा इति प्रजा-कामाः ।
पशुकामा इति पशु-कामाः । स्युः । ते । एताः । आसी-
रन् । प्रेति । एव । जायन्ते । प्रजयेति प्र-जया । पशुभि-
रिति पशु-भिः । इयम् । वै । अक्षुध्यत् । सा । एताम् ।
विराजमिति वि-राजम् । अपश्यत् । ताम् । आत्मन् ।
धित्वा । अन्नाद्यमित्यन्न-अद्यम् । अवेति । अरुन्ध ।
ओषधीः (१) । वनस्पतीन् । प्रजामिति प्र-जाम् ।

पशून् । तेन॑ । अवर्धत । सा । जेमान॑म् । महिमान॑म् । अगच्छत् । ये । एवम् । विद्वा॑ꣳस॑ः । एताः । आस॑ते । विराजमिति॑ वि–राज॑म् । एव । आत्मन् । धित्वा । अन्नाद्य॑मित्य॑न्न–अद्य॑म् । अवेति॑ । रुन्ध॑ते । वर्धन्ते । प्रजयेति॑ प्र–जया॑ । पशुभिरिति॑ पशु–भिः । जेमान॑म् । महिमान॑म् । गच्छन्ति । ज्योति॑ः । अतिरात्र इत्य॑ति–रात्रः । भवति । सुवर्गस्येति॑ सुवः–गस्य॑ । लोकस्य॑ । अनुख्यात्या इत्यनु–ख्यात्यै । पृष्ठ्य॑ः । षडह इति॑ षट्–अहः । भवति । षट् । वै । ऋतव॑ः । षट् । पृष्ठानि॑ । पृष्ठैः । एव । ऋतून् । अन्वारो॑हन्तीत्य॑नु–आरो॑हन्ति । ऋतुभिरित्यृतु–भिः । संव॑त्सरमिति॑ सं–वत्सरम् । ते । संवत्सर इति॑ सं–वत्सरे । एव ( २ ) । प्रतीति॑ । तिष्ठन्ति । त्रयस्त्रिꣳशादिति॑ त्रयः–त्रिꣳशात् । त्रयस्त्रिꣳशमिति॑ त्रयः–त्रिꣳशम् । उपेति॑ । यन्ति । यज्ञस्य॑ । संत॑त्या इति सं–तत्यै । अथो इति॑ । प्रजाप॑तिरिति॑ प्रजा–पतिः । वै । त्रयस्त्रिꣳश इति॑ त्रयः–त्रिꣳशः । प्रजाप॑तिमिति॑ प्रजा–पतिम् । एव । एति॑ । रभन्ते । प्रति॑ष्ठित्या इति प्रति॑–स्थित्यै । त्रिणव इति॑ त्रि–नवः । भवति । विजि॑त्या इति वि–जित्यै । एकविꣳश इत्येक–विꣳशः । भवति । प्रति॑ष्ठित्या इति प्रति॑–स्थित्यै ।

(त्रिंशद्रात्रकथनम्)

अथो इति । रुचम् । एव । आत्मन् । दधते । त्रिवृदिति त्रि-वृत् । अग्निष्टुदित्यग्नि-स्तुत् । भवति । पाप्मानम् । एव । तेन । निरिति । दहन्ते । अथो इति । तेजः । वै । त्रिवृदिति त्रि-वृत् । तेजः । एव । आत्मन् । दधते । पञ्चदश इति पञ्च-दशः । इन्द्रस्तोम इतीन्द्र-स्तोमः । भवति । इन्द्रियम् । एव । अवेति (३) । रुन्धते । सप्तदश इति सप्त-दशः । भवति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । अथो इति । प्रेति । एव । तेन । जायन्ते । एकविंश इत्येक-विंशः । भवति । प्रतिष्ठित्या इति प्रति-स्थित्यै । अथो इति । रुचम् । एव । आत्मन् । दधते । चतुर्विंश इति चतुः-विंशः । भवति । चतुर्विंशतिरिति चतु-विंशतिः । अर्धमासा इत्यर्ध-मासाः । संवत्सर इति सं-वत्सरः । संवत्सर इति सं-वत्सरः । सुवर्ग इति सुवः-गः । लोकः । संवत्सर इति सं-वत्सरे । एव । सुवर्ग इति सुवः-गे । लोके । प्रतीति । तिष्ठन्ति । अथो इति । एषः । वै । विषूवानिति विषु-वान् । विषूवन्त इति विषु-वन्तः । भवन्ति । ये । एवम् । विद्वांसः । एताः । आसते । चतुर्विंशादिति चतुः-विंशात् । पृष्ठानि । उपेति । यन्ति । संवत्सर इति सं-वत्सरे । एव । प्रतिष्ठायेति प्रति-स्थाय (४) ।

देवताः । अभ्यारोहन्तीत्यभि—आरोहन्ति । त्रयस्त्रिꣳशादिति त्रयः—त्रिꣳशात् । त्रयस्त्रिꣳशमिति त्रयः—त्रिꣳशम् । उपेति । यन्ति । त्रयस्त्रिꣳशदिति त्रयः—त्रिꣳशत् । वै । देवताः । देवतासु । एव । प्रतीति । तिष्ठन्ति । त्रिणव इति त्रि—नवः । भवति । इमे । वै । लोकाः । त्रिणव इति त्रि—नवः । एषु । एव । लोकेषु । प्रतीति । तिष्ठन्ति । द्वौ । एकविꣳशावित्येक—विꣳशौ । भवतः । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । रुचम् । एव । आत्मन् । दधते । बहवः । षोडशिनः भवन्ति । तस्मात् । बहवः । प्रजास्विति प्र—जासु । वृषाणः । यत् । एते । स्तोमाः । व्यतिषक्ता इति वि—अतिषक्ताः । भवन्ति । तस्मात् । इयम् । ओषधीभिरित्योषधि—भिः । वनस्पतिभिरिति वनस्पति—भिः । व्यतिषक्तेति वि—अतिषक्ता ( ५ ) । व्यतिषज्यन्त इति वि—अतिषज्यन्ते । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । ये । एवम् । विद्वाꣳसः । एताः । आसते । अक्लृप्ताः । वै । एते । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । उच्चावचान् । हि । स्तोमान् । उपयन्तीत्युप—यन्ति । यत् । एते । ऊर्ध्वाः । क्लृप्ताः । स्तोमाः । भवन्ति । क्लृप्ताः । एव । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । उभयोः । एभ्यः । लोकयोः । कल्पते । त्रिꣳशत् ।

एताः । त्रिꣳशदक्षरेति त्रिꣳशत्–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजेति वि–राजा । एव । अन्नाद्यमित्यन्न–अद्यम् । अवेति । रुन्धते । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न–अद्यस्य । परिगृहीत्या इति परि–गृहीत्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीये द्वितीयश्चतुर्विंशतिरात्रोऽभिहितः । अथ तृतीये त्रिंशद्रात्रोऽभिधीयते ।

तमेतं विधत्ते—

ऋक्षा वा इयमलोमकाऽऽसीत्साऽकामयतौषधीभिर्वनस्पतिभिः प्र जायेयेति सैतास्त्रिꣳशतꣳ रात्रीरपश्यत्ततो वा इयमोषधीभि र्वनस्पतिभिः प्राजायत ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन्प्रैव जायन्ते प्रजया पशुभिः, इति ।

ओषधयो वनस्पतयश्च पृथिव्या लोमानि, तद्रहितत्वात्कदाचिदियमृक्षा परुषाऽऽसीत् । तत ओषधिवनस्पत्युत्पादनं कामयित्वा त्रिंशद्रात्रयागानुष्ठानेनोत्पादयामास । एवमन्येऽपि तदनुष्ठानेन प्रजाः पशूंश्चोत्पादयन्ति । समुदायप्राधान्यं परित्यज्य प्रत्येकप्राधान्यविवक्षया रात्रीरिति बहुवचननिर्देशः ।

अथान्नप्राप्त्यर्थं तमेव क्रतुं विधत्ते—

इयं वा अक्षुध्यत्सैतां विराजमपश्यत्तामात्मन्धित्वाऽन्नाद्यमवारुन्धौषधीर्वनस्पतीन्प्रजां पशून्तेनावर्धत सा जेमानं महिमानमगच्छद्य एवं विद्वा॰स एता आसते विराजमेवाऽऽत्मन्धित्वाऽन्नाद्यमव रुन्धते वर्धन्ते प्रजया पशुभिर्जेमानं महिमानं गच्छन्ति, इति।

इयं भूमिरन्नाभावात्कदाचित्क्षुधिताऽभूत्। ततस्तत्परिहारं विचार्यैतां त्रिंशद्रात्रिरूपां विराजमपश्यत्। त्रिंशदक्षरसाम्याद्विराट्त्वम्। तां च विराजं स्वमनसि स्थापयित्वा तदनुष्ठानेनान्नं प्राप्तवती। तच्चान्नमुदकतृणौदनरूपेण बहुविधम्। तेनौषध्यादीनवर्धयत्। वर्धयित्वा च सर्वत्र पूज्यत्वलक्षणं महित्वं च प्राप्नोत्। एवमन्येऽपि तदनुष्ठानेन तत्फलं प्राप्नुवन्ति।

तत्र प्रथममहर्विधत्ते—

ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै, इति।

अथानन्तरभावीनि षट्संख्याकान्यहानि विधत्ते—

पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति, इति।

गतम्।

अथाष्टममहर्विधत्ते—

त्रयस्त्रि॰शात्त्रयस्त्रि॰शमुप यन्ति यज्ञस्य संतत्या अथो प्रजापतिर्वै त्रयस्त्रि॰शः प्रजापतिमेवाऽऽरभन्ते प्रतिष्ठित्यै, इति।

पृष्ठ्यषडहे यदन्तिममहस्तदेतत्त्रयस्त्रिंशम्। तस्मादूर्ध्वं पुनस्त्रयस्त्रिंशानुष्ठाने सजातीयत्वेन यज्ञस्य सांतत्यं भवति। अपि च त्रयस्त्रिंशस्य प्रजापतिना स

---

घ. च. ॰ जेमं।

त्त्वात्तद्रूपत्वं,तेन तदनुष्ठायिनस्तेन प्रजापतिमेवानुतिष्ठन्ति । तच्च प्रतिष्ठार्थं भवति ।
अथ नवममहर्विधत्ते—

त्रिणवो भवति विजित्यै, इति ।

अन्यत्र 'त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त' इति श्रवणात्रिणवो जयहेतुः ।
अथ दशममहर्विधत्ते—

एकविꣳशो भवति प्रतिष्ठित्या
अथो रुचमेवाऽऽत्मन्दधते, इति ।

अन्यत्र 'प्रतिष्ठा वा एकविꣳशः ।' 'रुग्वा एकविꣳशः ।' इति श्रवणादुभयप्राप्तिः ।
अथैकादशमहर्विधत्ते—

त्रिवृदग्निष्टुद्भवति पाप्मानमेव तेन निर्दहन्तेऽथो
तेजो वै त्रिवृत्तेज एवाऽऽत्मन्दधते, इति ।

अग्निरेव यत्र स्तूयते सोऽग्निष्टुत् । अतोऽग्निसामर्थ्यात्पापदाहः । त्रिवृत्सामर्थ्यात्कान्तिप्राप्तिः ।
अथ द्वादशमहर्विधत्ते—

पञ्चदश इन्द्रस्तोमो भवतीन्द्रियमेवाव रुन्धते, इति ।

इन्द्र एव यत्र स्तूयते सोऽयमिन्द्रस्तोमस्तेनेन्द्रियप्राप्तिः ।
अथ त्रयोदशमहर्विधत्ते—

सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या
अथो प्रैव तेन जायन्ते, इति ।

सप्तदशस्तोमस्यान्नप्रजाहेतुत्वादुभयप्राप्तिः ।
अथ चतुर्दशमहर्विधत्ते—

एकविꣳशो भवति प्रतिष्ठित्या
अथो रुचमेवाऽऽत्मन्दधते, इति ।

पूर्ववद्व्याख्येयम् ।

---

१ ख. °विनः प्र° ।

अथ पञ्चदशमहर्विधत्ते—

चतुर्विꣳशो भवति चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान्विषूवन्तो भवन्ति य एवं विद्वाꣳस एता आसते, इति।

संख्यासाम्यादर्धमाससंवत्सरद्वारा स्वर्गे प्रतिष्ठा। अपि चायमहर्विशेषो विषूवान्विविधा सूतिः फलोत्पत्तिरिति विषूस्तद्वानयम्। तस्मादेवं विदित्वाऽनुष्ठातारोऽपि विविधफलोत्पत्तिमन्तो भवन्ति।

अथ षोडशमारभ्यैकविंशतिपर्यन्तानि षट्संख्याकान्यहानि विधत्ते—

चतुर्विꣳशात्पृष्ठान्युप यन्ति संवत्सर एव प्रतिष्ठाय देवता अभ्यारोहन्ति, इति।

प्रतिष्ठाहेतुसंवत्सरात्मकचतुर्विंशस्तोमयुक्तादह्न ऊर्ध्वं पृष्ठ्यषडहानुष्ठाने सति प्रथमसंवत्सरे प्रतिष्ठां प्राप्य पश्चात्षड्भिरहोभिरारभ्य देवताः प्राप्नोति।

अथ द्वाविंशं दिनं विधत्ते—

त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुप यन्ति त्रयस्त्रिꣳशद्वै देवता देवतास्वेव प्रति तिष्ठन्ति, इति।

पृष्ठ्ये षडहेऽन्तिमं त्रयस्त्रिंशमहस्तस्मादूर्ध्वं पुनरपि त्रयस्त्रिंशानुष्ठाने ये देवा दिव्येकादश स्थेत्यादिमन्त्रोक्तासु त्रयस्त्रिंशत्संख्याकासु देवतास्वेव प्रतिष्ठिता भवन्ति।

अथ त्रयोविंशं दिनं विधत्ते—

त्रिणवो भवतीमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति, इति।

नवसंख्याविषयया त्रिसंख्यया समानत्वाल्लोकत्रये प्रतिष्ठा।

अथ त्रयोविंशचतुर्विंशदिने विधत्ते—

द्वावेकविꣳशौ भवतः प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन्दधते, इति।

पूर्ववद्व्याख्येयम्।

अथ पञ्चविंशदिनमारभ्यैकोनत्रिंशपर्यन्तानि पञ्चाहानि विधत्ते—

बहवः षोडशिनो भवन्ति तस्मा-
द्बहवः प्रजासु वृषाणः, इति।

षोडशस्तोत्रयुक्ता अहर्विशेषाः षोडशिनः। ते च बहवो नैरन्तर्येणात्र पञ्चै-वानुष्ठेयाः। तावतैवापेक्षितसंख्यायाः पूरितत्वात्। यस्मात्प्रजोत्पत्तिहेतवः षोडशिनोऽत्र बहवोऽनुष्ठितास्तस्माल्लोके प्रजासु मध्ये वृषाणः पुंस्त्वधर्म-युक्ता बहवो दृश्यन्ते।

एतेभ्यः षोडशिभ्य ऊर्ध्वादिनेष्वनुष्ठितान्परस्परविलक्षणान्स्तोमान्प्रशंसति—

यदेते स्तोमा व्यतिषक्ता भवन्ति तस्मा-
दियमोषधीभिर्वनस्पतिभिर्व्यतिषक्ता, इति।

यस्मादेते स्तोमा न्यूनाधिकभावेन संकीर्णास्तस्माद्भूमिरपि व्यवस्थामन्तरे-णौषधीभिर्वनस्पतिभिश्च सर्वत्र संकीर्णा दृश्यते।

स्तोमव्यतिषङ्गवेदनं प्रशंसति—

व्यतिषज्यन्ते प्रजया पशुभिर्य एवं
विद्वाꣳस एता आसते, इति।

एतांस्त्रिंशद्रात्रीर्येऽनुतिष्ठन्ति तेषां मध्य एकस्य प्रजा अपरस्य पशव एवेति व्यवस्था नास्ति, किंतु सर्वेऽपि प्रजया पशुभिश्च संकीर्णा भवन्ति।

अथ षोडशिष्वहःस्वेकविधस्तोमान्प्रशंसति—

अक्लृप्ता वा एते सुवर्गं लोकं यन्त्यु-
च्चावचान्हि स्तोमानुपयन्ति यदेत ऊर्ध्वाः
क्लृप्ताः स्तोमा भवन्ति क्लृप्ता एव सुवर्गं लोकं
यन्त्युभयोरेभ्यो लोकयोः कल्पते, इति।

ये यजमानाः पूर्वेषु दिनेषूच्चावचान्परस्परविलक्षणान्स्तोमाननुतिष्ठन्ति ते यजमाना अक्लृप्ता वा इदमेतावत्तव भोग्यमित्येवं निश्चयरहिता एव स्वर्गं प्राप्नुवन्ति। तस्मात्क्लृप्ताः क्लृप्तोभयविधस्तोमानुष्ठानादेतद्यजमानार्थमुभयो-र्लोकयोर्भोग्यं क्लृप्तं भवति।

अथ क्रतुगतामहःसंख्यां प्रशंसति—

त्रिꣳशदेतास्त्रिꣳशदक्षरा विराडन्नं विराड्-
विराजैवान्नाद्यमव रुन्धते; इति ।

गतम् ।

अथान्तिममहर्विधत्ते—

अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै, इति ॥

प्रायणीयेन सह निर्देशाद्द्विवचनम् । अन्नाद्यफलस्य विधित्वाꣳये स्पष्टत्वा-त्तत्परिग्रहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

प्रजापतिः सुवर्गं लोकमैत्तं देवा येनयेन छन्द-
साऽनु प्रायुञ्जत तेन नाऽऽप्नुवन्त एता द्वात्रिꣳशतꣳ
रात्रीरपश्यन्द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः
स्वेनैव छन्दसा प्रजापतिमाप्त्वाऽभ्यारुह्य सुवर्गं
लोकमायन्य एवं विद्वाꣳस एता आसते द्वात्रिꣳश-
देता द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः
स्वेनैव छन्दसा प्रजापतिमाप्त्वा श्रियं गच्छन्ति
( १ ) श्रीर्हि मनुष्यस्य सुवर्गो लोको द्वात्रिꣳ-

---

१ ख. °र्थ स्प° ।

शदेता द्वात्रिꣳशदक्षराऽनुष्टुग्वागनुष्टुप्सर्वामेव वाच-
माप्नुवन्ति सर्वे वाचो वदितारो भवन्ति सर्वे हि
श्रियं गच्छन्ति ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं
वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकान-
भ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं
लोकमभ्यारोहन्ति बृहद्रथंतराभ्यां यन्ति ( २ )
इयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अन-
योरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती
ताभ्यामेव सुवर्गं लोकं यन्ति पराञ्चो वा एते
सुवर्गं लोकमभ्यारोहन्ति ये पराचस्त्र्यहानुपयन्ति
प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या
उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति द्वात्रिꣳशदेतास्तासां
यास्त्रिꣳशत्त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवान्नाद्य-
मव रुन्धते ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपा-
भ्याꣳ सुवर्गं लोकं यन्त्यतिरात्रावभितो भवतः
परिगृहीत्यै ( ३ )

[ गच्छन्ति यन्ति त्रिꣳशदक्षरा द्वाविꣳशतिश्च । ]

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ सप्तमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । सुवर्गमिति सुवः—गम् । लोकम् । ऐत् । तम् । देवाः । येनयेनेति येन—येन । छन्दसा । अनु । प्रेति । अयुञ्जत । तेन । न । आप्नुवन् । ते । एताः । द्वात्रिꣳशतम् । रात्रीः । अपश्यन् । द्वात्रिꣳशदक्षरेति द्वात्रिꣳशत्—अक्षरा । अनुष्टुगित्यनु—स्तुक् । आनुष्टुभ इत्यानु—स्तुभः । प्रजापतिरिति प्रजा—पतिः । स्वेन । एव । छन्दसा । प्रजापतिमिति प्रजा—पतिम् । आप्त्वा । अभ्यारुह्येत्यभि—आरुह्य । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । ये । एवम् । विद्वाꣳसः । एताः । आसते । द्वात्रिꣳशत् । एताः । द्वात्रिꣳशदक्षरेति द्वात्रिꣳशत्—अक्षरा । अनुष्टुगित्यनु—स्तुक् । आनुष्टुभ इत्यानु—स्तुभः । प्रजापतिरिति प्रजा—पतिः । स्वेन । एव । छन्दसा । प्रजापतिमिति प्रजा—पतिम् । आप्त्वा । श्रियम् । गच्छन्ति ( १ ) । श्रीः । हि । मनुष्यस्य । सुवर्ग इति सुवः—गः । लोकः । द्वात्रिꣳशत् । एताः । द्वात्रिꣳशदक्षरेति द्वात्रिꣳशत्—अक्षरा । अनुष्टुगित्यनु—स्तुक् । वाक् । अनुष्टुबित्यनु—स्तुप् । सर्वाम् । एव । वाचम् । आप्नुवन्ति । सर्वे । वाचः । वदितारः । भवन्ति । सर्वे । हि । श्रियम् ।

गच्छन्ति । ज्योतिः । गौः । आयुः । इति । त्र्यहा त्रि–अहाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि–आरोहन्ति । अभिपूर्वमित्यभि–पूर्वम् । त्र्यहा इति त्रि–अहाः । भवन्ति । अभिपूर्वमित्यभि–पूर्वम् । एव । सुवर्गमिति सुवः–गम् । लोकम् । अभ्यारोहन्तीत्यभि–आरोहन्ति । बृहद्रथंतराभ्यामिति बृहत्–रथंतराभ्याम् । यन्ति ( २ ) । इयम् । वाव । रथंतरमिति रथं–तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्जसा–अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः–गम् । लोकम् । यन्ति । पराञ्चः । वै । एते । सुवर्गमिति सुवः–गम् । लोकम् । अभ्यारोहन्तीत्यभि–आरोहन्ति । ये । पराचः । त्र्यहानिति त्रि–अहान् । उपयन्तीत्युप–यन्ति । प्रत्यङ् । त्र्यह इति त्रि–अहः । भवति । प्रत्यवरूढ्या इति प्रति–अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्रति–स्थित्यै । उभयोः । लोकयोः । ऋद्ध्वा । उदिति । तिष्ठन्ति । द्वात्रिंशत् । एताः । तासाम् । याः । त्रिंशत् । त्रिंशदक्षरेति त्रिंशत्–अक्षरा । विराडिति

.४—राट् । अन्नम् । विराडिति वि—राट् । विराजेति वि—
राजा । एव । अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धते ।
ये इति । द्वे इति । अहोरात्रे इत्यहः—रात्रे । एव । ते
इति । उभाभ्याम् । रूपाभ्याम् । सुवर्गमिति सुवः—गम् ।
लोकम् । यन्ति । अतिरात्रावित्यति—रात्रौ । अभितः ।
भवतः । परिगृहीत्या इति परि—गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीयेऽनुवाके त्रिंशद्रात्रोऽभिहितः । अथ चतुर्थे द्वात्रिंशद्रात्रोऽभिधीयते ।
तमिमं विधत्ते—

प्रजापतिः सुवर्गं लोकमैत्तं देवा येनयेन छन्द-
साऽनु प्रायुञ्जत तेन नाऽऽप्नुवन्त एता द्वात्रिꣳशतꣳ
रात्रीरपश्यन्द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः
स्वेनैव छन्दसा प्रजापतिमाप्त्वाऽभ्यारुह्य सुवर्गं
लोकमायन्य एवं विद्वाꣳस एता आसते द्वात्रिꣳ-
शदेता द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः
स्वेनैव छन्दसा प्रजापतिमाप्त्वा श्रियं
गच्छन्ति श्रीर्हि मनुष्यस्य सुवर्गो लोकः, इति ।

यदा प्रजापतिः स्वर्गं प्राप्नोत्तदा प्रजापतिं स्वर्गं गच्छन्तं वयमप्यनु प्राप्नुम इति
मन्यमाना देवा येन येन च्छन्दसा युक्तं यज्ञमन्वतिष्ठंस्तेन सर्वेणापि नाऽऽप्नु-

वन्। ततस्ते देवा द्वात्रिंशद्रात्रं तत्साधनत्वेनानुष्ठितवन्तः। तत्संख्याया अनुष्टुभि विद्यमानत्वात्प्रजापतेश्च मन्त्रराजानुष्टुभा सर्वस्रष्टृत्वस्य तापनीये श्रुतत्वादेनमानुष्टुभं प्रजापतिं तदीयेनैव द्वात्रिंशदक्षरेण च्छन्दसा प्राप्य स्वर्गम् प्याप्य तत्र भोगान्प्राप्नुवन्तः। एवमन्येऽपि यजमानास्तदनुष्ठानेन प्रजापतिं प्राप्य तदनुग्रहाच्छ्रियं गच्छन्ति। न चात्र स्वर्गोऽनुक्त इति शङ्कनीयम्। यस्मान्मनुष्यस्य श्रीदेवता स्वर्गः।

क्रतुगतामहःसंख्यां प्रशंसति—

द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुग्वागनुष्टु-
प्सर्वामेव वाचमाप्नुवन्ति सर्वे वाचो वदि-
तारो भवन्ति सर्वे हि श्रियं गच्छन्ति, इति।

एताः क्रतुगता रात्रयो द्वात्रिंशत्संख्याकाः। अनुष्टुबक्षरसंख्याऽपि तावती। अनुष्टुप्च वाग्विशेषरूपत्वाद्वागेव। तस्मादेतदनुष्ठानेन वाचं वेदशास्त्रादिरूपां सर्वामपि प्राप्नुवन्ति। सर्वेऽपि यजमानाः सभारञ्जनाय वाचं वदितुं समर्था भवन्ति। तेन वक्तृत्वेन पूज्यत्वलक्षणां श्रियमपि प्राप्नुवन्ति।

अथाहानि विधत्ते—

ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव
ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोका-
नभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभि-
पूर्वमेव सुवर्गं लोकमभ्यारोहन्ति, इति।

त्र्यहा इति बहुवचननिर्देशाद्यावद्भिरपेक्षितसंख्यापूर्तिस्तावन्तोऽनुष्ठेयाः। अत्र च नवसंख्यया तत्पूर्तेर्नवैवानुष्ठेयाः। ते सर्वेऽप्यानुलोम्येनानुष्ठेयाः। तथा सत्यनुक्रमेणैव स्वर्गं प्राप्नुवन्ति।

अथैतेषु सप्तविंशतिदिनेषु पृष्ठस्तोत्रार्थं सामद्वयमेव पर्यायेण विधत्ते—

बृहद्रथंतराभ्यां यन्तीयं वाव रथंतर-
मसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव

---

१ ख. श्रीरेव दे°।

प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति, इति ।

अथ प्रातिलोम्येनानुष्ठेयमेकं त्र्यहं विधत्ते—

पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचस्त्र्यहानुपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋध्वोत्तिष्ठन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

क्रतुगतदिनसंख्या पूर्वं समूहरूपेण प्रशस्ता । इदानीं विभज्य प्रशंसति—

द्वात्रिꣳशदेतास्तासां यास्त्रिꣳशत्त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यन्ति, इति ।

अत्र त्रिंशत्संख्यया विराड्द्वाराऽन्नप्राप्तिः । उपरितनया द्विसंख्ययाऽहोरात्ररूपाभ्यां स्वर्गप्राप्तिः ।

अथ प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतः परिगृहीत्यै, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेव देवता

अभ्यारोहन्ति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान्भवति यदि नावविध्यति सदृङ्य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना भ्रातृव्येणाऽऽवर्तन्तेऽहर्भाजो वा एता देवा अग्र आऽहरन् ( १ ) अहरेकोऽभजताहरेकस्ताभिर्वै ते प्रबाहुगार्ध्नुवन्य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते सर्वे एव प्रबाहुगृध्नुवन्ति सर्वे ग्रामणीयं प्राऽऽप्नुवन्ति पञ्चाहा भवन्ति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते त्रिण्याश्विनानि भवन्ति त्रय इमे लोका एषु ( २ ) एव लोकेषु प्रति तिष्ठन्त्यथो त्रीणि वै यज्ञस्येन्द्रियाणि तान्येवाव रुन्धते विश्वजिद्भवत्यन्नाद्यस्यावरुद्ध्यै सर्वपृष्ठो भवति सर्वस्याभिजित्यै वाग्वै द्वादशाहो यत्पुरस्ताद्द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां वाक्स्यादुपरिष्टाद्द्वादशाहमुप यन्त्याप्तामेव वाचमुप यन्ति तस्मादुपरिष्टाद्वाचा वदामोऽवान्तरम् ( ३ ) वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्त एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्धिमुवाच यद्द-

शरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शान्तिर्द्व्यनीका वा एता रात्रयो यजमाना विश्वजित्सहातिरात्रेण पूर्वाः षोडश सहातिरात्रेणोत्तराः षोडश य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासत ऐषां द्व्यनीका प्रजा जायतेऽतिरात्रावभितो भवतः परिगृहीत्यै (४) ॥

( अहरन्त्रेष्वेवान्तरꣳ षोडश सह सप्तदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः )

---

द्वे इति । वाव । देवसत्रे इति देव—सत्रे । द्वादशाह इति द्वादश—अहः । च । एव । त्रयस्त्रिꣳशदह इति त्रयःस्त्रिꣳशत्—अहः । च । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्—अहम् । आसते । साक्षादिति स—अक्षात् । एव । देवताः । अभ्यारोहन्तीत्यभि—आरोहन्ति । यथा । खलु । वै । श्रेयान् । अभ्यारूढ इत्यभि—आरूढः । कामयते । तथा । करोति । यदि । अवविध्यतीत्यव—विध्यति । पापीयान् । भवति । यदि । न । अवविध्य

तीत्यंव–विध्यंति। सद्दङ्ङिति स–दृङ्। ये। एवम्। विद्वाꣳसः। त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्–अहम्। आसंते। वीति। पाप्मना। भ्रातृंव्येण। एति। वर्तन्ते। अहर्भाज इत्यंहः–भाजः। वै। एताः। देवाः। अग्रे। एति। अहरन् (१)। अहः। एकः। अभंजत। अहः। एकः। ताभिः। वै। ते। प्रबाहुगिति प्र–बाहुक्। आर्ध्नुवन्। ये। एवम्। विद्वाꣳसः। त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्–अहम्। आसंते। सर्वे। एव। प्रबाहुगिति प्र–बाहुक्। ऋध्नुवन्ति। सर्वे। ग्रामंणीयमिति ग्राम–नीयम्। प्रेति। आप्नुवन्ति। पञ्चाहा इति पञ्च–अहाः। भवन्ति। पञ्च। वै। ऋतवंः। संवत्सर इति सं–वत्सरः। ऋतुषु। एव। संवत्सर इति सं–वत्सरे। प्रतीति। तिष्ठन्ति। अथो इति। पञ्चाक्षरेति पञ्च–अक्षरा। पङ्क्तिः। पाङ्क्तः। यज्ञः। यज्ञम्। एव। अवेति। रुन्धते। त्रीणि। आश्विनानि। भवन्ति। त्रयंः। इमे। लोकाः। एषु (२)। एव। लोकेषु। प्रतीति। तिष्ठन्ति। अथो इति। त्रीणि। वै। यज्ञस्यं। इन्द्रियाणि। तानि। एव। अवेति। रुन्धते। विश्वजिदिति विश्व–जित्। भवति। अन्नाद्यस्येत्यन्न–अद्यस्य। अवंरुद्ध्या इत्यवं–रुद्ध्यै। सर्वपृष्ठ इति सर्व–पृष्ठः। भवति। सर्वस्य। अभिजित्या इत्यभि–जित्यै।

वाक् । वै । द्वादशाह इति द्वादश–अहः । यत् । पुरस्तात् । द्वादशाहमिति द्वादश–अहम् । उपेयुरित्युप–इयु । अनाम्नाम् । वाचम् । उपेति । इयुः । उपदासुकेत्युप–दासुका । एषाम् । वाक् । स्यात् । उपरिष्टात् । द्वादशाहमिति द्वादश–अहम् । उपेति । यन्ति । आप्ताम् । एव । वाचम् । उपेति । यन्ति । तस्मात् । उपरिष्टात् । वाचा । वदामः । अवान्तरमित्यव–अन्तरम् ( ३ ) । वै । दशरात्रेणेति दश–रात्रेण । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । यत् । दशरात्र इति दश–रात्रः । भवति । प्रजा इति प्र–जाः । एव । तत् । यजमानाः । सृजन्ते । एताम् । ह । वै । उदङ्कः । शौल्बायनः । सत्रस्य । ऋद्धिम् । उवाच । यत् । दशरात्र इति दश–रात्रः । यत् । दशरात्र इति दश–रात्रः । भवति । सत्रस्य । ऋद्ध्यै । अथो इति । यत् । एव । पूर्वेषु । अहःस्वित्यहः–सु । विलोमेति वि–लोम । क्रियते । तस्य । एव । एषा । शान्तिः । द्व्यनीका इति द्वि–अनीकाः । वै । एताः । रात्रयः । यजमानाः । विश्वजिदिति विश्व–जित् । सह । अतिरात्रेणेत्यति–रात्रेण । पूर्वाः । षोडश । सह । अतिरात्रेणेत्यति–रात्रेण । उत्तरा इत्युत्–तराः । षोडश । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्–अहम् ।

आसंते । एति । एषाम् । द्व्यनीकेति द्वि–अनीका । प्रजेति प्र–जा । जायते । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । परिगृहीत्या इति परि–गृहीत्यै (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ सप्तमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ।)

---

चतुर्थेऽनुवाके द्वात्रिंशद्रात्रोऽभिहितः । अथ पञ्चमे त्रयस्त्रिंशद्रात्रोऽभिधीयते । तमिमं विधत्ते—

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेव देवता अभ्यारोहन्ति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान्भवति यदि नावविध्यति सदृङ्च एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना भ्रातृव्येणाऽऽवर्तन्ते, इति ।

देवानां प्रिये सत्रे द्वे एव–योऽयं द्वादशाहो यश्चायं त्रयस्त्रिंशदहः, एतयोरुभयोरतिप्रीतिः । एतां प्रीतिं ज्ञात्वा येऽनुतिष्ठन्ति ते विलम्बमन्तरेणैव देवताः प्राप्नुवन्ति । न केवलं देवताप्राप्तिः किंतु पाप्मव्यावृत्तिरपि । तत्र कश्चिद्व्यतिरेकदृष्टान्तः—यथा लोके [illegible] पुरुषो राज्यमभ्यारूढः पुनरप्यधिकं राज्यं [illegible] सामभेदाद्युपायेन तद्राज्यान्तरं [illegible] तादृशं करोति । [illegible] तस्मिन्नुपाये प्रमाद्यति तदानीं पापीयान्भवति पूर्वं श्रेयानपि ऐश्वर्यमपगच्छतीत्यर्थः । यदि नावविध्यति न प्रमाद्यति तदाऽपि सदृङ्भवति पुरा यादृशः श्रेयान्पश्चादपि तादृश एव भवति । पूर्वं राजेति व्यवहरन्तः प्राणिनः पश्चादपि राजेत्येव

व्यवहरन्ति न तु तस्मादुत्कृष्टः कश्चिद्व्यवहारस्तस्मिन्विद्यते । सोऽयं व्यतिरेक-
दृष्टान्तः । इह तु पूर्वं विद्यैश्वर्यादिसंपन्ना अपि मनुष्या यजमानास्त्रयस्त्रिंशद्रात्रस्य
महिमानं जानन्तोऽनुष्ठाय देवत्वप्राप्तिप्रतिबन्धकपापरूपेण भ्रातृव्येण वियुक्ताः
सन्तः पूर्वसिद्धान्मनुष्यत्वादप्यधिकं देवत्वं प्राप्नुवन्तीति विशेषः ।

पुनरपि प्रकारान्तरेण प्रशंसति —

अहर्भाजो वा एता देवा अग्र आऽहरन्नहरे-
कोऽभजताहरेकस्ताभिर्वै ते प्रबाहुगार्ध्नुवन्य एवं
विद्वा स्सस्त्रयस्त्रि स्शदहमासते सर्व एव प्रबाहुगृ-
ध्नुवन्ति सर्वे ग्रामणीयं प्राऽऽप्नुवन्ति, इति ।

अहानि भजन्तेऽनुतिष्ठन्तीत्यहर्भाजः । तादृशा देवा एतास्त्रयस्त्रिंशत्संख्याका
रात्रीः संपादितवन्तः । कथमिति तदुच्यते—एको देव एकमहरन्वतिष्ठत् ।
पुनरप्येको देवोऽन्यदहरन्वतिष्ठत् । एवं त्रयस्त्रिंशत्संख्याका देवास्तत्संख्याका-
न्यहान्यन्वतिष्ठन्, ताभिरनुष्ठिताभी रात्रिभिरेव ते सर्वेऽपि देवाः प्रबाहुगार्ध्नु-
वन्समं यथा भवति तथा समृद्धिं प्राप्नुवन्, न त्वेकोऽपि तन्मध्ये समृद्धि-
विकलः । एवं यजमाना अपि सर्वे साम्येन समृद्धिं प्राप्नुवन्ति । सैव समृद्धिः
स्पष्टी क्रियते—सर्वे ग्रामणीयं ग्रामस्वामित्वं प्राप्नुवन्ति ।

अथाहानि विधत्ते—

पञ्चाहा भवन्ति पञ्च वा ऋतवः संवत्सर
ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा
पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते, इति ।

ज्योतिर्गौरायुरित्येवंविधो द्विरावृत्तस्त्र्यहो द्वितीयज्योतिर्विवर्जितः पञ्चाहः ।
तादृशाश्च पञ्चाहा यावन्तोऽपेक्षितास्तावन्तोऽनुष्ठेयाः । इह तु चतुर्भिरपेक्षित-
संख्यापूरणाच्चत्वारो विधीयन्ते । हेमन्तशिशिरयोरैक्यात्पञ्चसंख्याका ऋतव-
स्तद्द्वारेण संवत्सरे प्रतितिष्ठन्ति । किंच पञ्चसंख्यया पङ्क्तिद्वारेण यज्ञं प्राप्नु-
वन्ति ।

प्रायणीयोदयनीययोरतिरात्रयोर्मध्यमे चातिरात्रे शस्त्राणि विधत्ते—

त्रीण्याश्विनानि भवन्ति त्रय इमे लोका
एष्वेव लोकेषु प्रति तिष्ठन्त्यथो त्रीणि

वै यज्ञस्येन्द्रियाणि तान्येवाव रुन्धते, इति।

आश्विनेन शस्त्रेणोपलक्षितान्यहानि त्रीण्यनुष्ठेयानि। तेन लोकत्रये प्रतिष्ठिता भवन्ति। किंच यज्ञस्येन्द्रियस्थानानि सवनानि त्रीणि, तान्यपि प्राप्नुवन्ति।

अन्यदहर्विधत्ते—

विश्वजिद्भवत्यन्नाद्यस्यावरुद्ध्यै, इति।

विश्वजयहेतोरन्नहेतुत्वं सुलभम्।

तमेव विश्वजितं विशिनष्टि—

सर्वपृष्ठो भवति सर्वस्याभिजित्यै, इति।

रथंतरबृहदादीनि षट्संख्याकानि पृष्ठानि सर्वाण्यपि यस्यासौ सर्वपृष्ठः। तेन सर्वमपि फलं भवति।

अथान्यान्यहानि विधत्ते—

वाग्वै द्वादशाहो यत्पुरस्ताद्द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां वाक्स्यादुपरिष्टाद्द्वादशाहमुपयन्त्याप्तामेव वाचमु पयन्ति तस्मादुपरिष्टाद्वाचा वदामः, इति।

बहुविधस्तोत्रशस्त्रोपेतत्वाद्द्वादशाहो वाग्रूपः। तथाविधं द्वादशाहं यद्युक्तेभ्योऽहोभ्यः पूर्वमनुतिष्ठेयुस्तदानीं तत्रत्यानां स्तोत्रशस्त्राणामनुक्तत्वादनाप्तामसंपूर्णां वाचमुपेयुः प्राप्नुयुः। तेषां यजमानानां वागुपक्षयशीला स्यात्। तस्मादुक्तेभ्योऽहोभ्य ऊर्ध्वं द्वादशाहमनुतिष्ठेयुः। तस्मादाप्तां संपूर्णामेव वाचं प्राप्नुवन्ति। यस्मादूर्ध्वभागे वाग्रूपस्य द्वादशाहस्यानुष्ठानं तस्मात्कारणान्नाभेरुपरिष्टान्मुखेन वयं वाचा वदामः।

अत्र द्वादशाहशब्देन प्रायणीयोदयनीयौ वर्जयित्वाऽवशिष्टस्य दशरात्रस्य विवक्षां दर्शयति—

अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्ते, इति।

अवान्तरं वै द्वादशाहस्यावयवभूतेनैव दशरात्रेण पुरा कदाचित्प्रजापतिः प्रजा असृजत। अतो यद्यत्र दशरात्रो भवेत्तदा तेन यजमानाः प्रजाः सृजन्ते।

---

१ ख. घ. ङ. °दाऽनेन।

तमेव दशरात्रं पुनः प्रशंसति—

एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शान्तिः, इति।

उदङ्को नामतः, स च शुल्बस्यापत्यभूतः। एतस्य सत्रस्याङ्गभूतो योऽयं दशरात्रोऽस्त्येतेन कृत्स्नस्य सत्रस्यैतामृद्धिं फलमुदङ्क उवाच। अतो यदि दशरात्रोऽनुष्ठीयते तर्हि कृत्स्नसमृद्धिस्तेन भवति। अपि च पूर्वेष्वहःसु यदेवाङ्गं विकलमनुष्ठीयते तस्य सर्वस्यैषा दशरात्रानुष्ठितिरुपशमहेतुर्भवति।

इदानीं योऽयं विश्वजित्सर्वपृष्ठो विहितस्तस्य स्थानविशेषं विधत्ते—

द्व्यनीका वा एता रात्रयो यजमाना विश्वजित्सहातिरात्रेण पूर्वाः षोडश सहातिरात्रेणोत्तराः षोडश य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासत ऐषां द्व्यनीका प्रजा जायते, इति।

अनीकं सेना, द्वे अनीके सेनारूपे यासां रात्रीणां ता द्व्यनीकाः, सेनाद्वयसमाना इत्यर्थः। तत्र प्रायणीयातिरात्रेण सह त्रयः पञ्चाहाः षोडश पूर्वभाविन्यो रात्रय एका सेना। उदयनीयेनातिरात्रेण सहैकः पञ्चाहो दशरात्रं चेत्युत्तरभाविन्यः, एताः षोडश रात्रयो द्वितीया सेना विश्वजिद्यजमानस्थानीयत्वादुभयपार्श्ववर्तिन्योः सेनयोर्मध्येऽवस्थितो राजेव सप्तदशसंख्यापूरके मध्यमदिने प्रयोक्तव्यः। एवं विदित्वा क्रतुमनुतिष्ठतां यजमानानां बहुपुत्ररूपा बहुकन्यकारूपा च द्विविधा प्रजा सर्वतो जायते।

अथ प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतः परिगृहीत्यै, इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

———

( अथ सप्तमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

आदित्या अकामयन्त सुवर्गं लोकमियामेति ते सुवर्गं लोकं न प्राजानन्न सुवर्गं लोकमायन्त एत१ँ षट्त्रि१ँशद्रात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन्य एवं विद्वा१ँसः षट्त्रि१ँशद्रात्रमासते सुवर्गमेव लोकं प्र जानन्ति सुवर्गं लोकं यन्ति ज्योतिरतिरात्रः ( १ ) भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै षडहा भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति चत्वारो भवन्ति चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्त्यसत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव ( २ ) वीर्ये पशुषु प्रति तिष्ठन्ति षट्त्रि१ँशद्रात्रो भवति षट्त्रि१ँशदक्षरा बृहती बार्हताः पशवो बृहत्यैव पशूनव रुन्धते बृहती छन्दसा१ँ स्वाराज्यमाश्नुताश्नुवते स्वाराज्यं य एवं विद्वा१ँसः षट्त्रि१ँशद्रात्रमासते सुवर्गमेव लोकं यन्त्यतिरा-

त्रावभितो भवतः सुवर्गस्य लोकस्य परिगृ-
हीत्यै ( ३ ) ॥

( अतिरात्र ओजस्येव षट्त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

आदित्याः । अकामयन्त । सुवर्गमिति सुवः—गम् । लोकम् । इयाम । इति । ते । सुवर्गमिति सुवः—गम् । लोकम् । न । प्रेति । अजानन् । न । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । ते । एतम् । षट्त्रिंशद्रात्रमिति षट्त्रिंशत्—रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अयजन्त । ततः । वै । ते । सुवर्गमिति सुवः—गम् । लोकम् । प्रेति । अजानन् । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । ये । एवम् । विद्वांसः । षट्त्रिंशद्रात्रमिति षट्त्रिंशत्—रात्रम् । आसते । सुवर्गमिति सुवः—गम् । एव । लोकम् । प्रेति । जानन्ति । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । ज्योतिः । अतिरात्र इत्यति—रात्रः ( १ ) । भवति । ज्योतिः । एव । पुरस्तात् ।

दधते । सुवर्गस्येति सुवः-गस्य । लोकस्य ।
अनुख्यात्या इत्यनु-ख्यात्यै । षडहा इति षट्-अहाः ।
भवन्ति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति ।
तिष्ठन्ति । चत्वारः । भवन्ति । चतस्रः । दिशः । दिक्षु ।
एव । प्रतीति । तिष्ठन्ति असत्रम् । वै । एतत् । यत् ।
अछन्दोममित्यछन्दः-मम् । यत् । छन्दोमा इति छन्दः-
माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः ।
अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः-मैः ।
ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति
छन्दः-माः । ओजसि । एव (२) । वीर्ये । पशुषु ।
प्रतीति । तिष्ठन्ति । षट्त्रिंशद्रात्र इति षट्त्रिंशत्-रात्रः ।
भवति । षट्त्रिंशदक्षरेति षट्त्रिंशत्-अक्षरा । बृहती ।
बार्हताः । पशवः । बृहत्या । एव । पशून् । अवेति ।
रुन्धते । बृहती । छन्दसाम् । स्वाराज्यमिति स्व-राज्यम् ।
आश्नुत । अश्नुवते । स्वाराज्यमिति स्व-राज्यम् । ये । एवम् ।
विद्वांसः । षट्त्रिंशद्रात्रमिति षट्त्रिंशत्-रात्रम् । आसते ।
सुवर्गमिति सुवः-गम् । एव । लोकम् । यन्ति । अति-
रात्रावित्यति-रात्रौ । अभितः । भवतः । सुवर्गस्येति सुवः-

गस्यं । लोकस्यं । परिंगृहीत्या इति परिं—गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

पञ्चमेऽनुवाके त्रयस्त्रिंशद्रात्रोऽभिहितः । अथ षष्ठे षट्त्रिंशद्रात्रोऽभिधीयते । तमेतं विधत्ते—

आदित्या अकामयन्त सुवर्गं लोकमियामेति ते सुवर्गं लोकं न प्राजानन्न सुवर्गं लोकमायन्त एतꣳ षट्त्रिꣳशद्रात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन्य एवं विद्वाꣳसः षट्त्रिꣳशद्रात्रमासते सुवर्गमेव लोकं प्र जानन्ति सुवर्गं लोकं यन्ति, इति ।

पुरा कदाचिदादित्याः स्वर्गं लोकं गन्तुकामा मार्गमप्यज्ञात्वा स्वर्गं न प्राप्ताः । ततस्तदुपायं विचार्य षट्त्रिंशद्रात्रं निश्चित्य तदनुष्ठानेन मार्गमवगत्य स्वर्गं प्राप्ताः । एवमन्येऽपि यजमानाः स्वर्गं प्राप्नुवन्ति ।

प्रायणीयमहर्विधत्ते—

ज्योतिरतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै, इति ।

अथोत्तराणि कानिचिदहानि विधत्ते—

षडहा भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति, इति ।

ज्योतिर्गौरायुरायुर्गौर्ज्योतिरित्ययमेकोऽभिप्लवः षडहः । तादृशाः षडहा यावन्तोऽपेक्षितास्तावन्तोऽनुष्ठेयाः ।

(षट्त्रिंशद्रात्रकथनम्)

तेषां संख्यां विधत्ते—

चत्वारो भवन्ति चतस्रो दिशो
दिक्ष्वेव प्रति तिष्ठन्ति, इति ।

चतुर्भिः षडहैरत्रापेक्षिता संख्या पूर्यते ।

अथ पृष्ठ्यः षडहश्चत्वारश्छन्दोमा इत्येवंविधं द्वादशाहस्य दशरात्रं विधत्ते—

असत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति
तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दो-
मैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओज-
स्येव वीर्ये पशुषु प्रति तिष्ठन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

क्रतुगतामहःसंख्यां प्रशंसति—

षट्त्रिꣳशद्रात्रो भवति षट्त्रिꣳशदक्षरा बृहती
बार्हताः पशवो बृहत्यैव पशूनव रुन्धते बृहती छन्दसाꣳ
स्वाराज्यमाश्नुताश्नुवते स्वाराज्यं य एवं विद्वाꣳसः
षट्त्रिꣳशद्रात्रमासते सुवर्गमेव लोकं यन्ति, इति ।

पशूनां बार्हतत्वं चयनब्राह्मणे स्पष्टमाम्नातम्—'छन्दाꣳसि पशुष्वाजिमयु-स्तान्बृहत्युदजयत्तस्माद्बार्हताः पशव उच्यन्ते' इति । किंच, छन्दसां मध्ये बृहती स्वाराज्यं प्राप्तवती । तस्मादेतदनुष्ठायिन इह स्वाराज्यं प्राप्य परत्र स्वर्गं प्राप्नुवन्ति ॥

अथोदयनीयं विधत्ते—

अतिरात्रावभितो भवतः सुवर्गस्य
लोकस्य परिगृहीत्यै, इति ॥

प्रायणीयेन सह निर्देष्टुं द्विवचनम् । स्वर्गहेतुत्वस्य विधिवाक्ये स्पष्टत्वात्तत्परिग्रहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

( अथ सप्तमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदासान्भवेयमिति स एतमेकस्मान्नपञ्चाशमपश्यत्तमाऽहरत्तेनायजत ततो वै सोऽविन्दत प्रजामभि सौदासानभवद्य एवं विद्वाꣳस एकस्मान्नपञ्चाशमासते विन्दन्ते प्रजामभि भ्रातृव्यान्भवन्ति त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति वज्रस्यैव मुखꣳ सꣳ श्यन्ति दश पञ्चदशा भवन्ति पञ्चदशो वज्रः ( १ ) वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति षोडशिमद्दशममहर्भवति वज्र एव वीर्यं दधति द्वादश सप्तदशा भवन्त्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तैर्जायन्ते पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति द्वादशैकविꣳशा भवन्ति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् ( २ ) दधते बहवः षोडशिनो भवन्ति विजित्यै षडाश्विनानि भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्त्यूनातिरिक्ता वा एता रात्रय ऊनास्तद्यदेकस्यै न पञ्चाशदतिरिक्तास्तद्यद्भूयसीरष्टाचत्वारिꣳशत ऊनाच्च खलु वा अतिरिक्ताच्च

प्रजापतिः प्राजायत ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन्प्रैव जायन्ते प्रजया पशुभिर्वैराजो वा एष यज्ञो यदेकस्मान्नपञ्चाशो य एवं विद्वाꣳसं एकस्मान्नपञ्चाशमासते विराजमेव गच्छन्त्यन्नादा भवन्त्यतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै ( ३ )

( वज्रं आत्मन्प्रजया द्वाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

वसिष्ठः । हतपुत्र इति हत—पुत्रः । अकामयत । विन्देय । प्रजामिति प्र—जाम् । अभीति । सौदासान् । भवेयम् । इति । सः । एतम् । एकस्मान्नपञ्चाशमित्येकस्मात्—नपञ्चाशम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अविन्दत । प्रजामिति प्र—जाम् । अभीति । सौदासान् । अभवत् । ये । एवम् । विद्वाꣳसः । एकस्मान्नपञ्चाशमित्येकस्मात्—नपञ्चाशम् । आसते । विन्दन्ते । प्रजामिति प्र—जाम् । अभीति ।

भ्रातृ॑व्यान् । भवन्ति । त्रय॑ः । त्रिवृत इति॑ त्रि—वृत॑ः । अग्निष्टोमा इत्य॑ग्नि—स्तोमाः । भवन्ति । वज्र॑स्य । एव । मुख॑म् । समिति॑ । श्यन्ति । दश॑ । पञ्चदशा इति॑ पञ्च—दशाः । भवन्ति । पञ्चदश इति॑ पञ्च—दशः । वज्र॑ः ( १ )। वज्र॑म् । एव । भ्रातृ॑व्येभ्यः । प्रेति॑ । हरन्ति । षोडशिम-दिति॑ षोडशि—मत् । दशमम् । अह॑ः । भवति । वज्र॑े । एव । वीर्य॑म् । दधाति । द्वाद॑श । सप्तदशा इति॑ सप्त—दशाः। भवन्ति । अन्नाद्यस्येत्य॑न्न—अद्य॑स्य । अव॑रुद्ध्या इत्यव॑—रुद्ध्यै । अथो इति॑ । प्रेति॑ । एव । तैः । जायन्ते । पृष्ठ्य॑ः। षडह इति॑ षट्—अहः । भवति । षट् । वै । ऋतव॑ः । षट्। पृष्ठानि॑ । पृष्ठैः । एव । ऋतून् । अन्वारो॑हन्तीत्य॑नु—आरो॑-हन्ति । ऋतुभिरित्यृतु—भिः । संवत्सरमिति॑ सं—वत्सरम्। ते । संवत्सर इति॑ सं—वत्सरे । एव । प्रतीति॑ । तिष्ठन्ति । द्वाद॑श । एकविꣳशा इत्यैक—विꣳशाः । भवन्ति । प्रति॑-ष्ठित्या इति प्रति॑—स्थित्यै । अथो इति॑ । रुच॑म् । एव । आत्मन् ( २ ) । दधते । बहव॑ः । षोडशिन॑ः । भवन्ति । विजि॑त्या इति वि—जि॑त्यै । षट् । आश्विनानि॑ । भवन्ति । षट् । वै । ऋतव॑ः । ऋतुषु । एव । प्रतीति॑ । तिष्ठन्ति । ऊनातिरिक्ता इत्यून—अतिरिक्ताः । वै । एताः । रात्र॑यः । ऊनाः । तत् । यत् । एक॑स्यै । न । पञ्चाशत् । अति॑-

रिक्ता इत्यति–रिक्ताः । तत् । यत् । भूयसीः । अष्टाचत्वारिꣳशत इत्यष्टा–चत्वारिꣳशतः । ऊनात् । च । खलु । वै । अतिरिक्तादित्यति–रिक्तात् । च । प्रजापतिरिति प्रजा–पतिः । प्रेति । अजायत । ये । प्रजाकामा इति प्रजा–कामाः । पशुकामा इति पशु–कामाः । स्युः । ते । एताः । आसीरन् । प्रेति । एव । जायन्ते । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । वैराजः । वै । एषः । यज्ञः । यत् । एकस्मान्नपञ्चाश इत्येकस्मात्–नपञ्चाशः । ये । एवम् । विद्वाꣳसः । एकस्मान्नपञ्चाशमित्येकस्मात्–नपञ्चाशम् । आसते । विराजमिति वि–राजम् । एव । गच्छन्ति । अन्नादा इत्यन्न–अदाः । भवन्ति । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न–अद्यस्य । परिगृहीत्या इति परि–गृहीत्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठे षट्त्रिंशद्रात्रोऽभिहितः । अथ सप्तम एकोनपञ्चाशद्रात्रोऽभिधीयते ।

तमेतं विधत्ते—

वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदा-
सान्भवेयमिति स एतमेकस्मान्नपञ्चाशमपश्यत्तमाऽ-
हरत्तेनायजत ततो वै सोऽविन्दत प्रजामभि सौदा-
सानभवद्य एवं विद्वाꣳस एकस्मान्नपञ्चाशमासते
विन्दन्ते प्रजामभि भ्रातृव्यान्भवन्ति, इति।

विश्वामित्रशापेन हतेषु पुत्रेषु प्रजां शत्रुक्षयं च कामयमानो वसिष्ठस्तदुपायत्वेनैकस्मान्नपञ्चाशं निश्चित्य तदनुष्ठानेन प्रजां लब्ध्वा सौदासानभ्यभवत्। सुदासस्य पुत्राः सौदासास्ते च वसिष्ठस्य शत्रवः। वसिष्ठवद्यजमाना अपि तदनुष्ठानेन प्रजां लब्ध्वा भ्रातृव्यानभिभवन्ति।

अथाहानि विधत्ते—

त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति वज्र-
स्यैव मुखꣳ सꣳ श्यन्ति, इति।

त्रिवृत्स्तोमयुक्ता अग्निष्टोमरूपा अहर्विशेषास्त्रयः कर्तव्याः। 'त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्रहरति' इति श्रुत्यन्तरात्त्रिवृद्रूपस्य वज्रस्य मुखमनेन तीक्ष्णी कुर्वन्ति।

अथान्यानि कानिचिदहानि विधत्ते—

दश पञ्चदशा भवन्ति पञ्चदशो वज्रो
वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति, इति।

पञ्चदशस्तोमयुक्ता अहर्विशेषा दशसंख्याकाः कर्तव्याः। 'तं पञ्चदशस्तोमो मध्यत उदतृणत्' इत्येवमन्यत्र हिंसाहेतुत्वश्रवणात्पञ्चदशस्य वज्रत्वम्।

अथान्यदहर्विधत्ते—

षोडशिमद्दशममहर्भवति वज्र एव वीर्यं दधति, इति।

षोडशिस्तोत्रयुक्तं[1] दशरात्रस्य दशममविवाक्यमेकमहः कार्यम्। तेन पूर्वोक्ते वज्रे वीर्यं स्थापयन्ति।

---

1 क. घ. ङ. च. °डशीस्तो°।

(एकोनपञ्चाशद्रात्रकथनम्)

अथान्यानि कानिचिदहानि विधत्ते—

द्वादश सप्तदशा भवन्त्यन्नाद्यस्याव-
रुद्‌ध्या अथो प्रैव तैर्जायन्ते, इति।

सप्तदशस्तोमयुक्ता अहर्विशेषा द्वादशसंख्याकाः कार्याः। सप्तदशस्तोमस्योदरभागजन्यत्वादन्नहेतुत्वम्। सप्तदशाक्षरस्य प्रजापतिरूपत्वाच्च प्रजाहेतुत्वम्।

अथ षट्संख्याकान्यहानि विधत्ते—

पृष्ठ्यः षडहो भवति षड्वा ऋतवः
षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संव-
त्सरं ते संवत्सर एव प्रति तिष्ठन्ति, इति।

अथान्यानि कानिचिदहानि विधत्ते—

द्वादशैकविꣳशा भवन्ति प्रतिष्ठित्या
अथो रुचमेवाऽऽत्मन्दधते, इति।

एकविंशस्तोमयुक्ता अहर्विशेषा द्वादश कर्तव्याः। एकविंशस्तोमस्य प्रतिष्ठाहेतुत्वं कान्तिहेतुत्वं चासकृदुक्तम्।

अथान्यानि कानिचिदहानि विधत्ते—

बहवः षोडशिनो भवन्ति विजित्यै, इति।

षोडशिस्तोत्रयुक्ता अहर्विशेषा यावन्तोऽपेक्षितास्तावन्तः कार्याः। अत्र त्रिभिरपेक्षितसंख्यायाः पूरणात्त्रयः कार्याः।

एतत्क्रतुगतेषु षट्स्वहःस्वाश्विनशस्त्रं विधत्ते—

षडाश्विनानि भवन्ति षड्वा ऋतव
ऋतुष्वेव प्रति तिष्ठन्ति, इति।

एकोनपञ्चाशद्रूपं स्तौति—

ऊनातिरिक्ता वा एता रात्रय ऊनास्तद्यदेकस्यै न
पञ्चाशदतिरिक्तास्तद्यद्भूयसीरष्टाचत्वारिꣳशत ऊनाच्च

खलु वा अतिरिक्ताच्च प्रजापतिः प्राजायत, इति ।

अस्मिन्क्रतौ विद्यमाना एता रात्रय ऊनाश्चातिरिक्ताश्च भवन्ति । कथमिति तदुच्यते—यद्यस्मात्कारणादेकोनपञ्चाशदेकया रात्र्या वर्जिता पञ्चाशत्संख्या तस्मादेता ऊनाः । यद्यस्मात्कारणादष्टाचत्वारिंशत्संख्याया अधिकास्तस्मादतिरिक्ताः । प्रजापतिः पुरा कंचिदूनादल्पाद्वीर्यात्प्रौढशरीररूपाः प्रजा असृजत । कंचिच्चातिरिक्तादधिकादाकाशादेरुत्तरोत्तरन्यूनान्वाय्वादीनसृजत । तस्मादूनातिरिक्तरूपोऽयं क्रतुः प्रशस्तः ।

पूर्वं विधिवाक्येऽभिहितं फलमुपसंहरति—

ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन्प्रैव जायन्ते प्रजया पशुभिः, इति ।

क्रतुगतामहःसंख्यां प्रशंसति—

वैराजो वा एष यज्ञो यदेकस्मान्नपञ्चाशो य एवं विद्वाꣳस एकस्मान्नपञ्चाशमासते विराजमेव गच्छन्त्यन्नादा भवन्ति, इति ।

चतुर्ष्वहर्दशकेषु दशसंख्यासद्भावान्मुख्यं वैराजत्वम् । पञ्चमस्य दशकस्यैकेन न्यूनत्वेऽपि वैराजत्वमुपचरितुं शक्यम् । 'न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम्' इति श्रुत्यन्तरात् । अतो वैराजत्वादन्नप्राप्तिः ।

प्रायणीयोदयनीयौ विधत्ते—

अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै, इति ॥

उक्तन्यायेनान्नहेतुत्वादन्नपरिग्रहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा

एष एताꣳ रात्रिं वसति साक्षादेव संवत्सरमारभ्यं दीक्षन्त आर्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तंनामानावृतू भंवतो व्यस्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तंनामानावृतू भंवतः फल्गुनीपूर्णमासे दीक्षेरन्मुखं वा एतत् ( १ ) संवत्सरस्य यत्फल्गुनीपूर्णमासो मुखत एव संवत्सरमारभ्यं दीक्षन्ते तस्यैकैव निर्या यत्सांमेध्ये विषूवान्त्संपद्यंते चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासो मुखत एव संवत्सरमारभ्यं दीक्षन्ते तस्य न का चन निर्या भंवति चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्तेषामेकाष्टकायां क्रयः सं पद्यते तेनैकाष्टकां न छम्बट्कुर्वन्ति तेषाम् ( २ ) पूर्वपक्षे सुत्या सं पद्यते पूर्वपक्षं मासां अभि सं पद्यन्ते ते पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठंत ओषंधयो वनस्पतयोऽनूत्तिष्ठन्ति तान्कल्याणी कीर्तिरनूत्तिष्ठत्यरांत्सुरिमे यजमाना इति तदनु सर्वे राध्नुवन्ति ( ३ ) ॥

( एतच्छम्बट्कुर्वन्ति तेषां चतुंस्त्रिꣳशच्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ सप्तमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः )

---

संवत्सरायेति सं—वत्सराय । दीक्षिष्यमाणाः । एकाष्टकायामित्येक—अष्टकायाम् । दीक्षेरन् । एषा । वै । संवत्सरस्येति सं—वत्सरस्य । पत्नी । यत् । एकाष्टकेत्येक—अष्टका । एतस्याम् । वै । एषः । एताम् । रात्रिम् । वसति । साक्षादिति स—अक्षात् । एव । संवत्सरमिति सं—वत्सरम् । आरभ्येत्या—रभ्य । दीक्षन्ते । आर्तम् । वै । एते । संवत्सरस्येति सं—वत्सरस्य । अभीति । दीक्षन्ते । ये । एकाष्टकायामित्येक—अष्टकायाम् । दीक्षन्ते । अन्तनामानावित्यन्त—नामानौ । ऋतू इति । भवतः । व्यस्तमिति वि—अस्तम् । वै । एते । संवत्सरस्येति सं—वत्सरस्य । अभीति । दीक्षन्ते । ये । एकाष्टकायामित्येक—अष्टकायाम् । दीक्षन्ते । अन्तनामानावित्यन्त—नामानौ । ऋतू इति । भवतः । फल्गुनीपूर्णमास इति फल्गुनी—पूर्णमासे । दीक्षेरन् । मुखम् । वै । एतत् ( १ ) । संवत्सरस्येति सं—वत्सरस्य । यत् । फल्गुनीपूर्णमास इति फल्गुनी—पूर्णमासः । मुखतः । एव । संवत्सरमिति सं—वत्सरम् । आरभ्येत्या—रभ्य । दीक्षन्ते । तस्य । एका । एव । निर्येति निः—या । यत् । सांमेघ्य इति सां—मेघ्ये । विषूवानिति विषु—वान् । संपर्यत-

इति सं-पर्यंते । चित्रापूर्णमास इति चित्रा-पूर्णमासे। दीक्षेरन् । मुखम् । वै । एतत् । संवत्सरस्येति सं-वत्सरस्य । यत् । चित्रापूर्णमास इति चित्रा-पूर्णमासः । मुखतः । एव । संवत्सरमिति सं-वत्सरम् । आरभ्येत्या-रभ्य । दीक्षन्ते । तस्य । न । का । चन । निर्येति निः-या । भवति । चतुरह इति चतुः-अहे । पुरस्तात् । पौर्णमास्या इति पौर्ण-मास्यै । दीक्षेरन् । तेषाम् । एकाष्टकायामित्येक-अष्टकायाम् । क्रयः । समिति । पद्यते । तेन । एकाष्टकामित्येक-अष्टकाम् । न । छम्बट् । कुर्वन्ति । तेषाम् (२) । पूर्वपक्ष इति पूर्व-पक्षे । सुत्या । समिति । पद्यते । पूर्वपक्षमिति पूर्व-पक्षम् । मासाः । अभि । समिति । पद्यन्ते । ते । पूर्वपक्ष इति पूर्व-पक्षे । उदिति । तिष्ठन्ति । तान् । उत्तिष्ठत इत्युत्-तिष्ठतः । ओषधयः । वनस्पतयः । अनु । उदिति । तिष्ठन्ति । तान् । कल्याणी । कीर्तिः । अनु । उदिति । तिष्ठन्ति । अरात्सुः । इमे । यजमानाः । इति । तत् । अन्विति । सर्वे । राध्नुवन्ति (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

———

( अथ सप्तमकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाके एकोनपञ्चाशद्रात्रोऽभिहितः। अथाष्टमादिषु चतुर्ष्वनुवाकेषु संवत्सरसत्रमभिधीयते।

तत्राष्टमेऽनुवाके संवत्सरसत्रस्य दीक्षाकालं विधत्ते—

संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदे-काष्टकैतस्यां वा एष एताꣳ रात्रिं वसति साक्षादेव संवत्सरमारभ्य दीक्षन्ते, इति।

ये यजमानाः संवत्सरसत्रार्थं दीक्षिष्यन्ते ते यजमाना एकाष्टकायां माघकृष्णाष्टम्यां दीक्षां कुर्युः। येयमेकाष्टकाभिमानिनी देवता सेयं संवत्सराभिमानिनो देवस्य पत्नी। एकाष्टकाया अभिमानिदेवतारूपत्वं गर्भधारणादवगम्यते। तथा चाग्निकाण्डे मन्त्र आम्नायते—'एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्' इति। संवत्सरस्य पतित्वं चान्यत्र मन्त्रान्तरेणाऽऽम्नातम्—'एकाष्टका तपसा तप्यमाना संवत्सरस्य या पत्नी दुदुहे प्रपीना' इति।

एष संवत्सराभिमानी देव एतां माघकृष्णाष्टमीं रात्रिं सर्वामप्येतस्यामेकाष्टका देवतायामेव वसति। अतस्तत्र दीक्षां कुर्वन्तो यजमाना मुख्यमेव संवत्सरमारभ्य दीक्षितवन्तो भवन्ति।

तमेतं पक्षं दूषयित्वा पक्षान्तरं विधत्ते—

आर्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्ट-कायां दीक्षन्तेऽन्तनामानावृतू भवतो व्यस्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्ते-ऽन्तनामानावृतू भवतः फल्गूनीपूर्णमासे दीक्षेर-न्मुखं वा एतत्संवत्सरस्य यत्फल्गुनीपूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते, इति।

ये यजमाना एकाष्टकायां दीक्षन्ते ते यजमानाः संवत्सरसत्रस्याऽऽर्तमभि विनाशमभिलक्ष्य दीक्षन्ते। तत्रायं हेतुः—पुष्य(पौष)माघरूपावृत्वन्त्यवयवौ संवत्स-

रस्यान्त इत्येतन्नामधारिणौ । तयोः शिशिरर्तुरूपत्वात् । तेन चर्तुना पूर्वसंव-त्सरस्य समाप्तत्वात्पौषपौर्णमासीमारभ्य फाल्गुनपौर्णमास्याः प्राचीनः कालः संवत्सरस्यान्तः । किंचैकाष्टकायां दीक्षमाणाः संवत्सरस्य व्यस्तमपि विपर्या-समभिलक्ष्य दीक्षन्ते । आदौ हि दीक्षा कर्तव्या । अयं च संवत्सरस्यान्तः कालः । ऋत्ववयवयोरेकयोरुक्तन्यायेनान्तनामोपेतत्वात् । तस्मादुत्तरफल्गु-नीयुक्ते पूर्णमासे दीक्षां कुर्युः । तस्य च भाविसंवत्सरोपक्रमदिनत्वात् । एत-देवाभिप्रेत्याऽऽधानब्राह्मणे समाम्नातम्—'उत्तरयोरादधीत । एषा वै प्रथमा रात्रिः संवत्सरस्य । यदुत्तरे फल्गुनी । ' इति ।

एतमपि पक्षं दूषयित्वा पक्षान्तरं विधत्ते—

तस्यैकैव निर्या यत्सांमेघ्ये विषूवान्त्संपद्यते चित्रा-पूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चि-त्रापूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते तस्य न का चन निर्या भवति, इति ।

तस्य फल्गुनीपूर्णमासदीक्षापक्षस्यैकैव निर्या वक्ष्यमाण एक एव दोषः, न तु पूर्वोक्तार्तत्वव्यस्तत्वदोषौ । कोऽसावेको दोष इति स उच्यते-समीचीना अतिवर्षणक्षमा मेघा यस्मिन्वर्षर्तौ सोऽयं संमेघः । तस्य संबन्धी प्रत्यासन्नः कालः सांमेघ्यः । अस्मिन्काले विषूवानहः(?) संपद्यते । तथा हि विषूवानिति संवत्सरस्य मध्यवर्ती मुख्योऽहर्विशेषः । ततः पूर्वे षण्मासा उत्तरे च षण्मासाः । तयोरुभयोर्मासषट्कयोर्मध्ये सोऽहर्विशेषः कर्तव्यः । अत्र च फल्गुनीपूर्ण-मासमारभ्य द्वादश दीक्षा द्वादशोपसदश्चानुष्ठायोत्तरदिने प्रथममासोपक्रमः कार्यः । तथा सति चैत्रशुद्धनवम्यामुपक्रमो भवति । आश्वयुजशुद्धाष्टम्यां मास-षट्कं समाप्य नवम्यां विषूवान्कार्यः । स च वर्षर्तोः प्रत्यासन्नः । भाद्रपदपौ-र्णमास्यां वर्षर्तौ समाप्ते सत्यनन्तरमासवर्तित्वात् । अतो वर्षर्तुसमीपे विषुवद्दि-नसंपत्तिपरिहाराय चित्रानक्षत्रयुक्तायां पौर्णमास्यां दीक्षा कर्तव्या । सोऽपि वसन्तर्तुमध्यपातित्वात्संवत्सरस्य मुखमेव । अतो मुखत एवाऽऽरम्भः कृतो भवति । एवं सति कार्तिकशुद्धनवम्यां विषूवान्संपद्यते । तच्च दिनं वर्षर्तोर्दूर-वर्ति । अतो वृष्टिशङ्काया अभावाद्विस्रम्भेणानुष्ठातुं शक्यत इति तस्य पक्षस्य न कोऽपि दोषोऽस्ति ।

अथ गुणविशेषमवलोक्य पक्षान्तरं विधत्ते—

चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्ते-
षामेकाष्टकायां क्रयः सं पद्यते
तेनैकाष्टकां न छम्बट्कुर्वन्ति, इति ।

माघपौर्णमास्याः पुरस्ताच्चतुरहे शुक्लैकादश्यां दीक्षेरन् । तथा सति माघकृष्णसप्तम्यां द्वादशदीक्षाणां समाप्तत्वात्तदनन्तरवर्तिन्यामेकाष्टकायां सोमक्रयः संपद्यते । तथा सत्येकाष्टकाया अप्युपयुक्तत्वात्संवत्सरपत्नीत्वेन मुख्यामेतां न च्छम्बट्कुर्वन्ति निष्प्रयोजनां न कुर्वन्ति । ततः संवत्सरपत्न्याः सत्कार एको गुणः ।

अथ गुणान्तरं दर्शयति—

तेषां पूर्वपक्षे सुत्या सं पद्यते पूर्वपक्षं मासा
अभि सं पद्यन्ते ते पूर्वपक्ष उत्तिष्ठन्ति तानु-
त्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति
तान्कल्याणी कीर्तिरनूत्तिष्ठत्यरात्सुरिमे यज-
माना इति तदनु सर्वे राध्नुवन्ति, इति ॥

तेषामेकाष्टकायां क्रयमनुतिष्ठतां यजमानानां तद्दिनमारभ्यानुष्ठीयमाना उपसदश्चैत्रशुद्धचतुर्थ्यां संपद्यन्ते । तत उत्तरदिने क्रियमाणा सुत्या शुक्लपक्ष एवोपक्रान्ता भवति । तत आरभ्य सर्वेऽपि मासाः शुक्लपक्षमेवाभिलक्ष्य समाप्यन्ते । तेषु समाप्तेषु ते सत्त्रिणोऽपि पूर्वपक्ष एव सत्त्रादुत्तिष्ठन्ति । उत्तिष्ठतस्तान्यजमानाननु भूम्यामोषधयो वनस्पतयश्च सत्कर्मानुष्ठानसामर्थ्यादुद्भवं गच्छन्ति । तदुद्भवे सति तान्यजमानाननु पुण्यकीर्तिरुत्तिष्ठति । कीदृशी कीर्तिरिति सोच्यते—इमे यजमाना अरात्सुः समृद्धिं गता इत्येतादृशी कीर्तिः । सत्कीर्त्युत्थानमनु सर्वे प्राणिनः समृद्धा भवन्ति । एतदीयेन सत्कर्मानुष्ठानेन भूमौ सर्वसस्याभिवर्धनात् । तस्मादीदृशं गुणसंघमवेक्ष्य माघशुक्लैकादश्यां दीक्षेत्ययमेव मुख्यः पक्षः ।

अत्र मीमांसा ॥

षष्ठाध्यायस्य पञ्चमपादे दशमाधिकरणे चिन्तितम्—

गवामयन उक्ता तु या काचित्पूर्णिमाऽथवा ।
चैत्री माघ्युत काचित्स्यादविशेषात्प्रशंसया ॥
चैत्री स्यात्क्रय एकाष्टकायामित्युपवर्णितम् ।
माघकृष्णाष्टमी त्वेकाष्टकाऽतो माघपूर्णिमा ॥

गवामयने श्रूयते–'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्तेषामेकाष्टकायां क्रयः संपद्यते' इति । पौर्णमास्याः पूर्वस्मिंश्चतुरहे दीक्षेरन्नेकादश्यां दीक्षामारभेत । तथा सति पौर्णमास्या उपरितने सप्तमे दिने द्वादश दीक्षाः पूर्यन्ते । तत उपरितन्यामष्टम्यां सोमक्रय इत्यर्थः । तत्र विशेषस्यादृष्टत्वाद्या काचित्पूर्णिमेत्येकः पक्षः । 'चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः' इति प्रशस्यमानतया चैत्री पौर्णमासीति द्वितीयः पक्षः । याज्ञिकसमाख्यया माघकृष्णाष्टम्येकाष्टका । तत्र सोमक्रयसंपत्तये माघ्याः पौर्णमास्याः पूर्वस्यामेकादश्यां दीक्षाऽऽरब्धव्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ।

---

सुवर्गं वा एते लोकं यन्ति ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानꣳ श्रपयन्त उपसद्भिर्द्वाभ्यां लोमाव द्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृद्द्वाभ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रमात्मानमेव दक्षिणां नीत्वा सुवर्गं लोकं यन्ति

शिखामनु प्र वपन्त ऋद्ध्या अथो रथीयाꣳसः सुवर्गं लोकमयामेति ( १ ) ॥

( सुवर्गं पञ्चाशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

सुवर्गमिति सुवः–गम् । वै । एते । लोकम् । यन्ति । ये । सत्रम् । उपयन्तीत्युप–यन्ति । अभीति । इन्धते । एव । दीक्षाभिः । आत्मानम् । श्रपयन्ते । उपसद्भिरित्युपसत्–भिः । द्वाभ्याम् । लोम । अवेति । यन्ति । द्वाभ्याम् । त्वचम् । द्वाभ्याम् । असृत् । द्वाभ्याम् । माꣳसम् । द्वाभ्याम् । अस्थि । द्वाभ्याम् । मज्जानम् । आत्मदक्षिणमित्यात्म–दक्षिणम् । वै । सत्रम् । आत्मानम् । एव । दक्षिणाम् । नीत्वा । सुवर्गमिति सुवः–गम् । लोकम् । यन्ति । शिखाम् । अनु । प्रेति । वपन्ते । ऋद्ध्यै । अथो इति । रथीयाꣳसः । सुवर्गमिति सुवः–गम् । लोकम् । अयाम । इति ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

अष्टमे संवत्सरसत्रस्य दीक्षाकाल उक्तः। अथ नवमे दीक्षा उपसदश्चोच्यन्ते। ता उभयीर्विधत्ते—

सुवर्गं वा एते लोकं यन्ति ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानᳪं श्रपयन्त उपसद्भिः, इति ।

सत्रानुष्ठायिनः स्वर्गं गच्छन्ति । अतस्तद्योग्यतायै स्वदीक्षाभिरात्मानं स्वदेहमभीन्धत एव सर्वतो ज्वलयन्त्येव । उपसद्भिस्तु श्रपयन्ते स्वदेहं पचन्ति । तस्माद्दीक्षा उपसदश्चानुष्ठेया इति विध्युन्नयः। यद्यपि द्वादशाहविकृतित्वेन प्राप्तास्तथाऽपि विकृतिलिङ्गत्वाय स्तुतये वा तदनुवादोऽस्तु ।

अथ विभज्य प्रशंसां कुर्वंस्तासामुभयविधानां द्वादशत्वं प्रकटयति—

द्वाभ्यां लोमाव यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृग्द्वाभ्यां माᳪंसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रमात्मानमेव दक्षिणां नीत्वा सुवर्गं लोकं यन्ति, इति ।

द्वाभ्यां दिनद्वयानुष्ठेयाभ्यां दीक्षाभ्यामुपसद्भ्यां च स्वकीयं लोम हविरर्थमवद्यन्ति। अनन्तरभाविनीभ्यां द्वाभ्यां त्वचमवद्यन्ति। एवं रक्तमांसास्थिमज्जसु योजनीयम्। यदेतत्सत्रं तदेतदात्मदक्षिणं वै स्वशरीरमेव तत्र दक्षिणा, नत्वन्या गवादिरूपाऽस्ति। तस्मात्स्वशरीरमेव दक्षिणारूपेण नीत्वा स्वर्गं प्राप्नुवन्ति ।

यदुक्तं सूत्रकारेण—'सत्रे चेद्वपनकाले सशिखानि वपन्ते' इति, तदेतद्विधत्ते—

शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाᳪंसः सुवर्गं लोकमयामेति, इति ॥

शिखामनुलक्ष्य प्रकर्षेण वपनं कुर्युः। तत्र मृतत्वग्रूपाणां केशानामपगमा-

त्समृद्ध्यै भवति । अपि च केशभाररहिता रघीयांसो लघुतराः सन्तः स्वर्गं प्राप्नुयामेत्यनेनाभिप्रायेण सशिखं वपनं कुर्युः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः )

---

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात्तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रम-नुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानालभ्य परिगृह्य सोम-मेवैतत्पिबन्त आसते ज्योतिष्टोमं प्रथममुप यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान्प्र युञ्जते ते ( १ ) सꣳस्तुता विराजमभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विरा-ट्सुवर्गमेव तेन लोकं यन्ति रथंतरं दिवा भवति रथंतरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामं बृहत्तन्मध्यतो दधति विधृत्यै तेनाजामि ( २ ) ॥

( त एकान्न पञ्चाशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । अतिरात्र इत्यति–रात्रः । परमः । यज्ञक्रतूनामिति यज्ञ–क्रतूनाम् । कस्मात् । तम् । प्रथमम् । उपेति । यन्ति । इति । एतत् । वै । अग्निष्टोममित्यग्नि–स्तोमम् । प्रथमम् । उपेति । यन्ति । अथ । उक्थ्यम् । अथ । षोडशिनम् । अथ । अतिरात्रमित्यति–रात्रम् । अनुपूर्वमित्यनु–पूर्वम् । एव । एतत् । यज्ञक्रतूनिति यज्ञ–क्रतून् । उपेत्येत्युप–इत्य । तान् । आलभ्येत्या–लभ्य । परिगृह्येति परि–गृह्य । सोमम् । एव । एतत् । पिबन्तः । आसते । ज्योतिष्टोममिति ज्योतिः–स्तोमम् । प्रथमम् । उपेति । यन्ति । ज्योतिष्टोम इति ज्योतिः–स्तोमः । वै । स्तोमानाम् । मुखम् । मुखतः । एव । स्तोमान् । प्रेति । युञ्जते । ते ( १ ) । सꣳस्तुता इति सं–स्तुताः । विराजमिति वि–राजम् । अभि । समिति । यन्ति । द्वे इति । च । ऋचौ । अतीति । रिच्येते इति । एकया । गौः । अतिरिक्त इत्यति–रिक्तः । एकया । आयुः । ऊनः । सुवर्ग इति सुवः–गः । वै । लोकः । ज्योतिः । ऊर्क् । विराडिति वि–राट् । सुवर्गमिति सुवः–गम् ।

एव । तेन॑ । लोकम् । यन्ति । रथंतरमिति॑ रथं—तरम् । दिवा॑ । भव॑ति । रथंतरमिति॑ रथं—तरम् । नक्त॑म् । इति॑ । आहुः । ब्रह्मवादिन इति॑ ब्रह्म—वादिन॑ः । केन॑ । तत् । अजा॑मि । इति॑ । सौभरम् । तृतीयसवन इति॑ तृतीय—सवने । ब्रह्मसाममिति॑ ब्रह्म—सामम् । बृहत् । तत् । मध्यतः । दधाति । विधृ॑त्या इति वि—धृत्यै । तेन॑ । अजा॑मि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

नवमे दीक्षा उपसदश्चोक्ताः । अथ दशमे प्रायणीयाख्यं प्रथममहरुच्यते । तदेतद्विधत्ते—

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात्तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथो-क्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद्यज्ञक्रतूनु-पेत्य तानालभ्य परिगृह्य सोममेवैतत्पिबन्त आसते ज्योतिष्टोमं प्रथममुप यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान्प्र युङ्क्ते, इति ।

योऽयमतिरात्राख्यः क्रतुः सोऽयं यज्ञक्रतूनां परमः सोमयागरूपा ये क्रतवस्तेषां मध्ये चरमः । अग्निष्टोम उक्थ्यः षोडश्यतिरात्र इत्येतस्य तदीयक्रमत्वादग्निष्टोमस्य च प्राथम्यम् । प्रजननं ज्योतिरित्यनुवाके 'तस्मादाहुर्ज्येष्ठयज्ञः' इत्याम्नातम् । एवं सत्यग्निष्टोमं परित्यज्य चरमभाविनमतिरात्रं कस्मात्कारणा

त्सत्रे प्रथममनुतिष्ठन्तीति ब्रह्मवादिनां प्रश्नः । तत्राभिज्ञा एवमुत्तरमाहुः—नात्राग्निष्टोमः परित्यक्तः । अत्राग्निष्टोमोक्थ्यषोडश्यतिरात्राणामुत्तरोत्तरस्य पूर्वपूर्वगर्भितत्वात् । द्वादशस्तोत्रमग्निष्टोममन्तर्भाव्य पुनः स्तोत्रत्रयाधिक्ये-नोक्थ्यः संपद्यते । तमन्तर्भाव्य पुनरेकस्तोत्राधिक्येन षोडशी संपद्यते । तम-न्तर्भाव्य पुनस्त्रयोदशस्तोत्राधिक्येनातिरात्रः संपद्यते । अतः सत्रिणोऽतिरात्र-मनुतिष्ठन्तीति यदेतद्वा एतस्मिन्सोमानुष्ठानेऽग्निष्टोमं प्रथममनुतिष्ठन्ति, अथो-क्थ्यषोडश्यतिरात्रान्, तदेतदनुपूर्वमेवानुक्रमेणैव यज्ञक्रतूनुपेत्यानुष्ठातुं निश्चित्य तान्क्रतूनुपक्रम्य परितः स्वीकृत्य ततः सर्वत्र सोममेव पिबन्तः सत्रिण आसते । तस्मादग्निष्टोमपरित्यागाभावादतिरात्ररूपं ज्योतिष्टोमं प्रथममनुतिष्ठेयुः । स हि ज्योतिष्टोमो ज्योतिर्गौरायुरित्येतन्नामकानां स्तोमानां क्रतूनां मुखसदृशः । तस्मान्मुखत एवाऽऽरभ्य स्तोमान्क्रतून्सत्रिणः प्रयुञ्जते ।

गोष्टोमायुष्टोमाभ्यां पूर्वभावित्वं ज्योतिष्टोमस्य प्रकारान्तरेण पुनः प्रशंसति—

ते सꣳस्तुता विराजमभि सं पद्यन्ते द्वे चर्चा-
वति रिच्येते एकया गौरतिरिक्त एकयाऽऽयु-
रूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराट्-
त्सुवर्गमेव तेन लोकं यन्ति, इति ।

ज्योतिष्टोमे स्तोत्रगता या ऋग्विशेषाः सन्ति ते संस्तुताः सन्तो विराजं दशसंख्यामेव प्राप्नुवन्ति न तु न्यूना नाप्यधिकाः । इतरयोस्तु गोष्टोमायुष्टोम-योर्द्वे ऋचावतिरिच्येते, दशसंख्यां न प्राप्नुतः । तत्कथमिति तदुच्यते—एकयर्चा गोष्टोमो दशसंख्याया अतिरिक्तः । आयुष्टोमस्त्वेकया न्यूनः । तस्माद्विराड्रू-पत्वं ज्योतिष्टोमस्य प्राशस्त्ये हेतुः । किंच भासकत्वाज्ज्योतिष्टोमः स्वर्गलोका-त्मको विराड्रूपः । तस्मादुभयथा प्रशस्तेन तेन ज्योतिष्टोमेन स्वर्गं लोकं प्राप्नुवन्ति ।

अथास्मिन्नतिरात्रसंस्थे ज्योतिष्टोमे सामविशेषं विधत्ते—

रथंतरं दिवा भवति रथंतरं नक्तमित्याहुर्ब्रह्मवादिनः
केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामं
बृहत्तन्मध्यतो दधाति विधृत्यै तेनाजामि, इति ॥

दिवा पृष्ठस्तोत्रे रथंतरं गीयते, नक्तमपि रात्रिपर्यायेषु रथंतरं गीयते, तत्तदानीमालस्यं भवति । तादृशालस्यपरिहारः केनान्येन साम्ना भवतीति

ब्रह्मवादिनां प्रश्नः । तत्राभिज्ञा उत्तरमाहुः—सौभराख्यं यदन्यत्सामास्ति तत्तृतीयसवने ब्रह्मसामत्वेन गेयम् । तच्च बृहत्प्रौढं, तदेतद्बृहद्रथंतरयोरुभयोर्मध्ये स्थापयन्ति । तच्च यज्ञस्य धृत्यै संपद्यते । तेन विजातीयसाम्नाऽऽलस्यपरिहारो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

ज्योतिष्टोमं प्रथममुपं यन्त्यस्मिन्नेव तेनं लोके प्रतिं तिष्ठन्ति गोष्टोमं द्वितीयमुपं यन्त्यन्तरिक्ष एव तेन प्रतिं तिष्ठन्त्यायुष्टोमं तृतीयमुपं यन्त्यमुष्मिन्नेव तेनं लोके प्रतिं तिष्ठन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुर्यदेतान्त्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति ते सꣳस्तुता विराजम् (१) अभि सं पद्यन्ते द्वे चर्चावतिं रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाव रुन्धते ते न क्षुधाऽऽर्तिमार्छन्त्यक्षोधुका भवन्ति क्षुत्संबाधा इव हि सत्रिणोऽग्निष्टोमावभितः प्रधी तावुक्थ्या मध्ये नभ्यं तत्तदेतत्परियद्देवचक्रं यदेतेनं ( २ ) षडहेन यन्ति देवचक्रमेव समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवते

षडहेन यन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठ-
न्त्युभयतोज्योतिषा यन्त्युभयत एव सुवर्गे लोके
प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतस्तानि द्वादशा-
हानि सं पद्यन्ते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ
बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ
द्वादशौ ( ३ ) तत्पुरुषमनु पर्यावर्तन्ते त्रयः षडहा
भवन्ति तान्यष्टादशाहानि सं पद्यन्ते नवान्यानि
नवान्यानि नव वै पुरुषे प्राणास्तत्प्राणाननु पर्या-
वर्तन्ते चत्वारः षडहा भवन्ति तानि चतुर्विंशति-
रहानि सं पद्यन्ते चतुर्विंशतिरर्धमासाः संवत्सर-
स्तत्संवत्सरमनु पर्यावर्तन्तेऽप्रतिष्ठितः संवत्सर इति
खलु वा आहुर्वर्षीयान्प्रतिष्ठाया इत्येतावद्वै संवत्स-
रस्य ब्राह्मणं यावन्मासो मासिमास्येव प्रतिति-
ष्ठन्तो यन्ति ( ४ ) ॥

( विराजमेतेन द्वादशावेतावद्वा अष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

ज्योतिष्टोममिति ज्योतिः—स्तोमम् । प्रथमम् । उपेति ।
यन्ति । अस्मिन् । एव । तेन । लोके । प्रतीति । तिष्ठन्ति ।

गोष्टोममिति गो—स्तोमम् । द्वितीयम् । उपेति । यन्ति । अन्तरिक्षे । एव । तेन । प्रतीति । तिष्ठन्ति । आयुष्टोम-मित्यायुः—स्तोमम् । तृतीयम् । उपेति । यन्ति । अमुष्मिन् । एव । तेन । लोके । प्रतीति । तिष्ठन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । यत् । एतान् । स्तोमान् । उपयन्तीत्युप—यन्ति । एषु । एव । तत् । लोकेषु । सत्रिणः । प्रतितिष्ठन्त इति प्रति—तिष्ठन्तः । यन्ति । ते । सꣳस्तुता इति सं—स्तुताः । विराजमिति वि—राजम् ( १ ) । अभि । समिति । पद्यन्ते । द्वे इति । च । ऋचौ । अतीति । रिच्येते इति । एकया । गौः । अतिरिक्त इत्यति—रिक्तः । एकया । आयुः । ऊनः । सुवर्ग इति सुवः—गः । वै । लोकः । ज्योतिः । ऊर्क् । विराडिति वि—राट् । ऊर्जम् । एव । अवेति । रुन्धते । ते । न । क्षुधा । आर्तिम् । एति । ऋच्छन्ति । अक्षो-धुकाः । भवन्ति । क्षुत्संबाधा इति क्षुत्—संबाधाः । इव । हि । सत्रिणः । अग्निष्टोमावित्यग्नि—स्तोमौ । अभितः । प्रधी इति प्र—धी । तौ । उक्थ्याः । मध्ये । नभ्यम् । तत् । तत् । एतत् । परियदिति परि—यत् । देवचक्र-मिति देव—चक्रम् । यत् । एतेन ( २ ) । षडहेनेति षट्—अहेन । यन्ति । देवचक्रमिति देव—चक्रम् । एव ।

(मासगताहकथनम्)

समारोहन्तीति सम्-आरोहन्ति । अरिष्ट्यै । ते । स्वस्ति । समिति । अश्नुवते । षडहेनेति षट्-अहेन । यन्ति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठन्ति । उभयतोज्योतिषेत्युभयतः-ज्योतिषा । यन्ति । उभयतः । एव । सुवर्ग इति सुवः-गे । लोके । प्रतितिष्ठन्त इति प्रति-तिष्ठन्तः । यन्ति । द्वौ । षडहाविति षट्-अहौ । भवतः । तानि । द्वादश । अहानि । समिति । पद्यन्ते । द्वादशः । वै । पुरुषः । द्वे इति । सक्थ्यौ । द्वौ । बाहू इति । आत्मा । च । शिरः । च । चत्वारि । अङ्गानि । स्तनौ । द्वादशौ (३) । तत् । पुरुषम् । अन्विति । पर्यावर्तन्त इति परि-आवर्तन्ते । त्रयः । षडहा इति षट्-अहाः । भवन्ति । तानि । अष्टादशेत्यष्टा-दश । अहानि । समिति । पद्यन्ते । नव । अन्यानि । नव । अन्यानि । नव । वै । पुरुषे । प्राणा इति प्र-अनाः । तत् । प्राणानिति प्र-अनान् । अन्विति । पर्यावर्तन्त इति परि-आवर्तन्ते । चत्वारः । षडहा इति षट्-अहाः । भवन्ति । तानि । चतुर्विꣳशतिरिति चतुः-विꣳशतिः । अहानि । समिति । पद्यन्ते । चतुर्विꣳशतिरिति चतुः-विꣳशतिः । अर्धमासा इत्यर्ध-मासाः । संवत्सर इति सं-वत्सरः । तत् । संवत्सरमिति सं-वत्सरम् । अन्विति । पर्यावर्तन्त इति परि-

आवर्तन्ते । अप्रतिष्ठित इत्यप्रति-स्थितः । संवत्सर इति सं-वत्सरः । इति । खलु । वै । आहुः । वर्षीयान् । प्रतिष्ठाया इति प्रति-स्थायाः । इति । एतावत् । वै । संवत्सरस्येति सं-वत्सरस्य । ब्राह्मणम् । यावत् । मासः । मासिमासीति मासि-मासि । एव । प्रतितिष्ठन्त इति प्रति-तिष्ठन्तः । यन्ति (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

दशमे प्रायणीयमहरुक्तम् । अथैकादशे मासगतान्युच्यन्ते । तत्राऽऽदौ तावत्त्रीण्यहानि विधत्ते—

ज्योतिष्टोमं प्रथममुप यन्त्यस्मिन्नेव तेन लोके प्रति तिष्ठन्ति गोष्टोमं द्वितीयमुप यन्त्यन्तरिक्ष एव तेन प्रति तिष्ठन्त्यायुष्टोमं तृतीयमुप यन्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुर्यदेतान्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्त्रिणः प्रतितिष्ठन्तो यन्ति, इति ।

ज्योतिष्टोमगोष्टोमायुष्टोमा एकाहविशेषाः । एतैरेवानुलोमप्रतिलोमगतैरभिप्लवः षडहः संपद्यते । तस्मिन्षडहे पूर्वभागवर्तिनोऽनुलोमगता एतेऽनुष्ठेयाः क्रमेणैतैर्लोकत्रये प्रतिष्ठा भवति । ज्योतिरादीनां भूरादिरूपत्वादेतेषां त्रयाणामनुष्ठानेन सत्त्रिणो लोकत्रये प्रतिष्ठिताः सुखेन व्यवहरन्ति । पूर्वस्मिन्ननुवाके

प्रथमदिनेऽनुष्ठेयः प्रायणीयाख्योऽतिरात्ररूपो ज्योतिष्टोमो विहितः । इह तु तृतीयदिनेऽनुष्ठेयोऽग्निष्टोमात्मको ज्योतिष्टोम इति विशेषः ।

तस्यैतस्याग्निष्टोमरूपस्य ज्योतिष्टोमस्य प्राथम्यं पूर्वोक्तातिरात्रवत्प्रशंसति—

ते सꣳस्तुता विराजमभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाव रुन्धते ते न क्षुधाऽऽर्तिमार्छन्त्यक्षोधुका भवन्ति क्षुत्संबाधा इव हि सत्त्रिणः, इति ।

ज्योतिष्टोमस्य स्तोत्रियागतसंख्यया विराट्संपत्तौ विराज ऊर्ग्रूपत्वात्ते सत्त्रिणः क्षुधा संपादितामार्तिं न प्राप्नुवन्ति । किं त्वक्षोधुकाः सर्वदा क्षुद्रहिता भवन्ति । सत्त्रिणामनुष्ठानप्रयासबाहुल्यात्प्रायेण ते क्षुत्संपादितबाधयुक्ता इव भवन्ति । तस्मात्तेषां क्षुत्परिहारायोर्ग्रूपविराट्संपत्तियुक्तो ज्योतिष्टोम एव प्रथममनुष्ठेयः ।

इदानीमुक्तैर्ज्योतिरादिभिरनुलोमप्रतिलोमगतैर्निष्पन्नमभिप्लवषडहं रथचक्ररूपक्लृप्त्या विधत्ते—

अग्निष्टोमावभितः प्रधी तावुक्थ्या मध्ये नभ्यं तत्तदेतत्परियद्देवचक्रं यदेतेन षडहेन यन्ति देवचक्रमेव समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवते, इति ।

लोके रथचक्रं फलकत्रयेण निष्पाद्यते । तत्र पार्श्ववर्तिनी फलके प्रधीइत्युच्येते । प्रकर्षेण धीयते धार्यते मध्यफलकमाभ्यामिति प्रधी । मध्यफलकं तु नभ्यमित्युच्यते नाभिस्थानीयत्वात् । एवं च सत्यत्र चक्ररूपस्याभिप्लवषडहस्याभितो वर्तमानावाद्यन्तदिनयोरनुष्ठेयौ ज्योतिःशब्दाभिधेयौ यावग्निष्टोमौ तावुभौ प्रधी । ये च मध्यवर्तिना गौरायुर्गौरित्येतन्नामान उक्थ्यरूपाश्चत्वारः क्रतवस्ते सर्वे मिलित्वा मध्ये स्थितं नभ्यं तद्भवति । तदेतदभिप्लवषडहरूपं परियत्पुनः प्रवर्तमानं देवचक्रमित्युच्यते । यद्यप्येतेन देवचक्ररूपेण षडहेन यजमाना अनुष्ठानं निष्पादयेयुस्तर्हि ते यजमाना देवचक्रमेव समारोहन्ति । तच्चाऽऽरोहणमरिष्ट्यै हिंसाराहित्याय भवति । हिंसारहिताश्च ते स्वस्ति समश्नुवते क्षेमं प्राप्नुवन्ति ।

पुनरपि षडहं प्रशंसति—

षडहेन यन्ति षड्वा ऋतव
ऋतुष्वेव प्रति तिष्ठन्ति, इति।

तस्य षडहस्यानुलोमप्रतिलोमरूपत्र्यहात्मकत्वं विधत्ते—

उभयतोज्योतिषा यन्त्युभयत एव
सुवर्गे लोके प्रतितिष्ठन्तो यन्ति, इति।

ज्योतिर्गौरायुरित्येवमानुलोम्ये सत्यादौ ज्योतिः, आयुर्गौर्ज्योतिरित्येवं प्रातिलोम्ये सत्यन्ते ज्योतिः। एवमुभयतोज्योतिषा षडहेनानुष्ठाने सति स्वर्गप्रवेशकाले फलावसानकाले च प्रतितिष्ठन्तोऽवज्ञारहिताः सन्तः संचरन्ति।

तस्य च षडहस्य द्विरावृत्तिं विधत्ते—

द्वौ षडहौ भवतस्तानि द्वादशाहानि सं पद्यन्ते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ द्वादशौ तत्पुरुषमनु पर्यावर्तन्ते, इति।

सक्थिशब्देन श्रोणीद्वयमुच्यते। बाहुशब्देनांसद्वयम्। आत्मा मध्यदेहः शिरः प्रसिद्धम्। हस्तौ पादौ च मिलित्वा चत्वार्यङ्गानि। ततो द्वौ स्त द्वादशसंख्यापूरकौ। तथा सत्येवं द्वादशाहानि पुरुषमनुसृत्य पर्यावृत्ता भवन्ति।

तस्य च षडहस्य तृतीयामावृत्तिं विधत्ते—

त्रयः षडहा भवन्ति तान्यष्टादशाहानि
सं पद्यन्ते नवान्यानि नवान्यानि नव
वै पुरुषे प्राणास्तत्प्राणाननु पर्यावर्तन्ते, इति।

पूर्वाभ्यां द्विरावृत्ताभ्यां सह त्रित्वम्। अष्टादशानामह्नां द्वेधा विभागे नवसंख्यया नवच्छिद्रगतप्राणाननुसृत्य षडहास्त्रयः पर्यावृत्ता भवन्ति।

अत्राऽऽक्षेपसमाधानमुखेन सर्वमासानुष्ठानं विधत्ते—

चत्वारः षडहा भवन्ति तानि चतुर्विꣳशतिरहानि सं पद्यन्ते चतुर्विꣳशतिरर्धमासाः

संवत्सरस्तत्संवत्सरमनु पर्यावर्तन्ते, इति ।

संख्याद्वारेणार्धमासद्वारा संवत्सरमनुसृत्य चत्वारः षडहाः पर्यावृत्ता भवन्ति । अत्र मासपूरणाय पृष्ठ्यः षडहोऽध्याहर्तव्यः । अत एव च्छन्दोगा आमनन्ति- ' यदेष पृष्ठ्यः षडहो भवति वीर्य एवान्ततः प्रतितिष्ठन्ति ' इति ।

अथ पूर्वाभिस्तिसृभिरावृत्तिभिः सह चतुर्थीमावृत्तिं विधत्ते—

प्रतिष्ठितः संवत्सर इति खलु वा आहुर्वर्षी-
यान्प्रतिष्ठाया इत्येतावद्वै संवत्सरस्य ब्राह्मणं
यावन्मासो मासिमास्येव प्रतितिष्ठन्तो यन्ति, इति ॥

पूर्वोक्तन्यायेन मास एकः प्रतिष्ठितो न संवत्सरः, तस्योक्तप्रतिष्ठाहेतोर्मासाद्वर्षीयस्त्वादत्यन्ताधिकत्वादित्येव केचिच्चोद्यवादिन आहुः । अत्रैतदुत्तरं—मासो ब्राह्मणं पूर्वोक्तरीत्या मासस्य प्रतिपादकं ब्राह्मणवाक्यं यावदस्ति एतावदेव संवत्सरस्य प्रतिपादकं ब्राह्मणं, न त्वितोऽधिकं किंचिन्नूतनमस्ति । अनेनैव प्रकारेण प्रतिमासमनुतिष्ठन्तो यजमानास्तस्मिंस्तस्मिन्मासि प्रतितिष्ठन्तः क्रमेण संवत्सरं यन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्म-
लिर्वृद्ध्या पर्णो ब्रह्मणा प्लक्षो मेधेन न्यग्रोधश्च-
मसैरुदुम्बर ऊर्जा गायत्री छन्दोभिस्त्रिवृत्स्तोमैरवन्तीः
स्थावन्तीस्त्वाऽवन्तु प्रियं त्वा प्रियाणां वर्षिष्ठ-

माप्यांनां निधीनां त्वा निधिपतिꣳ हवामहे वसो मम (१) ॥

( मेषः षट्त्रिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( अथ सप्तमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

मेषः । त्वा पचतैः । अवतु । लोहितग्रीव इति लोहित—ग्रीवः । छागैः । शल्मलिः । वृद्ध्यां । पर्णः । ब्रह्मणा । प्लक्षः । मेधेन । न्यग्रोधः । चमसैः । उदुम्बरः । ऊर्जा । गायत्री । छन्दोभिरिति छन्दः—भिः । त्रिवृदिति त्रि—वृत् । स्तोमैः । अवन्तीः । स्थ । अवन्तीः । त्वा । अवन्तु । प्रियम् । त्वा । प्रियाणाम् । वर्षिष्ठम् । आप्यानाम् । निधीनामिति नि—धीनाम् । त्वा । निधिपतिमिति निधि—पतिम् । हवामहे । वसो इति । मम (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( अथ सप्तमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

एकादशे संवत्सरगतेषु सर्वमासेष्वहानि विहितानि । अथावशिष्टेष्वनुकेष्वश्वमेधाङ्गमन्त्रा उच्यन्ते ।

कल्पः—'मेषस्त्वा पचतैरवत्विति पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोति' इति।

पाठस्तु—

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्मलि-
र्वृद्ध्या पर्णो ब्रह्मणा प्लक्षो मेधेन न्यग्रोधश्चमसैरु-
दुम्बर ऊर्जा गायत्री छन्दोभिस्त्रिवृत्स्तोमैः, इति।

अविजातौ मुख्यः पुमान्यो मेषोऽस्ति सोऽयं पचतैर्हविष्पचनीयैः क्षुद्रैरविविशेषैः सह हेऽश्व त्वामवतु। एवमुत्तरेष्वपि मन्त्रेषु त्वामवत्वित्यनुषञ्जनीयम्। अजजातौ योऽयं मुख्यो बस्तो लोहितग्रीवः सोऽयमन्यैश्छागैः सह त्वामवतु। शल्मलिरत्युन्नतो वृक्षविशेषः। स च स्वकीयया वृद्ध्या सह त्वामवतु। पर्णः पलाशवृक्षः। स च स्वाभिमानिना ब्रह्मणा मन्त्रेण वा सह त्वामवतु। प्लक्षो यज्ञियेषु मुख्यो वृक्षः। स च मेधेन यज्ञेन सह त्वामवतु। न्यग्रोधश्चमसहेतुर्वृक्षः। स च स्वकार्यैश्चमसैः सह त्वामवतु। उदुम्बरः प्रसिद्धः। स चोर्जा स्वकीयफलेन त्वामवतु। गायत्री चान्यैस्त्रिष्टुबादिच्छन्दोभिः सह त्वामवतु। त्रिवृत्स्तोमश्चान्यैः पञ्चदशादिस्तोमैः सह त्वामवतु। एतैर्नवभिर्मन्त्रैरपाव्याख्या आहुतीर्जुहुयात्।

कल्पः—'ता दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानूरूनाघ्नानाः सिग्भिरभिधून्वत्यस्त्रिः प्रदक्षिणमश्वं धुवन्त्यः परियन्त्यवन्तीः स्थेति' इति। अत्र तच्छब्देन राजपत्न्यः परामृश्यन्ते, तासां प्रकृतत्वात्। मृतमश्वं प्रति पत्नीभिः क्रियमाण एष उपचारः।

पाठस्तु—

अवन्तीः स्थावन्तीस्त्वाऽवन्तु प्रियं त्वा
प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा
निधिपतिꣳ हवामहे वसो मम, इति॥

ताः पत्न्यः परस्परं संबोध्य वदन्ति—हे राजपत्न्यो यूयमवन्तीः स्थाश्वस्य पालयित्र्यः स्थ। हेऽश्व त्वामवन्तीः पालयित्र्यः पत्न्योऽवन्तु रक्षन्तु। मम वसो वासयितस्तादृश हेऽश्व प्रियाणां मध्येऽतिप्रियं त्वां हवामह आह्वयामः।

---

१ ख. च स्वकीयैश्च॑। २ ख. ॰व्यान्निस्र॰।

आप्यानां कामप्राप्तिहेतूनां मध्ये वर्षिष्ठमतिशयेन वृद्धं त्वा हवामहे। तथा निधीनां शङ्खपद्मादीनां मध्ये निधिपतिमत्यन्तमधिकस्य निधेः पालयितारं त्वा हवामहे ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाकः )

---

कूप्याभ्यः स्वाहा कूल्याभ्यः स्वाहा विकर्याभ्यः स्वाहाऽवट्याभ्यः स्वाहा खन्याभ्यः स्वाहा ह्रद्याभ्यः स्वाहा सूद्याभ्यः स्वाहा सरस्याभ्यः स्वाहा वैशन्तीभ्यः स्वाहा पल्वल्याभ्यः स्वाहा वर्ष्याभ्यः स्वाहाऽवर्ष्याभ्यः स्वाहा ह्रादुनीभ्यः स्वाहा पृष्वाभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा स्थावराभ्यः स्वाहा नादेयीभ्यः स्वाहा सैन्धवीभ्यः स्वाहा समुद्रियाभ्यः स्वाहा सर्वाभ्यः स्वाहा ( १ ) ॥

( कूप्याभ्यश्चत्वारिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाकः । )

---

कूप्याभ्यः । स्वाहा । कूल्याभ्यः । स्वाहा । विकर्याभ्य इति वि—कर्याभ्यः । स्वाहा । अवट्याभ्यः । स्वाहा ।

खन्याभ्यः। स्वाहा। ह्रुयाभ्यः। स्वाहा। सूद्याभ्यः। स्वाहा। सरस्याभ्यः। स्वाहा। वैशन्तीभ्यः। स्वाहा। पल्वल्याभ्यः। स्वाहा। वर्ष्याभ्यः। स्वाहा। अवर्ष्याभ्यः। स्वाहा। ह्रादुनीभ्य इति ह्रादुनि–भ्यः। स्वाहा। पृष्वाभ्यः। स्वाहा। स्यन्दमानाभ्यः। स्वाहा। स्थावराभ्यः। स्वाहा। नादेयीभ्यः। स्वाहा। सैन्धवीभ्यः। स्वाहा। समुद्रियाभ्यः। स्वाहा। सर्वाभ्यः। स्वाहा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ सप्तमकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः।)

---

अपाव्यहोममन्त्रा द्वादशेऽभिहिताः। अथानुवाकद्वयेनापां होमा उच्यन्ते। तथा च ब्राह्मणम्–'कूप्याभ्यः स्वाहाऽद्भ्यः स्वाहेत्यपा होमाञ्जुहोति' इति।

तत्र प्रथमानुवाकमन्त्रानाह–

कूप्याभ्यः स्वाहा कूल्याभ्यः स्वाहा विकर्याभ्यः स्वाहाऽवट्याभ्यः स्वाहा खन्याभ्यः स्वाहा ह्रुयाभ्यः स्वाहा सूद्याभ्यः स्वाहा सरस्याभ्यः स्वाहा वैशन्तीभ्यः स्वाहा पल्वल्याभ्यः स्वाहा वर्ष्याभ्यः स्वाहाऽवर्ष्याभ्यः स्वाहा ह्रादुनीभ्यः स्वाहा

पृष्वाभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा स्थाव-
राभ्यः स्वाहा नादेयीभ्यः स्वाहा सैन्धवीभ्यः स्वाहा
समुद्रियाभ्यः स्वाहा सर्वाभ्यः स्वाहा, इति ॥

कूपे भवाः कूप्या आपः। नदीपूरणेन कूले तीरे भवाः कूल्याः। विकरे भूविवरे भवा विकर्याः। अवटे गर्ते भवा अवट्याः। खननेन निष्पन्नाः खन्याः। ह्रदे भवा ह्रद्याः। सूदे पङ्के भवाः सूद्याः। सरसि भवाः सरस्याः। वेशन्ते भवा वैशन्त्यः। यत्र कूल्यादौ पुनः पुनरापो विशन्ति तत्रत्या इत्यर्थः। पल्वलेऽत्यल्पजलाशये भवाः पल्वल्याः। वर्षे भवा वर्ष्याः। वर्षणैरपेक्ष्येण भूमाववस्थिता अवर्ष्याः। प्रवाहध्वनिसहिता ह्रादुन्यः। अवश्यायजन्याः पृष्वाः। प्रवाहरूपाः स्यन्दमानाः। एकत्रावस्थिताः स्थावराः। नद्यां भवा नादेय्यः। सिन्धौ पुंनदे भवाः सैन्धव्यः। समुद्रे भवाः समुद्रियाः। अनुक्त-संग्रहार्थः सर्वशब्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः )

---

अद्भ्यः स्वाहा वहन्तीभ्यः स्वाहा परिवहन्तीभ्यः
स्वाहा समन्तं वहन्तीभ्यः स्वाहा शीघ्रं वहन्तीभ्यः
स्वाहा शीभं वहन्तीभ्यः स्वाहोग्रं वहन्तीभ्यः
स्वाहा भीमं वहन्तीभ्यः स्वाहाऽम्भोभ्यः स्वाहा
नभोभ्यः स्वाहा महोभ्यः स्वाहा सर्वस्मै स्वाहा (१) ॥

( अद्भ्य एकान्न त्रिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः )

अद्भ्य इत्यत्–भ्यः। स्वाहा। वहन्तीभ्यः। स्वाहा। परिवहन्तीभ्य इति परि–वहन्तीभ्यः। स्वाहा। समन्तमिति सम्–अन्तम्। वहन्तीभ्यः। स्वाहा। शीघ्रम्। वहन्तीभ्यः। स्वाहा। शीभम्। वहन्तीभ्यः। स्वाहा। उग्रम्। वहन्तीभ्यः। स्वाहा। भीमम्। वहन्तीभ्यः। स्वाहा। अम्भोभ्य इत्यम्भः–भ्यः। स्वाहा। नभोभ्य इति नभः–भ्यः। स्वाहा। महोभ्य इति महः–भ्यः। स्वाहा। सर्वस्मै। स्वाहा ( १ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमकाण्डे चतुर्थपाठके चतुर्दशोऽनुवाकः। )

---

तस्मिन्नेवापां होमे द्वितीयानुवाकगतान्मन्त्रानाह—

अद्भ्यः स्वाहा वहन्तीभ्यः स्वाहा परिवहन्तीभ्यः स्वाहा समन्तं वहन्तीभ्यः स्वाहा शीघ्रं वहन्तीभ्यः स्वाहा शीभं वहन्तीभ्यः स्वाहोग्रं वहन्तीभ्यः स्वाहा भीमं वहन्तीभ्यः स्वाहाऽम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहा सर्वस्मै स्वाहा, इति॥

उदकजातिमात्रयुक्ता आपः। प्रवाहरूपा वहन्त्यः। परिमण्डलरूपा आवर्तगताः परिवहन्त्यः। भूमेः समतलत्वेन सर्वतो गच्छन्त्यः समन्तं वहन्त्यः। निम्नाधिक्येन शीघ्रं वहन्त्यः। ईषन्निम्नत्वेन शीभं शोभनं यथा भवति तथा वहन्त्यः। पर्वताग्रादधं उग्रं वहन्त्यः। दृश्यमानमकरादिजीवोपेता भीमं

वहन्त्यः । अम्भोनभोमहःशब्दैर्लोकत्रयगता आप उच्यन्ते । 'अयं वै लोकोऽम्भा॰सि' । 'अन्तरिक्षं वै नभा॰सि' । 'असौ वै लोको महा॰सि' इति ब्राह्मणेनोक्तत्वात् । पूर्वानुवाकोक्तैर्विंशतिमन्त्रैरेतदनुवाकोक्तैर्दशमन्त्रैश्च रात्रावम्भहोमाः कर्तव्याः । तेषामेव मन्त्रविशेषप्रयुक्तोऽपां होम इति व्यवहारः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके पञ्चदशोऽनुवाकः )

---

यो अर्वन्तं जिघां॰सति तमभ्यमीति वरुणः । परो मर्तः परः श्वा । अहं च त्वं च वृत्रहन्त्सं बभूव सनिभ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मं॰सतै भद्रा इन्द्रस्य रातयः । अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमान॰ रजा॰सि । स्वेना हि वृत्र॰ शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते ( १ ) ॥

( विविदद्द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥ )

---

यः । अर्वन्तम् । जिघां॰सति । तम् । अभीति । अमीति । वरुणः । परः । मर्तः । परः । श्वा । अहम् ।

च । त्वम् । च । वृत्रहन्निति वृत्र–हन् । समिति । बभूव ।
सनिभ्य इति सनि–भ्यः । आ । अरातीवा । चित् ।
अद्रिव इत्यद्रि–वः । अन्विति । नौ । शूर । मंश्सते ।
भद्राः । इन्द्रस्य । रातयः । अभीति । कत्वा । इन्द्र ।
भूः । अध । ज्मन् । न । ते । विव्यक् । महिमानम् ।
रजांश्सि । स्वेन । हि । वृत्रम् । शवसा । जघन्थ । न ।
शत्रुः । अन्तम् । विविदत् । युधा । ते ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके पञ्चदशोऽनुवाकः । )

---

पूर्वयोरनुवाकयोरपां होममन्त्रा उक्ताः । अथास्मिन्नश्वप्रहारोऽभिधीयते ।
कल्पः–'यो अर्वन्तमिति सैध्रकेण मुसलेन पौंश्चलेयः शुनः प्रहरति' इति ।
पाठस्तु—

यो अर्वन्तं जिघांश्सति तमभ्यमीति वरुणः ।, इति ।

योऽयं श्वा जले स्नाप्यमानमर्वन्तं स्वयमपि जले प्रविश्य हन्तुमिच्छति तं
श्वानं जलाधिपतिर्वरुणोऽभ्यमीति सर्वतो रोगग्रस्तं करोति ।

परो मर्तः परः श्वा ।, इति ।

कल्पः–' तमश्वस्याधस्पद मुपास्यति परो मर्तः परश्वेति ' इति ।
परः श्वा प्रबलोऽयं श्वा परो मर्तोऽस्तु परस्ताद्गत्वा मृतो भवतु ।
कल्पः–'अहं च त्वं च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति, इति ।
पाठस्तु—

अहं च त्वं च वृत्रहन्त्सं बभूव सनिभ्य आ ।

अरातीवा चिदद्रिवोऽनु नौ शूर

मꣳसते भद्रा इन्द्रस्य रातयः ।, इति ।

हे वृत्रहन्वैरिहन्तृत्वेनेन्द्रसमान यजमान त्वं चाहं ब्रह्मा च सनिभ्यो बहुभ्यो लाभेभ्यो बहुविधद्रव्यलाभसिद्धय आ संबभूव सर्वतः संयुक्तौ भवाव । हेऽद्रिवः पर्वतसदृशो वज्रोऽस्यास्तीत्याद्रिमानिन्द्रः, स एवाद्रिवांस्तद्रूप हे यजमान शूर शौर्योपेतेन्द्रस्य देवाधिपतेर्भद्रा रातयः कल्याणानि फलदानानि नावावामुभावनुमंसतै, अनुमन्यन्तामङ्गी कुर्वन्तु । कीदृशौ नौ, अरातीवा रातिर्हविर्दानं तद्युक्तौ रातिमन्तौ तद्रहितावरातिमन्तौ, तावेवारातीवा, चिदपि यद्यप्यावां हविर्दानरहितौ तथाऽपीन्द्रदत्तानि फलान्यावां प्रत्यागच्छन्त्वित्यर्थः

कल्पः—‘अभि क्रत्वेन्द्र भूरध ज्मन्नित्यध्वर्युर्यजमानं वाचयति’ इति ।

पाठस्तु—

अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्-

महिमानꣳ रजाꣳसि । स्वेना हि वृत्रꣳ

शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते ।, इति ॥

हे इन्द्र परमैश्वर्ययुक्त यजमान क्रत्वाऽनेन क्रतुनाऽभिभूः शत्रुमभिभूतवानसि । अथानन्तरं ज्मन्नस्यां भूमौ, नकारान्तस्य ज्मन्शब्दस्य भूमिनामसु पठितत्वात् । तस्यां भूमौ ते त्वदीयं महिमानं रजांसि जगद्रञ्जकानि चरितानि च न विव्यक्कश्चिदपि विवेक्तुं न समर्थः । त्वं तु स्वेन शवसा स्वकीयेन बलेन वृत्रं जघन्थ शत्रुं हतवानसि । स तु शत्रुर्युधा युद्धेन तेऽन्तं त्वदीयं नाशं विविदन्नैव लब्धवान् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके षोडशोऽनुवाकः । )

---

नमो राज्ञे नमो वरुणाय नमोऽश्वाय नमः

प्रजापतये नमोऽधिपतयेऽधिपतिरस्यधिपतिं मा

कुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेह्यु-
पाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय
स्वाहा ( १ ) ॥

( नम एकान्नत्रिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके षोडशोऽनुवाकः । )

---

नमः। राज्ञे। नमः। वरुणाय। नमः। अश्वाय।
नमः। प्रजापतय इति प्रजा-पतये। नमः। अधिपतय
इत्यधि-पतये। अधिपतिरित्यधि-पतिः। असि। अधिप-
तिमित्यधि-पतिम्। मा। कुरु। अधिपतिरित्यधि-
पतिः। अहम्। प्रजानामिति प्र-जानाम्। भूयासम्।
माम्। धेहि। मयि। धेहि। उपाकृतायेत्युप-आकृताय।
स्वाहा। आलब्धायेत्या-लब्धाय। स्वाहा। हुताय।
स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
चतुर्थप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके षोडशोऽनुवाकः । )

---

पञ्चदशे शुनः प्रहारोऽभिहितः। षोडशे वरुणाख्यो होमोऽभिधीयते।
तथा च ब्राह्मणम्—'नमो राज्ञे नमो वरुणायेति यव्यानि जुहोति' इति।

पाठस्तु—

नमो राज्ञे नमो वरुणाय नमोऽश्वाय नमः प्रजापतये नमोऽधिपतयेऽधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेह्युपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा, इति ॥

राजा सोमः । इतरे प्रसिद्धाः । अधिपतिशब्देन धर्मदेवतोच्यते । 'धर्मो वा अधिपतिः' इति ब्राह्मणेनोक्तत्वात् । हे धर्मदेव त्वमधिपतिरसि मामप्यधिपतिं कुरु । त्वत्प्रसादादहं प्रजानामधिपतिर्भूयासम् । मां धेहि प्रजानामाधिपत्ये स्थापय । मयि च ताः प्रजाः पालनीयत्वेन स्थापय । तैरेतैः षड्भिर्यठ्यनामकै रत्नहोमाञ्जुहुयात् । उपाकृतायेत्यादिमन्त्राणां त्रयाणां कालविशेषे होमो ब्राह्मणे श्रूयते—'उपाकृताय स्वाहेत्युपाकृते जुहोति । आलब्धाय स्वाहेति नियुक्ते जुहोति । हुताय स्वाहेति हुते जुहोति' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठके सप्तदशोऽनुवाकः ।)

---

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड । याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद । या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ । या देवेषु तनुवमैरयन्त यासा सोमो विश्वा रूपाणि वेद । ता अस्मभ्यं पयसा पिन्वमानाः प्रजाव-

तीरिन्द्र (१) गोष्ठे रिरीहि । प्रजापतिर्म॰
ह्यमेता ररांणो विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाऽकस्तासां वयं प्रजया
सꣳ संदेम । इह धृतिः स्वाहेह विधृतिः स्वाहेह
रन्तिः स्वाहेह रमंतिः स्वाहा महीमू षु
सुत्रामाणम् (२) ॥

(इन्द्राष्टात्रिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
चतुर्थप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठके सप्तदशोऽनुवाकः ।)

---

मयोभूरिति मयः–भूः । वातः । अभीति । वातु ।
उस्राः । उर्जस्वतीः । ओषधीः । एति । रिशन्ताम् ।
पीवस्वतीः । जीवधन्या इति जीव–धन्याः । पिबन्तु ।
अवसाय । पद्वत इति पत्–वते । रुद्र । मृड । याः ।
सरूपा इति स–रूपाः । विरूपा इति वि–रूपाः । एक-
रूपा इत्येक–रूपाः । यासाम् । अग्निः । इष्ट्या । नामानि ।
वेद । याः । अङ्गिरसः । तपसा । इह । चक्रुः । ताभ्यः ।
पर्जन्य । महि । शर्म । यच्छ । याः । देवेषु । तनुवम् ।
ऐरयन्त । यासाम् । सोमः । विश्वा । रूपाणि । वेद । ताः ।

अस्मभ्यमित्यस्म—भ्यम् । पर्यसा । पिन्वमानाः । प्रजावं-तीरिर्ति प्रजा—वतीः । इन्द्र ( १ ) । गोष्ठ इर्ति गो—स्थे । रिरीहि । प्रजापंतिरिर्ति प्रजा—पतिः । मह्यम् । एताः । रराणः । विश्वैः । देवैः । पितृभिरिर्ति पितृ—भिः । संवि-दान इर्ति सं—विदानः । शिवाः । सतीः । उपेर्ति । नः । गोष्ठमिर्ति गो—स्थम् । एर्ति । अकः । तासाम् । वयम् । प्रजयेर्ति प्र—जया । समिर्ति । सदेम । इह । धृर्तिः । स्वाहा । इह । विधृतिरिति वि—धृतिः । स्वाहा । इह । रन्तिः । स्वाहा । इह । रमतिः । स्वाहा । महीम् । उ । स्विर्ति । सुत्रामाणमिर्ति सु—त्रामाणम् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके सप्तदशोऽनुवाकः । )

---

षोडशे यव्याख्यो होमोऽभिहितः। सप्तदशे गव्याख्यैर्मन्त्रैर्होमोऽभिधीयते तथाच ब्राह्मणम्—' मयोभूर्वातो अभि वातूस्रा इति गव्यानि जुहोति इति ।

तत्र प्रथमामाह—

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वती-
रोषधीरा रिशन्ताम् । पीवस्वतीर्जीवधन्याः
पिबन्त्ववसाय पद्वते रुद्र मृड ।, इति ।

मयोभूः सुखस्य भावयिता वातो वायुरुस्रा अभिसर्वा गा अभिलक्ष्य व प्रसरतु, अतिवातेनोपद्रवं मा करोतु, किंतु मन्दवातेन गवां सुखं य

भवति तथा वातु। एताश्च गाव ऊर्जस्वती रसयुक्ता ओषधीरारिशन्तामा स्वादयन्तु। जीवरूपं धनं जीवधनं प्राणिजातमित्यर्थः। तदर्हन्तीति जीवधन्याः पातुं योग्या आपस्ताश्च पीवस्वत्यः पानेन पुष्टिरूपस्य स्थौल्यस्य प्रापणात्ता-दृशीरपो गावः पिबन्तु। हे रुद्रावसायावितुं रक्षितुं योग्याय पद्वते पादसंचारिणे पशवे मृड सुखं कुरु।

अथ द्वितीयामाह—

> याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या
> नामानि वेद। या अङ्गिरसस्तपसेह चक्रु-
> स्ताभ्यः पर्जन्य महि शर्म यच्छ।, इति।

या गावः सरूपाः समानप्रमाणदेहा विरूपा विविधवर्णा एकरूपा एकजातियुक्ताः, अग्निराहवनीयादिरूप इष्ट्या यागेन निमित्तभूतेन यासां गवां नामानि सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मेत्यादीनि, इडे रन्तेऽदित इत्यादीनि वा श्रुत्युक्तानि वेद जानाति, अङ्गिरसो महर्षयस्तपसा स्वकीयेन तपःसामर्थ्येन या गा इह भूमौ चक्रुः स्थापितवन्तः, हे पर्जन्य जलदेवताभ्यो गोभ्यो महि शर्म यच्छ महत्सुखं देहि।

अथ तृतीयामाह—

> या देवेषु तनुवमैरयन्त यासाꣳ सोमो विश्वा
> रूपाणि वेद। ता अस्मभ्यं पयसा पिन्व-
> मानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि।, इति।

या गावो देवेषु निमित्तभूतेषु तनुवं शरीरमैरयन्त भूमौ प्रवर्तितवत्यः, सोमो देवो यासां गवां विश्वा रूपाणि शुक्लकृष्णादीनि बहुक्षीराल्पक्षीरादीनि च सर्वाणि रूपाणि वेद जानाति, हे इन्द्र पयसा पिन्वमानाः स्वकीयेन क्षीरेण प्राणिजातं प्रीणयन्तीः प्रजावतीर्बहुवत्सोपेतास्ता गा अस्मभ्यमस्मदर्थं गोष्ठे रिरीहि गोशालायां प्रापय।

अथ चतुर्थीमाह—

> प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः
> संविदानः। शिवाः सतीरुप नो गोष्ठमा८-

कस्तासां वयं प्रजया सꣳ सदेम ।, इति ।

यः प्रजापतिः सोऽयं मह्यं यजमानायैता उक्तलक्षणा गा रराणः प्रयच्छन्विश्वैः सर्वैर्देवैः पितृभिश्च संविदान ऐकमत्यं गतस्ताः शिवाः सतीर्बहुक्षीरादिप्रदानेन कल्याणरूपाः सतीरेता गा नो गोष्ठमस्मदीयगोशालामुपाकरुपाकरोतु प्रापयत्वित्यर्थः । वयं तासां गवां प्रजया वत्सरूपया संसदेम संगतास्तिष्ठामः (ष्ठेम) ।

अथ चत्वारि यजूंष्याह—

इह धृतिः स्वाहेह विधृतिः स्वाहेह
रन्तिः स्वाहेह रमतिः स्वाहा, इति ।

एतानि च विभूर्मात्रेत्यनुवाकेऽश्वस्य पादचतुष्टयस्थानविषयत्वेन व्याख्यातानि ।

अथ द्वयोर्ऋचोः प्रतीके दर्शयति—

महीमू षु सुत्रामाणम्, इति ॥

एतच्चोभयं वैश्वानरो न ऊत्येत्यत्र व्याख्यातम् । एतैर्दशभिर्व्याख्यैर्मन्त्रैरन्नहोमाञ्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः )

---

किꣳ स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः । किꣳ स्विदासीत्पिशङ्गिला किꣳ स्विदासीत्पिलिप्पिला । द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत्पिशङ्गिलाऽविरासीत्पिलिप्पिला । कः स्विदेकाकी चरति क उ स्विज्जायते

पुनः । किंस्विद्धिमस्य भेषजं किंस्विदावपनं महत् । सूर्य एकाकी चरति (१) चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् । पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम । वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम (२) ॥

(सूर्य एकाकी चरति षट्चत्वारिंशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ।)

---

किम् । स्वित् । आसीत् । पूर्वचित्तिरिति पूर्व-चित्तिः । किम् । स्वित् । आसीत् । बृहत् । वयः । किम् । स्वित् । आसीत् । पिशङ्गिला । किम् । स्वित् । आसीत् । पिलिप्पिला । द्यौः । आसीत् । पूर्वचित्तिरिति पूर्व-चित्तिः । अश्वः । आसीत् । बृहत् । वयः । रात्रिः । आसीत् ।

पिशङ्गिला । अविः । आसीत् । पिलिप्पिला । कः । स्वित् । एकाकी । चरति । कः । उ । स्वित् । जायते । पुनरिति । किम् । स्वित् । हिमस्य । भेषजम् । किम् । स्वित् । आवपनमित्या—वपनम् । महत् । सूर्यः । एकाकी । चरति ( १ ) । चन्द्रमाः । जायते । पुनरिति । अग्निः । हिमस्य । भेषजम् । भूमिः । आवपनमित्या—वपनम् । महत् । पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः । पृच्छामि । त्वा । भुवनस्य । नाभिम् । पृच्छामि । त्वा । वृष्णः । अश्वस्य । रेतः । पृच्छामि । वाचः । परमम् । व्योमेति वि—ओम । वेदिम् । आहुः । परम् । अन्तम् । पृथिव्याः । यज्ञम् । आहुः । भुवनस्य । नाभिम् । सोमम् । आहुः । वृष्णः । अश्वस्य । रेतः । ब्रह्म । एव । वाचः । परमम् । व्योमेति वि—ओम ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः । )

---

सप्तदशे गव्याख्यहोम उक्तः । अष्टादशे ब्रह्मोद्यमुच्यते ।

कल्पः–'अभितोऽग्निं ब्रह्मोद्याय पर्युपविशेते दक्षिणो ब्रह्मोत्तरो होता किꣳ स्विदासीत्पूर्वचित्तिरित्येतस्यानुवाकस्य पृष्टानि होतुः प्रतिज्ञाता ब्रह्मणः' इति ।

एकविंशतियूपेषु मध्यवर्ती यूपोऽग्निष्ठः । ब्राह्मणयोरुक्तिप्रत्युक्तिरूपेण संवादो ब्रह्मोद्यम् । पृष्टानि प्रश्नवाक्यानि । प्रतिज्ञातानि प्रत्युत्तरवाक्यानि(णि) ।
तस्मिन्ब्रह्मोद्ये पृष्टामृचमाह—

किꣳ स्विदासीत्पूर्वचित्तिः किꣳ स्विदासी-
द्बृहद्वयः । किꣳ स्विदासीत्पिशङ्गिला
किꣳ स्विदासीत्पिलिप्पिला ।, इति ।

हे ब्रह्मन्पूर्वाचित्तिः किं स्विदासीत् । चित्तिर्ज्ञानम् । पूर्व(र्वं) चित्तिर्जन्मप्रभृति ज्ञानमुत्पन्नानां यस्यां विद्यते सा पूर्वचित्तिः । तादृशं(श)ज्ञानं किं नामाऽऽसीदित्यर्थः । सोऽयमेको होतुः प्रश्नः । कान्त्यर्थाद्वीधातोर्वय(यः)शब्दनिष्पत्तिः । अत्यन्तं कमनीयं वस्तु किं नामाऽऽसीदिति द्वितीयः प्रश्नः । पिशङ्गिला मिश्रवर्णा किं नामाऽऽसीदिति तृतीयः प्रश्नः । पिलिप्पिलाऽत्यन्तं प्रकाशमाना श्वेता किं नामाऽऽसीदिति चतुर्थः प्रश्नः । सामान्याभिप्रायेण किमिति नपुंसकनिर्देशः ।

अथ द्वितीयामाह—

द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रि-
रासीत्पिशङ्गिलाऽविरासीत्पिलिप्पिला ।, इति ।

तान्येतानि ब्रह्मण उत्तराणि । येयं द्यौः सैव पूर्वचित्तिः । पूर्वप्रवृत्तं हि ज्ञानं तत्रास्ति, तत्रत्यानां देवानां जन्मप्रभृतिज्ञानोपेतत्वात् । तदिदं प्रथममुत्तरम् । अश्वोऽत्यन्तं कमनीयं वस्तु । अत एव हि राजानः सर्वप्रयत्नेनाप्यश्वान्संपादयन्ति । तदिदं द्वितीयमुत्तरम् । रात्रिर्मिश्रवर्णाऽन्धकारस्य नक्षत्रचन्द्रप्रकाशस्य च विद्यमानत्वात् । तदिदं तृतीयमुत्तरम् । अवति सर्वं प्राणिजातमिति श्रीरविः । सैवातिप्रकाशा । अत एव ब्राह्मणे 'श्रीर्वै पिलिप्पिला' इत्याख्यातम् ।

अथ तृतीयामाह—

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ
स्विद्धिमस्य भेषजं किꣳ स्विदावपनं महत् ।, इति ।

त एते होतुः प्रश्नाः । को नामात्र लोके सहायान्तरनिरपेक्ष आलस्यरहितः सर्वदा चरति । को नाम पुनः पुनः शुक्लपक्षे जायते । किं नाम वस्तु

शैत्यकृतस्योपद्रवस्यौषधम् । किं नाम स्थानं बहूनां बीजानामावापायोपयुक्तं विशालम् ।

अथ चतुर्थीमाह—

सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्नि-
र्हिमस्य भेषजं भूमिरावपनं महत् ।, इति ।

तान्येतानि ब्रह्मण उत्तराणि स्पष्टार्थानि ।

अथ पञ्चमीमाह—

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा
भुवनस्य नाभिम् । पृच्छामि त्वा वृष्णो अश्वस्य
रेतः पृच्छामि वाचः परमं व्योम ।, इति ।

होतुः प्रश्नाः । हे ब्रह्मंस्त्वां पृथिव्याः परमन्तं पृच्छामि । यतः परमुत्कृष्टप्रदेशोऽन्यो नास्ति सोऽयं परोऽन्तः । तथा चक्रस्य नाभिरिव सर्वस्य भुवनस्य नाभिस्थानीयं वस्तु पृच्छामि । तथा वृष्णः पुंस्त्वाधिकस्याश्वस्य रेतस्थानीयं सारं वस्तु पृच्छामि । तथैवाक्षरात्मिकाया वाचः परमं व्योम विशेषेण रक्षकं स्वरूपं वस्तु पृच्छामि ।

अथ षष्ठीमाह—

वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य
नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो
ब्रह्मैव वाचः परमं व्योम । , इति ॥

तान्येतानि ब्रह्मण उत्तराणि । येयं यागे वेदिस्तामेव पृथिव्याः परमन्तं याज्ञिका आहुः । नहि वेद्या अधिकः कश्चिद्भूप्रदेशोऽस्ति । अत एव हि सोमप्रकरणे श्रुतम्–'एतावती वै पृथिवी । यावती वेदिः ।' इति । तथा यज्ञं सर्वस्य लोकस्य नाभिस्थानीयमाहुः । यथा नाभिमाश्रित्य सर्वं चक्रं परिवर्तते तथा यज्ञाधीनः सर्वेषां प्राणिनामिहलोकपरलोकसंचारः । तथाऽश्वस्य रेतोवदत्यन्तं सारभूतः सोमः । अश्वमेधेन हि त्रिरात्रेण यागेन ब्रह्महत्यादिकं सर्वं

निवर्तते । यदेतन्मन्त्रसंघातरूपं ब्रह्म तदेतदक्षरात्मिकाया वाचः परमं व्योम । तेन हि मन्त्रजातेन प्राणिनो विशेषेण रक्ष्यन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठकेऽ-ष्टादशोऽनुवाकः ॥ १८ ॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ।)

---

अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वकः । सुभगे काम्पीलवासिनि सुवर्गे लोके सं प्रोर्ण्वाथाम् । आऽहमजानि गर्भधमा त्वमजासि गर्भधम् । तौ सह चतुरः पदः सं प्र सारयावहै । वृषा वा॒ रेतोधा रेतो दधातूत्सक्थ्यो-र्गृदं धेह्यञ्जिमुदञ्जिमन्वज । यः स्त्रीणां जीवभोजनो य आसाम् (१) बिलधावनः । प्रियः स्त्रीणामपीच्यः । य आसां कृष्णे लक्ष्मणि सर्दिगृदिं परावधीत् । अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः । ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिरा-विव । अथास्या मध्यमेधता॒ शीते वाते पुनन्निव । अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः । यद्धरिणी यवमत्ति न (२) पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय

धनायति । अम्बे अम्बाल्यम्बिके न मा यभाति कश्चन । ससस्त्यश्वकः । इयं यका शकुन्तिकाऽऽहलमिति सर्पति । आहतं गभे पसो नि जल्गुलीति धाणिका । अम्बे अम्बाल्यम्बिके न मा यभाति कश्चन । ससस्त्यश्वकः । माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ( ३ ) । प्र सुलामीति ते पिता गभे मुष्टिमतंसयत । दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ( ४ ) ॥

( आसामात्ति न रोहतो जिन्वथ चत्वारि च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठक एकोनविंशोऽनुवाकः । )

---

अम्बे । अम्बालि । अम्बिके । न । मा । नयति । कः । चन । ससस्ति । अश्वकः । सुभगे इति सु—भगे ।

काम्पीलवासिनीति काम्पील–वासिनि । सुवर्ग इति सुवः–गे । लोके । सम् । प्रेति । ऊर्णवाथाम् । एति । अहम् । अजानि । गर्भधमिति गर्भ–धम् । एति । त्वम् । अजासि । गर्भधमिति गर्भ–धम् । तौ । सह । चतुरः । पदः । सम् । प्रेति । सारयावहै । वृषा । वाम् । रेतोधा इति रेतः–धाः । रेतः । दधातु । उदिति । सक्थ्योः । गृदम् । धेहि । अञ्जिम् । उदञ्जिमित्युत्–अञ्जिम् । अन्विति । अज । यः । स्त्रीणाम् । जीवभोजन इति जीव–भोजनः । यः । आसाम् ( १ ) । बिलधावन इति बिल–धावनः । प्रियः । स्त्रीणाम् । अपीच्यः । यः । आसाम् । कृष्णे । लक्ष्माणि । सर्दिगृदिम् । परावधीदिति परा–अवधीत् । अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन । ससस्ति । अश्वकः । ऊर्ध्वाम् । एनाम् । उदिति । श्रयतात् । वेणुभारमिति वेणु–भारम् । गिरौ । इव । अथ । अस्याः । मध्यम् । एधताम् । शीते । वाते । पुनन् । इव । अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन । ससस्ति । अश्वकः । यत् । हरिणी । यवम् । अत्ति । न ( २ ) । पुष्टम् । पशु । मन्यते । शूद्रा । यत् । अर्यजारेत्यर्य–जारा । न । पोषाय । धनायति । अम्बे ।

अम्बालि । अम्बिके । न । मा । यभति । कः । चन । ससस्ति । अश्वकः । इयम् । यका । शकुन्तिका । आहलमित्या—हलम् । इति । सर्पति । आहतमित्या—हतम् । गभे । पसः । नीति । जल्गुलीति । धाणिका । अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन । ससस्ति । अश्वकः । माता । च । ते । पिता । च । ते । अग्रम् । वृक्षस्य । रोहतः ( ३ ) । प्रेति । सुलामि । इति । ते । पिता । गभे । मुष्टिम् । अतंसयत् । दधिक्राव्ण इति दधि—क्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः । सुरभि । नः । मुखा । करत् । प्रेति । नः । आयूंषि । तारिषत् । आपः । हि । स्थ । मयोभुव इति मयः—भुवः । ताः । नः । ऊर्जे । दधातन । महे । रणाय । चक्षसे । यः । वः । शिवतम इति शिव—तमः । रसः । तस्य । भाजयत । इह । नः । उशतीः । इव । मातरः । तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ । आपः । जनयथ । च । नः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ सप्तमकाण्डे चतुर्थप्रपाठक एकोनविंशोऽनुवाकः । )

---

अष्टादशे ब्रह्मोद्यमुक्तम् । अथैकोनविंशे राजपत्नीनां विलापरूपो मृताश्वोपचारोऽभिधीयते ।

कल्पः—' अम्बे अम्बाल्यम्बिक इति प्रतिप्रस्थाता पत्नीरुदानयति ' इति । तत्र पाठस्तु—

अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वकः ।, इति ।

उत्तमा मध्यमाऽधमा चेत्येवं त्रिविधा राजपत्न्यः । तास्तिस्रस्त्रिभिर्मातृवाचकैः पदैः प्रतिप्रस्थात्रा संबोध्यन्ते । एवं संबोध्याऽऽहूतानां तिसृणां मध्ये प्रधानभूता महिष्युत्तरं वक्ति—कश्चिदपि पुमान्मां भोगार्थं रहसि नैव नयति । एषोऽश्वकः ससस्ति निद्रां करोति । भोगाभावदुःखेनैवैनं गर्हते । गर्हार्थोऽयं कप्रत्ययः । कुत्सितोऽश्व इत्यर्थः ।

कल्पः—' सुभगे काम्पीलवासिनीति क्षौमेण वाससाऽध्वर्युर्महिषीमश्वं च प्रच्छाद्य ' इति ।

पाठस्तु—

सुभगे काम्पीलवासिनि सुवर्गे लोके सं प्रोर्ण्वाथाम् । आऽहमजानि गर्भधमा त्वमजासि गर्भधम् ।, इति ।

हे सुभगे शोभनभगे महिषि हे काम्पीलवासिनि, काम्पीलशब्देन श्लाघ्यो वस्त्रविशेष उच्यते । तं वस्त आच्छादयतीति काम्पीलवासिनी तादृशे, त्वमयमश्वश्चोभौ सुवर्गे लोके स्वर्गसदृशेऽस्मिन्स्थाने संप्रोर्ण्वाथामिदं क्षौमं वस्त्रं सम्यगाच्छादयतम् । आच्छाद्यमाना च तेनाश्वेन सहैवं ब्रूहि—हेऽश्व गर्भधं गर्भधारिणं त्वामहं महिष्याजान्याभिमुख्येन प्राप्नवानि । त्वमपि गर्भधं गर्भधात्रीं मामाजास्याभिमुख्येन प्राप्नुहि ।

तौ सह चतुरः पदः सं प्र सारयावहै ।

कल्पः—' तौ सह चतुरः पदः संप्रसारयावहा इति पदः संप्रसारयेते ' इति । हेऽश्व यस्त्वं या चाहं महिषी तावावामुभौ मदीयं पादद्वयं त्वदीयं पश्चाद्भाग-

वर्ति पादद्वयमित्येवं चतुरः पादान्संप्रसारयावहै संगताः परस्परं श्लिष्टा यथा भवन्ति तथा प्रसृतान्करवाव ।

कल्पः–‘ वृषा वामित्यभिमन्त्रयते ’ इति ।

पाठस्तु—

वृषा वा॑ रेतोधा रेतो दधातु, इति ।

वां युवयोर्मध्ये वृषा सेचकोऽश्वः सिञ्चत्वित्यध्याहारः । रेतोधा वीर्यधारिणी त्वदीयं रेतो धारयतु ।

कल्पः–‘ उत्सक्थ्योर्गृदं धेहीति प्रजनने प्रजनन॑ संनिधाय’ इति ।

पाठस्तु—

उत्सक्थ्योर्गृदं धेह्यञ्जिमुदाञ्जिमन्वज । यः स्त्रीणां
जीवभोजनो य आसां बिलधावनः ।
प्रियः स्त्रीणामपीच्यः । य आसां कृष्णे
लक्ष्मणि सर्दिगृर्दिं परावधीत् ।, इति ।

हेऽश्व गृदं त्वदीयगुदसमीपवर्तिनं पाश्चात्यं भागं सक्थ्योर्महिषीसंबन्धिनोरूर्वोरुद्धेहि ऊर्ध्वं स्थापय । अज्यते स्त्रीत्वमभिव्यज्यतेऽनेनेत्याञ्जिर्योनिः । तथा पुंस्त्वमभिव्यज्यतेऽनेनेति मेढ्रोऽप्याञ्जिः । सर्वोन्नतश्चासावञ्जिश्चेत्युदाञ्जिः । हेऽश्व महिषीसंबन्धमाञ्जिमनुलक्ष्य त्वदीयमुदाञ्जिमज प्रेरय । कीदृश उदाञ्जिः, जीवात्मना भुज्यते प्रीतिपूर्वकमनुभूयत इति जीवभोजनो य उदाञ्जिः स्त्रीणां जीवभोजनः, स्त्रीजीवो ह्यस्मिन्नुदञ्जौ प्रीतिमनुभवति । यश्चोदाञ्जिरासां स्त्रीणां बिलधावनो बिलं योनिं प्रति धावति सहसा प्रविशतीति बिलधावनः । किंचायमुदाञ्जिः स्त्रीणां प्रियः सन्नपीच्यो भवति, अपीच्यतेऽत्यादरेण प्राप्यत इत्यपीच्यः । यश्चोदाञ्जिरासां स्त्रीणां कृष्णे लक्ष्मणि यत्कृष्णवर्णमसाधारणं लक्षणभूतं स्त्रीव्यञ्जनं तस्मिन्सर्दिगृर्दिं शुक्रपातस्थानविशेषं परावधीद्वेगेन ताडयामास । येन ताडनेन शुक्रपातो भवति तत्करोति । अन्तर्बहिःप्रदेशभेदेन स्थानत्रयं स्त्रीव्यञ्जनं विद्यते । अत एवान्यत्राऽऽम्नातम्–‘ त्रिवृत्प्रजननम् । उपस्थो योनिर्मध्यमा ’ इति । तत्र येयं मध्यमा गर्भधारिणी सा सर्दिगृर्दिः ।

कल्पः–‘ अम्बे अम्बाल्यम्बिक इति महिष्यश्वं गर्हते ’ इति ।

पाठस्तु—

अम्बे अम्बाल्यम्बिके न मा यभति
कश्चन । ससस्त्यश्वकः ।, इति ।

सा महिषी भोगाभावदुःखेन विलपन्ती स्वदुःखख्यापनाय स्वकीयां मातरं त्रिः संबोध्य स्वदुःखं कथयति । लोके ह्यसंनिहिता माता स्वकीयापद्वेलायां संबोध्यते । बाल्ये मातुरेव सर्वापन्निवारकत्वेन तत्संबोधनस्य पठितत्वादन्यदाऽपि तत्संबोधनमेव सहसा जिह्वायामायाति । तां संबोध्यैवं ब्रूते—रिरंसुं मां कोऽपि न यभति । अयमश्वकस्तु निद्राति ।

कल्पः—'ऊर्ध्वामेनामुच्छ्रयतादिति पत्नयोऽभिमेधन्ते' इति ।

पाठस्तु—

ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिराविव । अथास्या
मध्यमेधताꣳ शीते वाते पुनन्निव ।, इति ।

स्वदुःखख्यापनार्थमम्बादिशब्दैर्मातरं संबोधयन्तीमेनां महिषीं प्रति वस्त्राच्छादनाद्बहिरेव स्थिता इतरा राजपत्न्यो बुद्धिप्रदानं कुर्वन्ति—हे महिषि एनां त्वदीयां योनिमूर्ध्वामुच्छ्रयतादूर्ध्वाभिमुखं कृत्वोन्नतामवस्थापय । तत्र दृष्टान्तः—यथा लोके कस्मिंश्चिद्गिरौ वेणून्खण्डयित्वा स्वगृहे नेतुं प्रौढभारमाबध्य प्रथमं भूमावूर्ध्वमुच्छ्रयति तद्वदेनामुच्छ्रय । अथोच्छ्रयणानन्तरमस्या योनेर्मध्यस्थानमेधतां स्वाभिमतप्राप्त्याऽभिवर्धताम् । वृद्धिरत्र हर्षविशेषः । तत्र हर्षे दृष्टान्तः-'शीते वाते पुनन्निव' । यथा लोके कश्चित्खलप्ररूढ्वेन शूर्पेण धान्यं पुनन्व्यापारबाहुल्येन श्रान्तः स्विन्नगात्रः शीते वाते प्रवृत्ते सति हृष्यति तद्वत् ।

कल्पः—'त्रिर्महिष्यश्वं गर्हते त्रिः पत्नयोऽभिमेधन्त उत्तरोत्तरयर्चा' इति ।

तत्र प्रथमां गर्हार्थामृचमाह—

अम्बे अम्बाल्यम्बिके न मा यभति
कश्चन । ससस्त्यश्वकः ।, इति ।

अथ प्रथमामभिमेधनार्थामृचमाह—

यद्धरिणी यवमत्ति न पुष्टं पशु मन्यते । शूद्रा
यदर्यजारा न पोषाय धनायति ।, इति ।

यद्यदा कदाचिद्धरिणी मृगी रात्रौ समागत्य क्षेत्रे फलितं यवं भक्षयति, त्र क्षेत्रे भक्षयित्वा पुनररण्ये गतं पशुं पुष्टमपि न मन्यते न जानाति । हे

महिषि तथा त्वमपि देवतारूपेण त्वामनुभूयान्तर्हितमश्वं न जानासि । भोगस्तु तव जात एवेति पत्नीनामभिप्रायः । किं च यद्यदा शूद्रा काचिद्दासी कदाचिदर्यः स्वकीयः स्वामी जारो यस्याः सेयमर्यजारा भवति, तदानीं सा दासी स्वामिस्वीकारमात्रेणात्यन्तं हृष्यति, न तु स्वकीयकुटुम्बपोषाय धनायति धनमात्मन इच्छति । नहि स्वामिस्वीकाराद्धनमाधिकं मन्यते । तथा मनुष्यशरीरा त्वमपि देवतारूपस्याश्वस्य स्वीकारादेव परितुष्टा भव, नतु तुच्छमिमं मानुषं भोगमपेक्षस्वेत्यभिप्रायः ।

अथ द्वितीयां गर्हार्थामृचमाह—

अम्बे अम्बाल्यम्बिके न मा यभति
कश्चन । ससस्त्यश्वकः । , इति ।

अथाभिमेधनार्था द्वितीयामृचमाह—

इयं यका शकुन्तिकाऽऽहलमिति सर्पति । आहतं
गभे पसो नि जल्गुलीति धाणिका ।, इति ।

इयं प्रत्यक्षतो दृश्यमाना यका शकुन्तिका या काचित्पक्षिस्त्री विद्यते । आहलशब्दः पक्षिध्वनेरनुकरणम् । इत्येतादृशं शब्दं कुर्वती सा शकुन्तिका सर्पति पुमांसं पक्षिणं पृष्ठतो गच्छति, न तृप्ता क्वचिदवतिष्ठते । हे महिषि एवं त्वमपि न तृप्यसि, तदेतदयुक्तमित्यभिप्रायः । किंच धाणिका गर्भस्य धारयित्री योपिद्भ आहतं पसो निजल्गुलीति । गभशब्दे पसशब्दे च वर्णव्यत्ययो द्रष्टव्य तथा सति योनिं सपजन्यं रेतश्च शब्दद्वयेनाभिधीयते । निजल्गुलीति निगिरति । यथा लोके गर्भधारिणी स्त्री योनावाहितं रेतो निगिरति गर्भरूपेणान्तर्धृत्वा संतुष्यति एवं त्वमपि देवतारूपाश्वस्वीकारेण संतोष्टुमर्हसीत्यभिप्रायः ।

अथ गर्हार्था तृतीयामृचमाह—

अम्बे अम्बाल्यम्बिके न मा यभति
कश्चन । ससस्त्यश्वकः । , इति ।

अथाभिमेधनार्था तृतीयामृचमाह—

माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः । प्र
सुलामीति ते पिता गभे मुष्टिमतꣳसयत् । , इति ।

हे महिषि ते तव या माता तथा तव यः पिता तावुभावपि वृक्षस्याग्रं वृक्षस्य

कस्यचिच्छाखया निर्मितं तल्पं रोहत आरुह्य शयाते तदानीं ते पिता प्रसुलामि प्रवेशयामीत्येवमुक्त्वा गभे योनौ मुष्टिं मुष्टिसदृशं मेढ्रमतंसयत्प्रावेशयत्। एवमयमप्यश्वश्चकार। अतो हे महिषि त्वमुत्तिष्ठेत्यभिप्रायः।

कल्पः—'दधिक्राव्णो अकारिषमिति सर्वाः सुरभिमतीमृचमन्ततो जपित्वा' इति।

पाठस्तु—

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत्।, इति।

दधि क्रामति प्राप्नोतीति दधिक्रावा। एतन्नामको दधिप्रियः कश्चिद्देवविशेषः। अग्निरित्यन्ये। तस्य देवस्याकारिषमहं कर्म कृतवानस्मि। कीदृशस्य, जिष्णोर्जयशीलस्याश्वस्य व्यापिनो वाजिनोऽन्नवतः। स देवो नोऽस्माकं मुखं सुरभि करत्कर्पूरादिद्रव्यसमृद्धिप्रदानेन सुगन्धोपेतं करोत्वस्माकमायूंषि च प्रतारिषत्प्रवर्धयतु।

कल्पः—'आपो हि ष्ठा मयोभुव इति तिसृभिर्मार्जयित्वा' इति।

तत्र प्रथमामाह—

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे
दधातन। महे रणाय चक्षसे।, इति।

हिशब्द एवकारार्थः प्रसिद्ध्यर्थो वा। हे आपो यूयमेव मयोभुवः स्थ सुखस्य भावयित्र्यो भवत। स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम्। तास्तादृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत। किंच महे महते रणाय रमणीयाय चक्षसे दर्शनाय दधातन, अस्मान्परतत्त्वसाक्षात्कारयोग्यान्कुरुतेत्यर्थः।

अथ द्वितीयामाह—

यो वः शिवतमो रसस्तस्य भाज-
यतेह नः। उशतीरिव मातरः।, इति।

वो युष्माकं शिवतमः शान्ततमः सुखैकहेतुर्यो रसोऽस्ति, इहास्मिन्कर्मणि नोऽस्मांस्तस्य भाजयत तं रसं प्रापयत। तत्र दृष्टान्तः—उशतीरिव मातरः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयं स्तन्यरसं प्रापयन्ति तद्वदित्यर्थः।

अथ तृतीयामाह—

तस्मा अरं गमाम वो यस्य क्षयाय

जिन्वथ । आपो जनयथा च नः ।, इति ॥

यस्य रसस्य क्षयाय क्षयेण निवासेन जिन्वथ यूयं प्रीता भवथ, तस्मै रसाय वो युष्मानलं भृशं प्राप्नुमः । किंच हे आपो यूयं नोऽस्माञ्जनयथ प्रजोत्पादकान्कुरुथ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके विंशोऽनुवाकः । )

---

भूर्भुवः सुवर्वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम् । एत॰ स्तोतरेतेन पथा पुनरश्वमा वर्तयासि नः । लाजी३ञ्छाची३न्यशो ममा३म् । यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते । युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि । युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा । केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ( १ ) ॥

( ब्रध्नं पञ्चविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठके विंशोऽनुवाकः ।)

---

भूः । भुवः । सुवः । वसवः । त्वा । अञ्जन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । अञ्जन्तु । त्रैष्टुभेन । छन्दसा । आदित्याः । त्वा । अञ्जन्तु । जागतेन । छन्दसा । यत् । वातः । अपः । अगमत् । इन्द्रस्य । तनुवम् । प्रियाम् । एतम् । स्तोतः । एतेन । पथा । पुनः । अश्वम् । एति । वर्तयासि । नः । लाजी३न् । शाची३न् । यशः । ममा३म् । यव्यायै । गव्यायै । एतत् । देवाः । अन्नम् । अत्त । एतत् । अन्नम् । अद्धि । प्रजापत इति प्रजा-पते । युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परीति । तस्थुषः । रोचन्ते । रोचना । दिवि । युञ्जन्ति । अस्य । काम्या । हरी इति । विपक्षसेति वि-पक्षसा । रथे । शोणा । धृष्णू इति । नृवाहसेति नृ-वाहसा । केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । समिति । उषद्भिरित्युषत्-भिः । अजायथाः (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके विंशोऽनुवाकः । )

---

एकोनविंशेऽश्वस्य मरणोत्तरकालीन उपचारोऽभिहितः । विंशे तु पूर्वकालीन उपचारोऽभिधीयते ।

भूर्भुवः सुवः

कल्पः–' पत्नयोऽश्वमलंकुर्वन्ति महिषी वावाता परिवृक्तीति शतं शतमेकैकस्याः सचिवा राजपुत्रीर्धात्रीश्चोग्राणामराज्ञां सूतग्रामण्या इति सहस्रं सहस्रं मणयः सु(सौ)वर्णर(रा)जतसामुद्रान् वालेषु मणीनावयन्ति भूरिति सौवर्णान्महिषी प्राग्वहाद्भुव इति राजतान्वावाता प्रत्यग्वहात्प्राक्श्रोणेः सुवरिति सामुद्रान्परिवृक्ती प्रत्यक्श्रोणेः ' इति ।

अत्रोक्ता भूर्भुवः सुवरित्येतास्तिस्रो व्याहृतयो लोकत्रयवाचिन्यः । तथा सति सौवर्णराजतशङ्खमणयः क्रमेण भूम्यादिलोकत्रयरूपा इति सूत्राणामर्थः । तैरेतैर्मन्त्रैर्मुखमध्यपाश्चात्यभागेषु महिषी वावाता परिवृक्त्याख्या उत्तममध्यमाधमा राजपत्न्योऽश्वस्य केशेषु मणीन्योजयेयुः ।

कल्पः—'अथास्य स्वदेशानाज्येनाभ्यञ्जन्ति वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति गौल्गुलवेन महिषी रुद्रा इति कौसुम्भेन वावाताऽऽदित्या इति मुस्ताकृतेन परिवृक्ती ' इति ।

पाठस्तु—

वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा रुद्रा-
स्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसाऽऽदित्या-
स्त्वाऽञ्जन्तु जागतेन छन्दसा, इति ।

हेऽश्वाष्टौ वसवो गायत्रेण च्छन्दसा युक्ता गुग्गुलुजन्येन तैलेन मुखभागे त्वामञ्जन्तु । एकादश रुद्राः कुसुम्भजन्येन तैलेन त्वां मध्यभागे त्रिष्टुप्छन्दोयुक्ता अञ्जन्तु । द्वादशाऽऽदित्या जागतच्छन्दोयुक्ता मुस्तामूलजन्येन तैलेन पाश्चात्यभागे त्वामञ्जन्तु । एतदेव तैलं सूत्र आज्यशब्देन व्यवहृतम् ।

कल्पः–' यद्वातो अपो अगमादिति प्रदक्षिणमावर्तते यतः प्रयाति तदवतिष्ठते ' इति ।

---

१ ख. °त्रीर्दाराश्चो° । २ च. °धाञ्यश्चो° । ३ ख. °ग्राणां रा° । ४ ख. °द्रान्वाले° । ५ ख. प्राग्वाहा° । ६ ख °त्यग्वाहा° । ७ ख. °थाश्वस्य देहाना° । ८ ख. °र्तयते ।

रथयुक्तोऽयमश्वो यतो रथशालायाः प्रयातः पुनः प्रादक्षिण्येनाऽऽवृत्तस्तस्यामेव रथशालायामवतिष्ठते।

पाठस्तु—

यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतꣳ स्तोतरेतेन पथा पुनरश्वमा वर्तयासि नः।, इति।

यद्येन पथा पुरा वातो वायुरपो जलानीन्द्रस्य प्रियां तनुवं पर्जन्यरूपामगमत्प्रापयत्। हे स्तोतः स्तुतिकर्तस्त्वमश्वप्रेरणार्थं शब्दं कुर्वन्नेतेन पूर्वसिद्धेन पथा मार्गेणैतमश्वं नोऽस्मान्प्रत्यावर्तयास्यावृत्तं कुरु।

कल्पः—'लाजी३ञ्छाची३न्यशो ममा३मिति पत्नयोऽश्वायान्नपरिशेषानुपवपन्ति' इति।

पाठस्तु—

लाजी३ञ्छाची३न्यशो ममा३म्। यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते।, इति।

रात्रौ यैर्दशभिरन्नैर्होमाः कृतास्तदन्नशेषेषु लाजा अपि विद्यन्ते, तानयमश्वो भक्षयति। अतो लाजा अस्य सन्तीति लाजी। भक्षयितुं शक्या अन्नविशेषाः शाचास्ता अस्य सन्तीति शाची। अश्वो हि स्वामिनो यशः कीर्ति संपादयति, तद्विवक्षया यशो ममेति वाक्यमेतन्नामत्वेन प्रयुज्यते। तैरेतैर्लाज्यादिभिस्त्रिभिर्नामभिरश्वं संबोध्य तिस्रः पत्न्य आह्वयन्ति। दुरादाह्वातुमेते प्लुताः। एवं संबोध्याश्वशरीरगतान्देवान्प्रत्येवं ब्रुवते—हे देवा एतदन्नमस्माभिर्दीयमानमश्वरूपेणात्त भक्षयत। हे प्रजापते देवस्त्वाभिस्त्वमप्येतदन्नमद्धि भक्षय।

कल्पः—'युञ्जन्ति ब्रध्नमिति दक्षिणस्यां युगधुर्ये तमश्वं युनक्ति' इति।

पाठस्तु—

युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि।, इति।

ब्रध्नमादित्यरूपमरुषमग्निरूपं चरन्तं वायुरूपमिममश्वं तथा परितस्थुषः परितोऽवस्थितांस्त्रीँल्लोकानेतदश्वस्य(स्व)रूपान्युञ्जन्ति देवाः सर्वे रथे योज-

यन्ति । तथा दिवि द्युलोके वर्तमानानि रोचना प्रकाशरूपाणि नक्षत्राणि रोचन्तेऽश्वमेतं प्रकाशयन्ति । अयमर्थः सर्वोऽपि ब्राह्मणे स्पष्टमुच्यते-'असौ वा आदित्यो ब्रध्नः । अग्निर्वा अरुषः । वायुर्वै चरन् । इमे वै लोकाः परितस्थुषः । नक्षत्राणि वै रोचना दिवि ' इति ।

कल्पः-' युञ्जन्त्यस्य काम्येति प्रष्टी ' इति ।

तस्याश्वस्य सहायभूतावितरौ द्वावश्वौ युनक्ति ।

पाठस्तु—

युञ्जन्त्यस्य काम्या हरी विपक्षसा
रथे । शोणा धृष्णू नृवाहसा ।, इति ।

अस्याश्वस्य सहायभूतौ हरी द्वावश्वौ युञ्जन्ति देवा रथे योजयन्ति । कीदृशौ हरी, काम्या कमनीयौ, विपक्षसा विशेषेण पक्षे रथस्य पार्श्वे वर्तमानौ, शोणेपल्लोहितौ, धृष्णू शत्रुधर्षणक्षमौ, नृवाहसा मनुष्यवाहिनौ ।

कल्पः-'केतुं कृण्वन्नकेतव इति रथे ध्वजमुपगूहति ' इति ।

पाठस्तु—

केतुं कृण्वन्नकेतवे पेशो मर्या अपे-
शसे । समुषद्भिरजायथाः । , इति ॥

मर्या मनुष्या अकेतवे पूर्वं ध्वजरहिताय रथाय केतुं कृण्वन्ध्वजं कुर्वन्तु । अपेशसे सुवर्णालंकाररहिताय रथाय पेशः सुवर्णालंकारं कुर्वन्तु । हे रथ त्वमुषद्भिर्ज्वालासदृशैः सुवर्णरश्मिभिः समजायथाः संगतो जातोऽसि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके
विंशोऽनुवाकः ॥ २० ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठके एकविंशोऽनुवाकः । )

---

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा
स्नावभ्यः स्वाहा संतानेभ्यः स्वाहा परिसंतानेभ्यः

स्वाहा पर्वभ्यः स्वाहा संधानेभ्यः स्वाहा शरीरेभ्यः स्वाहा यज्ञाय स्वाहा दक्षिणाभ्यः स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ( १ ) ॥

( प्राणायाष्टाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ सप्तमाष्टके चतुर्थप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥ )

---

प्राणायेति प्र-अनाय । स्वाहा । व्यानायेति वि-अनाय । स्वाहा । अपानायेत्यप-अनाय । स्वाहा । स्नावभ्य इति स्नाव-भ्यः । स्वाहा । संतानेभ्य इति सं-तानेभ्यः । स्वाहा । परिसंतानेभ्य इति परि-संतानेभ्यः । स्वाहा । पर्वभ्य इति पर्व-भ्यः । स्वाहा । संधानेभ्य इति सं-धानेभ्यः । स्वाहा । शरीरेभ्यः । स्वाहा । यज्ञाय । स्वाहा । दक्षिणाभ्यः । स्वाहा । सुवर्गायेति सुवः-गाय । स्वाहा । लोकाय । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

( अथ सप्तमकाण्डे चतुर्थप्रपाठक एकविंशोऽनुवाकः । )

---

विंशेऽनुवाके जीवतोऽश्वस्योपचार उक्तः । एकविंशे त्वन्नहोमशेषोऽभिधीयते । तथा च ब्राह्मणम्–' प्राणाय स्वाहा व्यानाय स्वाहेति संततिहोमाञ्जुहोति ' इति ।

पाठस्तु—

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा स्नावभ्यः स्वाहा संतानेभ्यः स्वाहा परिसंतानेभ्यः स्वाहा पर्वभ्यः स्वाहा संधानेभ्यः स्वाहा शरीरेभ्यः स्वाहा यज्ञाय स्वाहा दक्षिणाभ्यः स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा, इति ॥

स्नावसूत्पन्नाः शाखा नाड्यः संतानाः । तासूत्पन्ना उपशाखा नाड्यः परिसंतानाः । एतैश्चतुर्दशभिर्मन्त्रैरन्नहोमेषु संतत्याख्यं होमं कुर्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः । )

---

सिताय स्वाहाऽसिताय स्वाहाऽभिहिताय स्वाहाऽनभिहिताय स्वाहा युक्ताय स्वाहाऽयुक्ताय स्वाहा सुयुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा संवञ्चते स्वाहाऽनुवञ्चते स्वाहोद्वञ्चते स्वाहा यते

स्वाहा धावते स्वाहा तिष्ठते स्वाहा सर्वस्मै स्वाहा (३)॥

(सितायाष्टात्रिंशत्।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः॥ २२॥

---

बृहस्पतिः अग्घथा वा ऋक्षा वै प्रजापतिर्येनयेन द्वे वावाऽऽदित्या वसिष्ठः संवत्सराय सुवर्गं ब्रह्मवादिनो ज्योतिष्टोमं मेषः कूप्याभ्योऽद्भ्यो यो अर्वन्तं नमो राज्ञे मयोभूः किꣳ स्विदम्बे भूः प्राणाय सिताय द्वाविꣳशतिः॥ २२॥

बृहस्पतिः प्रति तिष्ठन्ति वै दशरात्रेण सुवर्गं यो अर्वन्तं भूस्त्रिपञ्चाशत्॥ ५३॥

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके चतुर्थः प्रपाठकः॥ ४॥

---

(अथ सप्तमाष्टके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः)

---

सिताय। स्वाहा। असिताय। स्वाहा। अभिहितायेत्यभि-हिताय। स्वाहा। अनभिहितायेत्यनभि-हिताय। स्वाहा। युक्ताय। स्वाहा। अयुक्ताय। स्वाहा। सुयुक्तायेति सु-युक्ताय। स्वाहा। उद्युक्तायेत्युत्-युक्ताय। स्वाहा। विमुक्तायेति वि-मुक्ताय। स्वाहा। प्रमुक्तायेति प्र-मुक्ताय। स्वाहा। वञ्चते।

स्वाहा । परिवञ्चत इति परि—वञ्चते । स्वाहा । संवञ्चत इति सं—वञ्चते । स्वाहा । अनुवञ्चत इत्यनु—वञ्चते । स्वाहा । उद्वञ्चत इत्युत्—वञ्चते । स्वाहा । यते । स्वाहा । धावते । स्वाहा । तिष्ठते । स्वाहा । सर्वस्मै । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ सप्तमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः । )

अथ द्वाविंशेऽश्वहोमेष्वेव प्रमुक्त्याख्या होमा उच्यन्ते । तथा च ब्राह्मणम्— ' सिताय स्वाहाऽसिताय स्वाहेति प्रमुक्तीर्जुहोति ' इति ।

पाठस्तु—

सिताय स्वाहाऽसिताय स्वाहाऽभिहिताय स्वाहाऽनभिहिताय स्वाहा युक्ताय स्वाहाऽयुक्ताय स्वाहा सुयुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा संवञ्चते स्वाहाऽनुवञ्चते स्वाहोद्वञ्चते स्वाहा यते स्वाहा धावते स्वाहा तिष्ठते स्वाहा सर्वस्मै स्वाहा, इति ॥

सितादीन्यश्वविशेषणानि । सितासितशब्दाभ्यामारोहणकालीनबन्धाबन्धौ विवक्षितौ । अभिहितानभिहितशब्दाभ्यां रशनायुगुले बन्धाबन्धौ । युक्तादि-

चतुष्टयेन रथयोजनविशेषाः। विमुक्तप्रमुक्तशब्दाभ्यां मोचनविशेषौ। वञ्चतादिशब्दपञ्चकेन गमनप्रकारविशेषाः। उपर्यारूढेन प्रेरिता वञ्चनादयः। यतादिशब्दैस्तु स्वेच्छाकृता इति विशेषः। एतैरेकोनविंशतिमन्त्रैः प्रमुक्त्याख्यहोमः कार्यः।

अत्रास्य प्रपाठकस्य विनियोगसंग्रहः—

चतुर्विंशतिरात्रौ द्वौ चतुर्थाद्यद्वितीययोः।
त्रिंशद्रात्रस्तृतीये स्याद्द्वात्रिंशद्रात्र उत्तरे ॥ १ ॥
त्रयस्त्रिंशदहोऽन्यस्मिन्षट्त्रिंशद्रात्र उत्तरे।
एकोनपञ्चाशदहः सप्तमे समुदीरितः ॥ २ ॥
संवत्सराख्यसत्रस्य दीक्षाकालोऽष्टमे श्रुतः।
दीक्षाश्चोपसदोऽन्यस्मिन्दशमे प्रायणीयकम् ॥ ३ ॥
मासा एकादशेऽथाश्वमेधमन्त्रा उदीरिताः।
मेषो नवापाव्यहोमा अवन्तीः परियन्ति हि ॥ ४ ॥
कूप्याभ्यो विंशतिश्चाद्भ्यो द्वादशापां तु होमकाः।
यो अर्व प्रहारः स्यात्परोऽधस्पदसंस्थितिः ॥ ५ ॥
अहं ब्रह्मा स्वामिहस्ते धृत्वाऽभिक्रेति वाचयेत्।
एते मन्त्रास्तु चत्वारो यव्यहोमा नमो नव ॥ ६ ॥
मयोऽष्टौ स्युर्गव्यहोमाः किं ब्रह्मोद्ये षडीरिताः।
पत्नीमुदानयेदम्बे सुभेत्याच्छादयेदुभौ ॥ ७ ॥
तौ संप्रसारयेत्पादान्वृषेत्यध्वर्युमन्त्रयेत्।
उत्सक्थ्यधाति गुह्ये द्वे ह्यम्बे अश्वं विगर्हयेत् ॥ ८ ॥
ऊर्ध्वामन्या बोधयेयुस्त्रिरेवं स्यात्पुनः पुनः।
दधि सर्वा जपित्वा हि मार्जयन्ते त्रिभिर्जलात्[1] ॥ ९ ॥
अम्ब इत्यनुवाकेऽस्मिन्मन्त्रा अष्टादशेरिताः।
भूस्त्रि पत्न्योऽश्ववालेषु कीलेयुस्त्रिविधान्मणीन् ॥ १० ॥
वसाभ्यञ्जन्ति पत्न्योऽश्वमेतमा(श्वं यद्वेत्या)वर्तयेद्गुणा(द्गुहा)न् ।
लाज्यन्नशेष आहार्यो युञ्जन्युञ्ज्याद्रथेऽश्वकम् ॥ ११ ॥
युञ्जान्यौ योजयित्वाऽथ केतुं बन्ध्यो रथे ध्वजः।
भूर्भुवः सुवरित्यस्मिन्मन्त्रा एकादशेरिताः ॥ १२ ॥

---

१ ख. °र्जलैः। अ°।

माणा संततिहोमाः स्युस्तत्र मन्त्राश्चतुर्दश ।
सिताप्रमुक्तिहोमाः स्युर्मन्त्रा एकोनविंशतिः ॥ १३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ सप्तमाष्टके पञ्चमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

गावो वा एतत्सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नरात्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नरात्स्मेति यासां चाजायन्त यासां च न ता उभयीरुदतिष्ठन्नरात्स्मेति गोसत्रं वै ( १ ) संवत्सरो य एवं विद्वाꣳसः संवत्सरमुपयन्त्यृध्नुवन्त्येव तस्मा-

तूपरा वार्षिको मासौ पत्वी चरति सत्राभिजितश्
ह्यस्यै तस्मात्संवत्सरसदो यत्किं च गृहे क्रियते
तदाप्तमवरुद्धमभिजितं क्रियते समुद्रं वा एते प्र
प्लवन्ते ये संवत्सरमुपयन्ति यो वै समुद्रस्य पारं न
पश्यति न वै स तत उदेति संवत्सरः ( २ ) वै
समुद्रस्तस्यैतत्पारं यदतिरात्रौ य एवं विद्वाꣳसः
संवत्सरमुपयन्त्यनार्ता एवोदृचं गच्छन्तीयं वै
पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः
पूर्वोऽपान उत्तरः प्ररोधनं पूर्वं उदयनमुत्तरो ज्योति-
ष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ता-
द्दधते सुवर्गस्य लोकस्यानुख्यात्यै चतुर्विꣳशः
प्रायणीयो भवति चतुर्विꣳशतिरर्धमासाः ( ३ )
संवत्सरः प्रयन्त एव संवत्सरे प्रति तिष्ठन्ति
तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः
संवत्सरस्य रात्रय उभे एव संवत्सरस्य रूपे
आप्नुवन्ति ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभि-
श्चरन्ति षडहा भवन्ति षड्वा ऋतवः संवत्सर
ऋतुष्वेव संवत्सरे प्रति तिष्ठन्ति गौश्चाऽऽयुश्च
मध्यतः स्तोमौ भवतः संवत्सरस्यैव तन्मिथुनं
मध्यतः ( ४ ) दधति प्रजननाय ज्योतिरभितो

भवति विमोचनमेव तच्छन्दाꣳस्येव तद्विमोकं यन्त्यथो उभयतोज्योतिषैव षडहेन सुवर्गं लोकं यन्ति ब्रह्मवादिनो वदन्त्यासते केन यन्तीति देवयानेन पथेति ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था गायत्री त्रिष्टुब्जगती ज्योतिर्वै गायत्री गौस्त्रिष्टुगायुर्जगती यदेते स्तोमा भवन्ति देवयानेनैव ( ५ ) तत्पथा यन्ति समानꣳ साम भवति देवलोको वै साम देवलोकादेव न यन्त्यन्याअन्या ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देवलोकमभ्यारोहन्तो यन्त्यभिवर्तो ब्रह्मसामं भवति सुवर्गस्य लोकस्याभिवृत्त्या अभिजिद्भवति सुवर्गस्य लोकस्याभिजित्यै विश्वजिद्भवति विश्वस्य जित्यै मासिमासि पृष्ठान्युप यन्ति मासिमास्यतिग्राह्या गृह्यन्ते मासिमास्येव वीर्यं दधति मासां प्रतिष्ठित्या उपरिष्टान्मासां पृष्ठान्युप यन्ति तस्मादुपरिष्टादोषधयः फलं गृह्णन्ति ( ६ ) ॥

( गोसत्रं वा एति संवत्सरोऽर्धमासा मिथुनं मध्यतो देवयानेनैव वीर्यं त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ सप्तमाष्टके पञ्चमः प्रपाठकः। )

( तत्र प्रथमोऽनुवाकः। )

हरिः ॐ।

गावः। वै। एतत्। सत्रम्। आसत। अशृङ्गाः। सतीः। शृङ्गाणि। नः। जायन्ते। इति। कामेन। तासाम्। दश। मासाः। निषण्णा इति नि–सन्नाः। आसन्। अथ। शृङ्गाणि। अजायन्त। ताः। उदिति। अतिष्ठन्। अरात्स्म। इति। अथ। यासाम्। न। अजायन्त। ताः। संवत्सरमिति सं–वत्सरम्। आप्त्वा। उदिति। अतिष्ठन्। अरात्स्म। इति। यासाम्। च। अजायन्त। यासाम्। च। न। ताः। उभयीः। उदिति। अतिष्ठन्। अरात्स्म। इति। गोसत्रमिति गो–सत्रम्। वै (१)। संवत्सर इति सं–वत्सरः। ये। एवम्। विद्वांसः। संवत्सरमिति सं–वत्सरम्। उपयन्तीत्युप–यन्ति। ऋध्नुवन्ति। एव। तस्मात्। तूपरा। वार्षिकौ। मासौ। पर्त्वा। चरति। सत्राभिजितमिति सत्र–अभिजितम्। हि। अस्यै। तस्मात्। संवत्सरसद इति संवत्सर–सदः। यत्। किम्। च। गृहे। क्रियते। तत्। आप्तम्। अवरुद्धमित्यव–रुद्धम्। अभिजितमित्यभि–जितम्। क्रियते। समुद्रम्।

वै । एते । प्रेति । प्लवन्ते । ये । संवत्सरमिति सं-वत्सरम् । उपयन्तीत्युप-यन्ति । यः । वै । समुद्रस्य । पारम् । न । पश्यति । न । वै । सः । ततः । उदिति । एति । संवत्सर इति सं-वत्सरः ( २ ) । वै । समुद्रः । तस्य । एतत् । पारम् । यत् । अतिरात्रावित्यति-रात्रौ । ये । एवम् । विद्वाꣳसः । संवत्सरमिति सं-वत्सरम् । उपयन्तीत्युप-यन्ति । अनार्ताः । एव । उदृचमित्युत्-ऋचम् । गच्छन्ति । इयम् । वै । पूर्वः । अतिरात्र इत्यति-रात्रः । असौ । उत्तर इत्युत्-तरः । मनः । पूर्वः । वाक् । उत्तर इत्युत्-तरः । प्राण इति प्र-अनः । पूर्वः । अपान इत्यप-अनः । उत्तर इत्युत्-तरः । प्ररोधनमिति प्र-रोधनम् । पूर्वः । उदयनमित्युत्-अयनम् । उत्तर इत्युत्-तरः । ज्योतिष्टोम इति ज्योतिः-स्तोमः । वैश्वानरः । अतिरात्र इत्यति-रात्रः । भवति । ज्योतिः । एव । पुरस्तात् । दधते । सुवर्गस्येति सुवः-गस्य । लोकस्य । अनुख्यात्या इत्यनु-ख्यात्यै । चतुर्विꣳश इति चतुः-विꣳशः । प्रायणीय इति प्र-अयनीयः । भवति । चतुर्विꣳशतिरिति चतुः-विꣳशतिः । अर्धमासा इत्यर्ध-मासाः ( ३ ) । संवत्सर इति सं-वत्सरः । प्रयन्त इति प्र-यन्तः । एव । संवत्सर इति सं-वत्सरे । प्रतीति । तिष्ठन्ति । तस्य । त्रीणि । च । शतानि ।

षष्टिः । च । स्तोत्रीयाः । तावतीः । संवत्सरस्येति सं-वत्सरस्य । रात्रयः । उभे इति । एव । संवत्सरस्येति सं-वत्सरस्य । रूपे इति । आप्नुवन्ति । ते । सꣳस्थित्या इति सं-स्थित्यै । अरिष्ट्यै । उत्तरैरित्युत्-तरैः । अहोभिरित्यहः-भिः । चरन्ति । षडहा इति षट्-अहाः । भवन्ति । षट् । वै । ऋतवः । संवत्सर इति सं-वत्सरः । ऋतुषु । एव । संवत्सर इति सं-वत्सरे । प्रतीति । तिष्ठन्ति । गौः । च । आयुः । च । मध्यतः । स्तोमौ । भवतः । संवत्सरस्येति सं-वत्सरस्य । एव । तत् । मिथुनम् । मध्यतः ( ४ ) । दधति । प्रजननायेति प्र-जननाय । ज्योतिः । अभितः । भवति । विमोचनमिति वि-मोचनम् । एव । तत् । छन्दाꣳसि । एव । तत् । विमोकमिति वि-मोकम् । यन्ति । अथो इति । उभयतोज्योतिषेत्युभयतः-ज्योतिषा । एव । षडहेनेति षट्-अहेन । सुवर्गमिति सुवः-गम् । लोकम् । यन्ति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । आसते । केन । यन्ति । इति । देव-यानेनेति देव-यानेन । पथा । इति । ब्रूयात् । छन्दाꣳसि । वै । देवयान इति देव-यानः । पन्थाः । गायत्री । त्रिष्टुप् । जगती । ज्योतिः । वै । गायत्री । गौः । त्रिष्टुक् । आयुः । जगती । यत् । एते । स्तोमाः । भवन्ति । देवयानेनेति

देव-यानेन । एव ( ५ ) । तत् । पथा । यन्ति । समानम् । साम । भवति । देवलोक इति देव-लोकः । वै । साम । देवलोकादिति देव-लोकात् । एव । न । यन्ति । अन्या-अन्या इत्यन्याः-अन्याः । ऋचः । भवन्ति । मनुष्यलोक इति मनुष्य-लोकः । वै । ऋचः । मनुष्यलोकादिति मनुष्य-लोकात् । एव । अन्यमन्यमित्यन्यम्-अन्यम् । देवलोकमिति देव-लोकम् । अभ्यारोहन्त इत्यभि-आरोहन्तः । यन्ति । अभिवर्त इत्यभि-वर्तः । ब्रह्मसाममिति ब्रह्म-सामम् । भवति । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिवृत्त्या इत्यभि-वृत्त्यै । अभिजिदित्यभि-जित् । भवति । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिजित्या इत्यभि-जित्यै । विश्वजिदिति विश्व-जित् । भवति । विश्वस्य । जित्यै । मासिमासीति मासि-मासि । पृष्ठानि । उपेति । यन्ति । मासिमासीति मासि-मासि । अतिग्राह्या इत्यति-ग्राह्याः । गृह्यन्ते । मासिमासीति मासि-मासि । एव । वीर्यम् । दधति । मासाम् । प्रतिष्ठित्या इति प्रति-स्थित्यै । उपरिष्टात् । मासाम् । पृष्ठानि । उपेति । यन्ति । तस्मात् । उपरिष्टात् । ओषधयः । फलम् । गृह्णन्ति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ सप्तमकाण्डे पञ्चमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सत्रं संवत्सरान्तं यत्तच्चतुर्थे समीरितम् ।
विशेषः पञ्चमे तस्य वत्सराख्यस्य वर्ण्यते ॥

तत्राऽऽदौ तावत्संवत्सरसत्रं विधत्ते—

गावो वा एतत्सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नरात्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वो-दतिष्ठन्नरात्स्मेति यासां चाजायन्त यासां च न ता उभयीरुदतिष्ठन्नरात्स्मेति गोसत्रं वै संवत्सरो य एवं विद्वाꣳसः संवत्सरमुपयन्त्यृध्नुवन्त्येव, इति ।

यद्यपि गावस्तिर्यक्त्वान्न कर्माधिकारिणस्तथाऽपि तदभिमानिदेवताऽत्र गोशब्देन विवक्षिता । अभिमन्तव्यानां शृङ्गभावाभावौ स्वस्मिन्नारोप्य गोभिः सह तादृशबुद्ध्या व्यवहरन्ति । पुरा शृङ्गरहिताः सत्यो गावः शृङ्गोत्पत्तिं कामयित्वैतत्संवत्सराय दीक्षिष्यमाणा इत्याद्यनुवाकोक्तं सत्रमन्वतिष्ठन् । तासां शृङ्गकामोपेतानामनुष्ठाने प्रवृत्तानां गवां दश मासा निर्गता अभूवन् । अथ मासदशकादूर्ध्वं शृङ्गाण्युत्पन्नानि। तदानीं ता गावोऽपेक्षितेन फलेन समृद्धाः स्म इति मत्वा तस्मात्सत्रादुत्थिताः । अथैतस्मिन्काले कासांचिद्गवां शृङ्गाणि नोत्पन्नानि, ताः पुनरपि मासद्वयमनुष्ठाय संवत्सरसंपूर्तिं कृत्वा समृद्धाः स्म इत्येवं मत्वा तस्मात्सत्रादुत्थिताः । तदेवं यासां शृङ्गाण्युत्पन्नानि यासां च नोत्पन्नानि ता उभयविधा अपि गावो वयं समृद्धा इत्येवं मत्वोत्थिताः । यस्माद्गोभिरनुष्ठितं तस्माद्गोसत्रमित्येवायं संवत्सराख्यः कर्मविशेषोऽभिधीयते ।

ये यजमाना एवं विद्वांसः संवत्सराख्यं कर्मविशेषमनुतिष्ठन्ति ते समृद्धिं प्राप्नुवन्त्येव ।

यदुक्तमर्थवादे यासां गवां शृङ्गाण्यजायन्त, यासां च नाजायन्त ता उभयोऽप्यृद्धिं गता इति, तत्र जातशृङ्गाणां शृङ्गजन्मैवर्धिः । इतरासां तु कथं सा समृद्धिरित्याशङ्क्य तां दर्शयति—

तस्मात्तूपरा वार्षिकौ मासौ पर्त्वा
चरति सत्राभिजितꣳ ह्यस्यै, इति ।

यस्मादजातशृङ्गास्तूपराः सत्रेण समृद्धिं गतास्तस्मादियं वर्षर्तुसंबन्धिनौ मासौ पर्त्वा प्रीतिं प्राप्यारण्ये चरति । वार्षिकयोर्हि मासयोररण्ये संचरन्तीनां दीर्घशृङ्गयुक्तानां गवां महान्क्लेशो जायते । प्रबलवायूपेतया तीव्रवृष्ट्या मुखे प्रतिहताः सत्यो मुखमर्वाग्भूतं कृत्वा शृङ्गभारेण पीड्यन्ते । तूपरायास्तु नास्त्ययं क्लेशः । यथा केशश्मश्रुपूर्णशिरस्कानां पुरुषाणां सत्यपि सौन्दर्याभिमानकृते सुखे नदीस्नानघृतभोजनादौ महान्क्लेशस्तद्वत् । यदेतदस्यै तूपराया गोर्वर्षासु प्रीतिसंपादनं तदेतत्सत्राभिजितं सत्रानुष्ठानलब्धम् ।

अथ प्रकारान्तरेण सत्रानुष्ठानं प्रशंसति—

तस्मात्संवत्सरसदो यत्किं च गृहे क्रियते
तदाप्तमवरुद्धमभिजितं क्रियते, इति ।

यस्मात्सत्रं प्रशस्तं तस्मात्संवत्सरसदः संवत्सरसत्रमनुष्ठितवतो यजमानस्य गृहे यत्किंच क्रियते यत्किमप्यग्निहोत्रादिकमङ्गविकलमप्यनुष्ठीयते तदाप्तमङ्गसंपूर्णमेव भवति । तथाऽवरुद्धमकाले कृतमपि स्वकाले कृतं भवति । अभिजितं फलापेक्षाराहित्येऽपि संपादितफलं भवति । अत एव शास्त्रन्यायाभिज्ञा आहुः—'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते' इति ।

अथैतस्य सत्रस्य प्रायणीयोदयनीयावहर्विशेषौ विधत्ते—

समुद्रं वा एते प्र प्लवन्ते ये संवत्सरमुपयन्ति यो वै
समुद्रस्य पारं न पश्यति न वै स तत उदेति संवत्सरो

**वै समुद्रस्तस्यैतत्पारं यदतिरात्रौ य एवं विद्वाꣳसः संवत्सरमुपयन्त्यनार्ता एवोदृचं गच्छन्ति,** इति ।

ये यजमानाः संवत्सरसत्रमुपक्रमन्त एते यजमानाः समुद्रमेव बाहुभ्यां तरितुमुद्युञ्जते । सत्रस्य समुद्रवदतिप्रभूतत्वात् । एवं सति यः पुरुषः समुद्रस्य पारं परतीरं न पश्यति स पुरुषः समुद्रादुद्गन्तुं न शक्नोति । अयं च संवत्सरस्तेन समुद्रेण समानः । तस्मादस्य समाप्तिपरिज्ञानाभावे तत उत्थातुमुत्साहो न भवेत् । तस्मात्समाप्तिरूपमहर्विज्ञेयम् । तस्य च समुद्रसमस्य संवत्सरस्य पारावारतीरभूतावतिरात्रौ । एतदभिज्ञाय यजमाना अनार्ता मनस्युद्वेगरहिता एवोदृचमुत्तमां समाप्तिसंबन्धिनीमृचं गच्छन्ति । तस्मादतिरात्रावुभावनुष्ठेयावित्यर्थः । यदि ब्रह्मवादिनो वदन्त्यतिरात्रः परम इत्यनुवाक एव प्रायणीयोऽतिरात्रो विहितः, तर्ह्युदयनीयातिरात्रेण सह निर्देष्टुमत्र पुनरुपन्यासः ।

तावेतावतिरात्रौ बहुधा प्रशंसति—

**इयं वै पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः पूर्वोऽपान उत्तरः प्ररोधनं पूर्व उदयनमुत्तरः,** इति ।

पूर्वः प्रायणीयोऽतिरात्रः प्राथम्यसाम्येन पृथिव्यादिरूपः । उदयनीयस्तु पश्चाद्भावित्वेन द्युलोकादिरूपः । प्ररोधनं लौकिकस्य वैदिकस्य वा व्यापारस्य प्रारम्भः ।

यावेतावतिरात्रौ सामान्येनोक्तौ तयोर्विशेषाकारेण स्वरूपं विधत्ते—

**ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै,** इति ।

योऽयमतिरात्रः स ज्योतिष्टोमरूपः । स च वैश्वानरेण दृष्टः । तदनुष्ठानेन स्वर्गमार्गे पुरस्ताज्ज्योतिर्दधते । तच्च स्वर्गप्रकाशनाय भवति ।

यदुक्तं सूत्रकारेण—'प्रायणीयमतिरात्रमुपेत्य चतुर्विꣳशमुक्थ्यमारम्भणीयमुपयन्ति' इति, तदिदं विधत्ते—

**चतुर्विꣳशः प्रायणीयो भवति चतुर्विꣳशतिरर्धमासाः संवत्सरः प्रयन्त एव संवत्सरे प्रति तिष्ठन्ति तस्य**

त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रय उभे एव संवत्सरस्य रूपे आप्नुवन्ति, इति।

यदेतदारम्भणीयमहस्तदेतत्पूर्वोक्तादतिरात्रादुत्तरभावित्वेऽपि वक्ष्यमाणेभ्योऽभिप्लवषडहावृत्तिरूपेभ्यो मासेभ्यः प्रथमभावित्वात्प्रायणीय इत्युच्यते। स चाहर्विशेषश्चतुर्विंशस्तोमयुक्तः कार्यः। तथा सति संख्यासाम्यादर्धमासद्वारा संवत्सरः संपद्यते। तत्संपत्तौ सत्यां प्रारभमाणा एव यजमानाः संवत्सरसत्रानुष्ठाने स्थिरा भवन्ति। किंचैतस्याह्न उक्थ्यरूपत्वादुक्थ्यस्य च पञ्चदशस्तोत्रयुक्तत्वादेकैकस्मिन्स्तोत्रे चतुर्विंशतिसंख्याकास्वृक्षु स्तोत्रीयासु सतीषु मिलित्वा षष्ट्युत्तरशतत्रयपरिमिताः स्तोत्रीया भवन्ति। एवं सति संवत्सरस्य यदिदं चतुर्विंशत्यर्धमासात्मकं रूपं यच्च षष्ट्युत्तरशतत्रयरात्र्यात्मकं रूपं ते उभे अपि रूपे संख्यासाम्येन प्राप्नुवन्ति।

अनन्तरभावीन्यहानि विधत्ते—

ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरन्ति, इति।

अनुष्ठितप्रायणीयारम्भणीयास्ते यजमानास्तत ऊर्ध्वं संस्थित्या अरिष्ट्यै सत्रसमाप्तेरविनाशायोत्तरैर्ज्योतिर्गौरायुरित्यादिभिरहोभिरनुतिष्ठेयुः। अत्र यानि पूर्वप्रपाठकविहितानि तेषां स्तुत्यर्थोऽनुवादः। यानि त्वविहितानि तेषामत्र विधिरिति विवेकः।

ज्योतिरादीनामभिप्लवषडहतां विधत्ते—

षडहा भवन्ति षड्वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्ति, इति।

ज्योतिर्गौरायुरायुर्गौर्ज्योतिरित्येवं षडहत्वम्।

उक्ते षडहे मध्यवर्त्यहर्द्वयं प्रशंसति—

गौश्चाऽऽयुश्च मध्यतः स्तोमौ भवतः संवत्सरस्यैव तन्मिथुनं मध्यतो दधति प्रजननाय, इति।

योऽयं गोष्टोमो यश्चाऽऽयुष्टोमस्तावुभौ षडहस्य मध्ये कर्तव्यौ। तत्तेन संवत्सरसत्रस्य मध्ये मिथुनं संपादयन्ति। तच्च प्रजननाय भवति।

षडहस्याऽऽद्यन्तावहर्विशेषौ प्रशंसति —

ज्योतिरभितो भवति विमोचनमेव तच्छन्दाꣳ-
स्येव तार्हिमोकं यन्त्यथो उभयतो-
ज्योतिषैव षडहेन सुवर्गं लोकं यन्ति, इति ।

षडहस्याऽऽद्यन्तयोर्ज्योतिष्टोमः कार्यः । तदेतदादौ ज्योतिष्टोममनुष्ठाय पुनरप्यन्ते ज्योतिष्टोमस्यानुष्ठानमुपक्रमे निरुद्धस्य विमोचनसमानं भवति । तेन ज्योतिर्गौरायुरित्येतत्त्रयरूपाणि च्छन्दांसि गायत्र्यादीन्येव विमोकं प्राप्नुवन्ति । अपि च पार्श्वद्वये ज्योतिर्युक्तेन द्वीपद्वयसमानेन षडहेन प्रकाशितं स्वर्गं सुखेन प्राप्नुवन्ति ।

अथ प्रश्नोत्तराभ्यां ज्योतिरादिकं प्रशंसति —

ब्रह्मवादिनो वदन्त्यासते केन यन्तीति देवयानेन
पथेति ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था गायत्री
त्रिष्टुब्जगती ज्योतिर्वै गायत्री गौस्त्रिष्टुगायुर्जगती
यदेते स्तोमा भवन्ति देवयानेनैव तत्पथा यन्ति, इति ।

ये यजमाना आसते सत्रमनुतिष्ठन्ति ते यजमानाः केन पथा स्वर्गं गच्छन्तीति ब्रह्मवादिनां प्रश्नः । तत्राभिज्ञो देवयानेन पथा गच्छन्तीत्युत्तरं ब्रूयात् । येन देवा यान्ति सोऽयं देवयानः पन्थाः । सोऽपि कीदृश इति चेच्छ्रूयताम्—गायत्र्यादीनि च्छन्दांस्येव मार्गसाधनत्वाद्देवयानः पन्था इत्युच्यन्ते । इह तु ज्योतिष्टोमादीन्येव गायत्र्यादीनि । तस्मादेतेषामनुष्ठानेन तत्तेनैव पथा गच्छन्ति ।

अत्र सर्वेष्वहःसु पृष्ठस्तोत्रे सामैक्यं विधत्ते —

समानꣳ साम भवति देवलोको वै
साम देवलोकादेव न यन्ति, इति ।

बृहदेव वा रथंतरमेव वा सर्वेष्वहःस्वेकमेव साम पृष्ठस्तोत्रे गायेत् । देवलोको हि पक्षपातराहित्येन सर्वसमत्वात्सामरूपः । अत एकविधेन साम्ना कदाचिदपि देवलोकान्न निर्गच्छन्ति ।

तस्य साम्न आधारभूतानामृचामेतेष्वहःसु भेदं विधत्ते—

अन्याअन्या ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देवलोकमभ्यारोहन्तो यन्ति, इति।

ऋचो हि मनुष्यलोकस्वरूपाः। साम्न आधारभूतत्वात्। यथा कर्मानुष्ठानद्वारा देवलोकस्याऽऽधारभूतो मनुष्यलोकस्तद्वत्। अन्यमन्यमिति पञ्चम्यर्थे द्वितीया। ऋचामन्यत्वे सत्यृग्रूपादन्यस्मादन्यस्मान्मनुष्यलोकाद्देवलोकमभ्यारोहन्तो यजमानाः सुखं प्राप्नुवन्ति। नानाविधकर्माधारत्वान्मनुष्यलोकस्य नानाविधत्वम्। यद्वाऽन्यमन्यं देवलोकं कर्मवैचित्र्येण फलवैचित्र्यमित्यर्थः

प्राकृतं साम बाधितुं सामान्तरं विधत्ते—

अभिवर्तो ब्रह्मसामं भवति सुवर्गस्य लोकस्याभिवृत्त्यै, इति।

ब्रह्मणः संबन्धि यत्साम तदभिवर्तनामकं कार्यम्। तच्च स्वर्गलोकस्याभितः प्राप्त्यै भवति।

अहरन्तरं विधत्ते—

अभिजिद्भवति सुवर्गस्य लोकस्याभिजित्यै, इति।

विषुवदाख्यं यत्प्रथममहस्तस्मात्पूर्वे स्वरसामाख्यास्त्रयोऽहर्विशेषाः तेभ्योऽपि पूर्वमभिजिदाख्यमेकमहः कर्तव्यम्। तच्च स्वर्गाभिजयाय भवति।

पुनरप्यन्यदहर्विधत्ते—

विश्वजिद्भवति विश्वस्य जित्यै, इति।

विषुवदाख्यादह्न ऊर्ध्वभाविनो ये त्रयः स्वरसामानोऽहर्विशेषास्तेभ्य ऊर्ध्वं विश्वजिदाख्यमहः कर्तव्यम्। तच्च विश्वस्य जयाय भवति।

प्रतिमासमभिप्लवषडहेभ्य ऊर्ध्वं पृष्ठ्यं षडहमतिग्राह्यनियमं च विधत्ते—

मासिमासि पृष्ठान्युपयन्ति मासिमास्यति ग्राह्या गृह्यन्ते मासिमास्येव वीर्यं दधति मासां प्रतिष्ठित्यै, इति।

प्रतिमासानुष्ठानेन तस्मिंस्तस्मिन्मासि वीर्यं संपद्यते।

पृष्ठ्यस्य षडहस्य मासेषूर्ध्वभागं स्थानत्वेन विधत्ते—

उपरिष्टान्मासां पृष्ठान्युप यन्ति तस्मा-
दुपरिष्टादोषधयः फलं गृह्णन्ति।, इति ॥

अत्र मीमांसा ॥

सप्तमाध्यायस्य तृतीयपादे द्वितीयाधिकरणे चिन्तितम्—

गवामयन आद्येऽह्नि प्रायणीयेति नाम यत्।
तद्द्वादशाहिकादह्नो धर्मानतिदिशेन्न वा ॥
पूर्वन्यायेनातिदेशो मैवं प्रथमता द्वयोः।
अह्नोस्तुल्येति मुख्यत्वं समं नातिदिशे[1]दतः ॥

द्वादशाहे प्रथमस्याह्नः प्रायणीयमिति नाम। तथा गवामयनेऽपि तत्राग्निहोत्रनामन्यायेनातिदेश इति चेन्मैवम्। प्रायणीयशब्दप्रवृत्तिनिमित्तस्य प्राथम्यस्य द्वयोस्तुल्यत्वेनोभयत्र मुख्यत्वेऽप्यनेकार्थत्वाप्रसङ्गात्। प्रारभ्यायति गच्छति प्रवर्तते कर्मानेनेति प्रायणीयम्। अतो नैतन्नाम धर्मानतिदिशति।

तत्रैव चतुर्थपादे तृतीयाधिकरणेऽन्यच्चिन्तितम्—

गावामयनिके ज्योतिरादौ किं द्वादशाहिकी।
ऐकाहिकी वाऽनुमानादाद्योऽन्त्यो नामबाधनात् ॥

गवामयने ज्योतिर्गौरायुरिति ज्योतिरादिनामकास्त्रयो यागा विहिताः। तेषु द्वादशाहिकीतिकर्तव्यता युक्ता। कुतः। अनुमितवाक्येन तत्प्रापणात्। गवामयनं हि द्वादशाहविकृतिरिति वक्ष्यति। अतस्तत्संबन्धिलिङ्गेन तदीयधर्मप्रापकश्चोदकोऽनुमीयत इति प्राप्ते ब्रूमः-सन्ति ज्योतिरादिनामकास्त्रय एकाहाः। तदीयधर्मा गावामयनिकेषु ज्योतिरादिषु ज्योतिरादिभिस्त्रिभि[2]स्त्रिभिर्नामभिः प्राप्ताः। नाम चाऽऽनुमानिकाच्चोदकात्प्रबलं, प्रत्यक्षश्रु[3]तत्वात्। अतश्चोदकस्य बाधितत्वादेतेष्वैकाहिकीतिकर्तव्यता ग्राह्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

१ क. ख. घ. ङ. °शेत्ततः। २ ख. °भिर्ना°। ३ क ख घ ङ. °श्रुतित्वा°।

( अथ सप्तमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

गावो वा एतत्सत्रमासताशृङ्गाः सतीः शृङ्गाणि सिषासन्तीस्तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामाव तं काममरुत्स्महि येन कामेन न्यषदामेति तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वाऽऽसामहा एवेमौ द्वादशौ मासौ संवत्सरꣳ संपाद्योत्तिष्ठामेति तासाम् ( १ ) द्वादशे मासि शृङ्गाणि प्रावर्तन्त श्रद्धया वाऽश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्ध्नुवन्याश्च शृङ्गाण्यसन्वन्याश्चोर्जमवारुन्धतर्ध्नोति दशसु मास्सूत्तिष्ठन्नृध्नोति द्वादशसु य एवं वेद पदेन खलु वा एते यन्ति विन्दति खलु वै पदेन यन्तद्वा एतदृद्धमयनं तस्मादेतद्गोसनि ( २ ) ॥

( तिष्ठामेति तासां तस्माद्द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( संवत्सरसत्रस्य दशमाससाध्यप्रयोगेण सह विकल्पकथनम् )

( अथ सप्तमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

गावः । वै । एतत् । सत्रम् । आसत । अशृङ्गाः । सतीः । शृङ्गाणि । सिषासन्तीः । तासाम् । दश । मासाः । निषण्णा इति नि-सन्नाः । आसन् । अथ । शृङ्गाणि । अजायन्त । ताः । अब्रुवन् । अरात्स्म । उदिति । तिष्ठाम । अवेति । तम् । कामम् । अरुत्स्महि । येन । कामेन । न्यषदामेति नि-असदाम । इति । तासाम् । उ । तु । वै । अब्रुवन् । अर्धाः । वा । यावतीः । वा । आसामहै । एव । इमौ । द्वादशौ । मासौ । संवत्सरमिति सं-वत्सरम् । संपाद्येति सं-पाद्य । उदिति । तिष्ठाम । इति । तासाम् ( १ )। द्वादशे । मासि । शृङ्गाणि । प्रेति । अवर्तन्त । श्रद्धयेति श्रत्-धया । वा । अश्रद्धयेत्यश्रत्-धया । वा । ताः । इमाः । याः । तूपराः । उभय्यः । वाव । ताः । आर्ध्नुवन् । याः । च । शृङ्गाणि । असन्वन् । याः । च । ऊर्जम् । अवारुन्धतेत्यव-अरुन्धत । ऋध्नोति । दशस्विति दश-सु । मासु । उत्तिष्ठन्नित्युत्-तिष्ठन् । ऋध्नोति । द्वादशस्विति द्वादश-सु । यः । एवम् । वेद । पदेन । खलु । वै । एते । यन्ति । विन्दति । खलु । वै । पदेन । यन् । तत् ।

वै । एतत् । ऋद्धम् । अयनम् । तस्मात् । एतत् । गोस-
नीतिं गो-सनिं ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रथमेऽनुवाके गवामयननामकं संवत्सरसत्रं कैश्चिद्विशेषैः सह विहितम्। सोमयागा द्विविधाः—आवृत्ता अनावृत्ताश्च। ते चानावृत्ता एकाहाः। आवृत्ता अपि द्विविधाः—अहीनरूपाः सत्ररूपाश्च। द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीनाः। एकादशरात्रद्वादशरात्रौ तु द्विविधौ—अहीनरूपौ सत्ररूपौ च। त्रयोदशरात्रमारभ्योपरितनानि सत्राण्येव। तान्यपि द्विविधानि—रात्रिसत्रा-ण्ययनात्मकसत्राणि च। तत्र शतरात्रपर्यन्तानि रात्रिसत्राणि। संवत्सरसत्रमार-भ्योपरितनान्ययनरूपाणि। तेषां च सर्वेषां प्रकृतिभूतमिदं गवामयनम्। तस्य च संवत्सरकालसाध्यः प्रयोगः पूर्वानुवाकेऽभिहितः। अथ द्वितीये दश-माससाध्येन प्रयोगेण सह विकल्पोऽभिधीयते।

तमेतं विधातुं पूर्वोक्तमेवार्थवादं कस्यचिद्विशेषस्य विवक्षया पुनः पठति—

गावो वा एतत्सत्रमासताशृङ्गाः सतीः शृङ्गाणि सिषासन्तीस्तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामाव तं काममरुत्स्महि येन कामेन न्यषदामेति, इति।

पुरा शृङ्गरहिताः सत्यो गावः शृङ्गाणि सिषासन्तीः सनितुं लब्धुमिच्छन्त्य एतदुच्यमानं सत्रमन्वतिष्ठन्। तासां गवां दश मासा अनुष्ठिता अभवन्। अथास्मिन्काले शृङ्गाण्युत्पन्नानि। ताश्चोत्पन्नशृङ्गाः परस्परमिदमब्रुवन्—येन शृङ्गविषयेण कामेन न्यषदाम सत्रानुष्ठानार्थं वयमेकत्र स्थाने निषण्णास्तं शृङ्ग-विषयं काममरुत्स्महि वयं संपादितवत्यः। एवमुक्त्वा काश्चिद्गावः कृतार्थ-बुद्ध्या सत्रादुत्थिताः। ता उदतिष्ठन्निति पूर्वस्मिन्नर्थवादे श्रवणात्।

---

१ ख. °रमा°।

तत्रैव यदन्यदुक्तम्—'अथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्' इति, तत्र विवक्षितं विशेषं दर्शयति—

तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वाऽऽसामहा एवेमौ द्वादशौ मासौ संवत्सरꣳ संपाद्योत्तिष्ठामेति तासां द्वादशे मासि शृङ्गाणि प्रावर्तन्त श्रद्धया वाऽश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्ध्नुवन्याश्च शृङ्गाण्यसन्वन्याश्चोर्जमवारुन्धत, इति।

या गावः सत्रमनुतिष्ठन्ति तासामु त्वै तासामेव मध्ये जातशृङ्गासूत्थाय गतास्ववशिष्टा अर्धा वा काश्चिदेव गावः परस्परमेवमब्रुवन्। एतास्वर्धरूपासु गोषु मध्ये राशिद्वयम्। तत्र काश्चिच्छृङ्गकामाः। अपरास्तु किमेभिः शृङ्गैरूर्जमेवोदरपूरणक्षमां संपादयाम इति मन्यन्ते। एवं सति शृङ्गकामा अशृङ्गकामाश्च यावतीर्वा यावत्यः सन्ति ताः सर्वा अपि मिलित्वा परस्परमेवमब्रुवन्। किमब्रुवन्निति तदुच्यते—इमौ संवत्सरावशिष्टौ द्वादशसंख्यापूरणौ मासावासामहा एव सर्वदाऽप्यनुतिष्ठाम। ततः संवत्सरं पूरयित्वा पश्चादुत्तिष्ठामेति। तासां संवत्सरं पूरयन्तीनां गवां मध्ये यासां शृङ्गश्रद्धाऽस्ति तासां तयैव श्रद्धया द्वादशे मासि शृङ्गाण्युत्पन्नानि। यासां तु श्रद्धा नास्ति ता अश्रद्धयैवेमाः संपन्ना असंपन्नशृङ्गाः। या लोके तूपराः शृङ्गरहिता दृश्यन्ते। एवं सति या गावः शृङ्गाण्यलभन्त, याश्चान्यास्तच्छ्रद्धारहिताः स्वापेक्षितामूर्जमेवालभन्त, ता उभयविधा अपि स्वस्वप्रयोजनसिद्ध्या समृद्धिं गताः। अत्र दशमासानुष्ठानेन शृङ्गमात्रम्। द्वादशमासानुष्ठानेन रमणीयशृङ्गत्वं, कर्मभूयस्त्वात्फलभूयस्त्वमिति न्यायात्।

तदेवमर्थवादेन दशमासानुष्ठानं द्वादशमासानुष्ठानं च प्रशस्य विकल्पितं पक्षद्वयं विधत्ते—

ऋध्नोति दशसु मासूत्तिष्ठन्नृध्नोति द्वादशसु य एवं वेद, इति।

यो यजमानः प्रकारद्वयं वेत्ति सोऽयं स्वेच्छयाऽन्यतरं प्रकारमनुतिष्ठन्समृद्धिं प्राप्नोति।

( पृष्ठ्यषडहविषयविकल्पाभिधानम् )

ननु द्वादशसु मासेषु संपूर्णानुष्ठानत्वादस्तु फलम्। दशमासपक्षे तु कथ-मित्याशङ्क्योपपादयति—

पदेन खलु वा एते यन्ति विन्दति खलु वै पदेन यन्, इति।

एते दशमासानुष्ठायिनो यजमानाः कालाल्पत्वेऽपि पदेन खलु वै यन्ति शास्त्रीयेण मार्गेणानुतिष्ठन्ति। लोकेऽपि पदेन यत्राजमार्गेण गच्छन्पुरुषः स्वल्पस्खलनेऽपि ग्रामप्राप्तिं लभत एव। तद्वदत्रापि फलप्राप्तिर्युक्ता।

उपपादितं पक्षद्वयमुपसंहरति—

तद्वा एतदृद्धमयनं तस्मादेतद्गोसनि, इति॥

यदेतद्गवामयनं तद्यदि दशसु मासेषु समाप्यते, यदि वा द्वादशसु, सर्वथाऽप्यृद्धं फलप्रदमेव। यस्मादयनस्य महिमा भूयांस्तस्मादेतदयनं गोसनि गवां तिर्यग्जातीनामप्यभिमतलाभहेतुः। किमु वक्तव्यं विशिष्टब्राह्मणानामित्यभिप्रायः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः )

---

प्रथमे मासि पृष्ठान्युप यन्ति मध्यम उप यन्त्युत्तम उप यन्ति तदाहुर्यां वै त्रिरेकस्याह्न उपसीदन्ति दह्रं वै साऽपराभ्यां दोहाभ्यां दुहेऽथ कुतः सा धोक्ष्यते यां द्वादश कृत्व उपसीदन्तीति संवत्सरꣳ संपाद्योत्तमे मासि सकृत्पृष्ठान्युपेयु-स्तद्यजमाना यज्ञं पशूनव रुन्धते समुद्रं वै ( १ )

एतेऽनवारमपारं प्र प्लवन्ते ये संवत्सर-
मुपयन्ति यद्बृहद्रथंतरे अन्वर्जेयुर्यथा मध्ये समुद्रस्य
प्लवमन्वर्जेयुस्तादृक्तदनुत्सर्गं बृहद्रथंतराभ्यामित्वा
प्रतिष्ठां गच्छन्ति सर्वेभ्यो वै कामेभ्यः संधिर्दुहे
तद्यजमानाः सर्वान्कामानव रुन्धते ( २ ) ॥

( समुद्रं वै चतुस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ सप्तमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

प्रथमे । मासि । पृष्ठानि । उपेति । यन्ति । मध्यमे । उपेति । यन्ति । उत्तम इत्युत्-तमे । उपेति । यन्ति । तत् । आहुः । याम् । वै । त्रिः । एकस्य । अह्नः । उप-सीदन्तीत्युप-सीदन्ति । दह्नम् । वै । सा । अपराभ्याम् । दोहाभ्याम् । दुहे । अथ । कुतः । सा । धोक्ष्यते । याम् । द्वादश । कृत्वः । उपसीदन्तीत्युप-सीदन्ति । इति । संव-त्सरमिति सं-वत्सरम् । संपाद्येति सं-पाद्य । उत्तम इत्युत्-तमे । मासि । सकृत् । पृष्ठानि । उपेति । इयुः । तत् । यजमानाः । यज्ञम् । पशून् । अवेति । रुन्धते । समुद्रम् । वै ( १ ) । एते । अनवारम् । अपारम् । प्रेति । प्लवन्ते ।

ये । संवत्सरमिति सं—वत्सरम् । उपयन्तीत्युप—यन्ति । यत् । बृहद्रथंतरे इति बृहत्—रथंतरे । अन्वर्जैयुरित्यनु—अर्जैयुः । यथा । मध्ये । समुद्रस्य । प्लवम् । अन्वर्जैयुरित्यनु—अर्जैयुः । तादृक् । तत् । अनुत्सर्गमित्यनुत्—सर्गम् । बृहद्रथंतराभ्यामिति बृहत्—रथंतराभ्याम् । इत्वा । प्रतिष्ठामिति प्रति—स्थाम् । गच्छन्ति । सर्वेभ्यः । वै । कामेभ्यः। संधिरिति सं—धिः । दुहे । तत् । यजमानाः । सर्वान् । कामान् । अवेति । रुन्धते ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीये दशमासद्वादशमासविकल्पोऽभिहितः । अथ तृतीये पृष्ठ्यषडहविषयो विकल्पोऽभिधीयते ।

यत्पूर्वं "त्रिहितं मासिमासि पृष्ठान्युपयन्ति" इति, तत्र पक्षान्तरं विधत्ते—

प्रथमे मासि पृष्ठान्युप यन्ति मध्यम उप यन्त्युत्तम उप यन्ति, इति।

सर्वेषु मासेषु पृष्ठ्यः षडहो नानुष्ठेयः, किंतु प्रथममध्यमोत्तमेषु त्रिष्वेव मासेष्वित्ययमेकः पक्षः ।

पुनरपि पक्षान्तरं विधत्ते—

तदाहुर्यां वै त्रिरेकस्याह्न उपसीदन्ति दह्रं वै साऽपराभ्यां दोहाभ्यां दुहेऽथ कुतः सा धोक्ष्यते यां

द्वादश कृत्व उपसीदन्तीति संवत्सरꣳ संपाद्योत्तमे मासि सकृत्पृष्ठान्युपेयुस्तद्यजमाना यज्ञं पशूनव रुन्धते, इति ।

लोके दोग्धारः पुरुषा एकस्याह्नो मध्ये यां गां दोग्धुं त्रिवारं प्राप्नुवन्ति सा गौः प्रथमपर्याये प्रभूतं क्षीरं प्रयच्छति । अपराभ्यां द्वितीयतृतीयदोहनपर्यायाभ्यां दहं वै दुहेऽल्पमेव क्षीरं दोग्धि । एवं सति यां गामेकस्मिन्नह्नि द्वादशकृत्वो दोग्धुमुपयन्ति सा गौः कुतो धोक्ष्यते । नहि क्षीराभावे दोहनमुचितम् । तस्माद्द्वोसमानस्य पृष्ठ्यषडहस्यापि मासत्रयानुष्ठानमनुचितम् । किमु वक्तव्यं द्वादशमासानुष्ठानेऽप्यनुचितत्वमित्येवम् । तदाहुस्तस्मिन्पृष्ठ्यषडहविषयेऽभिज्ञाः कथयन्ति । तस्मात्संवत्सरमनुष्ठायान्ते मासि सकृदेव पृष्ठ्यः षडहोऽनुष्ठेयः । इतरेषु तु मासेषु पञ्चमेनाभिप्लवषडहेनैव मासपूरणं कर्तव्यम् । तथा सति यजमानाः पृष्ठ्यषडहस्य ससारत्वाद्यज्ञं संपूर्णं प्राप्नुवन्ति ।

यत्पूर्वं विहितं "समानꣳ साम भवति" इति तदेतदेवात्र विशेषाकारेण विधत्ते—

समुद्रं वा एतेऽनवारमपारं प्र प्लवन्ते ये संवत्सरमुपयन्ति यद्बृहद्रथंतरे अन्वर्जेयुर्यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक्तदनुत्सर्गं बृहद्रथंतराभ्यामित्वा प्रतिष्ठां गच्छन्ति सर्वेभ्यो वै कामेभ्यः संधिर्दुहे तद्यजमानाः सर्वान्कामानव रुन्धते, इति ॥

पारावारे परावाँची तीरे । ये यजमानाः संवत्सरसत्रमनुतिष्ठन्ति एते तीरद्वयरहितं समुद्रं बाहुभ्यां तरितुमिच्छन्ति, तच्चाशक्यम् । यदि तत्र बृहद्रथंतरे सामनी अनुक्रमेण पृष्ठस्तोत्रे संपादयेयुस्तदानीं यथा समुद्रस्य मध्ये तरणसाधनं प्लवं संपादयेयुस्तादृक्तद्भवति । तस्मादनुत्सर्गं कदाचिदप्यपरित्यज्य बृहद्रथंतराभ्यामित्वा स्तोत्रं प्राप्य प्रतिष्ठां यज्ञसमाप्तिं गच्छन्ति । अन्यदीयेनापि वत्सेन दोग्धुं शक्या गौः संधिरित्युच्यते । सा च संधिः सर्वेभ्यः कामेभ्यो दुहे यथा यथा क्षीरमपेक्षितं तथा तथा यं कंचिद्वत्समादाय दोग्धुं शक्यते । तत्तथा सत्यत्रापि यजमाना अन्यदीयाभ्यां प्रकृतिगताभ्यां बृहद्रथंतराभ्यां तत्तदिने प्रयुज्यमानाभ्यां सर्वान्कामान्प्राप्नुवन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

———

( अथ सप्तमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः )

समान्यं ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेव न यन्त्यन्यदन्यत्साम भवति देवलोको वै साम देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति जगतीमग्र उप यन्ति जगतीं वै छन्दाꣳसि प्रत्यवरोहन्त्याग्रयणं ग्रहो बृहत्पृष्ठानि त्रयस्त्रिꣳशꣳ स्तोमास्तस्माज्ज्यायाꣳसं कनीयान्प्रत्यवरोहति वैश्वकर्मणो गृह्यते विश्वान्येव तेन कर्माणि यजमाना अव रुन्धत आदित्यः ( १ ) गृह्यत इयं वा अदितिरस्यामेव प्रति तिष्ठन्त्यन्योन्यो गृह्येते मिथुनत्वाय प्रजात्या अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्त एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शान्तिः ( २ ) ॥

( आदित्यस्तस्यैव द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ सप्तमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

समान्यः । ऋचः । भवन्ति । मनुष्यलोक इति मनुष्य-लोकः । वै । ऋचः । मनुष्यलोकादिति मनुष्य-लोकात् । एव । न । यन्ति । अन्यदन्यदित्यन्यत्-अन्यत् । साम । भवति । देवलोक इति देव-लोकः । वै । साम । देवलोकादिति देव-लोकात् । एव । अन्यमन्यमित्यन्यम्-अन्यम् । मनुष्यलोकमिति मनुष्य-लोकम् । प्रत्यवरोहन्त इति प्रति-अवरोहन्तः । यन्ति । जगतीम् । अग्रे । उपेति । यन्ति । जगतीम् । वै । छन्दाꣳसि । प्रत्यवरोहन्तीति प्रति-अवरोहन्ति । आग्रयणम् । ग्रहाः । बृहत् । पृष्ठानि । त्रयस्त्रिꣳशमिति त्रयः-त्रिꣳशम् । स्तोमाः । तस्मात् । ज्यायाꣳसम् । कनीयान् । प्रत्यवरोहतीति प्रति-अवरोहति । वैश्वकर्मण इति वैश्व-कर्मणः । गृह्यते । विश्वानि । एव । तेन । कर्माणि । यजमानाः । अवेति । रुन्धते । आदित्यः ( १ ) । गृह्यते । इयम् । वै । अदितिः । अस्याम् । एव । प्रतीति । तिष्ठन्ति । अन्योन्य इत्यन्यः-अन्यः । गृह्येते इति । मिथुनत्वायेति मिथुन-त्वाय । प्रजात्या इति प्र-जात्यै । अवान्तरमित्यव-अन्तरम् । वै ।

दशरात्रेणेति दश—रात्रेण । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । यत् । दशरात्र इति दश—रात्रः । भवति । प्रजा इति प्र—जाः । एव । तत् । यजमानाः । सृजन्ते । एताम् । ह । वै । उदङ्कः । शौल्बायनः । सत्रस्य । ऋद्धिम् । उवाच । यत् । दश-रात्र इति दश—रात्रः । यत् । दशरात्र इति दश—रात्रः । भवति । सत्रस्य । ऋद्ध्यै । अथो इति । यत् । एव । पूर्वेषु । अहःस्वित्यहः—सु । विलोमेति वि—लोम । क्रियते । तस्य । एव । एषा । शान्तिः ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीये पृष्ठ्यषडहविषयप्रकारविशेषोऽभिहितः । अथ चतुर्थ उत्तरे पक्षसि प्रकारविशेषोऽभिधीयते । द्वे हि संवत्सरसत्रस्य पक्षसी । एतच्चान्यत्र समाम्नातम्—'यथा शालायै पक्षसी । एवꣳ संवत्सरस्य पक्षसी' इति । तत्र प्रथमषण्मासात्मके पूर्वस्मिन्पक्षसि सामैक्यमृचां नानात्वं [च] पूर्वमभिहितम् । इदानीं द्वितीयषण्मासात्मक उत्तरस्मिन्पक्षसि पूर्ववैपरीत्येन ऋगैक्यं सामनानात्वं चाभिधीयते ।

तत्राऽऽदावृगैक्यं विधत्ते—

समान्य ऋचो भवन्ति मनुष्यलोको
वा ऋचो मनुष्यलोकादेव न यन्ति, इति।

मनुष्यलोके हि कर्म कृत्वा पश्चाद्देवलोकं प्राप्नुवन्ति । एवमाधारभूतामृचमभ्यस्य पश्चात्तस्यां साम गायन्ति । तस्मादृचो मनुष्यलोकस्वरूपाः । ताश्च

समान्य एकरूपाः कर्तव्याः। एकस्मिन्नहनि या ऋचस्ता एवान्यस्मिन्प्रयोक्तव्याः। एवं सति ऋगात्मकान्मनुष्यलोकात्कदाचिदपि नापगच्छन्ति। अपत्यादिसंतानाविच्छेदात्।

अथ सामनानात्वं विधत्ते—

अन्यदन्यत्साम भवति देवलोको वै साम देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति, इति।

साम्नः पश्चाद्भावित्वसाम्येन देवलोकत्वम्। तादृशं च साम पूर्वस्मिन्दिने यद्भवति ततोऽन्यदुत्तरस्मिन्नहनि कर्तव्यम्। लोकेऽपि देवलोकान्निर्गच्छन्तः पुरुषा अन्यमन्यं मनुष्यलोकप्रदेशं गच्छन्ति। यद्वाऽन्यमन्यमिति पञ्चम्यर्थे द्वितीया। अन्यस्मादन्यस्माद्देवलोकात्कर्मफलानां तारतम्योपेतत्वेन विविधत्वाद्यदा तदा विलक्षणाद्देवलोकात्प्रत्यवरोहन्तो यजमाना मनुष्यलोकं प्राप्नुवन्तीत्यर्थः।

विशेषान्तरं विधत्ते—

जगतीमग्र उप यन्ति जगतीं वै छन्दाᳪंसि प्रत्यवरोहन्ति, इति।

पूर्वस्मिन्पक्षसि गायत्री प्रथममनुष्ठिता। उत्तरस्मिंस्तु जगती प्रथममनुष्ठेया। तथा सति जगतीं प्रत्यन्यानि सर्वाणि च्छन्दांस्यवरोहं प्राप्तानि भवन्ति।

पुनरपि विशेषत्रयं क्रमेण विधत्ते—

आग्रयणं ग्रहा बृहत्पृष्ठानि त्रयस्त्रिᳪंश स्तोमास्तस्माज्ज्यायाᳪंसं कनीयान्प्रत्यवरोहति, इति।

यथा गायत्र्यादिच्छन्दःसु पूर्वस्मात्पक्षसो विपर्ययेणोत्तरस्य पक्षसोऽनुष्ठानमेवं ग्रहसामस्तोमेष्वपि द्रष्टव्यम्। तत्राऽऽग्रयणोऽन्ते गृहीत इह त्वादौ। तथा सति ग्रहाः प्रत्यवरूढा भवन्ति। तथा तत्र रथंतरं पृष्ठं पूर्वदिनेऽनुष्ठितम्। इह तु बृहत्पृष्ठं पूर्वमनुष्ठेयम्। तथा सति सर्वाणि पृष्ठस्तोत्राणि प्रत्यवरूढानि भवन्ति। तथा तत्र त्रयस्त्रिंशस्तोमोऽन्तेऽनुष्ठितः। इह तु आदावनुष्ठेयः। तथा सति सर्वे स्तोमाः प्रत्यवरूढा भवन्ति। यस्मादत्र प्रौढस्त्रयस्त्रिंशः प्रथमभाव्यर्वाञ्चस्त्रिणवैकविंशादयः पश्चाद्भाविनस्तस्माल्लोकेऽपि ज्यायांसं पितरं पितामहं वा प्रति कनीयान्पुत्रः पौत्रो वा वाहनादश्वादेरवरोहति।

अथातिग्राह्यद्वयं विधत्ते—

वैश्वकर्मणो गृह्यते विश्वान्येव तेन कर्माणि यजमाना अव रुन्धत आदित्यो गृह्यत इयं वा अदितिरस्यामेव प्रति तिष्ठन्ति, इति ।

वाचस्पतिं विश्वकर्माणमित्यनेन गृह्यमाणोऽतिग्राह्यो वैश्वकर्मणः । तेनातिग्राह्येण सर्वाण्यपि कर्माणि यजमानाः प्राप्नुवन्ति । महीमू षु मातरमित्यनेन गृह्यमाणोऽतिग्राह्य आदित्यः । भूमेरदितित्वात् । तेनातिग्राह्येण भूमौ प्रतितिष्ठन्ति ।

अत्र सूत्रकारः-'वैश्वकर्मणमतिग्राह्याणामग्र्यं गृह्णाति वाचस्पतिं विश्वकर्माणमूतय इति श्वोभूत आदित्यं महीमू षु मातरमिति तावेवमेव व्यत्यासं गृह्णात्या महाव्रतात्[1]' इति, तमिमं व्यत्यासं विधत्ते—

अन्योन्यो गृह्येते मिथुनत्वाय प्रजात्यै, इति ।

अन्योन्यं एकैकः । यस्मिन्दिने वैश्वकर्मणो गृह्यते ततः परेद्युरादित्यः । ततोऽपि परेद्युर्वैश्वकर्मणः । पुनरपि परेद्युरादित्यः । एवं सति द्वित्वेन मिथुनरूपत्वात्प्रजोत्पत्तये संपद्यते ।

अथ द्वादशाहीयं दशरात्रं विधत्ते—

अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्त एताꣳ ह वा उदङ्कः शौल्वायनः सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शान्तिः, इति ॥

एतच्च वाक्यं "द्वे वाव देव सत्रे" इत्यत्र व्याख्यातम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ ख. 'यं क्रमेण वि ।

( अथ सप्तमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः। )

यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात्पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दाꣳसि वृङ्क्ते वृषण्वतीं प्रतिपदं कुर्यात्प्रातःसवनादेवैषामिन्द्रं वृङ्क्तेऽथो खल्वाहुः सवनमुखेसवनमुखे कार्येति सवनमुखात्सवनमुखादेवैषामिन्द्रं वृङ्क्ते संवेशायोपवेशाय गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवैषाम् ( १ ) छन्दाꣳसि वृङ्क्ते सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यमेतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन्यद्वै यज्ञः स्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यति रिच्यते तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यथो अतिरिक्तेनैवातिरिक्तमाप्त्वाऽव रुन्धते यदि मध्यंदिने दीर्येत वषट्कारनिधनꣳ साम कुर्युर्वषट्कारो वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनद्गमयन्ति यदि तृतीयसवन एतदेव ( २ ) ॥

( छन्दोभिरेवैषामवैकान्नाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

यदि । सोमौ । सꣳसुताविति सं—सुतौ । स्याताम् । महति । रात्रियै । प्रातरनुवाकमिति प्रातः—अनुवाकम् । उपाकुर्यादित्युप—आकुर्यात् । पूर्वः । वाचम् । पूर्वः । देवताः । पूर्वः । छन्दाꣳसि । वृङ्क्ते । वृषण्वतीमिति वृषण्—वतीम् । प्रतिपदमिति प्रति—पदम् । कुर्यात् । प्रातःसवनादिति प्रातः—सवनात् । एव । एषाम् । इन्द्रम् । वृङ्क्ते । अथो इति । खलु । आहुः । सवनमुखेसवनमुख इति सवनमुखे-सवनमुखे । कार्या । इति । सवनमुखात्सवनमुखादिति सवनमुखात्—सवनमुखात् । एव । एषाम् । इन्द्रम् । वृङ्क्ते । संवेशायेति सं—वेशाय । उपवेशायेत्युप—वेशाय । गायत्रियाः । त्रिष्टुभः । जगत्याः । अनुष्टुभ इत्यनु—स्तुभः । पङ्क्त्याः । अभिभूत्या इत्यभि—भूत्यै । स्वाहा । छन्दाꣳसि । वै । संवेश इति सं—वेशः । उपवेश इत्युप—वेशः । छन्दोभिरिति छन्दः—भिः । एव । एषाम् ( १ ) । छन्दाꣳसि । वृङ्क्ते । सजनीयमिति स—जनीयम् । शस्यम् । विहव्यमिति वि—हव्यम् । शस्यम् । अगस्त्यस्य । कयाशुभीयमिति कया—शुभीयम् । शस्यम् । एतावत् । वै । अस्ति । यावत् । एतत् । यावत् । एव । अस्ति । तत् । एषाम् ।

वृङ्क्ते । यदि । प्रातःसवन इति प्रातःसवने । कलशः । दीर्येत । वैष्णवीषु । शिपिविष्टवतीष्विति शिपिविष्ट-वतीषु । स्तुवीरन् । यत् । वै । यज्ञस्य । अतिरिच्यत इत्यति-रिच्यते । विष्णुम् । तत् । शिपिविष्टमिति शिपि-विष्टम् । अभि । अतीति । रिच्यते । तत् । विष्णुः । शिपिविष्ट इति शिपि-विष्टः । अतिरिक्त इत्यति-रिक्ते । एव । अतिरिक्तमित्यति-रिक्तम् । दधाति । अथो इति । अतिरिक्तेनेत्यति-रिक्तेन । एव । अतिरिक्तमित्यति-रिक्तम् । आप्त्वा । अवेति । रुन्धते । यदि । मध्यंदिने । दीर्येत । वषट्कारनिधनमिति वषट्कार-निधनम् । साम । कुर्युः । वषट्कार इति वषट्-कारः । वै । यज्ञस्य । प्रतिष्ठेति प्रति-स्था । प्रतिष्ठामिति प्रति-स्थाम् । एव । एनत् । गमयन्ति । यदि । तृतीयसवन इति तृतीय-सवने । एतत् । एव ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽनुवाक उत्तरे पक्षसि विशेषोऽभिहितः । अथ पञ्चमे मात्सर्येण प्रवृत्त-योर्द्वयोर्गवामयनयोर्विशेषोऽभिधीयते ।

---

१ क °ते-य° ।

तमिमं विधत्ते—

यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात्पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दाꣳसि वृङ्क्ते, इति।

यदि कदाचिद्यजमानसंघयोरुभयोः परस्परमात्सर्येण गवामयनगतौ सोमौ संभूयाभिषुतौ स्यातां तदानीं महारात्रे बुद्ध्वा प्रातरनुवाकनामकस्य शस्त्रस्योपाकरणं कुर्यात्। प्रातर्यावभ्यो देवेभ्य इत्यादिसंप्रैषमध्वर्युः पठेदित्यर्थः। यो यजमानसंघः पूर्वं प्रवृत्तः सन्नुपाकरोति सोऽन्यस्य संघस्य वागादीन्वृङ्क्ते आदत्ते।

तस्मिंश्च प्रातरनुवाक ऋग्विशेषं विधत्ते—

वृषण्वतीं प्रतिपदं कुर्यात्प्रातःसवनादेवैषामिन्द्रं वृङ्क्ते, इति।

प्रकृतावापो रेवतीः क्षयथा हि वस्व इत्येषा प्रथमा। इह तु तां परित्यज्य वृषन्शब्दवतीमन्यामृचं प्रथमां कुर्यात्। तथा सति स एवान्येषां यजमानानां देवतारूपमिन्द्रं प्रातःसवनादपनयति।

पक्षान्तरमाह—

अथो खल्वाहुः सवनमुखेसवनमुखे कार्येति सवनमुखात्सवनमुखादेवैषामिन्द्रं वृङ्क्ते, इति।

त्रयाणामपि सवनानां प्रारम्भे सेयं वृषण्वती पठनीयेत्येवं केचिदाहुः। तथा सति परेषां सर्वसवनारम्भादिन्द्रमपसारयति।

अथ तत्राभिभूतिहोममन्त्रान्पञ्च पठति—

संवेशायोपवेशाय गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा, इति।

संवेशाय गायत्र्यादीनां छन्दसां स्वकीययज्ञे सम्यक्प्रवेशाय। उपवेशाय प्रविष्टानां चात्र स्थिरावस्थितये। गायत्र्या अभिभूत्यै परकीयस्य गायत्री-

छन्दसोऽभिभवाय स्वाहुतमिदमस्तु। त्रिष्टुभ इत्यादिभिश्चतुर्भिः पदैरुत्तरे चत्वारो मन्त्रा भिद्यन्ते। तेषु संवेशायोपवेशायेत्येतदनुषञ्जनीयम्। प्रथममन्त्रे त्वभिभूत्यै स्वाहेत्येतदनुषज्यते।

मन्त्राणां तात्पर्यं व्याचष्टे—

छन्दाꣳसि वै संवेश उपवेशश्छन्दो-
भिरेवैषां छन्दाꣳसि वृङ्क्ते, इति।

योऽयं संवेशो यश्चोपवेशस्तावुभौ छन्दोविषयत्वाच्छन्दांस्येव। तथा सति स्वकीयैश्छन्दोभिरितरेषां छन्दांसि विनाशयति।

अथ शस्त्रविशेषान्विधत्ते—

सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्य-
स्य कयाशुभीयꣳ शस्यमेतावद्वा अस्ति
यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते, इति।

यो जात एव प्रथमो मनस्वानिति सूक्ते स जनास इन्द्र इत्येवं सजनशब्दस्य विद्यमानत्वात्तत्सूक्तं सजनीयम्। निष्केवल्यशस्त्र इन्द्रस्य नु वीर्याणीत्यस्य स्थाने सजनीयसूक्तं शंसनीयम्। ममाग्ने वर्चो विहवेष्वस्त्विति सूक्ते विहवशब्दसद्भावात्तद्विहव्यम्। तच्च महावैश्वदेवशस्त्र आ नो भद्रा इत्यस्य स्थाने शंसनीयम्। कया शुभा सवयस इत्येतत्सूक्तमगस्त्येन दृष्टत्वादगस्त्यस्य कयाशुभीयं मरुत्वतीयशस्त्रे जनिष्ठा उग्र इत्यस्य स्थाने शंसनीयम्। यद्वा तत्तच्छस्त्रादौ शस्त्रात्पुरा यथोक्तं सूक्तजातं पठनीयम्। एतदुक्तं सूक्तत्रयं यावदस्त्येतावदेव सारम्। एतत्पाठे तु परेषां यावत्सारमस्ति तत्सर्वं विनाशयति।

अथ नैमित्तिकं स्तोत्रविशेषं विधत्ते—

यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु
शिपिविष्टवतीषु स्तुवीरन्यद्वै यज्ञस्यातिरिच्यते
विष्णुं तच्छिपिविष्टमभ्यति रिच्यते तद्विष्णुः
शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यथो
अतिरिक्तेनैवातिरिक्तमाप्त्वाऽव रुन्धते, इति।

यदि प्रातःसवनकाले द्रोणकलशो दीर्येत विदीर्णो भवेत्तदानीं स्तोतारः सामगा विष्णुदेवताकासु शिपिविष्टशब्दयुक्तास्वृक्षु स्तुतिं कुर्युः। यज्ञस्य

संबन्धि यदङ्गमतिरिच्यते शास्त्रीयं क्रममुल्लङ्घ्य वर्तते तदङ्गं शिपिविष्टगुणविशिष्टं विष्णुमभिलक्ष्यातिरिक्तं भवति। पशवः शिपिरिति श्रुत्यन्तराच्छिपिशब्दः पशुवाची । तेषु स्वामित्वेन प्रविष्टः शिपिविष्टः । तच्चातिरिक्तमङ्गं शिपिविष्टो विष्णुरेव । तत्स्वामिकत्वात् । ततो वैष्णवीषु स्तुतौ[1] सत्यामतिरिक्तस्वामिन्येव विष्णावतिरिक्तमङ्गं स्थापयति । अपि चातिरिक्तस्वामिनैव विष्णुनाऽतिरिक्तमयथाशास्त्रमङ्गमाप्त्वा शास्त्रीयं कृत्वा सत्रफलं लभते ।

अथ द्वितीयतृतीयसवनयोर्विशेषं विधत्ते—

यदि मध्यंदिने दीर्येत वषट्कारनिधनꣳ साम कुर्युर्वषट्कारो वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनद्गमयन्ति यदि तृतीयसवन एतदेव, इति ॥

द्वितीयतृतीयसवनयोर्द्रोणकलशे विदीर्णे सति वषट्कारनिधनं साम कुर्युः । निधनं साम्नः पञ्चमो भागः । वषट्शब्दो निधनं सामभक्तिविशेषो यस्य साम्नस्तादृशं साम कुर्युः । वषट्कारो हि हविष्प्रदानसाधनत्वाद्यज्ञस्य समाप्तिस्थानम् । तद्युक्तसामगानेनैव प्रतिष्ठामेवैनत्सत्रं गमयन्ति अवैकल्येन समापयन्ति । यदि तृतीयसवने कलशो भिद्येत तदाऽप्येतदेव । अत्र यत्साम तस्यैतदेव वषट्कारनिधनमेव साम कुर्युः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

षडहैर्मासान्त्संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्त्संपश्यन्त्यर्धमासैर्मासान्त्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान्त्संपश्यन्त्यमावास्यया मासान्त्संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान्त्संपश्यन्ति पौर्णमास्या

---

[1] क. घ. ङ च. 'तौ तस्याम॰' ।

मासान्त्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्ति यो वै पूर्ण आसिञ्चति परा स सिञ्चति यः पूर्णादुदचति ( १ ) प्राणमस्मिन्त्स दधाति यत्पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति संवत्सरायैव तत्प्राणं दधाति तदनु सत्रिणः प्राणन्ति यदहर्नोत्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ संवत्सरो वि पतेदार्तिमार्छेयुर्यत्पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति संवत्सरायैव तदुदानं दधाति तदनु सत्रिण उत् ( २ ) अनन्ति नाऽऽर्तिमार्छन्ति पूर्णमासे वै देवानाꣳ सुतो यत्पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति वि वा एतद्यज्ञं छिन्दन्ति यत्षडहसंततꣳ सन्तमथाहरुत्सृजन्ति प्राजापत्यं पशुमा लभन्ते प्रजापतिः सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति यन्ति वा एते सवनाद्येऽहः ( ३ ) उत्सृजन्ति तुरीयं खलु वा एतत्सवनं यत्सांनाय्यं यत्सांनाय्यं भवति तेनैव सवनान्न यन्ति समुपहूय भक्षयन्त्येतत्सोमपीथा ह्येतर्हि यथायतनं वा एतेषाꣳ सवनभाजो देवता गच्छन्ति येऽहरुत्सृजन्त्यनुसवनं पुरोडाशान्निर्वपन्ति यथायतनादेव सवनभाजो देवता

अवं रुन्धतेऽष्टाकपालान्प्रातःसवन एकादशकपालान्माध्यंदिने सवने द्वादशकपालाश्स्तृतीयसवने छन्दाश्स्येवाऽऽप्त्वाऽवं रुन्धते वैश्वदेवं चरुं तृतीयसवने निर्वपन्ति वैश्वदेवं वै तृतीयसवनं तेनैव तृतीयसवनान्न यन्ति ( ४ ) ॥

( उदश्चत्युद्येऽहंराप्त्वा पञ्चदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

षडहैरिति षट्—अहैः । मासान् । संपाद्येति सं—पाद्य । अहः । उदिति । सृजन्ति । षडहैरिति षट्—अहैः । हि । मासान् । संपश्यन्तीति सं—पश्यन्ति । अर्धमासैरित्यर्ध—मासैः । मासान् । संपाद्येति सं—पाद्य । अहः । उदिति । सृजन्ति । अर्धमासैरित्यर्ध—मासैः । हि । मासान् । संपश्यन्तीति सं—पश्यन्ति । अमावास्ययेत्यमा—वास्यया । मासान् । संपाद्येति सं—पाद्य । अहः । उदिति । सृजन्ति । अमावास्ययेत्यमा—वास्यया । हि । मासान् । संपश्यन्तीति सं—पश्यन्ति । पौर्णमास्येति पौर्ण—मास्या । मासान् । संपाद्येति

सं-पार्य । अहः । उदिति । सृजन्ति । पौर्णमास्येति पौर्ण-मास्या । हि । मासान् । संपश्यन्तीति सं-पश्यन्ति । यः । वै । पूर्णे । आसिञ्चतीत्या-सिञ्चति । परेति । सः । सिञ्चति । यः । पूर्णात् । उदचतीत्युत्-अचति (१) । प्राणमिति प्र-अनम् । अस्मिन् । सः । दधाति । यत् । पौर्णमास्येति पौर्ण-मास्या । मासान् । संपाद्येति सं-पाद्य । अहः । उत्सृजन्तीत्युत्-सृजन्ति । संवत्सरायेति सं-वत्स-राय । एव । तत् । प्राणमिति प्र-अनम् । दधति । तत् । अन्विति । सत्रिणः । प्रेति । अनन्ति । यत् । अहः । न । उत्सृजेयुरित्युत्-सृजेयुः । यथा । दृतिः । उपनद्ध इत्युप-नद्धः । विपततीति वि-पतति । एवम् । संवत्सर इति सं-वत्सरः । वीति । पतेत् । आर्तिम् । एति । ऋच्छेयुः । यत् । पौर्णमास्येति पौर्ण-मास्या । मासान् । संपाद्येति सं-पाद्य । अहः । उत्सृजन्तीत्युत्-सृजन्ति । संवत्सरायेति सं-वत्सराय । एव । तत् । उदानमित्युत्-अनम् । दधति । तत् । अन्विति । सत्रिणः । उदिति (२) । अनन्ति । न । आर्तिम् । एति । ऋच्छन्ति । पूर्णमास इति पूर्ण-मासे । वै । देवानाम् । सुतः । यत् । पौर्णमास्येति पौर्ण-मास्या । मासान् । संपाद्येति सं-पाद्य । अहः । उत्सृजन्ती-त्युत्-सृजन्ति । देवानाम् । एव । तत् । यज्ञेन । यज्ञम् ।

प्रत्यवरोहन्तीति प्रति-अवरोहन्ति । वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । षडहसंततमिति षडह-संततम् । सन्तम् । अथ । अहः । उत्सृजन्तीत्युत्-सृजान्ति । प्राजापत्यमिति प्राजा-पत्यम् । पशुम् । एति । लभन्ते । प्रजापतिरिति प्रजा-पतिः । सर्वाः । देवताः । देवताभिः । एव । यज्ञम् । समिति । तन्वन्ति । यन्ति । वै । एते । सवनात् । ये । अहः ( ३ ) । उत्सृजन्तीत्युत्-सृजन्ति । तुरीयम् । खलु । वै । एतत् । सवनम् । यत् । सांनाय्यमिति सां-नाय्यम् । यत् । सांनाय्यमिति सां-नाय्यम् । भवति । तेन । एव । सवनात् । न । यन्ति । समुपहूयेति सम्-उप-हूय । भक्षयन्ति । एतत्सोमपीथा इत्येतत्-सोमपीथाः । हि । एतर्हि । यथायतनमिति यथा-आयतनम् । वै । एतेषाम् । सवनभाज इति सवन-भाजः । देवताः । गच्छन्ति । ये । अहः । उत्सृजन्तीत्युत्-सृजन्ति । अनुसवनमित्यनु-सवनम् । पुरोडाशान् । निरिति । वपन्ति । यथायतनादिति यथा-आयतनात् । एव । सवनभाज इति सवन-भाजः । देवताः । अवेति । रुन्धते । अष्टाकपालानित्यष्टा-कपालान् । प्रातःसवन इति प्रातः-सवने । एकादशकपालानित्येकादश-कपालान् । माध्यंदिने । सवने । द्वादशकपालानिति द्वादश-कपालान् । तृतीयसवन इति

तृतीय—सवने । छन्दांꣳसि । एव । आप्त्वा । अवेति । रुन्धते । वैश्वदेवमिति वैश्व—देवम् । चरुम् । तृतीयसवन इति तृतीय—सवने । निरिति । वपन्ति । वैश्वदेवमिति वैश्व—देवम् । वै । तृतीयसवनमिति तृतीय—सवनम् । तेन । एव । तृतीयसवनादिति तृतीय—सवनात् । न । यन्ति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

पञ्चमेऽनुवाके गवामयनप्रसङ्गेन सत्रविषये मात्सर्यविशेषोऽभिहितः । अथ षष्ठे गवामयनस्य गुणविकाररूप उत्सर्गोऽभिधीयते—

षडहैर्मासान्संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्त्संपश्यन्ति, इति ।

येऽभिप्लवषडहास्तैः पञ्चकृत्व आवृत्तैरेकं मासमनुष्ठायानन्तरे मासे प्रथमदिने कर्तव्यं ज्योतिराख्यमहरुत्सृजेयुः । यद्वा चतुर्भिरभिप्लवैरेकेन पृष्ठ्येन च मासं समाप्योत्तरमहरुत्स्रष्टव्यम् । यस्माल्लोकेऽपि पञ्चभिः षडहैस्त्रिंशद्दिनानि गणयित्वा सावनमासोऽयमिति निश्चिन्वन्ति ।

पक्षान्तरं विधत्ते—

अर्धमासैर्मासान्त्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान्त्संपश्यन्ति, इति ।

पूर्वस्मिन्पक्षे प्रायणीयारम्भणीयाख्यावहर्विशेषौ द्वौ परित्यज्य तृतीयदिने षडहस्याऽऽरम्भः । तदाऽऽरभ्य त्रिंशद्दिनात्मके सावनमासे गते सति तत ऊर्ध्व-

महरुत्स्रष्टव्यम् । इदानीं प्रायणीयदिनमारभ्य पञ्चदशदिनात्मकाभ्यां द्वाभ्यामर्धमासाभ्यामेकं मासं समाप्य तदनन्तरभाव्यहरुत्स्रष्टव्यम् । लोके हि द्वाभ्यामर्धमासाभ्यामेको मासो निष्पद्यत इत्येवमर्धमासैरेव मासस्वरूपं निश्चिन्वन्ति। तदिदं पक्षद्वयं सावनमासाभिप्रायम् ।

अथ चान्द्रमासाभिप्रायेण पक्षद्वयम् । तत्रैकं पक्षमाह—

अमावास्यया मासान्त्संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान्त्संपश्यन्ति, इति ।

चान्द्रमसदर्शिनः केचिदमावास्यया माससमाप्तिं निश्चिन्वन्ति । अतोऽत्रापि तथैव मासं समाप्य शुक्लप्रतिपदि यदहरनुष्ठेयं तत्परित्याज्यम् ।

चान्द्रमसमाश्रित्यैव पक्षान्तरमाह—

पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्ति, इति ।

शुक्लप्रतिपदमारभ्यामावास्यान्तश्चान्द्रो मास इत्यतीतः पक्षः । कृष्णप्रतिपदमारभ्य पौर्णमास्यन्त इत्ययं पक्षः । एतस्मिन्पक्षे कृष्णप्रतिपदि यदहः प्राप्तं तदुत्स्रष्टव्यम् ।

एतमेव पक्षं प्रशंसति—

यो वै पूर्ण आसिञ्चति परा स सिञ्चति यः पूर्णादुदचति प्राणमस्मिन्त्स दधाति यत्पौर्णमास्या मासान्त्संपाद्याहरुत्सृजन्ति संवत्सरायैव तत्प्राणं दधति तदनु सत्रिणः प्राणन्ति, इति ।

लोके हि यः कोऽपि पुरुषो घृतक्षीरादिना पूर्णे पात्रे पुनरप्युपरि तद्द्रव्यमासिञ्चति, स भूमौ पातयित्वा तद्द्रव्यं विनाशयति । यस्तु धीमान्पूर्णात्पात्रादुदचति स्वल्पमुद्धरति सोऽस्मिन्पात्रे प्राणरूपं वायुं दधाति । सति ह्यवकाशे वायुः संचरति । एवं सति यदि यजमानास्तत्तत्पौर्णमास्या तं तं मासं पूरयित्वा कृष्णप्रतिपदि कर्तव्यमहरुत्सृजेयुः, तदानीं संवत्सरसत्ररूपपुरुषार्थं प्राणवायुं तस्मिन्दिने स्थापयन्ति । तत्संवत्सरप्राणस्थापनमनु सत्रिणो यजमाना अपि श्वासनिरोधाभावेन जीवन्ति ।

अथ व्यतिरेकमुखेनै(णै)तमेव पक्षं प्रशंसति—

यदहर्नोत्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ सं-
वत्सरो वि पतेदार्तिमार्छेयुर्यत्पौर्णमास्या मासा-
न्त्संपाद्याहरुत्सृजन्ति संवत्सरायैव तदुदानं दधति
तदनु सत्रिण उदनन्ति नाऽऽर्तिमार्छन्ति, इति ।

उक्तन्यायेनाहन्यनुत्सृष्टे सत्युदकपूर्णो दृतिर्दृढं बध्यमानोऽपि यथा द्वैधी-
भावेन नश्यति, एवं संवत्सरात्मकः क्रतुर्विनश्येत्, यजमानाश्च मरणं प्राप्नुयुः ।
तत्परिहारार्थमहन्युत्सृष्टे सति तेनोत्सर्गेण संवत्सरसत्रस्याविनाशार्थं प्राण-
संचारस्थानीयमुदानं संपादयन्ति । तत्संपादनमनु सत्रिणोऽप्युदनन्ति उच्छ्व-
सन्ति ततो नाऽऽर्तिं गच्छन्ति ।

पुनः प्रकारान्तरेणैतमेव पक्षं प्रशंसति—

पूर्णमासे वै देवानाꣳ सुतो यत्पौर्णमास्या
मासान्त्संपाद्याहरुत्सृजन्ति देवानामेव
तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति, इति ।

पौर्णमास्यामेव प्रकृतौ देवानां संबन्धी सोमोऽभिषुतो भवति । अतः
पौर्णमास्यां मासं पूरयित्वा पश्चादहरुत्सर्गे सति देवानां संबन्धिना तेन पूर्व-
यागेन(ण) संयोजयितुमिमं यज्ञं यजमानाः प्रत्यवरोहन्ति ।

यस्मिन्दिने कर्तव्यमहरुत्सृज्यते तस्मिन्दिने कर्तव्यमन्यद्विधत्ते—

वि वा एतद्यज्ञं छिन्दन्ति यत्षडहसंततꣳ सन्तमथाह-
रुत्सृजन्ति प्राजापत्यं पशुमा लभन्ते प्रजापतिः
सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति, इति ।

षडहैरभिप्लवपृष्ठ्यरूपैः सातत्येन वर्तमानं यज्ञमुपेत्य यद्यहरुत्सृजेयुरेतेन
यज्ञं विच्छिन्दन्त्येव, तत्परिहाराय प्राजापत्यं पशुमालभेरन् । प्रजापतिश्च
स्रष्टृत्वात्सर्वदेवतात्मकः । अतो देवताभिरेव यज्ञं संततं कुर्वन्ति ।

अथ तत्र कर्तव्यान्तरं विधत्ते—

यन्ति वा एते सवनाद्येऽहरुत्सृजन्ति तुरीयं खलु वा एतत्सवनं यत्सानाय्यं यत्सांनाय्यं भवति तेनैव सवनान्न यन्ति, इति।

ये यजमाना अहरुत्सृजन्ति ते सवनादपगच्छन्ति। प्रातःसवनादेरनुष्ठानाभावात्। तत्र क उपाय इति तदुच्यते—यत्सांनाय्यमस्ति तत्प्रातःसवनादिभ्यस्त्रिभ्योऽप्यतिरिक्तचतुर्थसवनस्थानीयम्। अतः सांनाय्येऽनुष्ठिते सवनान्नापगच्छन्ति।

तस्य सांनाय्यशेषस्य सोमवदुपाह्वानपूर्वकं भक्षणं विधत्ते—

समुपहूय भक्षयन्त्येतत्सोमपीथा ह्येतर्हि, इति।

उत्सृष्टेऽह्नि मुख्यसोमाभावादेतस्मिन्काले यजमाना एतत्सोमपीथा एतदेव सांनाय्यशेषभक्षणं सोमपीथः सोमपानं येषां ते तादृशाः। तस्मात्सोमवत्परस्परमभिज्ञाप्य भक्षयेयुः।

पुनरपि कर्तव्यान्तरं विधत्ते—

यथायतनं वा एतेषाꣳ सवनभाजो देवता गच्छन्ति येऽहरुत्सृजन्त्यनुसवनं पुरोडाशान्निर्वपन्ति यथायतनादेव सवनभाजो देवता अव रुन्धते, इति।

ये यजमाना अहरुत्सृजन्ति, एतेषां संबन्धिन्यः सवनभाजो देवताः सवनाभावान्निराशाः सत्यः स्वस्वस्थानं गच्छन्ति। अतस्तन्मा भूदिति तत्तत्सवनस्थाने पुरोडाशान्निर्वपेयुः। तेन तत्तत्स्थानात्तास्ता देवताः प्राप्नुवन्ति।

तेषु पुरोडाशेषु विशेषं विधत्ते—

अष्टाकपालान्प्रातःसवन एकादशकपालान्माध्यंदिने सवने द्वादशकपालाꣳस्तृतीयसवने छन्दाꣳस्येवाऽऽप्त्वाऽव रुन्धते, इति।

अष्टत्वादिसंख्यासाम्याद्गायत्र्यादिच्छन्दःप्राप्तिः।

(अहरुत्सर्गविशेषाभिधानम्)

पुनरपि कर्तव्यान्तरं विधत्ते—

वैश्वदेवं चरुं तृतीयसवने निर्वपन्ति वैश्वदेवं वै तृतीयसवनं तेनैव तृतीयसवनान्न यन्ति, इति॥

तृतीयसवनस्य वैश्वदेवत्वमन्यत्र स्पष्टमाम्नातम्—'यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यंदिनꣳ सवनं विश्वेषां देवानां तृतीयसवनम्' इति। अतो वैश्वदेवचरुणा तृतीयसवनान्नापगच्छन्ति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः॥६॥

---

(अथ सप्तमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः)

---

उत्सृज्यां ३ नोत्सृज्या ३मिति मीमाꣳसन्ते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेत्यमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति ते त्वाव नोत्सृज्ये इत्याहुर्ये अवान्तरं यज्ञं भेजाते इति या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेष वै मासो विशर इति नाऽऽदिष्टम् (१) उत्सृजेयुर्यदाऽऽदिष्टमुत्सृजेयुर्यादृशे पुनः पर्याप्लावे मध्ये षडहस्य संपद्येत षडहैर्मासान्त्संपाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयुस्तदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेयुरैन्द्रं दधीन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वैश्वदेवं द्वादशकपालमग्नेर्वै वसुमतः प्रातःसवनं यदग्नये वसुमते पुरोडाशमष्टाकपालं

निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति ( २ ) सर्वनमष्टाभिरुप यन्ति यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्तीन्द्रस्य वै मरुत्वतो माध्यंदिन॰ सवनं यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति सवनमेकादशभिरुप यन्ति विश्वेषां वै देवानामृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वादशकपालं निर्वपन्ति देवता एव तद्भागिनीः कुर्वन्ति सवनं द्वादशभिः ( ३ ) उप यन्ति प्राजापत्यं पशुमा लभन्ते यज्ञो वै प्रजापतिर्यज्ञस्यानंनुसर्गायाभिवर्त इतः षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभिवर्तो ब्रह्मणैव तत्सुवर्गं लोकमभिवर्तयन्तो यन्ति प्रतिकूलमिव हीतः सुवर्गो लोक इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा । शिक्षा नो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहीत्यमुत आयता॰ षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति ( ४ ) ॥

( नाऽऽदिष्टं कुर्वन्ति द्वादशभिरिति विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

———

( अथ सप्तमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

---

उत्सृज्या३मित्युत्-सृज्या३म् । न । उत्सृज्या३मित्युत्-सृज्या३म् । इति । मीमाꣳसन्ते । ब्रह्मवादिन इति ब्रह्म-वादिनः । तत् । उ । आहुः । उत्सृज्यमित्युत्-सृज्यम् । एव । इति । अमावास्यायामित्यमा-वास्यायाम् । च । पौर्णमास्यामिति पौर्ण-मास्याम् । च । उत्सृज्यमित्युत्-सृज्यम् । इति । आहुः । एते इति । हि । यज्ञम् । वहतः । इति । ते इति । तु । वाव । न । उत्सृज्ये इत्युत्-सृज्ये । इति । आहुः । ये इति । अवान्तरमित्यव-अन्तरम् । यज्ञम् । भेजाते इति । इति । या । प्रथमा । व्यष्टकेति वि-अष्टका । तस्याम् । उत्सृज्यमित्युत-सृज्यम् । इति । आहुः । एषः । वै । मासः । विशर इति वि-शरः । इति । न । आदिष्टमित्या-दिष्टम् (१) । उदिति । सृजेयुः । यत् । आदिष्टमित्या-दिष्टम् । उत्सृजेयुरित्युत्-सृजेयुः । यादृशे । पुनः । पर्याप्लाव इति परि-आप्लावे । मध्ये । षडहस्येति षट्-अहस्य । संपद्येतेति सं-पद्येत । षडहैरिति षट्-अहैः । मासान् । संपाद्येति सं-पाद्य । यत् । सप्तमम् । अहः । तस्मिन् । उदिति । सृजेयुः । तत् ।

अग्नये । वसुमत इति वसु—मते । पुरोडाशम् । अष्टाकपाल-मित्यष्टा—कपालम् । निरिति । वपेयुः । ऐन्द्रम् । दधि । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपाल-मित्येकादश—कपालम् । वैश्वदेवमिति वैश्व—देवम् । द्वादशकपालमिति द्वादश—कपालम् । अग्नेः । वै । वसुमत इति वसु—मतः । प्रातःसवनमिति प्रातः—सवनम् । यत् । अग्नये । वसुमत इति वसु—मते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निर्वपन्तीति निः—वपन्ति । देवताम् । एव । तत् । भागिनीम् । कुर्वन्ति ( २ ) । सवनम् । अष्टाभिः । उपेति । यन्ति । यत् । ऐन्द्रम् । दधि । भवति । इन्द्रम् । एव । तत् । भाग-धेयादिति भाग—धेयात् । न । च्यावयन्ति । इन्द्रस्य । वै । मरुत्वतः । माध्यंदिनम् । सवनम् । यत् । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपालमित्येकादश—कपालम् । निर्वपन्तीति निः—वपन्ति । देवताम् । एव । तत् । भागिनीम् । कुर्वन्ति । सवनम् । एकादशभिरित्येकादश-भिः । उपेति । यन्ति । विश्वेषाम् । वै । देवानाम् । ऋभु-मतामित्यृभु—मताम् । तृतीयसवनमिति तृतीय—सवनम् । यत् । वैश्वदेवमिति वैश्व—देवम् । द्वादशकपालमिति द्वादश—कपालम् । निर्वपन्तीति निः—वपन्ति । देवताः । एव ।

तत् । भागिनीः । कुर्वन्ति । सवनम् । द्वादशभिरिति द्वादश—भिः ( ३ ) । उपेति । यन्ति । प्राजापत्यमिति प्राजा—पत्यम् । पशुम् । एति । लभन्ते । यज्ञः । वै । प्रजापतिरिति प्रजा—पतिः । यज्ञस्य । अननुसर्गायेत्यननु—सर्गाय । अभिवर्त इत्यभि—वर्तः । इतः । षट् । मासः । ब्रह्मसाममिति ब्रह्म—सामम् । भवति । ब्रह्म । वै । अभिवर्त इत्यभि—वर्तः । ब्रह्मणा । एव । तत् । सुवर्गमिति सुवः—गम् । लोकम् । अभिवर्तयन्त इत्यभि—वर्तयन्तः । यन्ति । प्रतिकूलमिति प्रति—कूलम् । इव । हि । इतः । सुवर्ग इति सुवः—गः । लोकः । इन्द्र । क्रतुम् । नः । एति । भर । पिता । पुत्रेभ्यः । यथा । शिक्ष । नः । अस्मिन् । पुरुहूतेति पुरु—हूत । यामनि । जीवाः । ज्योतिः । अशीमहि । इति । अमुतः । आयतामित्या—यताम् । षट् । मासः । ब्रह्मसाममिति ब्रह्म—सामम् । भवति । अयम् । वै । लोकः । ज्योतिः । प्रजेति प्र—जा । ज्योतिः । इमम् । एव । तत् । लोकम् । पश्यन्तः । अभिवदन्त इत्यभि—वदन्तः । एति । यन्ति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ सप्तमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठेऽनुवाकेऽहरुत्सर्ग उक्तः । सप्तमे तत्रैव विशेषोऽभिधीयते ।

तत्र निर्णयाय कंचिद्विचारं दर्शयति—

उत्सृज्यां ३ नोत्सृज्या ३मिति मीमा१ंसन्ते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेति, इति ।

उत्सर्गपक्षे यज्ञविच्छेदः, अनुत्सर्गपक्षे श्वासनिरोध इति दोषद्वयं मनसि निधाय ब्रह्मवादिनो विचारयन्ति । प्लुतिर्विचारार्था । तत्राभिज्ञाः प्राजापत्यपश्वादिभिर्विच्छेदस्य समाधातुं शक्यत्वाच्छ्वासनिरोधपरिहारायोत्सर्जनपक्षमेवात्र निश्चितवन्तः ।

तमेव दिनविशेषं दर्शयति—

अमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति, इति ।

एतयोरमावास्यापौर्णमास्योर्यज्ञवाहित्वं प्रसिद्धम् । तथाचान्यत्र स्पष्टमाम्नायते–' ते अब्रूतां वरं वृणावहा आवं देवानां भागधे असाव' इति । अतस्तयोस्तिथ्योर्यदहर्यदहः प्राप्तं तदुत्सृज्यमित्येषां निर्णयः ।

अथान्येषां पक्षमाह—

ते त्वाव नोत्सृज्ये इत्याहुर्ये अवान्तरं यज्ञं भेजाते इति, इति ।

ये पौर्णमास्यमावास्ये अवान्तरं यज्ञं भेजाते ते सर्वथैव नोत्सृज्ये । न केवलमेते प्रकृतिरूपं दर्शपूर्णमासकर्मैव निष्पादयतः, किं त्वयनादिगतमवान्तरं कर्मापि । तस्मात्तयोरुत्सर्गो न युक्त इति ।

तर्हि कस्मिन्दिनेऽहरुत्सर्ग इत्याशङ्क्य तेषां वचनं दर्शयति—

या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेष वै मासो विशर इति, इति ।

व्यष्टकाशब्देन कृष्णप्रतिपदुच्यते, राजसूयप्रकरणे व्युष्टिद्विरात्रे पौर्णमास्या सह निर्देशात् । तथा चाऽऽम्नायते—' पौर्णमास्यां पूर्वमहर्भवति ।

व्यष्टकायामुत्तरम्' इति । तस्यां व्यष्टकायां यत्प्राप्तमहस्तदुत्सृज्यम् । एष दिनविशेषो विशरो विशीर्णो मासः, पौर्णमास्यामेव पूर्वमासस्य समाप्तत्वात् । अतो मासविच्छेदाभावादत्र युक्त उत्सर्गः । तस्यास्तु व्यष्टकायाः प्राथम्यं कृष्णप्रतिपदादित्वादुपपद्यते ।

क्वचिदुत्सर्गमपवदति—

नाऽऽदिष्टमुत्सृजेयुः, इति ।

विषुवान्महाव्रतमिति नामग्रहणपुरःसरं विशेषाकारेण यदुच्यते तदादिष्टम् । तन्नोत्स्रष्टव्यम् । यत्तु षडहादिद्वारा सामान्यतः प्राप्तं तदेवोत्स्रष्टव्यम् । यद्वाऽनुत्सर्गपक्षमेष वै मास इत्यादिना स्त्री करोति । योऽयमुत्सर्गः स एष विशरो मासो भवति । अहरुत्सर्गे सति माससंपूर्तेरभावान्मासस्य विशीर्णत्वम् । इतिशब्दो हेत्वर्थः । यस्मान्मासवैकल्यं प्राप्नोति तस्मादादिष्टं शास्त्रेणोपदिष्टमहरेकमपि नोत्सृजेयुरितिपक्षान्तरस्वीकारः । अत एव सूत्रकारः पक्षद्वयस्वीकारमुपन्यस्योत्सर्गपक्षेऽनुष्ठेयविशेषमुदाजहार–' उत्सृज्यां ३ नोत्सृज्या ३मित्युक्तं यद्यहान्युत्सृजेयुः प्रथमं पृष्ठं संस्थाप्य ' इत्यादिना ।

तमिमं विशेषं वक्तुमत्राप्युत्सर्गं पाक्षिकं पुनर्विशदयति—

यदादिष्टमुत्सृजेयुर्यादृशे पुनः पर्याप्लावे
मध्ये षडहस्य संपद्येत षडहैर्मासान्त्सं-
पाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयुः, इति ।

यदि शास्त्रोपदिष्टस्याप्युत्सर्गापेक्षा तदानीमपि यादृशे यादृशमहर्ज्योतिरादिकं पुनः पुनः पर्यावर्तमाने षडहस्य मध्ये संपद्यते, तादृशमेवोत्सृजेत् । नतु प्रतिपदोक्तं विषुवदादिकमित्यध्याहरणीयम् । तस्मादभिप्लवपृष्ठ्याख्यैः षडहैर्मासं पूरयित्वा पृष्ठ्यषडहादूर्ध्वभावि यत्सप्तममहस्तस्मिन्नहनि प्राप्तं ज्योतिष्टोमगमुत्सृजेत् ।

इत्थमुत्सर्गं विशदीकृत्य तत्रानुष्ठेयं विशेषं विशदयति—

तदग्नये वसुमते पुरोडाशमष्टाकपालं निर्व-
पेयुरैन्द्रं दधीन्द्राय मरुत्वते पुरोडाश-
मेकादशकपालं वैश्वदेवं द्वादशकपालम्, इति ।

तत्तस्मिन्नुत्सर्गदिने चत्वारि हवींषि निर्वपेयुः ।

तत्र प्रथमं हविः प्रशंसति—

अग्नेर्वै वसुमतः प्रातःसवनं यदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति सवनमष्टाभिरुप यन्ति, इति।

देवतां वसुमन्तमग्निं, कपालगताष्टत्वसंख्यया गायत्रीद्वारा सवनप्राप्तिः। द्वितीयं हविः प्रशंसति—

यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्ति, इति।

अथ तृतीयं हविः प्रशंसति—

इन्द्रस्य वै मरुत्वतो माध्यंदिनꣳ सवनं यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति सवनमेकादशाभिरुप यन्ति, इति।

यथा वसुमानग्निः प्रातःसवनस्य स्वामी तथा मरुत्वानिन्द्रो माध्यंदिनस्य सवनस्य स्वामी। वसुमतोऽग्नेस्तत्स्वामित्वं श्रुत्यन्तरद्वयादवगन्तव्यम्—'तꣳ स्तृतं देवतास्त्रेधा व्यगृह्णत, अग्निः प्रातःसवनम्, इन्द्रो माध्यंदिनꣳ सवनं, विश्वे देवास्तृतीयसवनम्' इत्येका श्रुतिः। 'यद्वसूनां प्रातःसवनम्' इत्यपरा श्रुतिः। यस्त्विन्द्रो माध्यंदिनसवनस्वामी स तु मरुत्वान्। 'इन्द्र मरुत्व इह पाहि सोमम्' इति श्रुत्यन्तरात्। तत्राग्नेर्यथा प्रथमेन हविषा भागित्वमेवमिन्द्रस्याप्यनेन हविषा भागित्वम्। कपालगतैकादशसंख्यया त्रिष्टुब्द्वारा सवनप्राप्तिः।

अथ चतुर्थं हविः प्रशंसति—

विश्वेषां वै देवानामृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वादशकपालं निर्वपन्ति देवता एव तद्भागिनीः कुर्वन्ति सवनं द्वादशभिरुप यन्ति, इति।

विश्वेषां देवानां तृतीयसवनस्वामित्वं पुरोदाहृतम्। ऋभुमत्त्वमप्यृभूणां तृतीयसवनदेवत्वादवगन्तव्यम्। तच्च तृतीयस्य सवनस्यृभुमतो विभुमत

इत्यादिमन्त्रादवगम्यते । ताश्च देवता अनेन हविषा भागिन्यः । कपालग त द्वादशसंख्यया जगतीद्वारा सवनप्राप्तिः ।

अथ पूर्वानुवाकोक्तं प्राजापत्यं प्रशंसति—

प्राजापत्यं पशुमा लभन्ते यज्ञो वै प्रजापतिर्यज्ञस्याननुसर्गाय, इति ।

यज्ञस्य प्रजापतिसृष्टत्वात्तद्रूपत्वम् । अननुसर्गोऽपरित्यागः । उत्सृष्टेऽप्यहनि प्राजापत्येन यज्ञोऽपरित्यक्तो भवति ।

अथ पूर्वस्मिन्पक्षसि ब्रह्मसाम विधत्ते—

अभिवर्त इतः षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभिवर्तो ब्रह्मणैव तत्सुवर्गं लोकमभिवर्तयन्तो यन्ति प्रतिकूलमिव हीतः सुवर्गो लोकः, इति ।

गवामयनविकृतित्वादस्याप्युत्सर्गिणामयनस्य द्वे पक्षसी । तत्र प्रथमेन पक्षसा स्वर्गप्राप्तिः । द्वितीयेन पक्षसा पुनर्भूलोकप्राप्तिः । एवं व्यवस्थायां सत्यामितो भूलोकान्निर्गत्य स्वर्गं गच्छतां यजमानानामानुकूल्येन पूर्वे पक्षसि षडपि मासान्नैरन्तर्येण प्रतिदिनमभिवर्ताख्यं ब्रह्मसामं भवेत् । तथा सत्यभिवर्तसाम्नो ब्रह्मरूपत्वाद्ब्रह्मसामर्थ्येन च स्वर्गाभिमुख्यं गच्छन्तः स्वर्गं प्राप्नुवन्ति ।

अथोत्तरस्मिन्पक्षस्यन्यद्ब्रह्मसाम विधत्ते—

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा । शिक्षा नो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमही- त्यमुत आयताꣳ षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति, इति ॥

अमुतः स्वर्गलोकादायतां भूलोकं प्रत्यागच्छतां यजमानानामानुकूल्येनोत्तरस्मिन्पक्षसि षडपि मासान्नैरन्तर्येण प्रतिदिनमिन्द्र क्रतुं न इत्यस्यामृचि- यदुत्पन्नं तद्ब्रह्मसामं भवेत् । तस्या ऋचोऽयमर्थः—हे इन्द्र नोऽस्मदर्थमिमं

क्रतुमाहर । तत्र दृष्टान्तः– यथा लोके पिता पुत्रेभ्यो भागमाहृत्य प्रयच्छति तद्वत् । हे पुरुहूतेन्द्रास्मिन्ननुष्ठीयमाने यामनि क्रतुविशेषरूपे नियमे शिक्ष हितोपदेशं कुरु । वयं त्वत्प्रसादाज्जीवा जीवन्तो ज्योतिः प्रकाशरूपं मनुष्य-लोकमशीमहि प्राप्नुयामेति । अस्यामृचि ज्योतिःशब्देन भूलोकस्तत्रत्यप्रजाश्च विवक्षिताः । तथा सत्येतदीयसामप्रयोगेणेमं भूलोकं ज्योतिषा पश्यन्तः प्राप्नुयामेति वाचा वदन्तश्चाऽऽगच्छन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपा-क्रामत्तत्क्रोशेनावारुन्धत तत्क्रोशस्य क्रोशत्वं यत्क्रो-शेन चात्वालस्यान्ते स्तुवन्ति यज्ञस्यैवान्तं गत्वेन्द्रियं वीर्यमव रुन्धते सत्रस्यर्ध्याऽऽहवनीयस्यान्ते स्तुवन्त्य-ग्निमेवोपद्रष्टारं कृत्वर्धिमुप यन्ति प्रजापतेर्हृदयेन हविर्धानेऽन्तः स्तुवन्ति प्रेमाणमेवास्य गच्छन्ति श्लोकेन पुरस्तात्सदसः (१) स्तुवन्त्यनुश्लोकेन पश्चाद्यज्ञस्यैवान्तं गत्वा श्लोकभाजो भवन्ति नव-भिरध्वर्युरुद्गायति नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधाति सर्वा ऐन्द्रियो भवन्ति प्राणेष्वे-वेन्द्रियं दधत्यप्रतिहृताभिरुद्गायति तस्मात्पुरुषः

सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यंचति शिर एव न पञ्चदशः रथंतरं भवतीन्द्रियमेवाव रुन्धते सप्तदशम् ( २ ) बृहदन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्त एकविंशं भद्रं द्विपदासु प्रतिष्ठित्यै पत्नय उप गायन्ति मिथुनत्वाय प्रजात्यै प्रजापतिः प्रजा असृजत सोऽकामयताऽऽसामहः राज्यं परीयामिति तासाः राजनेनैव राज्यं पर्यैत्तद्राजनस्य राजनत्वं यद्राजनं भवति प्रजानामेव तद्यजमाना राज्यं परि यन्ति पञ्चविंशं भवति प्रजापतेः ( ३ ) आप्त्यै पञ्चभिस्तिष्ठन्तः स्तुवन्ति देवलोकमेवाभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाभि जयन्ति दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते पञ्चधा विनिषद्य स्तुवन्ति पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्येकैकयाऽस्तुतया समायन्ति दिग्भ्य एवान्नाद्यः सं भरन्ति ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यम् ( ४ ) संभृत्य तेज आत्मन्दधते तस्मादेकः प्राणः सर्वाण्यङ्गान्यवत्यथो यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत एवमेव तद्यजमानाः प्रजानामुत्तमा भवन्त्यासन्दीमुद्गाताऽऽरोहति साम्राज्यमेव

गच्छन्ति प्रेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यथो आक्रमणमेव तत्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै ( ५ ) ॥

( सदंसः सप्तदशं प्रजापतेर्गायति दिग्भ्य एवान्नाद्यं प्रत्येकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः )

---

देवानाम् । वै । अन्तम् । जग्मुषाम् । इन्द्रियम् । वीर्यम् । अपेति । अक्रामत् । तत् । क्रोशेन । अवेति । अरुन्धत । तत् । क्रोशस्य । क्रोशत्वमिति क्रोश—त्वम् । यत् । क्रोशेन । चात्वालस्य । अन्ते । स्तुवन्ति । यज्ञस्य । एव । अन्तम् । गत्वा । इन्द्रियम् । वीर्यम् । अवेति । रुन्धते । सत्रस्यर्ध्या । आहवनीयस्येत्या— हवनीयस्य । अन्ते । स्तुवन्ति । अग्निम् । एव । उपद्रष्टारमित्युप—द्रष्टारम् । कृत्वा । ऋद्धिम् । उपेति ।

यन्ति । प्रजापतेर्हृदयेन । हविर्धान इति हविः–धाने । अन्तः । स्तुवन्ति । प्रेमाणम् । एव । अस्य । गच्छन्ति । श्लोकेन । पुरस्तात् । सदसः ( १ ) । स्तुवन्ति । अनुश्लोकेनेत्यनु–श्लोकेन । पश्चात् । यज्ञस्य । एव । अन्तम् । गत्वा । श्लोकभाज इति श्लोक–भाजः । भवन्ति । नवभिरिति नव–भिः । अध्वर्युः । उदिति । गायति । नव । वै । पुरुषे । प्राणा इति प्र–अनाः । प्राणानिति प्र–अनान् । एव । यजमानेषु । दधाति । सर्वाः । ऐन्द्रियः । भवन्ति । प्राणेष्विति प्र–अनेषु । एव । इन्द्रियम् । दधाति । अप्रतिहृताभिरित्यप्रति–हृताभिः । उदिति । गायति । तस्मात् । पुरुषः । सर्वाणि । अन्यानि । शीर्ष्णः । अङ्गानि । प्रतीति । अचति । शिरः । एव । न । पञ्चदशमिति पञ्च–दशम् । रथंतरमिति रथं–तरम् । भवति । इन्द्रियम् । एव । अवेति । रुन्धते । सप्तदशमिति सप्त–दशम् ( २ ) । बृहत् । अन्नाद्यस्येत्यन्न–अद्यस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । अथो इति । प्रेति । एव । तेन । जायन्ते । एकविंशमित्येक–विंशम् । भद्रम् । द्विपदास्विति द्वि–पदासु । प्रतिष्ठित्या इति प्रति–स्थित्यै । पत्नयः । उपेति । गायन्ति । मिथुनत्वायेति मिथुन–त्वाय । प्रजात्या इति

प्र—जात्यै । प्रजापतिरिति प्रजा—पतिः । प्रजा इति
प्र—जाः । असृजत । सः । अकामयत । आसाम् ।
अहम् । राज्यम् । परीति । इयाम् । इति । तासाम् ।
राजनेन । एव । राज्यम् । परीति । ऐत् । तत् ।
राजनस्य । राजनत्वमिति राजन—त्वम् । यत् । राजनम् ।
भवति । प्रजानामिति प्र—जानाम् । एव । तत् ।
यजमानाः । राज्यम् । परीति । यन्ति । पञ्चविꣳशमिति
पञ्च—विꣳशम् । भवति । प्रजापतेरिति प्रजा—पतेः (३) ।
आप्त्यै । पञ्चभिरिति पञ्च—भिः । तिष्ठन्तः । स्तुवन्ति ।
देवलोकमिति देव—लोकम् । एव । अभीति । जयन्ति ।
पञ्चभिरिति पञ्च—भिः । आसीनाः । मनुष्यलोकमिति
मनुष्य—लोकम् । एव । अभीति । जयन्ति । दश ।
समिति । पद्यन्ते । दशाक्षरेति दश—अक्षरा । विराडिति
वि—राट् । अन्नम् । विराडिति वि—राट् । विराजेति वि—
राजा । एव । अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धते ।
पञ्चधेति पञ्च—धा । विनिषद्येति वि—निषद्य । स्तुवन्ति ।
पञ्च । दिशः । दिक्षु । एव । प्रतीति । तिष्ठन्ति । एकैक-
येत्येकया—एकया । अस्तुतया । समायन्तीति सम्—
आयन्ति । दिग्भ्य इति दिक्—भ्यः । एव । अन्नाद्यमित्यन्न—
अद्यम् । समिति । भरन्ति । ताभिः । उद्गातेत्युत्—गाता ।

उदिति । गायति । दिग्भ्य इति दिक्-भ्यः । एव । अन्नाद्यमित्यन्न-अद्यम् ( ४ ) । संभृत्येति सं-भृत्य । तेजः । आत्मन् । दधते । तस्मात् । एकः । प्राण इति प्र-अनः । सर्वाणि । अङ्गानि । अवति । अथो इति । यथा । सुपर्ण इति सु-पर्णः । उत्पतिष्यन्नित्युत्-पतिष्यन् । शिरः । उत्तममित्युत्-तमम् । कुरुते । एवम् । एव । तत् । यजमानाः । प्रजानामिति प्र-जानाम् । उत्तमा इत्युत्-तमाः । भवन्ति । आसन्दीमित्या-सन्दीम् । उद्गातेत्युत्-गाता । एति । रोहति । साम्राज्यमिति साम्-राज्यम् । एव । गच्छन्ति । प्रेङ्खम् । होता । नाकस्य । एव । पृष्ठम् । रोहन्ति । कूर्चौ । अध्वर्युः । ब्रध्नस्य । एव । विष्टपम् । गच्छन्ति । एतावन्तः । वै । देवलोका इति देव-लोकाः । तेषु । एव । यथापूर्वमिति यथा-पूर्वम् । प्रतीति । तिष्ठन्ति । अथो इति । आक्रमणमित्या-क्रमणम् । एव । तत् । सेतुम् । यजमानाः । कुर्वते । सुवर्गस्येति सुवः-गस्य । लोकस्य । समष्ट्या इति सम्-अष्ट्यै ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

उत्सर्गिणामयनं सप्तमे मीमांसया निर्णीतम् । तावता विकृतिं समाप्याथ प्रकृतावेव गवामयने यन्महाव्रतमस्ति तस्मिन्ननेनानुवाकत्रयेण विशेषाः केचिदुच्यन्ते । तत्रास्मिन्नष्टमे सामविशेषाः केचिदुच्यन्ते ।

प्रथमं तावत्क्रोशाख्यं साम विधत्ते —

देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत्तत्क्रोशेनावारुन्धत तत्क्रोशस्य क्रोशत्वं यत्क्रोशेन चात्वालस्यान्ते स्तुवन्ति यज्ञस्यैवान्तं गत्वेन्द्रियं वीर्यमव रुन्धते, इति ।

पुरा कदाचिद्देवानां सत्रसमाप्तिं प्राप्तवतामिन्द्रियं तत्सामर्थ्यं चापक्रान्तम् । तच्च देवाः क्रोशाख्येन साम्ना पुनः प्राप्तवन्तः । क्रुश आह्वान इत्यस्माद्धातोरुत्पन्नः क्रोशशब्द आह्वानसाधनमाचष्टे । तस्मादपगतवीर्यस्याऽऽह्वानसाधनत्वादेतस्य साम्नः क्रोश इति नामधेयम् । तेन क्रोशाख्येन साम्ना चात्वालसमीपे स्तुतिं कुर्युः । तेन यज्ञसमाप्तिं प्राप्येन्द्रियसामर्थ्यं प्राप्नुवन्ति ।

अथ सत्रस्य ऋद्धिनामकं सामान्तरं विधत्ते—

सत्रस्यर्ध्याऽऽहवनीयस्यान्ते स्तुवन्त्यग्निमेवोपद्रष्टारं कृत्वर्धिमुप यन्ति, इति ।

यत्सत्रस्यर्धिनामकं साम तेनाऽऽहवनीयसमीपे स्तुतिं कुर्युः । तथा सत्यग्निमेव स्तुतेः साक्षिणं कृत्वा समृद्धिमेव प्राप्नुवन्ति ।

सामान्तरं विधत्ते—

प्रजापतेर्हृदयेन हविर्धानेऽन्तः स्तुवन्ति प्रेमाणमेवास्य गच्छन्ति, इति ।

प्रजापतेर्हृदयमिति कस्यचित्साम्नो नामधेयम् । तेन हविर्धानस्यान्तः स्थित्वा स्तुतिं कुर्युः । तेन च स्तोत्रेणास्य प्रजापतेः प्रीतिं गच्छन्ति ।

अन्यत्सामद्वयं विधत्ते—

श्लोकेन पुरस्तात्सदसः स्तुवन्त्यनुश्लोकेन पश्चाद्य-
ज्ञस्यैवान्तं गत्वा श्लोकभाजो भवन्ति, इति ।

श्लोकानुश्लोकशब्दौ सामविशेषनामनी । ताभ्यां सदस उभयतः स्तुतिं कुर्युः । तेन च यज्ञसमाप्तिं प्राप्य कीर्तिभाजो भवन्ति ।

तत्रानुश्लोके कंचिद्विशेषं विधत्ते—

नवभिरध्वर्युरुद्गायति नव वै पुरुषे
प्राणाः प्राणानेव यजमानेषु दधाति, इति ।

अस्य साम्न आधारभूताः स्तोत्रिया ऋचो नवसंख्याकाः । गानकर्ता चाध्वर्युर्न तूद्गाता । पुरुषशरीरे नवच्छिद्रवर्तित्वेन प्राणानां नवसंख्याकत्वा-त्तान्सर्वान्यजमानेषु स्थापयति ।

तास्वृक्षु कंचिद्विशेषं विधत्ते—

सर्वा ऐन्द्रियो भवन्ति प्राणेष्वेवेन्द्रियं दधति, इति ।

इन्द्रो देवता यासां ता ऐन्द्रियः । तथाविधा एव नवसंख्याकाः सर्वा अपि कार्याः । तेन प्राणेषु सामर्थ्यं स्थापयन्ति ।

तास्वृक्षु प्रतिहारभागं निषेधति—

अप्रतिहृताभिरुद्गायति तस्मात्पुरुषः सर्वाण्य-
न्यानि शीर्ष्णोऽङ्गानि प्रत्यचाति शिर एव न, इति ।

ऋचि गीयमानस्य साम्नः पञ्च भागा हिंकारप्रस्तावोद्गीथप्रतिहारनिधना-ख्याः । तेषु प्रतिहारभागं वर्जयित्वा तद्राहिताभिरेव पूर्वोक्ताभिर्नवभिर्गायेत् । यस्मादत्र प्रतिहारो वर्जितस्तस्माल्लोकेऽपि पुरुषः शिरोव्यतिरिक्तानि हस्त-पादादीन्यङ्गानि प्रत्यचति प्रत्याहृतानि संकुचितानि करोति । शिर एव त्वेकं संकुचितं न करोति । न हि हस्तपादवदङ्गुलीवच्च शिरः प्रतिहर्तुं शक्यते । तस्माच्छिरस्थानीयाध्वर्युगाने प्रतिहारो वर्जनीयः ।

अथ तस्य गानस्याभितः स्तोमद्वयविशिष्टं सामद्वयं विधत्ते—

पञ्चदशꣳ रथंतरं भवतीन्द्रियमेवाव रुन्धते सप्तदशं
बृहदन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते, इति ।

पञ्चदशस्तोमकं रथंतरं सामैकतो गायेयुः । तेन पञ्चदशस्येन्द्रेण सहोत्प-

सत्वादिन्द्रियप्राप्तिर्भवति। तथा सप्तदशस्तोमयुक्तं बृहदन्यतो गायेयुः । सप्तदशस्यात्मप्रजाहेतुत्वात्तत्प्राप्तिः । यथा पक्षिणो द्वौ पक्षावेवमेतद्गानद्वयं द्रष्टव्यम् । अत एवान्यत्राऽऽम्नातम्—'पञ्चदशोऽन्यः पक्षो भवति । सप्तदशोऽन्यः' इति ।

अथ स्तोमसामविशेषमृग्विशेषेषु विधत्ते—

एकविꣳशं भद्रं द्विपदासु प्रतिष्ठित्यै, इति।

एकविंशः स्तोमविशेषः। भद्रशब्दः सामविशेषस्य नामधेयम्। पादद्वयोपेता ऋचो द्विपदाः। तेन पादद्वित्वेन प्रतिष्ठा भवति।

एतस्य भद्रसाम्नः समीपे पत्नीगानं विधत्ते—

पत्नय उप गायन्ति मिथुनत्वाय प्रजात्यै, इति।

यजमानानां याः पत्नयस्ताः सर्वा भद्राख्यसामगानस्य समीपे स्वयमपि गायेयुः। पुरुषाणां पत्नीनां च गानेन मिथुनं(नत्वे) पत्न्याः प्रजोत्पत्तिर्भवति।

अथ सामान्तरं विधत्ते—

प्रजापतिः प्रजा असृजत सोऽकामयताऽऽसामहꣳ राज्यं परीयामिति तासाꣳ राजनेनैव राज्यं पर्यैत्तद्राजनस्य राजनत्वं यद्राजनं भवति प्रजानामेव तद्यजमाना राज्यं परि यन्ति, इति।

राजनमिति सामविशेषस्य नामधेयम्। राज्यसाधनत्वात्तस्य राजनत्वम्। तत्सामप्रयोगेण यजमाना राज्यं प्राप्नुवन्ति।

तत्रैव स्तोमविशेषं विधत्ते—

पञ्चविꣳशं भवति प्रजापतेराप्त्यै, इति।

प्रजापतेः पञ्चविंशस्तोमस्वरूपत्वात्तेन तत्प्राप्तिः।

तस्मिन्नेव पञ्चविंशस्तोमे कंचिद्विशेषं विधत्ते—

पञ्चभिस्तिष्ठन्तः स्तुवन्ति देवलोकमेवाभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाभि

जयति दश सं पद्यन्ते दशाक्षरा विराडन्नं
विराड्विराजैवान्नाद्यमव रुन्धते, इति ।

पञ्चविंशाख्यस्तोमे या आद्याः पञ्च स्तोत्रियास्ता ऋत्विभिरुत्थितैः पठनीयाः । याश्चानन्तरभाविन्यः पञ्चसंख्यास्ता आसीनैर्गातव्याः । तेन लोकद्वयप्राप्तिः । दशसंख्यया विराड्द्वाराऽन्नप्राप्तिः ।

आसीनगाने कंचिद्विशेषं विधत्ते—

पञ्चधा विनिषद्य स्तुवन्ति पञ्च
दिशो दिक्ष्वेव प्रति तिष्ठन्ति, इति ।

पञ्चभिः प्रकारैः स्थानविशेषेषूपविश्य स्तुवन्ति । ऊर्ध्वया सह दिशां पञ्चत्वाद्दिक्षु प्रतिष्ठा ।

तत्रैवान्यं विशेषं विधत्ते—

एकैकयाऽस्तुतया समायन्ति दिग्भ्य
एवान्नाद्यꣳ सं भरन्ति, इति ।

पञ्चसु स्थानेषूपवेशनकाले कश्चिदुद्गाता प्रथममुपविशति । तदानीमितरे सर्वेऽप्यस्तुतया स्तोत्रियया तमुद्गातारं समागत्योपविशन्ति । एवं तत्तत्स्थानेषु प्रथममेवोद्गातर्युपविष्टे सति तत्तदृचां स्तुतेः प्रागेव सर्वेऽप्युद्गातारमुपगच्छेयुः । तथा सति सर्वाभ्यो दिग्भ्योऽन्नं संपादयन्ति ।

इतरेष्वागतेषूद्गातृकृत्यं विधत्ते—

ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यꣳ संभृत्य तेज
आत्मन्दधते तस्मादेकः प्राणः सर्वाण्यङ्गान्यवत्यथो
यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत एवमेव
तद्यजमानाः प्रजानामुत्तमा भवन्ति, इति ।

यां स्तोत्रियां पुरस्कृत्योद्गातारमागच्छन्ति तया स उद्गाता गायेत् । तथा सति दिग्भ्यः संपादितमन्नं तेजोरूपं सर्वेऽपि स्वात्मन्येव स्थापयन्ति । यस्मादत्र सर्वेषु स्थितेष्वेक एवोद्गाता गायति तस्माच्छरीरमध्येऽप्येक एव प्राणः सर्वाण्यङ्गानि रक्षति । अपि च यथा कश्चित्पक्षिविशेष आकाश उत्पतिष्य-

ऽस्वकीयं शिर ऊर्ध्वं कुरुते, एवमेव तेनोद्गातृगानेन प्रजानां मध्ये यजमाना उत्तमा भवन्ति ।

अथ त्रयाणामृत्विजामाधारविशेषान्विधत्ते—

आसन्दीमुद्गाताऽऽरोहति साम्राज्यमेव गच्छन्ति प्रेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यथो आक्रमणमेव तत्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै, इति ॥

आसन्दी चतुर्भिः पादैरुन्नतैरुपेता खट्वाकारा । उद्गातुस्तदारोहणेन सर्वे यजमानाः साम्राज्यं देशाधिपत्यं गच्छन्ति । प्रेङ्खो दोला, तां होता समारोहति । तेन सर्वेऽपि स्वर्गमारोहन्ति । कूर्चौ दर्भविशेषौ, तावध्वर्युरारोहति । तेन ब्रध्नस्याऽऽदित्यस्य विष्टपं स्थानं गच्छन्ति । साम्राज्यस्वर्गादित्यस्थानरूपा ये लोका एतावन्त एवापेक्षिता देवलोकास्तेष्वनुक्रमेण प्रतितिष्ठन्ति । अपि च तेनाऽऽरोहणेन स्वर्गसमुद्रस्याऽऽक्रमणसाधनं सेतुं यजमानाः कुर्वते । तच्च स्वर्गप्राप्त्यै भवति ।

अत्र मीमांसा । दशमाध्यायस्य चतुर्थपादे षष्ठाधिकरणे चिन्तितम्—

*पत्नीनामुपगानं किमृत्विजां तन्निवर्तयेत् ।
समुच्चितं वा गानस्य शारीरत्वान्निवर्तनम् ॥
स्वराभिव्यञ्जनं गानं ग्रहवत्तद्विधीयते ।
वादित्रोपचयः साम्यात्सांनिध्याच्च समुच्चयः ॥

महाव्रते श्रूयते—'पत्नय उपगायन्ति' इति । प्रकृतौ श्रूयते—'ऋत्विज उपगायन्ति' इति । तदेतदृत्विगुपगानं पत्न्युपगानेन निवर्त्यते । ननु प्रकृतावुद्गात्रा साम्नि गीयमाने सत्यृत्विजोऽन्ये साम्नैवोपगायन्ति । इह तु पत्न्यो वादित्रं वादयन्तीति भिन्नविषयत्वान्नास्ति निवृत्तिः । मैवं, गानशब्दस्य शारीरे प्रसिद्धत्वात् । तस्मादृत्विजो निवर्त्य पत्नयः सामोपगायेयुरिति प्राप्ते ब्रूमः—गानशब्दस्य नाक्षरोच्चारणमर्थः, किंतु स्वराभिव्यञ्जनं, तच्च शारीरेण वादित्रेण वा सिध्यति । अत एव गानतत्त्वज्ञा आहुः—' दारवी गात्र-

---

* न्यायमालाविस्तरे श्लोकद्वयानुपूर्वी न मिलति ।

( शततन्तुवीणादिकथनम् )

वीणा च द्वे वीणे गानजातिषु' इति। तच्च गानं ग्रहन्यायेनापूर्वक्रियाविधानाच्च प्रकृतिलिङ्गं स्यात्। एवं तर्हि गानोपचयवाचिन उपशब्दस्य वैयर्थ्यमिति चेन्न। वादित्रोपचयसंभवात्। अस्ति हि तत्र वादित्रनादः, 'दिक्षु दुन्दुभयो नदन्ति' इति श्रुतेः। पत्न्युपगानं च वादित्रनादः। 'काण्डवीणाभिरुपगायन्ति' इति श्रुतेः। अतः सादृश्यात्संनिधानाच्च तदुपचयो युक्तः। तस्मादनिवृत्तेरुपगानयोः समुच्चयः।

तत्रैवान्यच्चिन्तितम्—

बाध्यं श्लोकादिनाऽऽज्यादि न वाऽऽद्यः स्तुतिलिङ्गतः।
देशसाम्नोर्विधौ भेदो वैशिष्ट्यात्स्यात्समुच्चयः॥

महाव्रते श्रूयते—'श्लोकेन पुरस्तात्सदसः स्तुवन्त्यनुश्लोकेन पश्चात्' इत्यादि। तत्र श्लोकानुश्लोकनामकैः सामभिः प्राकृतान्याज्यपृष्ठादिस्तोत्रगतानि रथंतरवामदेव्यादिनामकानि सामानि बाध्यानि। कुतः, स्तुवत इति प्रकृतिलिङ्गदर्शनात्। प्रकृतावाज्यैः स्तुवते पृष्ठैः स्तुवत इति हि श्रुतम्। नैतत्सारम्। किमत्र स्तुतिमनूद्य देशसामगुणौ विधीयेते, किंवा गुणद्वयविशिष्टा स्तुतिः। नाऽऽद्यो वाक्यभेदापत्तेः। द्वितीये तु कार्यभेदेन बाधाभावात्समुच्चयः स्यात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः। )

---

अर्क्येण वै सहस्रशः प्रजापतिः प्रजा असृजत ताभ्य इलान्देनेरां लूतामवारुन्ध यदर्क्यं भवति प्रजा एव तद्यजमानाः सृजन्त इलान्दं भवति प्रजाभ्य एव सृष्टाभ्य इरां लूतामव रुन्धते तस्माद्याः समाः सत्रः समृद्धं क्षोधुकास्ताः समाः प्रजा इषः ह्यासामूर्जमाददते याः समां व्यृद्धमक्षोधुकास्ताः

---

१ ख. बाध्याभा।

समां प्रजाः ( १ ) न ह्यांसामिषमूर्जमाददत उत्कोदं कुर्वते यथा बन्धान्मुमुचाना उत्कोदं कुर्वत एवमेव तद्यजमानादेवबन्धान्मुमुचाना उत्कोदं कुर्वत इषमूर्जमात्मन्दधाना वाणः शततन्तुर्भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्त्याजिं धावन्त्यनभिजितस्याभिजित्यै दुन्दुभीन्त्समाघ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव ( २ ) वाचमव रुन्धते भूमिदुन्दुभिमा घ्नन्ति यैवेमां वाक्प्रविष्टा तामेवाव रुन्धतेऽथो इमामेव जयन्ति सर्वा वाचो वदन्ति सर्वासां वाचामवरुद्ध्या आर्द्रे चर्मन्व्यायच्छेते इन्द्रियस्यावरुद्ध्या आऽन्यः क्रोशति प्राऽन्यः शंसति य आक्रोशति पुनात्येवैनान्त्स यः प्रशंसति पूतेष्वेवान्नाद्यं दधात्यृषिकृतं च ( ३ ) वा एते देवकृतं च पूर्वैर्मासैरव रुन्धते यद्भूतेच्छदाः सामानि भवन्त्युभयस्यावरुद्ध्यै यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सं भवतस्तेनैव मिथुनान्न यन्ति ( ४ ) ॥

( व्यृद्धमक्षोधुकास्ताः समां प्रजाः परमामेव च त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

———

( अथ सप्तमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

अर्क्येण । वै । सहस्रश इति सहस्र–शः । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । ताभ्यः । इलान्देन । इराम् । लूताम् । अवेति । अरुन्ध । यत् । अर्क्यम् । भवति । प्रजा इति प्र–जाः । एव । तत् । यजमानाः । सृजन्ते । इलान्दम् । भवति । प्रजाभ्य इति प्र–जाभ्यः । एव । सृष्टाभ्यः । इराम् । लूताम् । अवेति । रुन्धते । तस्मात् । याम् । समाम् । सत्रम् । समृद्धमिति सम्–ऋद्धम् । क्षोधुकाः । ताम् । समाम् । प्रजा इति प्र–जाः । इषम् । हि । आसाम् । ऊर्जम् । आददत इत्या–ददते । याम् । समाम् । व्यृद्धमिति वि–ऋद्धम् । अक्षोधुकाः । ताम् । समाम् । प्रजा इति प्र–जाः ( १ )। न । हि । आसाम् । इषम् । उर्जम् । आददत इत्या–ददते । उत्क्रोदमित्युत्–क्रोदम् । कुर्वते । यथा । बन्धात् । मुमुचानाः । उत्क्रोदमित्युत्–क्रोदम् । कुर्वते । एवम् । एव । तत् । यजमानाः । देवबन्धादिति देव–बन्धात् । मुमुचानाः । उत्क्रोदमित्युत्–क्रोदम् । कुर्वते । इषम् । ऊर्जम् । आत्मन् । दधानाः । वाणः । शततन्तुरिति शत–तन्तुः । भवति । शतायुरिति शत–आयुः । पुरुषः । शतेन्द्रिय

इति शत-इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठन्ति । आजिम् । धावन्ति । अनभिजितस्येत्यनभि-जितस्य । अभिजित्या इत्यभि-जित्यै । दुन्दुभीन् । समाघ्नन्तीति सम्-आघ्नन्ति । परमा । वै । एषा । वाक् । या । दुन्दुभौ । परमाम् । एव ( २ ) । वाचम् । अवेति । रुन्धते । भूमिदुन्दुभिमिति भूमि-दुन्दुभिम् । एति । घ्नन्ति । या । एव । इमाम् । वाक् । प्रविष्टेति प्र-विष्टा । ताम् । एव । अवेति । रुन्धते । अथो इति । इमाम् । एव । जयन्ति । सर्वाः वाचः । वदन्ति । सर्वासाम् । वाचाम् । अवरुद्ध्या इत्यव-रुद्ध्यै । आर्द्रे । चर्मन् । व्यायच्छेते इति वि-आयच्छेते । इन्द्रियस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । एति । अन्यः । क्रोशति । प्रेति । अन्यः । शंसति । यः । आक्रोशतीत्या-क्रोशति । पुनाति । एव । एनान् । सः । यः । प्रशंसतीति प्र-शंसति । पूतेषु । एव । अन्नाद्यमित्यन्न-अद्यम् । दधाति । ऋषिकृतमित्यृषि-कृतम् । च ( ३ ) । वै । एते । देवकृतमिति देव-कृतम् । च । पूर्वैः । मासैः । अवेति । रुन्धते । यत् । भूतेच्छदामिति भूते-छदाम् । सामानि । भवन्ति । उभयस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । यन्ति । वै । एते । मिथुनात् । ये । संवत्सरमिति सं-वत्सरम् । उपयन्तीत्युप-यन्ति ।

अन्तर्वेदीत्यन्तः–वेदि। मिथुनौ। समिति। भवतः। तेन। एव। मिथुनात्। न। यन्ति (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः। )

---

अष्टमे क्रोशसामादीन्युक्तानि। नवमे शततन्तुवीणादिकमुच्यते। तत्राऽऽदौ तावत्सामद्वयं विधत्ते—

अर्क्येण वै सहस्रशः प्रजापतिः प्रजा असृजत ताभ्य इलान्देनेरां लूतामवारुन्ध यदर्क्यं भवति प्रजा एव तद्यजमानाः सृजन्त इलान्दं भवति प्रजाभ्य एव सृष्टाभ्य इरां लूतामव रुन्धते तस्माद्याꣳ समाꣳ सत्रꣳ समृद्धं क्षोधुकास्ताꣳ समां प्रजा इषꣳ ह्यासामूर्जमाददते याꣳ समां व्यृद्धमक्षोधुकास्ताꣳ समां प्रजा न ह्यासामिषमूर्जमाददते, इति।

अर्क्यमिति कस्यचित्साम्नो नामधेयं तेन प्रजापतिः पुरा बहुविधाः सहस्रसंघरूपाः प्रजा असृजत। इलान्दमिति सामान्तरस्य नामधेयम्। तेन साम्ना स्वसृष्टप्रजार्थं लूतामिरां पूर्वं विच्छिन्नमन्नमवारुन्ध पुनरप्यविच्छेदेन संपादितवान्। तद्वद्यजमाना अपि सामद्वयेन प्रजाः सृष्ट्वा तदर्थमन्नं संपादयन्ति। यस्मादस्मिन्सत्रे साम्नाऽन्नं संपाद्यते तस्माद्यां समां सत्रं समृद्धं यस्मिन्संवत्सरे नैरन्तर्येण सत्रं समृद्धं प्रवृत्तं तां समां प्रजाः क्षोधुकास्तस्मिन्संवत्सरे नैरन्तर्येण क्षुधिताः प्रजाः सत्रिणां समीपे सर्वदिग्भ्यः समागच्छन्ति। सत्रिणो ह्यासां प्रजानां नानाविधमन्नं रसं च समादाय प्रयच्छन्ति। यस्मिंस्तु संवत्सरे सत्रं व्यृद्धं न प्रवृत्तं तस्मिन्संवत्सरे प्रजा अक्षोधुकाः क्षुधिताः काश्चि-

दपि नाऽऽगच्छन्ति । यस्मादासां प्रजानां व्रीह्याद्यन्नं क्षीरादिरसं च नैवाऽऽदाय प्रयच्छन्ति तस्मादनागमनम् ।

अथान्यदनुष्ठेयं विधत्ते—

उत्क्रोदं कुर्वते यथा बन्धान्मुमुचाना उत्क्रोदं कुर्वत एवमेव तद्यजमाना देवबन्धान्मुमुचाना उत्क्रोदं कुर्वत इषमुर्जमात्मन्दधानाः, इति ।

हर्षनिमित्तो ह्यत्युचध्वनिरुत्क्रोदः । सर्वे यजमानाः सत्रसमाप्त्या संतुष्टा उत्क्रोदं कुर्युः । यथा लोके चिरं शृङ्खलाबद्धाः पुरुषास्तद्विमोकं गच्छन्तो हर्षेणोत्क्रोदं कुर्वन्ति, एवमेव यजमानाश्चिरकालानुष्ठेयसत्ररूपाद्देवबन्धाद्विमोकं प्राप्नुवन्तः सत्रसामर्थ्येनान्नं रसं च स्वात्मनि संपादयन्ति । अत उत्क्रोदं कुर्वते ।

यदुक्तं सूत्रकारेण—'औदुम्बरस्य वीणादण्डस्य दशातिमथितान्येकैकस्मिन्प्रतिमथिते दश दश मौञ्जांस्तन्तून्प्रवयति स वाणः शततन्तुः' इति, तदेतद्विधत्ते—

वाणः शततन्तुर्भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति, इति ।

दशेन्द्रियाणां दशसंख्याकासु नाडीषु वृत्तिभेदेन शतसंख्या ।

उत्साहोपेतानां यजमानानां कांचिन्मर्यादां कृत्वा तत्पर्यन्तं धावनं विधत्ते—

आर्जिं धावन्त्यनभिजितस्याभिजित्यै, इति ।

यत्पूर्वमनभिजितमसंपादितं फलं तस्य संपादनायेदं धावनम् ।

उत्साहद्योतकमन्यद्विधत्ते—

दुन्दुभीन्त्समाघ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव वाचमव रुन्धते, इति ।

दिक्षु स्थापिता ये दुन्दुभयस्तान्सम्यगाहन्युः । सोऽयं दुन्दुभिध्वनिः सर्वध्वनीनामुत्तमोऽत्युच्चत्वात् । तद्वादनेन सभारञ्जनक्षमां परमां वाचं प्राप्नुवन्ति ।

---

१ ख. सत्रं समाप्य सं° । २ ख 'रतस्माद्बन्धाद्वि° ।

यदुक्तं सूत्रकारेण—'अपरेणाऽऽग्नीध्रमण्डपं भूमिदुन्दुभिमवटं खनन्त्यर्धमन्तर्वेद्यर्धं बहिर्वेदि तमार्द्रेण चर्मणोत्तरलोम्ना वितत्य शङ्कुभिः परिनिहत्यात्रैतत्पुच्छकाण्डमाहननार्थं निदधाति' इति। तत्र तेन पुच्छकाण्डेनाऽऽहननं विधत्ते—

भूमिदुन्दुभिमाघ्नन्ति यैवेमां वाक्प्रविष्टा तामेवाव रुन्धतेऽथो इमामेव जयन्ति, इति।

भूमिदुन्दुभ्याघातेन पार्थिवेषु द्रव्येषु परस्परसंघट्टनेन जन्याः शब्दविशेषाः स्वाधीना भवन्ति।

यदुक्तं सूत्रकारेण—'उपाकृते माहेन्द्रस्य स्तोत्रे सर्वा वाचो वदन्त्युत्क्रोदं यजमानाः कुर्वतेऽपाघाटलिकास्तुम्बुरुवीणाः पिच्छोला इति पत्नयो वादयन्ति वीणाः शङ्खान् नालीरुपाहिताः' इति, तदेतद्विधत्ते—

सर्वा वाचो वदन्ति सर्वासां वाचामवरुद्ध्यै, इति।

अपाघाटलिकादिवाद्यविशेषजन्या मनुष्यगवाश्वादिशब्दजन्याश्च ये शब्दविशेषास्ते सर्वेऽपि प्राप्यन्त इत्यर्थः।

अथ ब्राह्मणशूद्रयोश्चर्मनिमित्तं कलहं विधत्ते—

आर्द्रे चर्मन्व्यायच्छते इन्द्रियस्यावरुद्ध्यै, इति।

तेनाऽऽर्द्रचर्मनिमित्तेन कलहेन सामर्थ्यसंपत्तिर्भवति। कलहप्रकारस्तु सूत्रे विस्पष्टमुक्तः—'शूद्रार्यौ चर्मकर्ते व्यायच्छेते आर्द्रे श्वेते परिमण्डलेऽन्तर्वेदि ब्राह्मणो बहिर्वेदि शूद्र आक्रोशति शूद्रः प्रशंसति ब्राह्मण इमेऽरात्सुरिमे सुभूतमक्रन्निति ब्राह्मण इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति शूद्रस्तं ब्राह्मणः संजित्याऽऽग्नीध्रे चर्माध्यस्यति' इति।

तत्राऽऽक्रोशं प्रशंसां च क्रमेण विधत्ते—

आऽन्यः क्रोशति प्राऽन्यः शꣳसति य आक्रोशति पुनात्येवैनान्त्स यः प्रशꣳसति पूतेष्वेवान्नाद्यं दधाति, इति।

इमे सत्रानुष्ठायिनो यजमाना द्रव्यव्ययं कृत्वा सर्वशून्यकारिणोऽतो दुर्व्यापारमकुर्वन्नित्येवमन्य एकः शूद्र आक्रोशति निन्देत्। इमे यजमानाः समृद्धिं

१ ख. 'तेऽपद्या'। २ ख. वीणा पि°। ३ ख. °द्गावली°। ४ ख. °रुपहि°। ५ ख. अपघा°।

गताः सम्यापारकुर्वन्नित्येवमन्य एको ब्राह्मणः प्रशंसेत् । तयोर्मध्ये शूद्र आक्रोशति स एनान्यजमानाञ्शोधयित्वा निष्पापान्करोति । यो ब्राह्मणः प्रशंसति स च पूतेषु यजमानेष्वन्नाद्यं संपादयति ।

अथ कांश्चित्सामविशेषान्विधत्ते—

ऋषिकृतं च वा एते देवकृतं च
पूर्वैर्मासैरव रुन्धते यद्भूतेच्छदाᳪ᳚
सामानि भवन्त्युभयस्यावरुद्ध्यै, इति ।

योऽयमृषिभिर्मनुष्यैः कृत उपकारो यश्च देवैः कृत उपकारस्तदुभयमप्यस्मान्महाव्रताद्गवामयनगतादुपान्त्यादह्नः पूर्वमनुष्ठितैर्मासैर्यजमानाः प्राप्नुवन्ति । अतो महाव्रतेऽपि तदुभयप्राप्त्यर्थं भूतेच्छन्नामकानामृषीणां संबन्धीनि तैर्दृष्टानि सामानि गातव्यानि ।

अथ ब्रह्मचारिपुंश्चल्योर्मिथुनीभावं विधत्ते—

यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि
मिथुनौ सं भवतस्तेनैव मिथुनान्न यन्ति, इति ॥

ये यजमानाः संवत्सरसत्रमनुतिष्ठन्ति ते चिरकालब्रह्मचर्याभ्यासान्मिथुनशक्तेरपगच्छन्ति । अतः पुनस्तच्छक्तिप्राप्त्यर्थं वेदिमध्ये ब्रह्मचारिपुंश्चलीरूपौ मिथुनावयवौ संभवं कुर्यातां, तेन संभवेन यजमाना मिथुनशक्तेर्नापगच्छन्ति । अन्तर्वेदिदेशश्च सूत्रकारेण दर्शितः—'उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यै मागधाय च परिश्रयन्ति' इति । मगधदेशोत्पन्नो ब्रह्मचारी मागधः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

चर्मावं भिन्दन्ति पाप्मानमेवैषामवं भिन्दन्ति
माऽपं रात्सीर्माऽति व्यात्सीरित्याह संप्रत्येवैषां

पाप्मानमव भिन्दन्त्युदकुम्भानधिनिधाय दास्यो मार्जालीयं परि नृत्यन्ति पदो निघ्नतीरिदंमधुं गायन्त्यो मधु वै देवानां परममन्नाद्यं परममेवान्नाद्यमव रुन्धते पदो नि घ्नन्ति महीयामेवैषु दधति ( १ ) ॥

( चर्मैकान्नपञ्चाशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

चर्म । अवेति । भिन्दति । पाप्मानम् । एव । एषाम् । अवेति । भिन्दति । मा । अपेति । रात्सीः । मा । अतीति । व्यात्सीः । इति । आह । संप्रतीति सं-प्रति । एव । एषाम् । पाप्मानम् । अवेति । भिन्दति । उदकुम्भानित्युद-कुम्भान् । अधिनिधायेत्यधि-निधाय । दास्यः । मार्जालीयम् । परीति । नृत्यन्ति । पदः । निघ्नतीति नि-घ्नतीः । इदंमधुमितीदं-मधुम् । गायन्त्यः । मधु । वै । देवानाम् । परमम् । अन्नाद्यमित्यन्न-अद्यम् । परमम् । एव । अन्नाद्यमित्यन्न-अद्यम् । अवेति । रुन्धते ।

पदः । नीर्तिं । घ्नन्ति । महीयाम् । एव । एषु ।
दधति ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके
पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

नवमेऽनुवाक उत्क्रोदादिकमुक्तम् । अथ दशमे दासीनृत्यमुच्यते[१] ।
तत्राऽऽदौ तावच्चर्मवेधनं विधत्ते—

चर्माव भिन्दन्ति पाप्मानमेवैषामव भिन्दन्ति, इति ।

अत्र भेद्यं[२] चर्म सूत्रकारेण विस्पष्टमुक्तम्–'उत्तरेणाऽऽग्नीध्रं कटसंघाते तेजन-संघाते वाऽऽर्द्रं[३] चर्म वेधनार्थं वितत्योच्छ्रयन्ति' इति। वेधनप्रकारश्च तेनैव स्पष्ट-मुक्तः—'विपरियान्त्येतच्चर्म[४] कवचिनस्तेषामेकैकं[५] संशास्ति माऽपरात्सीर्माऽति-व्यात्सीरिति तत्ते विद्धा[६] नातिपादयन्ति' इति। तेन चर्मवेधनेनैषां यजमानानां पाप्मानमेव भिन्दन्ति ।

अथ वेधनात्पूर्वं कवचिष्वध्वर्योः शासनं विधत्ते—

माऽप रात्सीर्माऽति व्यात्सीरित्याह संप्रत्ये
वैषां पाप्मानमव भिन्दन्ति, इति ।

हे कवचिंश्चर्मवेधनाय प्रवृत्तस्य बाणस्य स्खलनरूपमपराधं मा कार्षीः। अस्खलन्नपि चर्म भित्त्वा परतो बाणगमनरूपमतिव्यथनं[७] मा कार्षीरित्येव-मध्वर्युर्ब्रूयात् । एवं सत्येषां यजमानानां पाप्मानं सम्यगेव भिन्दन्ति ।

अथ नृत्यं विधत्ते—

उदकुम्भानधिनिधाय दास्यो मार्जालीयं परि
नृत्यन्ति पदो निघ्नतीरिदंमधुं गायन्त्यो मधु वै

---

१ क. घ. ङ. च. °ते-च° । २ ख. वेध्यं । ३ क. ङ. °र्भे व्यध° । घ. च. °र्मे व्यथना° । ४ ख °रियन्त्ये° । ५ ख. °कैकशः सं° । ६ क. विध्वा° । ७ ख °व्यधनं ।

देवानां परममन्नाद्यं परममेवान्नाद्यमव रुन्धते
पदो नि घ्नन्ति महीयामेवैषु दधति, इति ॥

अत्र दासीसंख्यां सूत्रकारो दर्शयति—'मार्जालीयस्यान्तेऽष्टौ दासकुमार्य उदकुम्भैर्विकम्पन्ते' इति। ता एतास्तान्कुम्भाञ्शिरसि धृत्वा मार्जालीयस्य धिष्ण्यस्य परितो नृत्यन्ति नृत्यं कुर्वन्ति। कीदृश्यो दास्यः, पदो निघ्नतीर्दक्षिणान्पादान्भूमौ ताडयन्त्यः। इदं मध्वित्येतं शब्दं गायन्त्यः। अथवा इदमेव सारघं मध्वित्यादिमन्त्रं गायन्त्यः। मधु च देवानामत्यन्तं प्रियमन्नम्। अतस्तद्गानेन परममन्नं प्राप्नुवन्ति। योऽयं पादघातस्तेनैषु यजमानेषु महीयां पूजां संपादयन्ति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ सप्तमाष्टके पञ्चमप्रपाठके एकादशोऽनुवाकः।)

---

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा संप्लोष्यते स्वाहा संप्लवमानाय स्वाहा संप्लुताय स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघिताय स्वाहा मेघाय स्वाहा नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै स्वाहा विद्योतिष्यते स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रः स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाऽभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते

( १ ) स्वाहाऽनुवर्षते स्वाहा शीकायिष्यते स्वाहा शीकायते स्वाहा शीकिताय स्वाहा प्रोषिष्यते स्वाहा प्रुष्णते स्वाहा परिप्रुष्णते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय स्वाहा विप्लुताय स्वाहाऽऽतप्स्यते स्वाहाऽऽतपते स्वाहोग्रमातपते स्वाहर्ग्भ्यः स्वाहा यजुर्भ्यः स्वाहा सामभ्यः स्वाहाऽङ्गिरोभ्यः स्वाहा वेदेभ्यः स्वाहा गाथाभ्यः स्वाहा नाराशꣳसीभ्यः स्वाहा रैभीभ्यः स्वाहा सर्वस्मै स्वाहा ( २ ) ॥

( संवर्षते रैभीभ्यः स्वाहा द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । संप्लोष्यत इति सं—प्लोष्यते । स्वाहा । संप्लवमानायेति सं—प्लवमानाय । स्वाहा ।संप्लुतायेति सं—प्लुताय । स्वाहा । मेघायिष्यते । स्वाहा । मेघायत इति मेघ—यते । स्वाहा । मेघिताय । स्वाहा । मेघाय । स्वाहा । नीहाराय ।

स्वाहा । निहाकाया इति नि–हाकायै । स्वाहा । प्रास-चार्य । स्वाहा । प्रचलाकाया इति प्र–चलाकायै । स्वाहा । वियोतिष्यत इति वि–योतिष्यते । स्वाहा । वियोतमानायेति वि–योतमानाय । स्वाहा । संवियोतमानायेति सं–वियोतमानाय । स्वाहा । स्तनयिष्यते । स्वाहा । स्तनयते । स्वाहा । उग्रम् । स्तनयते । स्वाहा । वर्षिष्यते । स्वाहा । वर्षते । स्वाहा । अभिवर्षत इत्यभि–वर्षते । स्वाहा । परिवर्षत इति परि–वर्षते । स्वाहा । संवर्षत इति सं–वर्षते ( १ ) । स्वाहा । अनु-वर्षत इत्यनु–वर्षते । स्वाहा । शीकायिष्यते । स्वाहा । शीकायत इति शीक–यते । स्वाहा । शीकिताय । स्वाहा । प्रोषिष्यते । स्वाहा । प्रुष्णते । स्वाहा । परिप्रुष्णत इति परि–प्रुष्णते । स्वाहा । उद्ग्रहीष्यत इत्युत्–ग्रहीष्यते । स्वाहा । उद्गृह्णत इत्युत्–गृह्णते । स्वाहा । उद्गृहीतायेत्युत्–गृहीताय । स्वाहा । विप्लोष्यत इति वि–प्लोष्यते । स्वाहा । विप्लवमानायेति वि–प्लवमानाय । स्वाहा । विप्लुतायेति वि–प्लुताय । स्वाहा । आतप्स्यत इत्या–तप्स्यते । स्वाहा । आतपत इत्या–तपते । स्वाहा । उग्रम् । आतपत इत्या–तपते । स्वाहा । ऋग्भ्य इत्यृक्–भ्यः । स्वाहा । यजुर्भ्य इति यजुः–भ्यः । स्वाहा । सामभ्य इति

सामं—भ्यः । स्वाहां । अङ्गिरोभ्य इत्यङ्गिरः—भ्यः । स्वाहां । वेदेभ्यः । स्वाहां । गाथाभ्यः । स्वाहां । नाराशꣳसीभ्यः । स्वाहां । रैभीभ्यः । स्वाहां । सर्वस्मै । स्वाहां ( २ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः॥ ११ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

दशमे दासीनृत्यमुक्तम् । तावता महाव्रतं समाप्तम् । अथोत्तरेष्वनुवाकेष्वश्वमेधाङ्गमन्त्रा उच्यन्ते । तत्रापि द्वयोरनुवाकयोरन्नहोममन्त्राः ।

तन्मध्ये प्रथमानुवाकगतान्मन्त्रानाह—

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा संप्लोष्यते स्वाहा संप्लवमानाय स्वाहा संप्लुताय स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघिताय स्वाहा मेघाय स्वाहा नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै स्वाहा विद्योतिष्यते स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रꣳ स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाऽभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते स्वाहाऽनुवर्षते स्वाहा शीकायिष्यते स्वाहा शीकायते स्वाहा शीकिताय स्वाहा प्रोषिष्यते स्वाहा

पुष्णते स्वाहा परिप्रुष्णते स्वाहोद्‍ग्रहीष्यते स्वाहो-
द्‍गृह्णते स्वाहोद्‍गृहीताय स्वाहा विप्लोष्यते स्वाहा
विप्लवमानाय स्वाहा विप्लुताय स्वाहाऽऽतप्स्यते
स्वाहाऽऽतपते स्वाहोग्रमातपते स्वाहर्ग्भ्यः स्वाहा
यजुर्भ्यः स्वाहा सामभ्यः स्वाहाऽङ्गिरोभ्यः स्वाहा
वेदेभ्यः स्वाहा गाथाभ्यः स्वाहा नाराशꣳसीभ्यः
स्वाहा रैभीभ्यः स्वाहा सर्वस्मै स्वाहा, इति॥

पृथिव्यादयस्त्रयो लोकाः। मेघोत्पादनाय धूमज्योतिःसलिलमरुतां संनिपातः संप्लवः। स च त्रिविधः—आगामी वर्तमानो भूतश्च। अश्व एव सर्वात्मकप्रजापत्यभिन्नत्वात्तत्तद्रूपेण निर्दिश्यते। धूमादिसंप्लवादूर्ध्वं भविष्यद्वर्तमानातीतदशापन्ना मेघोत्पत्तिस्त्रिविधा। त्रिष्वप्यनुगताकारो मेघः। मेघनिष्पत्तेरूर्ध्वं द्रप्सपतनं नीहारः। द्रप्सानां बाहुल्येनेषदन्धकारापादनं निहाका। तदीयशैत्येनावयवसंकोचः प्रासचः। संकोचादूर्ध्वं पलायनं प्रचलाका। तत ऊर्ध्वं भविष्यदादिरूपेण त्रिविधा विद्युत्। तथा गर्जनस्याप्यवस्थात्रयम्। वृष्टेरपि तद्वदवस्थात्रयम्। तत्र तृतीयस्यामवस्थायां चत्वारो भेदाः—वायुवशादाभिमुख्येन वर्षणमभिवर्षणं, परितो मण्डलाकारेण वर्षणं परिवर्षणम्, ऋजुधारारूपं संवर्षणम्, गच्छतः पुरुषस्य पृष्ठतो वर्षणमनुवर्षणं चेति। वृष्टिक्लिन्नस्य पुरुषस्य त्रिविधा शैत्यावस्था शीकायनम्। घर्मकाले संतप्तायां भूमौ प्रथमवृष्टेरवसाने समुत्थित उष्मा प्रोषः। सोऽपि दशात्रयापन्नः। वृष्टेरुपरम उद्ग्रहणं, तदपि त्रिविधम्। तत ऊर्ध्वं मेघलेशानामपगमनं विप्लवः। सोऽपि त्रिविधः। मेघलेशेष्वपगतेषु सूर्यप्रकाशसंचार आतपः। सोऽपि त्रिविधः। पादबद्धा मन्त्रा ऋचः। प्रश्लिष्टपठितानि यजूंषि। गीत्यात्मकानि सामानि। अङ्गिरोभिर्मुनिभिर्दृष्टाश्चतुर्थवेदोत्पन्ना अङ्गिरसः। विधिभागैः सहितास्ते सर्वे वेदाः। देवताविषयाख्यानपरा मन्त्रा गाथाः। मनुष्यविषयाख्यानपरा ऋचो नाराशंस्यः।

१ क. घ. ङ. च. °प्रप्रणीता°।

रेभः शब्दकृदग्निस्तद्विषया ऋचो रैभ्यः । अनुक्तसंग्रहार्थः सर्वशब्दः । एतैः पञ्चाशन्मन्त्रै रात्रावन्नहोमाः कार्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

---

दत्वते स्वाहाऽदन्तकाय स्वाहा प्राणिने स्वाहाऽप्राणाय स्वाहा मुखवते स्वाहाऽमुखाय स्वाहा नासिकवते स्वाहाऽनासिकाय स्वाहाऽक्षण्वते स्वाहाऽनक्षिकाय स्वाहा कर्णिने स्वाहाऽकर्णकाय स्वाहा शीर्षण्वते स्वाहाऽशीर्षकाय स्वाहा पद्वते स्वाहाऽपादकाय स्वाहा प्राणते स्वाहाऽप्राणते स्वाहा वदते स्वाहाऽवदते स्वाहा पश्यते स्वाहाऽपश्यते स्वाहा शृण्वते स्वाहाऽशृण्वते स्वाहा मनस्विने स्वाहा (१) अमनसे स्वाहा रेतस्विने स्वाहाऽरेतस्काय स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा लोमवते स्वाहाऽलोमकाय स्वाहा त्वचे स्वाहाऽत्वक्काय स्वाहा चर्मण्वते स्वाहाऽचर्मकाय स्वाहा लोहितवते स्वाहाऽलोहिताय स्वाहा माꣳसन्वते स्वाहाऽमाꣳसकाय स्वाहा स्नावभ्यः

स्वाहाऽस्नावकाय स्वाहाऽस्थन्वते स्वाहाऽन-
स्थिकाय स्वाहा मज्जन्वते स्वाहाऽमज्जकाय
स्वाहाऽङ्गिने स्वाहाऽनङ्गाय स्वाहाऽऽत्मने स्वाहाऽ-
नात्मनेस्वाहा सर्वस्मै स्वाहा ( २ ) ॥

( मनस्विने स्वाहाऽनात्मने स्वाहा द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः )

---

दत्वते । स्वाहा । अदन्तकाय । स्वाहा । प्राणिने ।
स्वाहा । अप्राणाय । स्वाहा । मुखवत इति मुख-वते ।
स्वाहा । अमुखाय । स्वाहा । नासिकवत इति नासिक-
वते । स्वाहा । अनासिकाय । स्वाहा । अक्षण्वत इत्य-
क्षण्-वते । स्वाहा । अनक्षिकाय । स्वाहा । कर्णिने ।
स्वाहा । अकर्णकाय । स्वाहा । शीर्षण्वत इति शीर्षण्-
वते । स्वाहा । अशीर्षकाय । स्वाहा । पद्वत इति पत्-
वते । स्वाहा । अपादकाय । स्वाहा । प्राणत इति प्र-
अनते । स्वाहा । अप्राणत इत्यप्र-अनते । स्वाहा । वदते ।

स्वाहा । अवदते । स्वाहा । पश्यते । स्वाहा । अपश्यते । स्वाहा । शृण्वते । स्वाहा । अशृण्वते । स्वाहा । मनस्विने । स्वाहा ( १ ) । अमनसे । स्वाहा । रेतस्विने । स्वाहा । अरेतस्कायेत्यरेतः—काय । स्वाहा । प्रजाभ्य इति प्र—जाभ्यः । स्वाहा । प्रजननायेति प्र—जननाय । स्वाहा । लोमवत इति लोम—वते । स्वाहा । अलोमकाय । स्वाहा । त्वचे । स्वाहा । अत्वक्काय । स्वाहा । चर्मण्वत इति चर्मण्—वते । स्वाहा । अचर्मकाय । स्वाहा । लोहितवत इति लोहित—वते । स्वाहा । अलोहिताय । स्वाहा । मा॒ꣳसन्वत इति मा॒ꣳसन्—वते । स्वाहा । अमा॒ꣳसकाय । स्वाहा । स्नावभ्य इति स्नाव—भ्यः । स्वाहा । अस्नावकाय । स्वाहा । अस्थन्वत इत्यस्थन्—वते । स्वाहा । अनस्थिकाय । स्वाहा । मज्जन्वत इति मज्जन्—वते । स्वाहा । अमज्जकाय । स्वाहा । अङ्गिने । स्वाहा । अनङ्गाय । स्वाहा । आत्मने । स्वाहा । अनात्मने । स्वाहा । सर्वस्मै । स्वाहा ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

———

( अथ सप्तमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः। )

---

अथ शरीरहोममन्त्रा उच्यन्ते। तथा च ब्राह्मणम्—'दत्वते स्वाहाऽदन्तकाय स्वाहेति शरीरहोमाञ्जुहोति' इति।

पाठस्तु—

दत्वते स्वाहाऽदन्तकाय स्वाहा प्राणिने स्वाहाऽप्राणाय स्वाहा मुखवते स्वाहाऽमुखाय स्वाहा नासिकवते स्वाहाऽनासिकाय स्वाहाऽक्षण्वते स्वाहाऽनाक्षिकाय स्वाहा कर्णिने स्वाहाऽकर्णकाय स्वाहा शीर्षण्वते स्वाहाऽशीर्षकाय स्वाहा पद्वते स्वाहाऽपादकाय स्वाहा प्राणते स्वाहाऽप्राणते स्वाहा वदते स्वाहाऽवदते स्वाहा पश्यते स्वाहाऽपश्यते स्वाहा शृण्वते स्वाहाऽशृण्वते स्वाहा मनस्विने स्वाहाऽमनसे स्वाहा रेतस्विने स्वाहाऽरेतस्काय स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा लोमवते स्वाहाऽलोमकाय स्वाहा त्वचे स्वाहाऽत्वक्काय स्वाहा चर्मण्वते स्वाहाऽचर्मकाय स्वाहा लोहितवते स्वाहाऽलोहिताय स्वाहा माꣳसन्वते स्वाहाऽमाꣳसकाय स्वाहा स्नावभ्यः स्वाहाऽस्नावकाय स्वाहाऽस्थन्वते स्वाहाऽनस्थिकाय स्वाहा मज्जन्वते स्वाहाऽमज्जकाय स्वाहाऽङ्गिने स्वाहाऽनङ्गाय स्वाहाऽऽत्मने स्वाहाऽनात्मने स्वाहा सर्वस्मै स्वाहा, इति॥

दन्ता अस्य सन्तीति दत्वान्। न विद्यन्ते दन्ता यस्यासावदन्तकः। एवं सर्वत्र विधिनिषेधौ योजनीयौ। जगति हि जीवा द्विविधाः—तत्तदवयवोपेतास्तत्तद्विकलाश्चेति। अश्वस्य प्राजापत्यत्वेन सर्वात्मकतामभिप्रेत्यैतानि विशे-

षणान्युच्यन्ते । तत्र दन्तयुक्ता जीवाः प्रसिद्धाः । अत्यन्तं बाला वृद्धास्तद्र-हिताः । प्राणिनो जङ्गमा अप्राणिनः स्थावराः । वक्ष्यमाणा निषेधास्तत्तदव-यवराहित्येन वा सत्यप्यवयवे तदसौकर्येण वोदाहरणीयम् । त्वगिन्द्रियं, चर्म तदाधारभूतं गोलकम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

(अथ सप्तमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः)

---

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्ध्यै मह्यꣳ संनत्या अमुष्मै कामायाऽऽयुषे त्वा प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा (१) ॥

(कोऽष्टात्रिꣳशत् ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

(अथ सप्तमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ।)

---

कः । त्वा । युनक्ति । सः । त्वा । युनक्तु । विष्णुः । त्वा । युनक्तु । अस्य । यज्ञस्य । ऋद्ध्यै । मह्यम् ।

संनत्या इति सं–नत्यै । अमुष्मै । कामाय । आयुषे । त्वा । प्राणायेति प्र–अनाय । त्वा । अपानायेत्यप–अनाय । त्वा । व्यानायेति वि–अनाय । त्वा । व्युष्ट्या इति वि–उष्ट्यै । त्वा । रय्यै । त्वा । राधसे । त्वा । घोषाय । त्वा । पोषाय । त्वा । आराद्घोषायेत्याराद्–घोषाय । त्वा । प्रच्युत्या इति प्र–च्युत्यै । त्वा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ सप्तमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः । )

अतीतयोरनुवाकयोः पञ्चाशन्मन्त्रैरेकपञ्चाशन्मन्त्रैश्च सद्यान्नहोमा उक्ताः । अथ परिधिमन्त्रा उच्यन्ते ।

कल्पः—'कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन्युनक्त्यस्य यज्ञस्यर्ध्यै मह्यꣳ संनत्या इति सर्वत्रानुषजति' इति ।

पाठस्तु—

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्ध्यै मह्यꣳ संनत्या अमुष्मै कामायाऽऽयुषे त्वा प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा, इति ॥

हे मध्यमपरिधे कः प्रजापतिस्त्वां युनक्ति वह्निसमीपे योजयति । हे दक्षिण परिधे स प्रजापतिस्त्वां युनक्तु । हे उत्तरपरिधे विष्णुस्त्वां युनक्तु । किमर्थम्, अस्य यज्ञस्य समृद्ध्यर्थम् । तथा मह्यं संनत्यै मां प्रति सर्वेषां प्राणिनां संनमनाय, अमुष्मै प्रजादिरूपाय कामाय, आयुषे आयुर्वृद्धये त्वामहं युनज्मि ।

एवं सर्वत्राध्याहारः। प्राणापानव्यानाः प्रसिद्धाः। व्युष्टिः प्रभातम्। रयिर्धनम्। राधोऽन्नम्। घोषः कीर्तिः। पोषः पश्वादिपुष्टिः। आराद्धोषो दूरस्थ्दैवाचितम्[1]। प्रच्युतिः सर्वदुःखनिवृत्तिः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

(अथ सप्तमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः)

---

अग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय द्वादशकपालोऽदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्यै चरुः काय एककपालः (१)॥

(अग्नये गायत्रायादित्या अनुमत्यै चरुः सप्तचत्वारिꣳशत्।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

---

१ ख. °द्घोष आराच्छब्द इह दूरशब्दवाची। प्र°। २ ख. °न्दप्राहित्व°।

( अथ सप्तमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः । )

अग्नये । गायत्राय । त्रिवृत इति त्रि-वृते । राथंतरायेति राथं-तराय । वासन्ताय । अष्टाकपाल इत्यष्टा-कपालः । इन्द्राय । त्रैष्टुभाय । पञ्चदशायेति पञ्च-दशाय । बार्हताय । ग्रैष्माय । एकादशकपाल इत्येकादश-कपालः । विश्वेभ्यः । देवेभ्यः । जागतेभ्यः । सप्तदशेभ्य इति सप्त-दशेभ्यः । वैरूपेभ्यः । वार्षिकेभ्यः । द्वादशकपाल इति द्वादश-कपालः । मित्रावरुणाभ्यामिति मित्रा-वरुणाभ्याम् । आनुष्टुभाभ्यामित्यानु-स्तुभाभ्याम् । एकविंशाभ्यामित्येक-विंशाभ्याम् । वैराजाभ्याम् । शारदाभ्याम् । पयस्या । बृहस्पतये । पाङ्क्ताय । त्रिणवायेति त्रि-नवाय । शाक्वराय । हैमन्तिकाय । चरुः । सवित्रे । आतिच्छन्दसायेत्याति-छन्दसाय । त्रयस्त्रिंशायेति त्रयः-त्रिंशाय । रैवताय । शैशिराय । द्वादशकपाल इति द्वादश-कपालः । अदित्यै । विष्णुपत्न्या इति विष्णु-पत्न्यै । चरुः । अग्नये । वैश्वानराय । द्वादशकपाल इति द्वादश-कपालः । अनुमत्या इत्यनु-मत्यै । चरुः । कायः । एककपाल

इत्येकं—कपालः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके चतुर्दशोऽनुवाकः । )

---

यदुक्तं सूत्रकारेण—'अग्नये गायत्रायेति दशहविषꣳ सर्वपृष्ठां निर्वपति ' इति, तदिदं विधत्ते—

अग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय हैमन्तिकाय चरुः सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय द्वादशकपालोऽदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्यै चरुः काय एककपालः, इति ॥

अत्र षट्सु हविःषु च्छन्दसा स्तोमेन साम्नर्तुना च देवता विशेष्यते । पयसि भवाऽऽमिक्षा पयस्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः । )

---

यो वा अग्नावग्निः प्रह्रियते यश्च सोमो राजा तयोरेष आतिथ्यं यदंग्नीषोमीयोऽथैष रुद्रो यश्चीयते यत्संचितेऽग्नावेतानि हवींश्षि न निर्वपेदेष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून्यजमानस्याभि मन्येत यत्संचितेऽग्नावेतानि हवींश्षि निर्वपति भागधेयेनैवैनंश् शमयति नास्य रुद्रोऽशान्तः ( १ ) उपोत्थाय प्रजा पशूनभि मन्यते दश हवींश्षि भवन्ति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव यजमाने दधात्यथो दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठत्यृतुभिर्वा एष छन्दोभिः स्तोमैः पृष्ठैश्चेतव्य इत्याहुर्यदेतानि हवींश्षि निर्वपत्यृतुभिरेवैनं छन्दोभिः स्तोमैः पृष्ठैश्चिनुते दिशः सुषुवाणेन ( २ ) अभिजित्या इत्याहुर्यदेतानि हवींश्षि निर्वपति दिशामभिजित्या एतया वा इन्द्रं देवा अयाजयन्तस्मादिन्द्रसव एतया मनुं मनुष्यांस्तस्मान्मनुसवो यथेन्द्रो देवानां यथा मनुर्मनुष्याणामेवं भवति य एवं विद्वानेत-

येष्ट्या यजते दिग्वतीः पुरोनुवाक्या भवन्ति सर्वासां दिशामभिजित्यै ( ३ ) ॥

( अशान्तः सुषुत्राणेनैकंचत्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः )

---

यः । वै । अग्नौ । अग्निः । प्रह्रियत इति प्र-ह्रियते । यः । च । सोमः । राजा । तयोः । एषः । आतिथ्यम् । यत् । अग्नीषोमीय इत्यग्नी-सोमीयः । अथ । एषः । रुद्रः । यः । चीयते । यत् । संचित इति सं-चिते । अग्नौ । एतानि । हवीꣳषि । न । निर्वपेदिति निः-वपेत् । एषः । एव । रुद्रः । अशान्तः । उपोत्थायेत्युप-उत्थाय । प्रजामिति प्र-जाम् । पशून् । यजमानस्य । अभीति । मन्येत । यत् । संचित इति सं-चिते । अग्नौ । एतानि । हवीꣳषि । निर्वपतीति निः-वपति । भागधेयेनेति भाग-धेयेन । एव । एनम् । शमयति । न । अस्य । रुद्रः । अशान्तः ( १ ) । उपोत्थायेत्युप-उत्थाय । प्रजामिति प्र-जाम् । पशून् ।

अभीति । मन्यते । दश । हवींषि । भवन्ति । नव । वै । पुरुषे । प्राणा इति प्र-अनाः । नाभिः । दशमी । प्राणानिति प्र-अनान् । एव । यजमाने । दधाति । अथो इति । दशाक्षरेति दश-अक्षरा । विराडिति वि-राट् । अन्नम् । विराडिति वि-राट् । विराजीति वि-राजि । एव । अन्नाद्य इत्यन्न-अद्ये । प्रतीति । तिष्ठति । ऋतुभिरित्यृतु-भिः । वै । एषः । छन्दोभिरिति छन्दः-भिः । स्तोमैः । पृष्ठैः । चेतव्यः । इति । आहुः । यत् । एतानि । हवींषि । निर्वपतीति निः-वपति । ऋतुभिरित्यृतु-भिः । एव । एनम् । छन्दोभिरिति छन्दः-भिः । स्तोमैः । पृष्ठैः । चिनुते । दिशः । सुषुवाणेन (२) । अभिजित्या इत्यभि-जित्याः । इति । आहुः । यत् । एतानि । हवींषि । निर्वपतीति निः-वपति । दिशाम् । अभिजित्या इत्यभि-जित्यै । एतया । वै । इन्द्रम् । देवाः । अयाजयन् । तस्मात् । इन्द्रसव इतीन्द्र-सवः । एतया । मनुम् । मनुष्याः । तस्मात् । मनुसव इति मनु-सवः । यथा । इन्द्रः । देवानाम् । यथा । मनुः । मनुष्याणाम् । एवम् । भवति । यः । एवम् । विद्वान् । एतया । इष्ट्या । यजते । दिग्वतीरिति दिक्-वतीः । पुरोनुवाक्या इति पुरः-अनु-

वाक्यीः । भवन्ति । सर्वासाम् । दिशाम् । अभिजित्या इत्यभि-जित्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके पञ्चदशोऽनुवाकः । )

---

एतेषां हविषामुत्पत्तिमभिधाय प्रयोगं विधत्ते—

योवा अग्नावग्निः प्रह्रियते यश्च सोमो राजा तयो-रेष आतिथ्यं यदग्नीषोमीयोऽथैष रुद्रो यश्चीयते यत्संचितेऽग्नावेतानि हवीꣳषि न निर्वपेदेष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून्यजमानस्याभि मन्येत यत्संचितेऽग्नावेतानि हवीꣳषि निर्वपति भागधेयेनैवैनꣳ शमयति नास्य रुद्रोऽशान्त उपोत्थाय प्रजां पशूनभि मन्यते, इति ।

आधानसिद्धेऽग्नौ योऽन्योऽग्निर्मथित्वा प्रह्रियते, योऽपि सोमो राजा वल्लीरूपः स्थापितस्तयोरुभयोर्योऽयमग्नीषोमीयः पशुरेष एवाऽऽतिथ्यम् । तेन सत्कारेण तावुभौ तुष्टौ । अथ योऽयमग्निश्चयनेन निष्पाद्यते स एष रुद्रः क्रूरो वर्तते । यदि तस्मिन्संचितेऽग्नावेतानि यथोक्तानि हवींषि न निर्वपेत्तदानीमेव क्रूरोऽतिक्रुद्धः सन्समीपमागत्य यजमानस्य प्रजां पशून्हिंस्यात् । तन्निर्वापे तु स्वकीयभागेन तुष्टो न हिनस्ति ।

पाठप्राप्तां हविःसंख्यां प्रशंसति—

दश हवीꣳषि भवन्ति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव यजमाने दधात्यथो दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठन्ति, इति ।

देवताविशेषणानि प्रशंसति—

ऋतुभिर्वा एष छन्दोभिः स्तोमैः पृष्ठैश्चेतव्य इत्याहुर्यद्देतानि हवीꣳषि निर्वपत्यृतुभिरे-वैनं छन्दोभिः स्तोमैः पृष्ठैश्चिनुते, इति ।

ऋतवो वसन्ताद्याः । छन्दांसि गायत्र्यादीनि । स्तोमास्त्रिवृदादयः । पृष्ठानि रथंतरादीनि । एतेषां देवताविशेषणत्वेनोपात्तत्वाद्दत्वादिभिरेवाग्नि-श्चितो भवति ।

अथ हवींषि प्रशंसति—

दिशः सुषुवाणेनाभिजित्या इत्याहुर्यद्देतानि हवीꣳषि निर्वपति दिशामभिजित्यै, इति ।

सुषुवाणेन सोमं सुषुवाणेन दिशो जेतव्याः । प्राच्यादीनां चतुर्दिशामाग्ने-य्यादीनां चतुर्दिशामूर्ध्वाधोदिशोश्च मिलित्वा दशसंख्योपेतत्वाद्दशभिर्हविर्भि-स्तासामभिजयः ।

अथ दशहविःसंघातरूपामेतां सर्वपृष्ठेष्टिं प्रशंसति—

एतया वा इन्द्रं देवा अयाजयन्तस्मादिन्द्रसव एतया मनुं मनुष्यास्तस्मान्मनुसवो यथेन्द्रो देवानां यथा मनुर्मनुष्याणामेवं भवति य एवं विद्वानेतयेष्ट्या यजते, इति ।

सूयत ऐश्वर्यं प्राप्यते येनासौ सवः । इन्द्रस्यैश्वर्यहेतुरिन्द्रसवः । एवं मनु-सवोऽप्ययं यज्ञः । तेन यजमानस्ताभ्यामुभाभ्यां सदृशमैश्वर्यं प्राप्नोति ।

एतेषु दशसु हविष्षु समिद्दिशामाशया न इत्यनुवाकोक्ता दिक्शब्दयुक्ता याज्यानुवाक्या विधत्ते—

दिग्वतीः पुरोनुवाक्या भवन्ति सर्वासां दिशामभिजित्यै, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥ १९ ॥

———

( अथ सप्तमाष्टके पञ्चमप्रपाठके षोडशोऽनुवाकः । )

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ( १ ) ॥

( यः प्राणतो द्यौरादित्योऽष्टात्रिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ सप्तमाष्टके पञ्चमप्रपाठके षोडशोऽनुवाकः । )

यः । प्राणत इति प्र—अनतः । निमिषत इति नि—मिषतः । महित्वेति महि—त्वा । एकः । इत् । राजा । जगतः । बभूव । यः । ईशे । अस्य । द्विपद इति द्वि—पदः । चतुष्पद इति चतुः—पदः । कस्मै । देवाय । हविषा । विधेम । उपयामगृहीत इत्युपयाम—गृहीतः । असि । प्रजापतय इति प्रजा—पतये । त्वा । जुष्टम् । गृह्णामि । तस्य । ते । द्यौः । महिमा । नक्षत्राणि । रूपम् ।

आदित्यः । ते । तेजः । तस्मै । त्वा । महिम्ने । प्रजापतय इति प्रजा-पतये । स्वाहा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके षोडशोऽनुवाकः । )

---

कल्पः— ' यः प्राणतो य आत्मदा इति महिमानौ जुहोति राजतेन पूर्वꣳ सौवर्णेनोत्तरम् ' इति ।

तत्र पूर्वस्य महिमाख्यग्रहस्य मन्त्रं दर्शयति—

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा, इति ॥

यः प्रजापतिरेक इत्स्वयमेक एव प्राणतः श्वासयुक्तस्य निमिषतश्चक्षुर्निमेषयुक्तस्य च जगतो महित्वा स्वमहिम्ना राजा बभूव, यश्च प्रजापतिरस्य द्विपदो मनुष्यादेश्चतुष्पदो गवादेश्चेशे स्वामी भवति, कस्मै देवाय यस्मै कस्मैचित्प्राकृतप्राणिभिरनिश्चितरूपाय तादृशाय प्रजापतिरूपाय देवायानेन हविषा परिचरेम । हे प्रजापते तस्य ते तादृशस्य तव द्यौर्महिमा द्युलोक एवायं महिमाख्यग्रहो दृश्यमानानि नक्षत्राणि तव रूपम् । आदित्यस्त्वदीयं तेजः । हे ग्रह त्वां तस्मै तादृशाय महिम्ने महिमयुक्ताय प्रजापतये स्वाहा जुहोमि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः । )

---

य आत्मदा बलदा यस्य विश्वं उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ( १ ) ॥

( य आत्मदा यः पृथिव्यग्निरेकान्नचत्वारिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः । )

---

यः । आत्मदा इत्यात्म—दाः । बलदा इति बल—दाः । यस्य । विश्वे । उपासत इत्युप—आसते । प्रशिषमिति प्र—शिषम् । यस्य । देवाः । यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय । हविषा । विधेम । उपयामगृहीत इत्युपयाम—गृहीतः । असि । प्रजापतय इति प्रजा—पतये । त्वा । जुष्टम् । गृह्णामि । तस्य । ते । पृथिवी । महिमा । ओषधयः । वनस्पतयः । रूपम् । अग्निः । ते । तेजः ।

तस्मै । त्वा । महिम्ने । प्रजापतय इति प्रजा–पतये । स्वाहा (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

(अथ सप्तमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः ।)

---

अथ द्वितीयग्रहमन्त्रं पठति—

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा, इति ॥

यः प्रजापतिरात्मदाः सर्वेषां शरीरप्रदः, यश्च तस्मिञ्शरीरे बलप्रदः, यस्य प्रजापतेः प्रशिषं प्रकृष्टं शासनं विश्वे सर्वेऽप्युपासते सेवन्ते, देवा अपि यस्य प्रशिषमुपासते, यस्यामृतं छायेव स्वाधीनं, तथा प्राणिनां मृत्युरपि यस्य ह्यधीनस्तादृशाय कस्मै केनाप्यविज्ञातस्वरूपाय देवाय प्रजापतये हविषा परिचरेम । हे ग्रह त्वमुपयामेन पार्थिवपात्रेण गृहीतोऽसि, प्रजापत्यर्थं त्वां गृह्णामि । हे प्रजापते तादृशस्य ते तव पृथिवीरूपो महिमाख्यो ग्रहः । ओषधयो वनस्पतयश्च तव विचित्रं रूपम् । अग्निस्त्वदीयं तेजः । हे ग्रह त्वां तस्मै महिमयुक्ताय प्रजापतये जुहोमि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः । )

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ( १ ) ॥

( आ ब्रह्मन्नेकंचत्वारिंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

( अथ सप्तमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः । )

एति । ब्रह्मन् । ब्राह्मणः । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । जायताम् । एति । अस्मिन् । राष्ट्रे । राजन्यः । इषव्यः । शूरः । महारथ इति महा-रथः । जायताम् । दोग्ध्री । धेनुः । वोढा । अनड्वान् । आशुः । सप्तिः । पुरन्धिः । योषा । जिष्णुः । रथेष्ठा इति रथे-स्थाः । सभेयः । युवा । एति । अस्य । यजमानस्य । वीरः ।

जायताम् । निकामेनिकाम इति निकामे–निकामे । नः । पर्जन्यः । वर्षतु । फलिन्यः । नः । ओषधयः । पच्यन्ताम् । योगक्षेम इति योग–क्षेमः । नः । कल्पताम् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः । )

---

अथान्नहोममन्त्राः । तथा च ब्राह्मणम्—'आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति' इति ।

पाठस्तु—

'आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्, इति ॥

ब्रह्मन्ब्राह्मणजातौ ब्रह्मवर्चसी श्रुताध्ययनसंपन्नो ब्राह्मण आजायतां सर्वत उत्पद्यताम् । एतदेकं वाक्यमेको मन्त्रः । एवमुत्तरत्रापि । इषव्यो बाणाद्यायुधेषु कुशलः । धेनुरित्यादिष्वाजायतामित्यनुवर्तते । सप्तिरश्वः । आशुः शीघ्रगामी । पुरवासिभिर्ध्यायत इति पुरन्धिः, रूपवतीत्यर्थः । अस्य यजमानस्य जिष्णुत्वादिगुणविशिष्टः पुत्र आजायताम् । नोऽस्माकं यदा यदाऽपेक्षा तदा तदा पर्जन्यो वर्षतु । ओषधयश्च बहुफलयुक्ताः पच्यन्ताम् । अल-

ब्धस्य लाभो योगः । लब्धस्य परिपालनं क्षेमः । योगसहितः क्षेमो योगक्षेमः । सोऽस्माकं संपद्यताम् । एतैर्दशभिर्मन्त्रैर्ब्रह्मवर्चसनामकं होमं कुर्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठकेऽ-
ष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठक एकोनविंशोऽनुवाकः । )

---

आऽक्रान्वाजी पृथिवीमग्निं युजमकृत वाज्य-र्वाऽक्रान्वाज्यन्तरिक्षं वायुं युजमकृत वाज्यर्वा द्यां वाज्याऽक्रंस्त सूर्यं युजमकृत वाज्यर्वाऽग्निस्ते वाजिन्युङ्ङनु त्वाऽऽ रंभे स्वस्ति मा सं पारय वायुस्ते वाजिन्युङ्ङनु त्वाऽऽ रंभे स्वस्ति मा सम् ( १ ) पारयाऽऽदित्यस्ते वाजिन्युङ्ङनु त्वाऽऽ रंभे स्वस्ति मा सं पारय प्राणधृगसि प्राणं मे दृंह व्यानधृगसि व्यानं मे दृंहापानधृगस्यपानं मे दृंह चक्षुरसि चक्षुर्मयि धेहि श्रोत्रमसि श्रोत्रं मयि धेह्यायुरस्यायुर्मयि धेहि ( २ ) ॥

( वायुस्ते वाजिन्युङ्ङनु त्वाऽऽ रंभे स्वस्ति मा सं
त्रिचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
पञ्चमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठक एकोनविंशोऽनुवाकः । )

---

एति । अक्रान् । वाजी । पृथिवीम् । अग्निम् । युजम् । अकृत । वाजी । अर्वा । एति । अक्रान् । वाजी । अन्तरिक्षम् । वायुम् । युजम् । अकृत । वाजी । अर्वा । द्याम् । वाजी । एति । अक्रꣳस्त । सूर्यम् । युजम् । अकृत । वाजी । अर्वा । अग्निः । ते । वाजिन् । युङ् । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । वायुः । ते । वाजिन् । युङ् । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति ( १ ) । पारय । आदित्यः । ते । वाजिन् । युङ् । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । प्राणधृगिति प्राण–धृक् । असि । प्राणमिति प्र–अनम् । मे । दृꣳह । व्यानधृगिति व्यान–धृक् । असि । व्यानमिति वि–अनम् । मे । दृꣳह । अपानधृगित्यपान–धृक् । असि । अपानमित्यप–अनम् । मे । दृꣳह । चक्षुः । असि । चक्षुः । मयि । धेहि । श्रोत्रम् । असि । श्रोत्रम् । मयि । धेहि । आयुः । असि । आयुः । मयि । धेहि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके एकोनविंशोऽनुवाकः । )

अथाश्वानुमन्त्रणम् । तथा च ब्राह्मणम्—'आऽक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यश्वमनुमन्त्रयते'इति ।

एतेषु त्रिषु मन्त्रेषु प्रथमं मन्त्रं पठति—

आऽक्रान्वाजी पृथिवीमग्निं युजमकृत वाज्यर्वाऽक्रान्वाज्यन्तरिक्षं वायुं युजमकृत वाज्यर्वा द्यां वाज्याऽक्रꣳस्त सूर्यं युजमकृत वाज्यर्वाऽग्निस्ते वाजिन्युङ्ङ्नु त्वाऽऽ रभे स्वस्ति मा सं पारय वायुस्ते वाजिन्युङ्ङ्नु त्वाऽऽ रभे स्वस्ति मा सं पारयाऽऽदित्यस्ते वाजिन्युङ्ङ्नु त्वाऽऽ रभे स्वस्ति मा सं पारय प्राणधृगसि प्राणं मे दृꣳह व्यानधृगसि व्यानं मे दृꣳहापानधृगस्यपानं मे दृꣳह चक्षुरसि चक्षुर्मयि धेहि श्रोत्रमसि श्रोत्रं मयि धेह्यायुरस्यायुर्मयि धेहि, इति ॥

वाजी वेगवानयमश्वः पृथिवीमाक्रानाक्रान्तवान् । सोऽर्वा तस्यां पृथिव्यामग्निं युजं योजयितारं व्यवहारनिर्वाहकमकृत । एवमुत्तरत्रापि योज्यम् । हे वाजिन्नग्निस्ते युङ्तव योजयिता सहायभूतः। तस्मात्त्वामन्वारभे। त्वं च स्वस्ति विनाशराहित्येन मां संपारय सम्यक्कर्मसमाप्तिं प्रापय । एवमुत्तरत्रापि योज्यम्। प्राणं दृंहति दृढीं करोतीति प्राणधृक् । हेऽश्व त्वं तादृशोऽस्यतो मे प्राणं दृढीं कुरु । एवमुत्तरत्रापि । हेऽश्व त्वं चक्षुरस्यतो मयि चक्षुः स्थापय । एवमुत्तरत्रापि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके एकोनविंशोऽनुवाकः ॥ १९ ॥

(अथ सप्तमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः।)

---

जज्ञि बीजं वर्ष्टा पर्जन्यः पक्ता सस्यꣳ सुपिप्पला ओषधयः स्वधिचरणेयꣳ सूपसदनोऽग्निः स्वध्यक्षमन्तरिक्षꣳ सुपावः पवमानः सूपस्थाना द्यौः शिवमसौ तपन्यथापूर्वमहोरात्रे पञ्चदशिनोऽर्धमासास्त्रिꣳशिनो मासाः कॢप्ता ऋतवः शान्तः संवत्सरः (१)॥

(जज्ञ्येकत्रिꣳशत्।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः॥ २०॥

---

(अथ सप्तमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः।)

---

जज्ञि। बीजम्। वर्ष्टा। पर्जन्यः। पक्ता। सस्यम्। सुपिप्पला इति सु-पिप्पलाः। ओषधयः। स्वधिचरणेति सु-अधिचरणा। इयम्। सूपसदन इति सु-उपसदनः। अग्निः। स्वध्यक्षमिति सु-अध्यक्षम्। अन्तरिक्षम्। सुपाव इति सु-पावः। पवमानः। सूपस्थानेति सु-उपस्थाना। द्यौः। शिवम्। असौ। तपन्। यथापूर्वमिति यथा-पूर्वम्। अहोरात्रे इत्यहः-रात्रे। पञ्चदशिन इति पञ्च-

दशिनः । अर्धमासा इत्यर्ध—मासाः । त्रिꣳशिनः । मासाः । कॢप्ताः । ऋतवः । शान्तः । संवत्सर इति सं—वत्सरः (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके विंशोऽनुवाकः । )

---

अथान्येऽन्नहोममन्त्रा उच्यन्ते ।

तथा च ब्राह्मणम्—'जज्ञि बीजमिति जुहोत्यनन्तरित्यै' इति ।

पाठस्तु—

जज्ञि बीजं वर्ष्टा पर्जन्यः पक्ता सस्यꣳ सुपिप्पला ओषधयः स्वधिचरणेयꣳ सूपसदनोऽग्निः स्वध्यक्षमन्तरिक्षꣳ सुपावः पवमानः सूपस्थाना द्यौः शिवमसौ तपन्यथापूर्वमहोरात्रे पञ्चदशिनोऽर्धमासास्त्रिꣳशिनो मासाः क्लृप्ता ऋतवः शान्तः संवत्सरः, इति ॥

यदेतद्व्रीह्यादि बीजं तज्जज्ञि जननस्वभावमस्तु । अस्त्विति सर्वत्राध्याहारः । पर्जन्यो वर्ष्टा वृष्टिकारोऽस्तु । सस्यं पक्ता पाकशीलम् । ओषधयश्च सुपिप्पलाः शोभनफलाः । इयं पृथिवी स्वधिचरणा सुखेनाधिष्ठाय चरितुं शक्या । अग्निः सूपसदनः सुखेनोपसत्तुं परिचरितुं शक्यः । अन्तरिक्षं स्वध्यक्षं सुखेनाध्यक्षितव्यं धूमकेत्वाद्युत्पातरहितमित्यर्थः । पवमानो वायुः सुपावोऽनुपद्रवकारिसंचारयुक्तः । द्यौः सूपस्थाना सुखेनावस्थातुं शक्या, दैविकोपद्रवरहितेत्यर्थः । असावादित्यः शिवमुपद्रवराहित्यं यथा भवति तथा तपन्वर्तताम् । अहोरात्रे यथापूर्वं कल्पादेवाऽऽरभ्य येन क्रमेण प्रवृत्ते तथैवात्रापि प्रवर्तेताम् । अर्धमासा न्यूनाधिक्यराहित्येन पञ्चदशदिनयुक्ताः । तथा मासास्त्रिंशद्दिनयुक्ताः ।

---

१ ख ग. ड. च. °कारी य° ।

ऋतवः कृप्तास्तत्तल्लक्षणोपेताः । संवत्सरः शान्तः प्रजापीडारहितः । एतैः पञ्चदशभिर्मन्त्रैरन्नहोमाः कर्तव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके
विंशोऽनुवाकः ॥ २० ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः । )

---

आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रोऽष्टा-
कपालः पौष्णश्चरू रौद्रश्चरुरग्नये वैश्वानराय
द्वादशकपालो मृगाखरे यदि नाऽऽगच्छेदग्नयेऽꣳ-
होमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्य-
भागः ( १ ) ॥

( आग्नेयश्चतुर्विꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
पञ्चमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः । )

---

आग्नेयः । अष्टाकपाल इत्यष्टा–कपालः । सौम्यः । चरुः । सावित्रः । अष्टाकपाल इत्यष्टा–कपालः । पौष्णः । चरुः । रौद्रः । चरुः । अग्नये । वैश्वानराय । द्वादशकपाल इति द्वादश–कपालः । मृगाखर इति मृग–आखरे । यदि । न । आगच्छेदित्या–गच्छेत् । अग्नये ।

अꣳहोमुच इत्यꣳहः-मुचे । अष्टाकपाल इत्यष्टा-कपालः । सौर्यम् । पयः । वायव्यः । आज्यभाग इत्याज्य-भागः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठक एकविंशोऽनुवाकः । )

---

अथाश्वस्य रोगादिनिमित्ते प्राप्ते प्रायश्चित्तेष्टय उच्यन्ते । तथा च ब्राह्मणम्—'यद्यश्वमुपतपद्विन्देत् । आग्नेयमष्टाकपालं निर्वपेत्' इत्यादि ।

इष्टीनां पाठस्तु—

आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रोऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरग्नये वैश्वानराय द्वादशकपालो मृगाखरे यदि नाऽऽगच्छेदग्नयेऽꣳहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः, इति ।

मृगारवरेऽश्वनिवासस्थाने यदि नाऽऽगच्छेत्, तत्रानागमनमेकं निमित्तम् । निमित्तान्तराणि तु ब्राह्मणे द्रष्टव्यानि । तान्येतानि नव हवींषि प्रायश्चित्तरूपाणि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः । )

---

अग्नयेऽꣳहोमुचेऽष्टाकपाल इन्द्रायाꣳहोमुच एकादशकपालो मित्रावरुणाभ्यामागोमुग्भ्यां पयस्या

वायोसावित्र आगोमुग्भ्यां चरुरश्विभ्यामागोमुग्भ्यां धाना मरुद्भ्य एनोमुग्भ्यः सप्तकपालो विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालोऽनुमत्यै चरुरग्नये वैश्वानराय द्वादशकपालो द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः ( १ )॥

( अग्नयेऽꣳहोमुचे त्रिꣳशत्। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः। )

---

अग्नये। अꣳहोमुच इत्यꣳहः-मुचे। अष्टाकपाल इत्यष्टा-कपालः। इन्द्राय। अꣳहोमुच इत्यꣳहः-मुचे। एकादशकपाल इत्येकादश-कपालः। मित्रावरुणाभ्यामिति मित्रा-वरुणाभ्याम्। आगोमुग्भ्यामित्यागोमुक्-भ्याम्। पयस्या। वायोसावित्रं इति वायो-सावित्रः। आगोमुग्भ्यामित्यागोमुक्-भ्याम्। चरुः। अश्विभ्यामित्यश्वि-भ्याम्। आगोमुग्भ्यामित्यागोमुक्-भ्याम्। धानाः। मरुद्भ्य इति मरुत्-भ्यः। एनोमुग्भ्य इत्येनोमुक्-भ्यः। सप्तकपाल इति सप्त-कपालः। विश्वेभ्यः। देवेभ्यः। एनोमुग्भ्य इत्येनोमुक्-भ्यः। द्वादशकपाल इति द्वादश-कपालः।

अनु॑मत्या इत्यनु॑—म॒त्यै॒ । च॒रुः । अ॒ग्नये॑ । वै॒श्वा॒न॒राय॑ । द्वाद॑शकपाल॒ इति॒ द्वाद॑श—क॒पा॒लः॒ । द्यावा॑पृथि॒वीभ्या॒मिति॒ द्यावा॑—पृ॒थि॒वीभ्या॑म् । अ॒ꣳहो॒मुग्भ्या॒मित्य॑ꣳहो॒मुक्—भ्या॒म् । द्वि॒क॒पा॒ल इति॑ द्वि—क॒पा॒लः॒ ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके द्वाविंशोऽनुवाकः । )

---

यदुक्तं सूत्रकारेण—'अग्नयेऽꣳहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिमनुनिर्वपति' इति, तदेतद्विधत्ते—

अग्नयेऽꣳहोमुचेऽष्टाकपाल इन्द्रायाꣳहोमुच एकादशकपालो मित्रावरुणाभ्यामागोमुग्भ्यां पयस्या वायोसावित्र आगोमुग्भ्यां चरुरश्विभ्यामागोमुग्भ्यां धाना मरुद्भ्य एनोमुग्भ्यः सप्तकपालो विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालोऽनुमत्यै चरुरग्नये वैश्वानराय द्वादशकपालो द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः, इति ॥

अंहसो मोचयतीत्यंहोमुक् । आगसो मोचयत इत्यागोमुचौ । वायुश्च सविता च वायोसावित्रः, वायुसवितृभ्यामित्यर्थः । धाना भृष्टयवाः । एनसो मोचयन्तीत्येनोमुचः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः । )

---

अग्नये समनमत्पृथिव्यै समनमद्यथाऽग्निः पृथिव्या समनमदेवं मह्यं भद्राः संनतयः सं नमन्तु वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा चन्द्रमसे समनमन्नक्षत्रेभ्यः समनमद्यथा चन्द्रमा नक्षत्रैर्वरुणाय समनमदद्भ्यः समनमद्यथा ( १ ) वरुणोऽद्भिः साम्ने समनमदृचे समनमद्यथा सामर्चा ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण राज्ञे समनमद्विशे समनमद्यथा राजा विशा रथाय समनमदश्वेभ्यः समनमद्यथा रथोऽश्वैः प्रजापतये समनमद्भूतेभ्यः समनमद्यथा प्रजापतिर्भूतैः समनमदेवं मह्यं भद्राः संनतयः सं नमन्तु ( २ ) ॥

( अद्भ्यः समनमद्यथा मह्यं चत्वारि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः । )

---

अग्नये । समिति । अनमत् । पृथिव्यै । समिति ।

अनमत् । यथा । अग्निः । पृथिव्या । समनमदिति सम्-अनमत् । एवम् । मह्यम् । भद्राः । संनतय इति सम्-नतयः । समिति । नमन्तु । वायवे । समिति । अनमत् । अन्तरिक्षाय । समिति । अनमत् । यथा । वायुः । अन्तरिक्षेण । सूर्याय । समिति । अनमत् । दिवे । समिति । अनमत् । यथा । सूर्यः । दिवा । चन्द्रमसे । समिति । अनमत् । नक्षत्रेभ्यः । समिति । अनमत् । यथा । चन्द्रमाः । नक्षत्रैः । वरुणाय । समिति । अनमत् । अद्भ्य इत्यत्-भ्यः । समिति । अनमत् । यथा ( १ ) । वरुणः । अद्भिरित्यत्-भिः । साम्ने । समिति । अनमत् । ऋचे । समिति । अनमत् । यथा । साम । ऋचा । ब्रह्मणे । समिति । अनमत् । क्षत्राय । समिति । अनमत् । यथा । ब्रह्म । क्षत्रेण । राज्ञे । समिति । अनमत् । विशे । समिति । अनमत् । यथा । राजा । विशा । रथाय । समिति । अनमत् । अश्वेभ्यः । समिति । अनमत् । यथा । रथः । अश्वैः । प्रजापतय इति प्रजा-पतये । समिति । अनमत् । भूतेभ्यः । समिति । अनमत् । यथा । प्रजापतिरिति प्रजा-पतिः । भूतैः । समनमदिति सम्-अनमत् । एवम् ।

मह्यम् । भद्राः । संनतय इति सं-नतयः । समिति । नमन्तु ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः । )

---

अथ संनतिहोमा उच्यन्ते । तथा च ब्राह्मणम्—' अग्नये समनमत्पृथिव्यै समनमदिति संनतिहोमाञ्जुहोति ' इति ।

पाठस्तु—

अग्नये समनमत्पृथिव्यै समनमद्यथाऽग्निः पृथिव्या समनमदेवं मह्यं भद्राः संनतयः सं नमन्तु वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा चन्द्रमसे समनमन्नक्षत्रेभ्यः समनमद्यथा चन्द्रमा नक्षत्रैर्वरुणाय समनमदद्भ्यः समनमद्यथा वरुणोऽद्भिः साम्ने समनमदृचे समनमद्यथा सामर्चा ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण राज्ञे समनमद्विशे समनमद्यथा राजा विशा रथाय समनमदश्वेभ्यः समनमद्यथा रथोऽश्वैः प्रजापतये समनमद्भूतेभ्यः समनमद्यथा प्रजापतिर्भूतैः समनमदेवं मह्यं भद्राः संनतयः सं नमन्तु, इति ॥

सर्वोऽपि यजमानोऽग्नये समनमत्संनतिं परिचर्यामकरोत् । तथा पृथिव्यै समनमत्परिचर्यामकरोत् । स च पृथिव्या सहितोऽग्निर्यथा समनमद्येन प्रका-

रेण तस्मै यजमानाय संनतिमुपकारमकरोत्, एवमनेन प्रकारेण मह्यं मदर्थं भद्राः संनतयः कल्याणा उपकारा देवकृताः संनमन्तु प्राप्नुवन्तु। एवमुत्तरेष्वपि मन्त्रेषु योजनीयम्। समनमदेवं मह्यमित्यादिकं सर्वत्रानुषज्यते। तदर्थमेवान्ते पुनः पाठः। एतैर्दशभिर्मन्त्रैरन्नहोमेषु संनतिनामका होमाः कर्तव्याः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके
त्रयोविंशोऽनुवाकः॥ २३॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः। )

---

ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहि। नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि (१)॥

( ये ते चतुश्चत्वारिंशत्। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके
पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः॥ २४॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः। )

---

ये। ते। पन्थानः। सवितः। पूर्व्यासः। अरेणवः। विततां इति वि-तताः। अन्तरिक्षे। तेभिः। नः। अद्य।

पथिभिरिति पथि–भिः । सुगेभिरिति सु–गेभिः । रक्ष । च । नः । अधीति । च । देव । ब्रूहि । नमः । अग्नये । पृथिविक्षित इति पृथिवि–क्षिते । लोकस्पृत इति लोक–स्पृते । लोकम् । अस्मै । यजमानाय । देहि । नमः । वायवे । अन्तरिक्षक्षित इत्यन्तरिक्ष–क्षिते । लोकस्पृत इति लोक–स्पृते । लोकम् । अस्मै । यजमानाय । देहि । नमः । सूर्याय । दिविक्षित इति दिवि–क्षिते । लोकस्पृत इति लोक–स्पृते । लोकम् । अस्मै । यजमानाय । देहि ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः । )

---

कल्पः–'ये ते पन्थानः सवितः पूर्व्यास इत्यध्वर्युर्यजमानं वाचयति' इति । पाठस्तु—

ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो
वितता अन्तरिक्षे । तेभिर्नो अद्य पथिभिः
सुगेभी रक्षा च नो अधि च देव ब्रूहि ।, इति ।

हे सवितर्देव ते तव संबन्धिनः पूर्व्यासः पूर्वसिद्धा अन्तरिक्षे वितता विस्तृता अरेणवो धूलिरहिता ये मार्गाः सन्ति, सुगेभिः सुष्ठु गन्तुं शक्यैस्तेभिस्तैर्मार्गैरागत्याद्यास्मिन्कर्मणि नोऽस्मान्रक्ष । तथा नोऽस्मानधिब्रूहि चाधिकोऽयं यजमान इति देवानामग्रे कथय च ।

कल्पः—'नमोऽग्नये पृथिविक्षित इत्येतैश्च यथालिङ्गम्' इति । उपतिष्ठत इत्यनुवर्तते ।

पाठस्तु—

नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि, इति ॥

पृथिविक्षिते भूनिवासिने लोकस्पृते लोकस्य प्रीणयित्रेऽग्नये नमोऽस्तु । अस्मै यजमानाय लोकमुत्तमस्थानं देहि । एवमुत्तरयोरपि योज्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

( अथ सप्तमाष्टके पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः । )

---

यो वा अश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान्मेध्यो भवत्युषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासाः संधानान्यृतवोऽङ्गानि संवत्सर आत्मा रश्मयः केशा नक्षत्राणि रूपं तारका अस्थानि नभो माꣳसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुखं वैश्वानरो व्यात्तम् (१) समुद्र उदरमन्तरिक्षं पायुर्द्यावापृथिवी आण्डौ

( अश्वमेधाङ्गमन्त्रकथनम् )

ग्रावा शेपः सोमो रेतो यज्जंजभ्यते तद्वि द्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमानावश्वमभितः सं बभूवतुर्हयो देवानवहदर्वाऽसुरान्वाजी गन्धर्वानश्वो मनुष्यान्त्समुद्रो वा अश्वस्य योनिः समुद्रो बन्धुः*( २ ) ॥

( व्यात्तमवहद्द्वादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

गावो गावः सिषासन्तीः प्रथमे मासि समान्यो यदि सोमौ षडहैरुत्सृज्या३ देवानामकर्येण चर्माव पृथिव्यै दत्वेन कस्त्वाऽग्नये यो वै यः प्राणतो य आत्मदा आ ब्रह्मन्नाऽक्रान्वाजी जज्ञिबीजमाग्नेयोऽष्टाकपालोऽग्नयेऽंहोमुचेऽष्टाकपालोऽग्नये समनमग्ने ते पन्थानो यो वा अश्वस्य मेध्यस्य शिरः पञ्चविंशतिः ॥ २५ ॥

गावः समान्यः सवनमष्टाभिर्वा एते देवकृतं चाभिजित्या इत्याहुर्वरुणोऽद्भिः साम्ने चतुःपञ्चाशत् ॥ ५४ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके पञ्चम प्रपाठकः ॥ ५ ॥

---

* यद्यप्यत्र संहितायां पदपाठे च बन्धुरिति पदं वैदिका न पठन्ति तथाऽपि भाष्यकारसंमतत्वात् ' व्यात्तमवहद्द्वादश च ' इतिवैदिकसंप्रदायानुरोधिप्रतीकवाक्योक्तद्वादशसंख्यापूरणार्थमावश्यकत्वाच्च स्थापितम् ।

( अथ सप्तमाष्टके पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः । )

---

यः । वै । अश्वस्य । मेध्यस्य । शिरः । वेद । शीर्षण्वानिति शीर्षण्-वान् । मेध्यः । भवति । उषाः । वै । अश्वस्य । मेध्यस्य । शिरः । सूर्यः । चक्षुः । वातः । प्राण इति प्र-अनः । चन्द्रमाः । श्रोत्रम् । दिशः । पादाः । अवान्तरदिशा इत्यवान्तर-दिशाः । पर्शवः । अहोरात्रे इत्यहः-रात्रे । निमेष इति नि-मेषः । अर्धमासा इत्यर्ध-मासाः । पर्वाणि । मासाः । संधानानीति सं-धानानि । ऋतवः । अङ्गानि । संवत्सर इति सं-वत्सरः । आत्मा । रश्मयः । केशाः । नक्षत्राणि । रूपम् । तारकाः । अस्थानि । नभः । मांसानि । ओषधयः । लोमानि । वनस्पतयः । वालाः । अग्निः । मुखम् । वैश्वानरः । व्यात्तमिति वि-आत्तम् ( १ ) । समुद्रः । उदरम् । अन्तरिक्षम् । पायुः । द्यावापृथिवी इति द्यावा-पृथिवी । आण्डौ । ग्रावा । शेपः । सोमः । रेतः । यत् । जंजभ्यते । तत् । वीति । द्योतते । यत् । विधूनुत इति वि-धूनुते । तत् । स्तनयति । यत् । मेहति । तत् । वर्षति । वाक् । एव । अस्य । वाक् । अहः । वै । अश्वस्य । जायमानस्य । महिमा । पुरस्तात् । जायते । रात्रिः । एनम् । महिमा ।

पश्चात् । अन्विति । जायते । एतौ । वै । महिमानौ । अश्वम् । अभितः । समिति । बभूवतुः । हयः । देवान् । अवहत् । अर्वा । असुरान् । वाजी । गन्धर्वान् अश्वः । मनुष्यान् । समुद्रः । वै । अश्वस्य । योनिः । समुद्रः । बन्धुः ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे सप्तमाष्टके पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः । )

---

अथान्तिमेऽनुवाके सर्वजगदात्मकत्वेनाश्वः स्तूयते । अथवा विराड्रूपेणाश्वोपासनप्रतिपादकोऽयमनुवाकः प्रकरणादुत्कृष्योपनिषदादौ द्रष्टव्यः । अत एव वाजसनेयिन एतदर्थप्रतिपादकं ब्राह्मणमुपनिषदादावामनन्ति ।

पाठस्तु—

यो वा अश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान्मेध्यो भवत्युषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासाः संधानान्यृतवोऽङ्गानि संवत्सर आत्मा रश्मयः केशा नक्षत्राणि रूपं तारका अस्थानि नभो माꣳसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुखं वैश्वानरो व्यात्तꣳ समुद्र उदरमन्तरिक्षं पायुर्द्यावापृथिवी आण्डौ ग्रावा शेपः सोमो रेतो यज्जंजभ्यते तद्वि द्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति

वागेवास्य वागहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमानावश्वमभितः सं बभूवतुर्हयो देवानवहदर्वाऽसुरान्वाजी गन्धर्वानश्वो मनुष्या-न्त्समुद्रो वा अश्वस्य योनिः समुद्रो बन्धुः, इति॥

यः पुमान्मेध्यस्य यागयोग्यस्याश्वस्य शिरो वेद शिरःप्रभृतीनवयवान्विरा-वयवभूतोषःकालादिरूपेणोपास्ते सोऽयं शीर्षण्वानुषःकालादिरूपैः शिरःप्र-तिभिर्विराडवयवैर्युक्तो मेध्यो यागफलयोग्यो भवति। क्रत्वनुष्ठानस्य चोपास-नस्य च समानं फलम्। तथा च पञ्चमकाण्डे समाम्नातम्—'सर्वं पाप्मा तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति। तत्र कस्मिन्न-श्वावयवे को विराडवयवो ध्यातव्य इति तत्सर्वमुच्यते-मेध्यस्याश्वस्य यच्छि-रस्तदुषा उषःकालरूपम्। यदश्वस्य चक्षुस्तत्सूर्यः। यस्तदीयः प्राणः सोऽयं बाह्यो वायुः। यत्तदीयं श्रोत्रं सोऽयं चन्द्रमाः। ये तदीयाः पादास्ताः प्राच्या दिशः। ये पर्शवः पार्श्वास्थिविशेषास्ता इमा आग्नेय्याद्यवान्तरदिशाः। यस्त-दीयो निमेष उन्मेषसहितस्ते उभे अहोरात्रे। यानि तदीयहस्तपादगतपर्वाणि ते शुक्लकृष्णपक्षरूपा अर्धमासाः। यानि च पर्वणां संधानानि ते चैत्राद्या मासाः। यानि चानुक्तविशेषाणि खुराद्यङ्गानि ते वसन्ताद्या ऋतवः। य आत्मा मध्यदेहः स संवत्सरकालः। ये तदीयाः केशास्ते सूर्यरश्मयः। यदश्वस्य भास्वररूपं तानि कृत्तिकादिनक्षत्राणि। यान्यनुक्तान्यस्थानि तानि बृहस्पति-शुक्रध्रुवाद्याः प्रौढतारकाः। यानि तत्र तत्र स्थितानि मांसखण्डानि तदेत-न्नभः। यानि क्षुद्रलोमानि ता ओषधयः। ये वालाः पुच्छगता दीर्घकेशा-वनस्पतयः। यदेतन्मुखं संपद्यतेऽयं लोकप्रसिद्धोऽग्निः। यच्चात्तं मुखविदार-सोऽयं वैश्वानरनामको देवताविशेषः। यदुदरं सोऽयं समुद्रः। यः पायुस्त-न्तरिक्षम्। यावाण्डौ ते द्यावापृथिव्यौ। यः शेपः सोऽयमभिषवार्थो यद्रेतः स सोमरसः। यज्जंजभ्यते गात्राणि विनामयति सेयं दि- यद्विधूनुते सशब्दं शरीरं कम्पयति तदेतद्गर्जनम्। यदेतन्मेहनं सेयं वृष्टिः। अस्य हेषाशब्दरूपा या वाक्सेयं वेदरूपा वागेव। जायमानस्य क्रतौ प्रयुज्य-मानस्याश्वस्य यः संज्ञपनात्पुरस्तान्महिमाख्यो राजतग्रहस्तदिदमहरेव। एन-पश्चादेतस्याश्वस्य संज्ञपनादूर्ध्वं यो महिमाख्यः सौवर्णग्रहः सेयं रात्रिः। एता

( अश्वमेधाङ्गमन्त्रकथनम् )

वेवोभौ महिमानौ ग्रहावश्वमभितः संबभूवतुरश्वस्य संज्ञपनात्पूर्वं पश्चाच्च व्यव-स्थितौ । हयादिवाज्यश्वा अवान्तरजातिविशेषास्तत्तद्रूपेण देवादीन्वहन्ति । एवंविधस्य विराड्रूपस्याश्वस्य समुद्र एव योनिः कारणम् । सम्यगुद्रवत्युत्प-द्यते जगदस्मादिति समुद्रः परमात्मा । नह्यन्यस्मादयं विराडुत्पत्तुमर्हति । स एवास्य बन्धुः स्तम्भः स्थितिहेतुरित्यर्थः । एवमुपासिता पापक्षयद्वारा विरा-ड्रूपं प्राप्नोति । 'तं यथा यथोपासते तथैव भवति' इति श्रुत्यन्तरात् । विरा-ट्प्राप्तिश्च क्रममुक्तिहेतुः । तत्र ज्ञानोत्पत्तौ सत्यां तेन विराजा सह मुच्यमान-त्वात् । तथा च स्मृतिः—

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति ॥

एतच्च भगवान्व्यासः 'कार्यात्यये तदध्यक्षेणातः परमभिधानात्' इत्य-स्मिन्नधिकरणे महता प्रबन्धेन प्रतिपादयामासेत्यशेषमतिमङ्गलम् ।

अथास्य प्रपाठकस्य विनियोगसंग्रहः—

विहितं पञ्चमस्याऽऽद्ये गवामयनसत्रकम् ।
तद्वैविध्यं द्वितीये स्यात्तृतीये पृष्ठनिर्णयः ॥
चतुर्थे व्यत्ययः पूर्वपक्षस्यान्त्यस्य पक्षसि ।
पञ्चमे संसवः षष्ठे भवेदुत्सर्गसत्रकम् ॥
तन्मीमांसा सप्तमे स्यादष्टमे तु महाव्रतम् ।
सामानि नवमे प्रोक्ता वीणाद्या दशमे पुनः ॥
दासीनृत्यं ततस्तूर्ध्वं मन्त्राश्चैवाश्वमेधगाः ।
पृथ्यन्नहोमाः पञ्चाशदेकपञ्चाशदीरिताः ॥
दत्वते परिधीनां तु कस्त्वामन्त्रत्रयं भवेत् ।
अग्नये सर्वपृष्ठेष्टिः प्रयोगोऽनन्तरे श्रुतः ॥
यः प्राणतो य आत्मेति तावुभौ महिमग्रहौ ।
आ ब्रह्मन्दशभिर्मन्त्रैर्ब्रह्मवर्चसहोमकः ॥
आऽक्रानश्वं मन्त्रयेत जज्ञीति(पञ्च)दशभिर्हुतिः ।
आग्ने नैमित्तिका यागा मृगारेष्टिरथाग्नये ॥
अग्न संनतिहोमाः स्युर्दश ये स्वामिवाचनम् ।
[ * नमस्त्रिभिरुपस्थानं यो वै विधिरुपासने ॥

* धनुश्चिह्नान्तर्गतस्थाने क. पुस्तके 'यो वा अश्वोपासितरित्थं कर्मावैधे प्रपाश्रिते' इत्य-र्धमेव विद्यते ।

क्रतुराडश्वमेधोऽयं विराड्ध्यानमुपास्तिराट् ]।
ताभ्यामुत्पद्यते ज्ञानं कृतकृत्यो भवत्यतः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके
पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणाचार्येण
विरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे
पञ्चमः प्रपाठकः ॥ ५ ॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिरा-
जपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपाल-
केन सायणाचार्येण विरचिते माधवीये वेदार्थ-
प्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिता-
भाष्ये सप्तमः काण्डः ॥ ७ ॥



---

मूलक्रमेण सप्तमाष्टके—प्र० ५ अ० १७ 

भाष्यक्रमेण सप्तमकाण्डे—प्र० ५ अ० १७

मूलक्रमेणाऽऽदितः समष्ट्यङ्काः—अष्ट० ७ प्र० ४४ अ० ६३१ 

भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ७ प्र० ४४ अ० ६२६

